ORIENTAL RESEARCH INSTITUTE, SANSKRIT SERIES 103

GENERAL EDITOR

H. DEVEERAPPA, M.A.,

*Director*

# KAUTALĪYĀRTHAŚĀSTRA

OF

ŚRĪ VISNUGUPTA

EDITOR

VIDWAN N. S. VENKATANATHACHARYA

*Research Assistant*



ORIENTAL RESEARCH INSTITUTE

UNIVERSITY OF MYSORE

MYSORE

1960

प्राच्यविद्यासंशोधनालयसंस्कृतग्रन्थमाला १०३

प्रधानसम्पादकः

हेच्. देवीरप्प, एम्.ए.,

डैरेक्टर्

श्रीविष्णुगुप्तविरचितम्

# कौटलीयार्थशास्त्रम्

टिप्पणीविविधानुबन्धैः समलङ्कृतम्

सम्पादकः

विद्वान् एन्. एस्. वेङ्कटनाथाचार्यः

रिसर्च् असिस्टेंट्



प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः

मैसूरु

१९६०

# PREFACE

IT is a matter of pride that the 'Arthaśāstra' of Viṣṇugupta is being published for the fourth time by our Institute. This great work was brought to light for the first time by Dr. R. Shama Sastry, who was then the Librarian (subsequently Curator) of this Institute during the year 1909, and aroused the interest of sêveral Orientalists throughout the world. Since then, many editions of the work have been published from here and elsewhere. To meet the growing demand from all corners of the world it was reprinted twice during the years 1919 and 1924 by the Institute. But, this time, the text of the original is revised and re-edited in the light of the vast literature that has grown so far and on the basis of the several Publications of the original and translations of the same. The Nîtisūtras of Chāṇakya and Sōmadēva, with the Subhāshitas of Chāṇakya are also appended to this volume. Alphabetical list of Technical terms, and place names are arranged alphabetically subject-wise, and glossary, etc., has been appended to this volume.

Sri N. S. Venkatanathacharya, one of the Research Assistants of the Institute, has carefully edited the text. He has also given the details regarding the

manuscripts, printed copies and translations of the work on the basis of which he has prepared the text. Introduction to Arthaśāstra will be published in a separate volume.

Our thanks are due to the Deputy Director of Printing and Stationery, Government Branch Press, Mysore, for the courtesy, kindness and perseverance with which he has got the work printed in time for the Institute.

H. DEVEERAPPA,

MYSORE,
*Dated 20-2-1960*

*Director,*
*Oriental Research Institute.*

# अनुक्रमणिका

ॐ नमो धर्माय महते

# प्रस्तावना

---

[शास्त्रविषयमहर्षिभारतस्मरणम्]

सा योगीन्द्रजटाकलापमुकुटात् योगेशपादोद्भवा
गङ्गा दिव्यसुधा गिरीन्द्रशिखरप्रान्तेषु सप्तस्वपि।
सोल्लासं रयनिर्गता धिमिधिमीतालैः स्रवन्ती मुदा
संसक्ता यदधित्रिवेणि रमते ताः योगभूमीर्नुमः॥

[भारतीयाऽऽर्यजनपवित्रमनोधर्मानुस्मरणम्]

अयि सुमनसः! विदितमिदमत्रभवतां—यदिमां पावनीं भरतभुवं सर्वतः सर्वथा च सुखमयीमात्महितां च रचयितुं उत्सुकैः ज्ञानविज्ञानतृप्तात्मभिः पवित्रात्मभिः अधिगतभूतकोटिजीवनोपक्रमविकासविलयतत्त्वैः विज्ञातेन्द्रियात्मकल्याणमूलैः तैस्तैः धर्मविद्भिः महर्षिभिः, लोककल्याणाय तापत्रयातुराणाममृतत्वाय च, तत्तच्चेतनानां कक्ष्याः मनसि निधाय, तदनुगुणं विविधेन पथा प्रवर्तितानि, आधिभौतिकाऽऽधिदैविकाऽऽध्यात्मिकतपस्याभिरधिगतार्थजालसङ्कलनात्मकानि आदेशसन्देशोपदेशादिरूपाणि च धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयानुबन्धीनि चत्वार्यपि शास्त्राणि भारतीयजनजीवातुरूपाणि इदानीमपि धर्मभूमिषु चकासतीति॥

[अर्थशास्त्रसौन्दर्यं व्याप्तिश्च]

तेष्वेवान्यतमं सुरासुरगुरुभिरेव प्रवर्तितं प्रकृतिपुरुषोभयलोकसम्पदां योगक्षेमधूर्वहणानुगुणशासनप्रदर्शनचणं अर्थशास्त्रं शाखोपशाखतया असङ्ख्यतया च प्रवृद्धमिति, तत् सर्वं समाहृत्य एकमिदं कौटलीयमर्थशास्त्रं विरचयामास श्रीमान् विष्णुगुप्तः।

यदाह स्वयमेव—

"सर्वशास्त्राण्यनुक्रम्य प्रयोगमुपलभ्य च ।
कौटल्येन नरेन्द्रार्थे शासनस्य विधिःकृतः ॥" इति ।

अत्रेदमवधेयं वर्तते—नेदं कौटिल्य इति वा कौटल्य इति वा एतद्ग्रन्थप्रणेतृव्यक्तिविशेषमात्रपर्यवसायि नाम, नचेदं शास्त्रं इतर-देशीयार्थशास्त्रवत् केवलं धनप्रपञ्चात्मकं, नापि चन्द्रगुप्तमेवोद्दिश्य तात्कालिकप्रजावर्गकक्ष्यानुगुणं प्रवर्तितं च । किन्तु—कौटल्य इति अथर्ववेदोपवेदसम्प्रदायागतशान्तिकादिधर्मानुगुणषट्कर्मपथप्रवृत्त वैदिकब्रह्मदण्डनीतिशास्त्रपरम्परासु रूढः सङ्केतविशेषः; एवं शास्त्रमिदं भूतभविष्यद्वर्तमानभारतीयमानवकोट्याः तत्परिपाल-कानां धर्मप्रभूणां च शान्तियुतैहिकामुष्मिकोभयलोकयोगक्षेम-धूर्वहं धर्मकामयोरपीडावहं विज्ञानसंवलितं परमार्थशास्त्रं चेति ।

[अर्थशास्त्रमुद्रणकालः, भूमिकाऽऽवश्यकता च]

तदिदमर्थशास्त्रं क्रिस्तपूर्वात् तृतीयशतकात् प्रागेव सप्रयोग-निर्णयेन प्राप्तप्रचारमपि, मध्यकाले केनापि कारणेन चिरमन्तर्हित-मिव भूत्वा, पुनरपि कालयोगात् विविधजनविविधदृष्टिपात्रतां गन्तुं प्राप्तकालं सत् प्रप्रथमं अस्मदीयसंस्थाद्वारा 1909 तमे क्रिस्ताब्दे (ततः 1919, 1924 क्रिस्ताब्दयोश्च) श्री डाक्टर् शामाशास्त्रिभिः, तदनु इतरैः अन्यत्रान्यत्र च मुद्रितं सत्; भारती-यान् विदेशीयांश्च यथोचितं परितोषयत् वर्तते इत्यधुनातनैतत्पुन-र्मुद्रणावश्यकतैव स्फुटयति ।

सेयं धर्मसंहितास्वन्यतमा कौटलीयार्थशास्त्राभिधाना प्रसन्न-रमणीयघनरसा अर्थसरस्वती आत्मानं प्रवाहयितुं (प्रकाशयितुं) काञ्चन सत्यदर्शिनीं निर्मलां मनोभूमिकां अपेक्षत एवेति विज्ञाय, संक्षिप्तैका विज्ञानभूमिका प्रत्येकसम्पुटात्मनैवास्माभिः प्रकटीक्रियते । अत्र तु श्रीमतां डा॥ शामाशास्त्रिणां ग्रन्थसम्पादनादौ अनुभूत-परिश्रमप्रत्यभिज्ञारक्षणाय तदीयमुद्रणत्रयोपोद्घाताः परं एतत्प्रस्ता-वनानुपदं तथैव संयोजिताः । ततः पूर्वं संप्रति पञ्चषैर्वाक्यैः केवलं इदानीन्तनैतन्मुद्रणविधानसंक्षिप्तपरिचयं कर्तुं प्रयत्येमां प्रस्तावनामुपसंहरामः—

[इदानीन्तनैतन्मुद्रणविधानपरिचयः]

अस्मिन् प्रकाशने सभूमिकस्य सानुबन्धस्यास्यार्थशास्त्रस्य देशकालानुगुणयथोचितपरिष्कारविधानेन त्रयो भागाः परिकल्पिताः। तत्र प्रथमः भूमिकाभागः, स च प्रत्येकसम्पुटात्मनैव प्रकाश्यत इति सम्प्रत्येवावोचाम। द्वितीय एव मूलभागः। तृतीयस्तु अनुबन्धभागः। इमावन्तिमौ द्वौ सङ्कलय्य एतदेकं सम्पुटमकुर्म।

तत्र मूलभागमुद्रणे विशेषस्तु—प्रत्येकावान्तरविषयनिर्देशः, क्वचित् क्वचित् पूर्वमुद्रितात् पाठव्यत्ययः, अधः कठिनपदटिप्पणी चेति; तत्रापि श्रीमद्भिः[1] टि. गणपतिशास्त्रिभिः अङ्गीकृतः पाठः पदार्थो वा यत्र समीचीनतया भातः तत्र स एवाङ्गीकृतः इति च।

वस्तुतो विषयानुगुणे पाठे विवरणे च निर्देष्टव्ये प्रयोगसहकृतार्षविज्ञानपरिशीलनावकाशः सुविपुल एवापेक्ष्यते इति परं भावयामः। पाठान्तराणि च यावदुपलम्भं तत्तन्मातृकानिर्देशपूर्वकं अन्ते प्रत्येकं दत्तानि।

[अनुबन्धभागपरिचयः]

तृतीयेऽनुबन्धभागे अर्थशास्त्रानुगुणाः नीतीः परिभाषाः पदार्थांश्च सङ्ग्रहेण ज्ञातुं धारयितुं च पर्वणी इव स्थिते चाणक्यसोमदेवयोर्नीतिसूत्रे अमुद्रयाम। तत्र प्रथमं चाणक्यनीतिसूत्रं न चाणक्येनैव कृतमिति निर्णेतुं शक्यते इत्यनेके अभिप्रयन्ति। द्वितीयस्य सोमदेवनीतिसूत्रस्य नीतिवाक्यामृतमिति नामान्तरं विद्यते। अस्य कर्ता सोमदेवः जैनब्राह्मण इति, एतदाचार्यप्राचार्यौ नेमिदेवयशोदेवाविति, अयं महेन्द्रभट्टारकसोदर्य इति, निजामराजधानीभूतमान्यखेटवासी चाभवदिति, क्रिस्ताब्देषु नवमदशमशतकयोः मध्यकालीनोऽभवदिति च तदीययशस्तिलकचम्पूग्रन्थादितः ज्ञायते। एतदीयानि वाक्यानि अतिसुन्दराणि अनुभवपूरितानि सरलानि ललितानि उदाराणि च। अनेन दर्शिताः दृष्टान्ताः सर्वेऽपि हृदयङ्गमाः सन्ति। एतदीयं निबन्धं पठितुमुद्युञ्जानः कोऽपि नाकम्पितशिराः वर्तितुं शक्नुयात्॥

[1] त्रिवेन्द्रमुद्रिते श्रीमूलव्याख्यासहिते भागत्रयात्मके कौटलीयार्थशास्त्रे.

तदनु अर्थशास्त्रसुभाषितसङ्ग्रहं, अकारादिविषयानुक्रमणीं, तत्रैव 'दकार'प्रसङ्गे अर्थशास्त्रोल्लिखितानां तत्तदपराधानां तद्दण्डानां च सूचनीं, तदनु प्रविभक्तवर्गीकृतपदविशेषसूचनीं, अर्थशास्त्रीयकारिकाणामर्धसूचनीं, तदनु उपदशमातृकासंशोधनलब्धपाठान्तरपट्टिकां च संयोज्य पुस्तकमेनं परिसमापयाम।

[प्रार्थनाऽऽशंसना]

एवं विधेऽस्मिन् महति कार्ये सम्पतिताः भावभाषाक्षरगताः व्यत्ययाः क्षन्तव्याः इति सहृदयेषु प्रार्थयामः।

आशास्महे च—

सेयं वेदमतानुसारिनियमा यान्ती त्रिवर्गाध्वना<br>
दिव्या ह्यर्थसरस्वती भगवती स्वच्छन्दवृत्तिं नृणाम्।<br>
संरुद्धय, आत्मनयव्यवस्थितिकरी, तस्यात्मनश्छन्दतो<br>
नेत्री, नीतिरियं ह्यनर्थदमने जागर्तु नित्यं हिता॥

एवम्—

ब्रह्मदण्डात्मिका सेयं राजनीतिः सनातनी।<br>
रक्षन्ती शाश्वती जीयात् आर्यावर्ताऽऽर्यजीविकाम्॥

अपि च—

जयतु जगतां मूलं सत्यं सनातनमञ्जसा,<br>
जयतु सरसा दिव्या वाणी तदीयमनोऽनुगा।<br>
जयतु विदुषां वर्गः तस्याः सदातन आश्रयः,<br>
जयतु च निधिस्तेषां पूर्णा चिरन्तनभारती॥

श्री विकारिवत्सर चित्रापौर्णमासी गुरुवासरः

इति

एन्. एस्. वेङ्कटनाथशर्मा.

# प्रथममुद्रणोपोद्धातः

---

[ग्रन्थकर्ता, तत्प्रणयनकालश्च]

इह तावद्विष्णुगुप्तश्चाणक्य इति च विख्यातः अर्थशास्त्रप्रवीणः कौटिल्यो नाम ब्राह्मणः क्रिस्ताब्दारम्भात्पूर्वं वत्सराणां चतुर्थे शतके नन्दवंशमुन्मूल्य चन्द्रगुप्तमभिषिषेचेति विष्णुपुराणात् ज्ञायते :—

"महापद्मः तत्पुत्राश्चैकं वर्षशतमवनीपतयो भविष्यन्ति नवैव। तान्नन्दान् कौटिल्यो ब्राह्मणस्समुद्धरिष्यति। तेषामभावे मौर्याश्च पृथिवीं भोक्ष्यन्ति। कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषेक्ष्यति। तस्यापि पुत्रो बिन्दुसारो भविष्यति। तस्याप्यशोकवर्धनः"

इति विष्णुपुराणे चतुर्थांशे चतुर्विंशाध्याये स्पष्टमभिहितं दृश्यते।

क्रिस्ताब्दारम्भात्पूर्वं द्वासप्तत्यधिकशतद्वयपरिमिते वर्षे समारूढरा [?]सिंहासनेन चन्द्रगुप्तपौत्रेण अङ्गीकृतबौद्धविज्ञानेन अशोकवर्धनेन भरतखण्डचक्रवर्तिना ये प्रत्युप्तबौद्धधर्माश्शिलास्तम्भाः न्यखानिषत, तेऽद्यापि दरीदृश्यन्ते। अशोकपितामहश्चन्द्रगुप्तोऽपि क्रिस्ताब्दारम्भात्पूर्वं सप्तविंशत्यधिकशतत्रयपरिमितेषु वर्षेषु राज्यं चकारेति पाश्चात्यराजचरित्रादपि बाढं ज्ञायते। तस्यैतस्य चन्द्रगुप्तस्य सचिवः कौटिल्यः प्राचीनाचार्यविरचितानि सर्वाण्यप्यर्थशास्त्राणि संक्षिप्यैकमिदं षट्सहस्रग्रन्थपरिमितमर्थशास्त्रं प्रणिनायेति एतस्मादेवार्थशास्त्रादिव दण्डिविरचितात् दशकुमारचरितादपि स्पष्टमाकल्यते—

"अधीष्व तावद्दण्डनीतिम्। इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैस्सङ्क्षिप्ता। सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमेति"

इति दशकुमारचरितेऽष्टम उच्छ्वासे चन्द्रगुप्तोपदेशायैवेदमर्थशास्त्रं कृतमिति दण्डिना विशदीकृतम्। एवं च—

[1] "सर्वशास्त्राण्यनुक्रम्य प्रयोगमुपलभ्य च।
कौटिल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः"॥

इत्यध्यक्षप्रचारे दशमेऽध्याये प्रयुक्तो नरेन्द्रशब्दो मौर्यचन्द्रगुप्तमेवाभिदधातीति भाति।

[अर्थशास्त्रविषये इतइतो भारतीयाः कुतः उदासीनाः?]

ये चार्थशास्त्रविषयाः दण्डिना—

[2] "इयत ओदनस्य पाकायैतावदिन्धनम्"

इत्यारभ्य "प्राहसीत् प्रफुल्ललोचनः प्रमदाजनः" इत्यन्तेन ग्रन्थजालेन प्रमदाजनहास्यास्पदतां नीताः, तेऽप्येतदर्थशास्त्रगता एवेत्यधस्ताद्दर्शितटिप्पण्यां बाढमाकलयितुं शक्यते—

| (दशकुमारचरिते) | (अर्थशास्त्रे) |
| --- | --- |
| (1) "इयत ओदनस्य पाकायैतावदिन्धनम्" | (1) "काष्ठपञ्चविंशतिपलं तण्डुलप्रस्थसाधनम्" अधि. II, अध्या. 19 |
| (2) "कृत्स्नमायव्ययजातमह्नः प्रथमेऽष्टमे भागे श्रोतव्यम्।" | (2) "दिवसस्याष्टमे भागे रक्षाविधानमायव्ययौ च शृणुयात्।" अधि. I, अध्या. 19. |
| (3) "चत्वारिंशच्चाणक्योपदिष्टानाहरणोपायान्सहस्रधाऽऽत्मबुद्ध्यैव विकल्पयितारः।" | (3) "तेषां हरणोपायाश्चत्वारिंशत्..........." अधि. II, अध्या. 8. |

---

[1] अर्थशास्त्रे पु. 84. [2] अष्टमे उच्छ्वासे.

(4) "द्वितीयेऽन्योन्यं विवदमानानां तृतीये स्नातुं भोक्तुं च चतुर्थे हिरण्यप्रतिग्रहाय।"

(4) "द्वितीये पौरजानपदानां कार्याणि पश्येत्। तृतीये स्नानभोजनं सेवेत। स्वाध्यायं च कुर्वीत। चतुर्थे हिरण्यप्रतिग्रहमध्यक्षांश्च कुर्वीत।"
अधि. I, अध्या. 19.

(5) "भुक्तस्य च यावदन्धःपरिणामस्तावदस्य विषभयं न शाम्यत्येव।"

(5) "अग्नेर्ज्वालाधूमनीलताः .... इति विषयुक्तलिङ्गानि।"
अधि I, अध्या. 20.

इति। अपि च—

"किं वा तेषां साम्प्रतं? येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणं, अभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः, पराभिसन्धानपरा मन्त्रिणः उपदेष्टारः, नरपतिसहस्रोज्झितायां लक्ष्म्यामासक्तिः, मारणात्मकेषु शास्त्रेष्वभियोगः, सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः"[1]

इति कादम्बर्यां बाणेनापि कौटिलीयार्थशास्त्रे कण्टकशोधनाद्यधिकरणेषु प्रतिपादिता दूष्यवधाद्युपायाः स्पष्टं निन्दिता दृश्यन्ते। पुरातनप्रसिद्धश्रीहर्षादिराजास्थानेषु माननीयपदवीमारूढैः बाणादिभिः विद्वद्भिः कृता एषा निन्दैवार्थशास्त्रोपदेशधिक्काराय कारणमभूदिति स्पष्टमवगम्यते। अत एव च यान्यर्थशास्त्राणि— "मानवाः," "औशनसाः," "बार्हस्पत्याः," "विशालाक्षः," "पिशुनः," "वातव्याधिः" इति कौटिल्येन तत्तद्ग्रन्थकृन्नाम्नाऽनूदितानि तान्युत्तरकालिकैः विद्वद्भिर्धिकृतानि खिलान्यासन्नित्यपि बाढं सुवचम्।

[पूर्वं अर्थशास्त्रप्रसिद्धिकालः]

किं च—क्रिस्ताब्दारम्भात्पूर्वमुत्तरं वा भरतखण्डमपहाय बलिद्वीपमाश्रितवद्भिरार्यजनैः यः कामन्दकीयनीतिसारो नाम राज-

---

[1] कादम्बरी पु 109. बोंबै एजुकेषन् सोसैटी प्रेस.

नीतिग्रन्थः सङ्गृहीतोऽद्यापि बलिद्वीपे दृश्यते इति श्रूयते। तस्मिन्नीतिसारे ग्रन्थादौ—

"नीतिशास्त्रामृतं धीमान् अर्थशास्त्रमहोदधेः।
समुद्दध्रे नमस्तस्मै विष्णुगुप्ताय वेधसे" ॥

इति वदता कामन्दकेनापि कौटिलीयार्थशास्त्रमेतदेव बाढं परिज्ञातपूर्वमासीदिति विषये न कोऽपि सन्देह इति ज्ञायते।

किंच—

"ततो धर्मशास्त्राणि मन्वादीनि, अर्थशास्त्राणि चाणक्यादीनि, कामशास्त्राणि वात्स्यायनादीनि"

इति पञ्चतन्त्रे कथामुखे वदन् पञ्चतन्त्रकर्ता विष्णुशर्माऽपि कौटिलीयार्थशास्त्रे कृतपरिचयोऽभूदिति स्पष्टमवगम्यते।

यच्च नन्दिसूत्रनामके जैनग्रन्थे—

[1]"खमए अमच्चपुत्ते चाणक्के चेव थूलबद्देय"।
(क्षपकः अमात्यपुत्रः चाणाक्यश्चैव स्थूलभद्रश्च)

इति क्षपकामात्यपुत्रचाणक्यस्थूलभद्राणां पारिणामिकीं बुद्धिं दृष्टान्तद्वारेण विशदीकृत्य—

[2]"भारहं रामायणं भीमासुरक्कं कौडिल्लियम्"

इति भारतरामायणभीमासुरीयककौटिलीयकानि मिथ्याशास्त्रत्वेन निर्दिष्टानि। तत्र कौटिलीयशब्देन एतदेव चाणक्यकृतमर्थशास्त्रमभिप्रेतमिति बाढं सुवचम्।

यच्च यशोधरमहाराजसमकालेन सोमदेवसूरिणा नीतिवाक्यामृतं नाम नीतिशास्त्रं विरचितं, तदपि कामन्दकीयमिव कौटिलीयार्थशास्त्रादेव सङ्क्षिप्य सङ्गृहीतमिति तद्ग्रन्थपदवाक्यशैलीपरीक्षायां निस्संशयं ज्ञायते।

मल्लिनाथसूरिणाऽपि रघुवंशे सप्तदश (17) सर्गे एकोनपञ्चाश (49) श्लोकव्याख्याने, षट्सप्ततितम (76) श्लोकव्याख्याने च, तथाऽष्टादश (18) सर्गे पञ्चाश (50) श्लोकव्याख्याने च अर्थ-

---

[1] नन्दिसूत्रम् पु. 133. [2] नन्दिसूत्रम् पु. 391.

शास्त्रीयपारिभाषिकशब्दाभिधेयप्रमाणतया कौटिलीयार्थशास्त्र-पङ्क्तिरुदाहृता दृश्यते। दण्डिबाणाभ्यां उदाहृतानि वाक्यानि च इदानीमेवावोचाम।

अतश्च क्रिस्ताब्दारम्भात् आ च क्रिस्ताब्दानां पञ्चदशशतकात् अर्थशास्त्रमिदं विद्वद्भिः कृतपरिचयं प्रथितमासीदिति स्पष्टम्।

[उपलभ्यमानादन्यैव याज्ञवल्क्यस्मृतिः एतदर्थशास्त्रात् प्राचीना]

यच्चैतदर्थशास्त्रस्य यज्ञावल्क्यस्मृतिव्यवहारकाण्डस्य चेतर-स्मृत्यसाधारणमानुपूर्वीसाम्यं (तत्र तत्राधस्तनटिप्पण्यां भूमिका-भागे चास्य ग्रन्थस्य प्रदर्शितं) तत्रेयमाशङ्का प्रसरति—किमिदमर्थ-शास्त्रं याज्ञवल्क्यस्मृत्युत्तरकालिकं? अथवा सैव स्मृतिरेतदर्थ-शास्त्रोत्तरकालिका? आहोस्विदेतद्ग्रन्थद्वयमप्युभयसाधारणग्रन्था-न्तरानुरोधि? इति।

तत्र—

[1] "युक्तकर्मणि चायुक्तस्य"

इति राज्यकार्येऽनधिकृतस्य राज्याधिकृतकार्यकरणे दण्ड-विधानपरमर्थशास्त्रवाक्यं—

"अयोग्यो योग्यकर्मकृत्"

इत्ययोग्यस्य शूद्रादेर्योग्यब्राह्मणादिकर्मकरणे दण्डः—इत्यर्था-न्तरे प्रयुञ्जानः स्मृतिकर्ता प्रायेण चाणक्योत्तरकालिक एव स्यादिति भाति।

किं च—

[2] "शपथवाक्याभियोगमनिसृष्टं कुर्वतः"

इति राजाननुज्ञातस्य प्रमाणपूर्वकं चोरादिवाक्यकर्मपरीक्षायां दण्डविधायकमर्थशास्त्रवाक्यं—

"अयुक्तं शपथं कुर्वन्"

इत्यनुचितशपथकरणे दण्डविधानपरत्वेन स्मृतौ व्यत्यस्तं दृश्यते।

---

[1] अर्थशास्त्रम् पु. 207. [2] अर्थशास्त्रम् पु. 207.

तथा [1]"पाणिपाददन्तभङ्गे कर्णनासाच्छेदने प्राणविदारणे चान्यत्र दुष्टव्रणेभ्यः" इति दुष्टव्रणोद्भेदनिमित्तान्यनिमित्तकरादिच्छेदने प्राणविदारणे च दण्डविधायकमर्थशास्त्रवाक्यं—

"करपाददतो भङ्गे छेदने कर्णनासयोः।
मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा॥"

इति व्रणोद्भेदेऽपि दण्डविधायकपरत्वेन स्मृतौ व्यत्यस्तं दृश्यते।

एते चान्ये च व्यत्यस्तविषयाः यथावदर्थ(ा)ज्ञानमूलका वा स्वोत्प्रेक्षामूलका वेति न ज्ञायते। परं त्वेते अस्यार्थशास्त्रस्य याज्ञवल्क्यत्वेनाधुनोपलभ्यमानायाः स्मृतेरुत्तरकालिकत्वं स्पष्टयन्ति॥

अथापि चाणक्यात्पूर्वं न धर्मशास्त्राण्यासन्निति वक्तुं न शक्यते। यतः—

[2]"शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित्।
न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति॥"

इति न्यायविरुद्धस्य धर्मशास्त्रवचनस्य स्वमूलश्रुतिपाठाज्ञानमूलकत्वेन त्याज्यतां वदता कौटिल्येन स्वकालेऽपि धर्मशास्त्रसत्ता स्पष्टमभ्युपगता दृश्यते। याज्ञवल्क्यस्मृतावेव -

"अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः"

इत्येतच्चाणक्योक्तिविपरीतमेवोक्तं दृश्यते। अतश्च याज्ञवल्क्यस्मृतिकर्तुः कालेऽर्थशास्त्रमासीदिति, चाणक्यस्य काले च धर्मशास्त्रमासीदिति च सिद्धम्।

परं तु चाणक्यस्य कालेऽधुनोपलभ्यमानं याज्ञवल्क्यधर्मशास्त्रं नासीदिति भाति। न ह्येककाल एव व्रणोद्भेदोऽपराधोऽनपराध इति च गृह्यते। नाप्येककाल एव युक्तायुक्तशब्दौ राज्याधिकृतानधिकृतपरत्वेन योग्यायोग्यपरत्वेन च प्रयुज्येते। अतश्च चाणक्यकालिकं धर्मशास्त्रं अधुनातनाद्याज्ञवल्क्यधर्मशास्त्रादन्यदेवासीदिति भाति।

---

[1] अर्थशास्त्रम् पु. 204.  [2] अर्थशास्त्रम् पु. 163.

[उपलभ्यमानमन्वादिस्मृतयोऽपि एतदर्वाचीनाः]

एवमेव ये मानवबार्हस्पत्यौशनसाः भिन्नाभिप्रायास्तत्रतत्र कौटिल्येन परामृष्टाः, न तेऽधुनोपलभ्यमानेषु तत्तद्धर्मशास्त्रेषु दृश्यन्त इति कौटिल्यपरामृष्टानि तानि शास्त्राण्यन्यान्येवेति बाढं सुवचम् ।

[एतद्ग्रन्थकर्ता चाणक्य एव]

यत्तु—न कोऽपि ग्रन्थकर्ता स्वनामनिर्देशपूर्वकं स्वाभिप्रायं व्यनक्ति—इत्यधुनातनसम्प्रदायमुररीकृत्य केचित्पाश्चात्यविद्वांसः—

"इति बादरायणः"
"इत्याह बोधायनः"
"नेति कौटिल्यः"

इति निर्दिष्टबादरायणबोधायनादिनामानो ग्रन्थाः न बादरायणबोधायनादिकृता इति मन्यन्ते—तत्-प्राचीनार्यविद्वत्संप्रदायानवबोधमूलकमेव। पराभिप्रायनिराकरणपूर्वकं स्वाभिप्रायप्रकटनं हि ग्रन्थकृतामस्मच्छब्दप्रयोगेण वा स्वनामनिर्देशेन वा कर्तुं शक्यते । अहन्ताबोधकास्मच्छब्दप्रयोगोऽहन्तात्यागे बद्धमानसेभ्यो भरतखण्डीयविद्वद्भ्यो नाद्यापि रोचते। अतश्च स्वनामनिर्देशेनैव स्वाभिप्रायप्रकटनमनुलङ्घनीयमासीत् । तथा च—

"नेति कौटिल्यः"

इत्यनेकशोऽत्रार्थशास्त्रे प्रयोगे दृश्यमानेऽपि 'नेदमर्थशास्त्रं कौटिल्यकृतं अपि तु तच्छिष्यकोटौ केनचिद्विरचितं" इति न युक्तं वक्तुम्। अतश्च—

[1] "येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥"

इतीदंशब्दप्रयोगोऽस्य ग्रन्थस्य चाणक्यकृतत्व एव युज्यते ॥

किं च—मन्वादिस्मृतीनां भिन्नकर्तृतायां न केवलं मन्वादिबोधितत्वेन चाणक्येन परामृष्टानामभिप्रायाणामधुनोपलभ्यमानासु तासु स्मृतिष्वभाव एव कारणं, अपि तु मनुस्मृतेः—

---

[1] अर्थशास्त्रम् पु. 462.

"एतद्वोऽयं भृगुश्शास्त्रं श्रावयिष्यत्यशेषतः"

इति मानवीयं वचनं ; एवं याज्ञवल्क्यस्मृतेः—

"याज्ञवल्क्यशिष्यः कश्चन प्रश्नोत्तररूपं याज्ञवल्क्यप्रणीतं धर्मशास्त्रं सङ्क्षिप्य कथयामास, यथा मनुप्रोक्तं भृगुः"

इति विज्ञानेश्वरवचनं च कारणं दरीदृश्यते। कौटिलीयार्थशास्त्रविषये तु न तादृशं कारणं दृश्यत इतीदमर्थशास्त्रं कौटिल्यकृतमेवेति सुवचम् ॥

[अर्थशास्त्राद्धर्मशास्त्रस्य प्राबल्ये हेतुः]

अर्थशास्त्रापेक्षया धर्मशास्त्रस्य प्राबल्याभ्युपगमे च कारणानि न दुरूहाणि। यतः-गूढचारमुखाद्दूष्यज्ञानं, दूष्यवधोपायाः, परस्परद्वेषनिमित्तं, विवाहबन्धमोचनं, प्रोषितभर्तृकाणां मृतभर्तृकाणां च स्त्रीणां पुनर्विवाहः, ऋतुमत्यास्स्वयंवरणं, दुर्भिक्षोपद्रवनिवारणाय धनिकानां वमनं कर्शनं वा, औपनिषदिकाधिकरणोक्ताः काणकुष्ठादियोगाः, इत्यादयोऽर्थशास्त्रोपदिष्टाः निखिलजनद्विष्टा उपायाः धर्मशास्त्रकारैर्दूरीकृता इति भाति ॥

[अर्थशास्त्रस्य प्राचीनतायां हेत्वन्तरम्]

'यथा ग्रीक्जनाः भरतखण्डीयराज्यनीतिमवर्णयन्, तथैवात्रार्थशास्त्रे प्रतिपादिता राजनीतिः' इति विन्सेंट् स्मित् नाम्ना पाश्चात्यविदुषा स्वीयभरतखण्डचरित्रे समुल्लिखितं दृश्यते। अतश्चास्यार्थशास्त्रस्य प्राचीनता बाढं परिदृश्यते ॥

[आदर्शमातृके]

प्रकृते अस्यार्थशास्त्रस्य कोशान्तरानुपलम्भात् तालपत्रेषु ग्रन्थाक्षरैर्लिखितां एकामेव मूलमातृकां, द्वितीयाधिकरणाष्टमाध्यायादारभ्य अधिकरणसमाप्तिपर्यन्तमुपलब्धां भट्टस्वामिकृतां प्रतिपदपञ्चिकानाम्नीं व्याख्यां च परीक्ष्य एतद्ग्रन्थमुद्रणं साधितमिति ॥

MYSORE,
*5th November 1908.*

R. SHAMA SASTRY.

# द्वितीयमुद्रणोपोद्घातः

[विष्णुगुप्तवात्स्यायनयोः एकत्वसम्भावना, तद्धेतुश्च]

इह खलु—1909 तमे क्रिस्ताब्दे प्रकाशितात् अर्थशास्त्रस्य प्रथममुद्रणात् आ चाद्यतने 1919 तमे क्रिस्ताब्दे प्रकाश्यमाना-द्वितीयमुद्रणात् गतेषु दशसु वत्सरेषु नीतिशास्त्रमिदं अहमहमिकयाऽधीयानेषु पाश्चात्येषु विद्वत्सु संस्कृतविद्याकोविदः कीत्-नामा विद्वान् 'अर्थशास्त्रप्रणेता विष्णुगुप्तः कामशास्त्रप्रणेतुर्वात्स्यायनात्प्रायेण नान्यः' इति सम्भावयामास। सम्भावनायाश्चास्याः हेमचन्द्रविरचिता अभिधानचिन्तामणिः, यादवप्रकाशप्रणीता वैजयन्ती च मूलमित्यवगम्यते। तत्र हि—

'वात्स्यायनो मल्लनागः कौटिल्यश्चणकात्मजः।
द्रामिलः पक्षिलस्स्वामी विष्णुगुप्तोऽङ्गुलश्च सः॥'

इति हेमचन्द्रेण,

'वात्स्यायनस्तु कौटिल्यो विष्णुगुप्तो वराणकः।
द्रामिलः पक्षिलस्स्वामी मल्लनागोऽङ्गुलोऽपि च॥'

इति यादवप्रकाशेन च कौटिल्यस्य 'वात्स्यायन' इत्यपरं नामधेयं दत्तं दृश्यते॥

[क्वचित् वात्स्यायनपदस्थाने कात्यायनपदम्]

भोजराजविरचितायां नाममालिकायां तु वात्स्यायनशब्दस्थले कात्यायनशब्दः पठितो दृश्यते। यथा—

'कात्यायनो वररुचिर्मेधजिच्च पुनर्वसुः।
कात्यायनस्तु कौटिल्यो विष्णुगुप्तो वराणकः।
द्रामिलः पक्षिलस्स्वामी मल्लनागोऽङ्कुलोऽपि च॥' इति॥

किमत्र कात्यायनशब्दो भोजेनैव पठितः? अथवा लेखकेन वात्स्यायनः कात्यायन इति लिखितेऽप्यन्यत्र वात्स्यायनशब्दं दृष्ट्वा प्रमाणान्तरमवलम्ब्य वा भोजोत्तरकालिकाभ्यां हेमचन्द्रयादवप्रकाशाभ्यां कौटिल्यो वात्स्यायनापरनामधेयः कृतो वा? इति बहवः प्रश्नास्स्वयमेव प्रसरन्ति ।

[कात्यायनेति पाठे शङ्कानवकाशः]

यदि कात्यायनशब्द एव भोजानुमतः पाठस्स्यात्तदा वात्स्यायनशब्दपाठः प्रमाद एवेति कौटिल्यस्य वात्स्यायनाभिन्नता दूरापास्ता भवेत् ।

[वात्स्यायनेति पाठे पुराणादिविरोधः कालविरोधश्च]

यदि तु वात्स्यायनशब्दपाठ एवानुमतस्स्यात्, तदा नन्दसमकालिकः कौटिल्य इति विष्ण्वादिपुराणवाक्यानि दण्डिवाक्यं च दत्तजलाञ्जलीनि स्युः ।

तथाहि—'नन्दान् हत्वा कौटिल्यो नन्दराज्ये चन्द्रगुप्तमभिषिषेच' इति विष्ण्वादिपुराणवाक्येभ्यः, 'मौर्यचन्द्रगुप्तार्थं चाणक्योऽर्थशास्त्रं विरचयामास' इति दण्डिवाक्याच्च, कौटिल्यः क्रिस्तात्प्रागब्दानां चतुर्थे शतकेऽजीवदिति ज्ञायते ।

"कर्तर्या कुन्तलश्शातकर्णिश्शातवाहनो महादेवीं मलयवतीं जघान"

इति कामसूत्रे (II. 7) अभिदधानो वात्स्यायनस्तु क्रिस्ताब्दानां 137 तमाद्वत्सरात् आच 209 तमाद्वत्सराद् भरतखण्डस्य पश्चिमप्रान्तेषु कृतराज्यानुशासनानां शातवाहनानां वंश्येन शातकर्णिना समकालिको वा आहोस्वित्तदुत्तरकालिको वाऽभवदिति बाढं ज्ञायते । तदित्थं पुराणादिप्रमाणबलेन कामसूत्रन्यायसूत्रभाष्ययोः प्रणेतुः वात्स्यायनाद्बाढं प्राचीनः कौटिल्यः कथं वा स्वोत्तरकालिकात्तस्मादभिन्नस्स्यात्?

[अनुवादैः न्यायभाष्यकर्तुः एतदनन्यत्वानिश्चयः]

अपि च स्वीये ग्रन्थेऽनूद्यमानस्य स्वीयग्रन्थान्तरस्य स्वीयताप्रदर्शनरूपं ग्रन्थकृतां सम्प्रदायमुररीकृत्य न्यायसूत्रभाष्येऽर्थशास्त्र-

वाक्यान्यनुवदन्नपि वात्स्यायनो न कुत्राप्यर्थशास्त्रस्य स्वीयतां प्रदर्शयामास। तथाहि—

(1) 'प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम्।
आश्रयस्सर्वधर्माणां विद्योद्देशे प्रकीर्तिता॥'

इति प्रथमाध्याये प्रथमाह्निके प्रथमसूत्रस्य भाष्ये,

(2) 'परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः।'

इति प्रथमाध्याये प्रथमाह्निके चतुर्थसूत्रभाष्ये,

(3) 'पदसमूहो वाक्यमर्थपरिसमाप्तौ।'

इति प्रथमाध्याये द्वितीयाह्निके ५५ तमसूत्रभाष्ये च अर्थशास्त्र-वाक्यान्यनूदितानि वर्तन्ते। एषु अनुवादेषु—

'शश्वदान्वीक्षिकी मता"

इति अर्थशास्त्रस्य प्रथमाधिकरणे द्वितीयाध्याये पठ्यमानं चतुर्थं पादं प्रहाय,

"विद्योद्देशे प्रकीर्तिता"

इति विद्योद्देशनामकमनूदितप्रकरणं प्रदर्शयन् वात्स्यायनः प्रकीर्तनकर्तारं निगूहयामास। तथैव द्वितीयानुवादे 'तन्त्रयुक्ति' नामकं पञ्चदशमधिकरणमनुवादस्थलमभिदधानोऽपि तत्रापि स्वीयतां परकीयतां वा सन्दिग्धां चकार। तृतीयानुवादे त्वनुवाद-प्रदेशमपि (अर्थ. II. 10) न द्योतयामास। यद्यर्थशास्त्रं स्वीयमेव स्यात् तदेदृशं गूहनश्रमं परिहाय तस्य ग्रन्थस्यापि स्वीयतां स प्रकाशयेदेव॥

[तथैव कामसूत्रकर्तुः एतदनन्यत्वानिश्चयः]

किंच—

"यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मणकन्यामभिमन्य-मानस्सबन्धुराष्ट्रो विननाश।............रावणश्च सीतामपरे चान्ये च बहवो दृश्यन्ते कामवशगा विनष्टा इत्यर्थचिन्तकाः"

इति कामसूत्रे (I. 2) अर्थशास्त्रस्य प्रथमाधिकरणीयषष्ठा-ध्यायात् कतिपयानि वाक्यान्यनुवदन् वात्स्यायनः "अर्थचिन्तकाः"

इति गौरवप्रदर्शकं बहुवचनान्तं पदं प्रयुज्य अर्थशास्त्रप्रणेतुः स्वान्यतां स्पष्टीचकारेति सुवचम् ।

अपि चार्थशास्त्रे प्रयुक्तानि पारिभाषिकपदानि प्रयुज्य कामसूत्रं रचयन् वात्स्यायनः तस्य ग्रन्थस्यार्थशास्त्रोत्तरकालिकतां बाढं प्रकटयामास । तथाहि :—

| | (कामसूत्रे) | (अर्थशास्त्रे) |
|---|---|---|
| 1. | कामसूत्रमिदं प्रणीतम् । तस्यायं प्रकरणाधिकरणसमुद्देशः । ... .... विद्यासमुद्देशः औपनिषदिकम् । I. 1. | इदमर्थशास्त्रं कृतम् । तस्यायं प्रकरणाधिकरणसमुद्देशः । विद्यासमुद्देशः ....... औपनिषदिकम् । I. 1. |
| 2. | पितृपैतामहं वश्यं इति मित्रसंपत् । I. 5. | पितृपैतामहं वश्यं इति मित्रसंपत् VI. 1. |
| 3. | कामोपधाशुद्धान् रक्षिणोऽन्तः स्थापयेदित्याचार्याः V. 6. | कामोपधाशुद्धान् बाह्याभ्यन्तरविहाररक्षासु । I. 10. |
| 4. | इतस्ततश्च स्वयमेवापसृत्योपजपति चेदुभयोर्गुणानपेक्षी चलबुद्धिरसन्धेयः VI. 4. | स्वदोषेण गतागतो गुणमुभयाः परित्यज्याकारणाद्गतागतश्चलबुद्धिरसन्धेयः । VII. 6. |
| 5. | अर्थो धर्मः कामः इत्यर्थत्रिवर्गः । अनर्थोऽधर्मो द्वेष इत्यनर्थत्रिवर्गः VI. 6. | अर्थो धर्मः काम इत्यर्थत्रिवर्गः । अनर्थोऽधर्मश्शोक इत्यनर्थत्रिवर्गः । IX. 7. |
| 6. | अर्थोऽर्थानुबन्धः | अर्थोऽर्थानुबन्धः |
| | अर्थो निरनुबन्धः | अर्थो निरनुबन्धः |
| | अर्थोऽनर्थानुबन्धः | अर्थोऽनर्थानुबन्धः |
| | अनर्थोऽर्थानुबन्धः | अनर्थोऽर्थानुबन्धः |
| | अनर्थो निरनुबन्धः | अनर्थो निरनुबन्धः |
| | अनर्थोऽनर्थानुबन्धः | अनर्थोऽनर्थानुबन्धः |

| | |
|---|---|
| अर्थोऽनर्थ इति संशयः | अर्थोऽनर्थ इति संशयः |
| धर्मोऽधर्म इति संशयः | धर्मोऽधर्म इति संशयः |
| कामो द्वेष इति संशयः | कामश्शोक इति संशयास्त्रिवर्गः |
| VI. 6. | IX. 7. |

गवाध्यक्ष—सूत्राध्यक्ष—पण्याध्यक्ष -आयुक्ताद्यर्थशास्त्रपारिभाषिकपदानि च तत्र तत्रोपयुक्तानि दृश्यन्ते ।

[न्यायभाष्यकर्ता अज्ञातपाणिनेः कौटिल्यादुत्तरकालिकः]

पाणिनिप्रयुक्तानि व्याकरणपारिभाषिकपदानि न्यायसूत्रभाष्ये प्रयुञ्जानो वात्स्यायनोऽज्ञातपाणिनेः कौटिल्यादुत्तरकालिक इत्यपरं कारणं चात्र दरीदृश्यते । तथाहि—

| [न्यायभाष्ये] | [अष्टाध्याय्यां] |
|---|---|
| 1. वृक्षस्तिष्ठतीति स्वस्थितौ स्वातन्त्र्यात् कर्ता । | स्वतन्त्रः कर्ता I. 4, 54. |
| 2. वृक्षं पश्यतीति दर्शनेनाप्तुमिष्यमाणत्वात् कर्म । | ईप्सिततमं कर्म I. 1, 49. |
| 3. वृक्षेण चन्द्रमसं ज्ञापयतीति ज्ञापकस्य साधकतमत्वात् करणम् | साधकतमं करणं I. 4, 42. |
| 4. वृक्षायोदकमासिञ्चतीति आसिच्यमानेनोदकेन वृक्षमभिप्रैतीति सम्प्रदानम् । | कर्मणा यमभिप्रैति स सम्प्रदानम् I. 4, 45. |
| 5. वृक्षे वयांसि सन्तीत्याधारोऽधिकरणम् । I. 2, 16. | आधारोऽधिकरणम् I. 4, 45. |

किंच अस्तेर्भूः, (I. 4, 52) ब्रुवो वचिः (I. 4, 53) इत्यादिसूत्राणि च न्यायसूत्रभाष्ये (II. 2, 41.) अनूदितानि वर्तन्ते ।

[कामसूत्रकर्तुः एतदन्यत्वे हेत्वन्तराणि]

एवं कौटिल्येन अपरामृष्टाः मन्वन्तरयुगान्तरविषयाः कामसूत्रे (II. 1, 67) निर्दिष्टाः वात्स्यायनस्योत्तरकालिकतां स्पष्टयन्तीति पाश्चात्यविदुषां राद्धान्तः।

अन्यच्चेदं कौटिल्यस्य वात्स्यायनान्यत्वनिर्धारकं कारणं दरीदृश्यते—स्वीये कामसूत्रव्याख्याने (I. 2) "वात्स्यायन इति स्वगोत्रनिमित्ता समाख्या। मल्लनाग इति सांस्कारिकी" इति कामसूत्रप्रणेतुर्नामभेदनिर्वचनं कुर्वन् यशोधरः, सति वात्स्यायनस्य कौटिल्यादिनामान्तरे प्रसङ्गसङ्गत्या तत्सूचनमपि नैवोज्झ्यात्। कामसत्रप्रणेतुर्वात्स्यायनो मल्लनाग इति यन्नामद्वयं प्रसिद्धं निर्दिष्टं, न केवलं व्याख्यातृकृतं तन्नामभेदनिर्वचनमेका प्रसक्तिः, अपि तु अर्थशास्त्राद्वाक्यानामनुवादः कौटिलीयादिम्लेच्छितविकल्पानां विवरणं चापरे द्वे प्रसक्ती आस्ताम्। ग्रन्थनामनिर्देशं विनैव केवलं "तथा चोक्तम्" इत्यर्थशास्त्रात्कामसूत्रव्याख्याने यशोधरेणानूदितानि वाक्यानि चेमानि—

(1) "संवरणमात्रं त्रयी लोकयात्राविदः।
(कामसूत्रव्याख्या I. 2, पत्र 21. अर्थशास्त्रम् I. 2.)

(2) "दैवं मानुषं हि कर्म लोकं पालयति।"
(काम. I. 2, प. 23. अर्थ. VI. 2.)

(3) "मेषशृङ्गी क्वाथाभिषुतो गुडप्रतीवापः पिप्पलीमरिचसम्भारस्त्रिफलायुक्तो मद्यो मैरेयः"।
(काम 1. 4, प. 54. अर्थ. II. 25.)

(4) "तत्र पूर्वे धर्म्याश्चत्वारः।"
(काम. III. 3. प. 208. अर्थ. III. 2.)

(5) "न शोधनमशुद्धस्य (न दूषणमदुष्टस्य) विशेषेणाम्भसश्चरेत् (विषेणेवाम्भसश्चरेत्) कदाचिद्धिप्रदुष्टस्य (कदाचिद्धि प्रदुष्टस्य) नाधिगम्येत भेषजम्॥"
(काम. V. 6. प. 303. अर्थ. I. 10.)

(6) "शौर्यममर्षता शीघ्रता दाक्ष्यं चोत्साहगुणाः।"
(काम. VI. I. प. 309. अर्थ. VI. 1.)

"तथा च कौटिल्येनार्थशास्त्रे उक्तम्" इति वा, अथवा "तथा च वात्स्यायनेनैव स्वीयेऽर्थशास्त्रे उक्तम्" इति वा, विशिष्य निगमनं विहाय, केवलं "तथाचोक्तम्" इति सामान्यतः परोक्तिमिव परामृशन् यशोधरस्तान्येतानि वाक्यान्यन्ववदत्। एवमेव—

"यत्साधुशब्दोपनिबद्धमप्यक्षरविपर्यासादस्पष्टार्थं तन्म्लेच्छितं गूढवस्तुमन्त्रार्थम्। तस्य विकल्पा बहवः पूर्वाचार्योक्ताः, तद्यथा—

कौटिलीयं यदि क्षान्तैः स्वरयोर्ह्रस्वदीर्घयोः'

बिन्दूष्मणोर्विपर्यासाद्दुर्बोधमिति संज्ञितम् (I. 3. प. 39)"

इति कौटिलीयस्य म्लेच्छितविकल्पस्य पूर्वाचार्योक्तत्वं वदता यशोधरेण कौटिल्यो वात्स्यायनादन्यः पूर्वाचार्य इति बाढं प्रकटितं दृश्यते।

[अर्थशास्त्रकर्तुर्विष्णुगुप्तादन्योऽपि विष्णुगुप्तः कश्चन]

अपि च—

'आयुर्दायं विष्णुगुप्तोऽपि चैवं
देवस्वामी सिद्धसेनश्च चक्रे।'

इति बृहज्जातकस्य सप्तमाध्यायस्थसप्तमश्लोकस्य व्याख्यायां—
"किं तु विष्णुगुप्तेनापि चाणक्यापरनाम्ना एवमुक्तम्"

इति,

"न कुम्भलग्नं शुभमाह सत्यः
तं भागभेदाद्यवना वदन्ति।
कस्यांशभेदो न तथाऽस्ति राशेः
अतिप्रसङ्गस्त्विति विष्णुगुप्तः"॥

इति बृहज्जातकस्य एकविंशाध्यायस्थतृतीयश्लोकव्याख्यायां "अत्र विष्णुगुप्तचाणक्यावाहतुः-कस्यांशेति" इति च वदता भट्टोत्पलेन चाणक्यापरनामा विष्णुगुप्त एकः, चाणक्यापरनाम-

विरहितो विष्णुगुप्तोऽपर आसीदिति सूचितं दृश्यते। एतौ च विष्णुगुप्तचाणक्यौ राश्यंशसंज्ञापरिष्कृतज्योतिश्शास्त्रवेत्तारौ राश्यंशभेदापरिष्कृतज्योतिर्विदो विष्णुगुप्तचाणक्यापरनामद्वयादर्थशास्त्रकृतः कौटिल्यादन्यावास्तामिति द्वितीयाधिकरणस्थकालमानाध्यायात् (II. 20.) निर्णेतुं शक्यते। तत्र हि—राश्यंशभेदोपजीव्यं सपादपञ्चषष्ट्यधिकत्रिशतदिनमितं सौरं संवत्सरमपहाय, आदित्यसंवत्सरं षट्षष्ट्यधिकत्रिशतदिवसपरिमितं प्रकल्पितमङ्गीकृत्यैव अधिमासगणना कृता दृश्यते। अतश्च राश्यंशभेदपरिष्कृतसौरसंवत्सरादिविषयास्तदानीमर्थशास्त्रप्रणेत्रा कौटिल्येन न ज्ञाता आसन्निति स्पष्टमेव गम्यते। तथा च—

"उक्तं चाचार्यविष्णुगुप्तेन। तथाऽऽह—

अप्यर्णवस्य पुरुषः प्रतरन् कदाचित्
आसादयेदनिलयोगवशेन पारम्।
न त्वस्य कालपुरुषाख्यमहार्णवस्य
गच्छेत् कदाचिदनृषिर्मनसाऽपि पारम्॥"

इति बृहत्संहितायां (II. 4) वराहमिहिरेण निर्दिष्टो विष्णुगुप्तः अर्थशास्त्रप्रणेतुर्विष्णुगुप्तादन्य एवेति निर्धार्यते।

[निगमनम्]

तदित्थं वात्स्यायनस्य विष्णुगुप्तादिनामभिः प्रसिद्धौ सत्यामपि न तस्यार्थशास्त्रप्रणेतृत्वप्रसक्तिस्संभवतीत्यनवद्यम्॥

[नन्दिसूत्रे अर्थशास्त्रीया: कथा:]

"खम ए अमच्चपुत्ते चाणिक्क चेव्व थूलबद्दय।
भारहं रामायणं भीमासुरक्कं कोडिल्लियम्॥"

इति वदता नन्दिसूत्रकृता कौटिलीयार्थशास्त्रं ज्ञातपूर्वमासीदिति प्रथममुद्रणोपोद्घाते सूचितम्। राजकोपपात्रस्य मन्त्रिणः कर्तव्यं बोधयितुं कौटिल्येन पञ्चमाधिकरणे पञ्चमाध्याये परमतानुसारेण प्रयुक्तानां क्रौञ्चापसव्यगमनदीर्घतृणशीतशाट्यादिपदानां व्याख्यारूपाः काश्चन पुरातन्यो गाथाः दृश्यन्ते। अर्थशास्त्र-

बुभुत्सुभिस्सकथास्ता गाधा अवश्यं ज्ञातव्या एवेति ता अत्र समुद्ध्रियन्ते—

[बुद्धेः चातुर्विध्यम्]

[1] उप्पत्तिया वेणयिया कम्मया पारिणामिया ।
बुद्धी चउविहा वुत्ता पञ्चमा नोपलम्भयि ॥ १ ॥
(औत्पत्तिकी वैनयिकी कर्मजा पारिणामिकी ।
बुद्धिश्चतुर्विधा उक्ता पञ्चमी नोपलभ्यते ॥ १ ॥)

[तत्र प्रथमा औत्पत्तिकी]

पुव्वमदिट्ठमसुयमवेइयतक्खणविसुद्धगहियत्था ।
अव्वाहयफलजोगा बुद्धी ओप्पत्तिया नाम ॥ २ ॥
(पूर्वमदृष्टमश्रुतमवेदिततत्क्षणविशुद्धगृहीतार्था ।
अव्याहतफलयोगा बुद्धिरौत्पत्तिकी नाम ॥ २ ॥)

भरहसिल पणियरुक्खे खुड्डगपडसरडकायउच्चारे ।
गय घयण गोलत्तम्भे खुलगमग्गित्थिपयि पुत्ते ॥ ३ ॥
(भरतशिला[1]पणि[2]तवृक्षे[3] खुड्डग[4] पट[5]सरट[6] काक[7] उच्चारे[8] ।
गज[9] घयण[10] गोल[11]स्तंभे[12] क्षुल्लक[13]मार्ग[14]स्त्री[15]पति[16]पुत्रे[17] ॥ ३ ॥)

महुसित्थमुद्दियंके य नाणये बिक्खुचेडगनिहाणे ।
सिक्खाअ अत्थसत्थे इच्छाय महं सेयसहस्से ॥ ४ ॥
(मधुसिक्थ[18]मुद्रिका[19]ऽङ्के[20] च नाणके[21] भिक्षु[22] चेटकनिधाने[23] ।
शिक्षाया[24]मर्थशास्त्रे[25] इच्छा महती[26] शतसहस्रे[27] ॥ ४ ॥)

[द्वितीया वैनयिकी]

भरनित्थरणसमत्था तिवग्गसूत्तत्थ गहियपेयाला ।
उभये लोगे फलवयी विणयसमुत्था हवयि बुद्धी ॥ ५ ॥
(भरनिस्तरणसमर्था त्रिवर्गसूत्रार्थगृहीतप्रमाणा ।
उभये लोके फलवती विनयसमुत्था भवति बुद्धिः ॥ ५ ॥)

---

[1] नन्दिसूत्रम्. पु. 268—334; 1880, Calcutta.

निमित्ते अत्थसत्थे लेहे गणिये य कूव अस्से य ।
गद्दह लक्खणगंठी अगये गणियाय रहियो य ॥ ६ ॥
(निमित्ते[28] अर्थशास्त्रे[29] लेखे[30] गणिते[31] च कूपे[32] अश्वे[33] च ।
गर्दभ[34]लक्षण[35]ग्रन्थी[36] अगदे[37] गणिका[38] च रथिकश्च[39] ॥ ६ ॥)

सीया साडी दीहं च तणं अवसव्वयं च कूंचस्स ।
निव्वोदयेय गोणे घोडगपडणं च रुक्खायो ॥ ७ ॥
(शीता शाटी [40] दीर्घं च तृणं [41] अपसव्यं च क्रौञ्चस्य [42] ।
निर्वेदनं [43] गवोः [44] घोटकपतनं [45] च वृक्षाश्च [46] ॥ ७ ॥)

[तृतीया कर्मजा]

उवयोगदिट्ठसारा कम्मपसंगपरिघोलणविसाला ।
साहुक्कारफलवयी कम्मसमुत्था हवयि बुद्धी ॥ ८ ॥
(उपयोगदृष्टसारा कर्मप्रसङ्गपरिघोलनविशाला ।
साधुकारफलवती कर्मसमुत्था भवति बुद्धिः ॥ ८ ॥)

हेरण्णये करिसये कोलियडोवेयमुत्तिघयपवये ।
तुन्नाय वड्ढयि पूयियेय घडचित्तकारेय ॥ ९ ॥
(हैरण्यके [47] कर्षके [48] कौलिक[49]दर्वी [50] घृत[51]प्लवके [52] ।
तुन्नाग[53]वर्धक्या[54]पूपिक[55]घट[56]चित्रकाराश्च [57] ॥ ९ ॥)

[तुरीया पारिणामिकी]

अणुमानहेतुदिट्ठंतसाहियावय विवागपरिणामा ।
हियनिस्सेयसफलवयी बुद्धी परिणामियानाम ॥ १० ॥
(अनुमानहेतुदृष्टान्तसाधिता वयोविपाकपरिणामा ।
हितनिश्श्रेयसफलवती बुद्धिः पारिणामिकी नाम ॥ १० ॥)

अभये सेट्टीकुमारे देवी उदियोदयो हवयिराया ।
साहुयनन्दिसेणे धणदत्ते सावग अमच्चे ॥ ११ ॥
खपये अमच्चपुत्ते चाणक्के चेव्वथूलवद्द अ ।
नासिक्कसुन्दरीनन्दे वयिरे परिणामिया बुद्धी ॥ १२ ॥

**चलणाहण आ मण्डे मणिय सप्पये खग्गितूभये ।**
**पारिणामिया बुद्धीये एवमायी उदाहरणा ॥ १३ ॥**

(अभय[58]श्श्रेष्ठी[59] कुमारः[60] देवी[61] उदितोदयो[62] भवति राजा ।
साधुश्च नन्दिषेणो[63] धनदत्त[64]श्श्रावको[65]ऽमात्यः[66] ॥ ११ ॥
क्षपको[67]ऽमात्यपुत्र[68]श्चाणक्य[69]श्चैव स्थूलभद्रश्च[70] ।
नासिक्यसुन्दरी[71]नन्दो[72] वज्रो[73] पारिणामिकी बुद्धिः ॥ १२ ॥
चरणाहते[74] आमलके[75] मणौ[76] सर्पे[77] खड्गि[78]स्तूपे[79] च ।
पारिणामिक्या बुद्ध्या एवमादीनि उदाहरणानि ॥ १३ ॥)

[आभिर्गाथाभिः अवगतोंऽशः]

अत्र हि राजनीत्यां व्यापृतानां राज्ञां मन्त्रिणां कारणिकानां पौराणां च यदौत्पत्तिकं वैनयिकं कर्मजं पारिणामिकं वा बुद्धि-कौशल्यं कौटिल्यात्पुरैव कथासु प्रख्यापितमासीत् । एकोनाशीति-सङ्ख्याकास्ताः कथाः उपर्यनूदितासु गाथासु अङ्काङ्कितैः पदै-स्सूचिता वर्तन्ते । कथाश्चैता नन्दिसूत्रव्याख्यायां संक्षेपेण कथिताः सविस्तारमन्येषु जैनग्रन्थेषु रक्षितास्सन्तीत्यस्माद्व्याख्यानादेवाव-गम्यते । कौटिलीयार्थशास्त्रे पञ्चमाधिकरणे पञ्चमाध्याये दीर्घतृण-शीतशाठ्यादीनां नीत्युपयुक्तकथासूचकपदानां प्रयोगात् एताः कथाः क्रिस्तात्पूर्वमब्दानां पञ्चमे षष्ठे वा शतके प्रचारं गतास्समा-सन्निति बाढं ज्ञायते । एतत्कथास्थानीयाः बौद्धजातककथा अपि तदैव बाढं प्रथितास्समभवन्निति भूलर्नाम्ना पाश्चात्यविदुषा कृताया-स्सम्भावनाया इदमपरं निरस्तसन्देहं गमकं भवति ।

[प्रकृतकथापरिचयः]

प्रकृते आसां एकोनाशीतिकथानामत्र सङ्ग्रहो ग्रन्थगौरवावहः इति शीतशाठ्यादिपदसूचितार्थबोधकं कथामात्रमेवात्र संगृहीतम्—तथाहि—

"कश्चित्पुरे कोऽपि राजा । तत्पुत्राः केनाप्याचार्येण शिक्ष-यितुमारब्धाः । ते च अस्मै आचार्याय प्रभूतं द्रव्यं दत्तवन्तः । राजा च, द्रव्यलोभी तं मारयितुमैच्छत् । तैश्च पुत्रैः कथंचिदेतत्

ज्ञात्वा चिन्तितम्—"अस्माकमेष विद्यादायी परमार्थतः पिता। ततः कथमप्येनमापदो निस्तारयामः" इति। ततो यदा भोजनाय समागतः आचार्यः स्नानशाटिकां याचते तदा ते कुमाराः शुष्कायामपि सत्यां शाट्यां "अहो शीता शाटी" इत्यवदन्। द्वारसंमुखं च तृणं कृत्वा, "अहो दीर्घतृणं" इति, "पूर्वं क्रौञ्चेन सदैव प्रदक्षिणीकृतम्, सम्प्रति तु सोऽपसव्यं भ्रमति" इति चावदन्। ततः आचार्येण ज्ञातम्—'सर्वं मयि विरक्तम्। केवलमेते कुमारा मयि भक्तिवशात्तमर्थं ज्ञापयन्ति' इति। ततो यथा न लक्ष्यते तथा स पलायामास" इति।

[उपलब्धकथानुगुणं ऊह्याः कतिपयपाठविशेषाः]

एतत्कथानुसारेण "तृणमिति दीर्घश्चारायणः" (V. 5) इत्यत्र "तृणमिति दीर्घं चारायणः" इति पाठः पठनीयो भवति। एवमेव उच्चैस्सिञ्चन-हस्तिप्रत्युक्षण-रथाश्वशब्दा अपि राजकोपप्रसादसूचककथाबोधका इति स्पष्टमवगम्यते। "प्रतिवरणे शूनमिति पिशुनपुत्रः। अर्थमानावक्षेपे च परित्यागः" इत्यत्र "प्रतिवरणे अर्थमानावक्षेपे च परित्याग इति पिशुनपुत्रः" इति पाठो गरीयानिति भाति। 'प्रतिवरणे' इत्यस्य—प्रतिमन्त्रवरणे-अन्यनियोगे इत्यर्थः।

[प्रथमा हस्तिकथा]

राजकोपप्रसादप्रदर्शकहस्तिकथा चेत्थं श्रूयते—

मुमूर्षुः कश्चन हस्ती राज्ञा ग्रामे प्रेषितः। 'हस्ती मृत इति न निवेदनीयः। प्रत्युत प्रतिदिनमपि तस्य वार्ता कथनीया' इति ग्रामाय संदेशं च स प्राहिणोत्। रक्षितोऽपि हस्ती मृतः। ग्रामेण राज्ञे निवेदितं च—"देव! अद्य हस्ती न निषीदति, नोत्तिष्ठति, न कबलं गृह्णाति, नापि नीहारं करोति, न वोच्छ्वासनिश्वासौ विदधाति, किं बहुना न स सचेतनश्चेष्टां करोति" इति। राज्ञा भणितं—'किं रे, मृतो हस्ती?' इति। ततो ग्रामेण भणितं—'देव, देवपादा एवं ब्रुवते। न वयम्' इति। तदा राजा मौनमादधौ। गतो ग्रामलोकः"। इत्येका हस्तिकथा।

[द्वितीया हस्तिकथा]

"बुद्धिकुशलं मन्त्रिणमेकमन्विष्यन् कश्चन राजा हस्तिनमालानस्तम्भे बन्धयित्वा घोषणमचीकरत् 'योऽमुं हस्तिनं तोलयति तस्मै राजा महतीं वृत्तिं प्रयच्छति' इति। कश्चन पुरुषः हस्तिनं महासरसि नावमारोप्य, यावत्प्रमाणा नौः जलनिमग्ना तावत्प्रमाणां रेखां कृत्वा, ततो हस्तिनं समुत्तार्य गण्डशैलकल्पान् ग्राव्णः नावि पूर्वरेखानिमज्जनपर्यन्तं प्रक्षिप्य, तान्पाषाणान् तोलयामास। गजतोलनं च राज्ञे निवेदितवान्। राजा च तुष्टस्तं मन्त्रिणं चकार" इत्यपरा कथा।

[तृतीया हस्तिकथा]

"परचक्रेण रुद्धः कश्चन राजा जलदूषणार्थं विषमपेक्षमाणो वैद्यानाकारयामास। कश्चन वैद्यो यवमात्रं विषमानीय 'देव, गृहाण विषं' इति समर्पितवान्। राजा स्तोकं विषं दृष्ट्वा चुकोप। तस्मै वैद्यो विज्ञापयामास—'देव, सहस्रवेधीदं विषम्। तस्मादप्रसादं मा कुरु' इति। राजाऽवादीत् 'कथमेतदवसेयम्' इति। स आह—"आनीयतां कोऽपि जीर्णो हस्ती' इति। आनीतस्य हस्तिनः वालप्रदेशे रन्ध्रं कृत्वा विषं तत्र सञ्चरितं वैद्येन। ततो भणितं च तेन—'देव, सर्वोऽप्येष हस्ती विषमयो जातः। योऽप्येनं भक्षयति सोऽपि विषमयो भवति। एवमेतद्विषं सहस्रवेधि' इति। ततो हस्तिहानिदूनचेतसं राजानं तोषयितुं वैद्यो रन्ध्रे तस्मिन्नपरं गदं संचार्य विषप्रतीकारं कृत्वा हस्तिनमुज्जीवयामास" इति।

[अन्या अपि कथाः]

एवमेव रथाश्वकथा अपि बुद्धिकौशल्यप्रदर्शकाः कथिताः दृश्यन्ते। तास्तत एवावगम्याः।

[प्रथममुद्रणादस्मिन् द्वितीयमुद्रणे वैलक्षण्यं, संगृहीतमातृकान्तराणि च]

कोशान्तरालाभाद्यथास्थितपाठमेव प्रथममुद्रणं साधितम्। इतः परं मद्रास्पत्तनस्थप्राच्यकोशभाण्डागाराय संपादितस्य कोशद्वयस्य प्रत्यन्तरमासाद्य, जर्मनीदेशस्थे उर्जबर्ग्पत्तने सर्वविद्यालयकोशागारे स्थितस्य कोशस्य च तृतीयचतुर्थाधिकरणयोरुपलभ्य-

मानान् पाठभेदान् पत्रिकाद्वाराऽऽसाद्य च द्वितीयमुद्रणमिदं बह्वपेक्षितं सपाठभेदं यथामति परिष्कृतं च संसाधितम्। मद्रास्-जर्मनीकोशौ चात्र मुद्रिते कोशे 'म' 'ज' अक्षराभ्यां सूचितौ (?)। क्वचिल्लेखकप्रमादाभ्रष्टानि छन्दांसि पुनराबद्धानि[1]। क्वचिच्च ग्रन्थपातस्समुद्धृतः[2]। कोशान्तरापेक्षया अवश्यं परिष्करणीयाः पाठा भूयांसस्स्युरित्येतेनैव संभाव्यते।

भट्टस्वामिकृता प्रतिपदपञ्चिकानाम्नी व्याख्या द्वितीयाधिकरणाष्टमाध्यायादारभ्य आऽधिकरणसमाप्तेरुपलब्धा वर्तत इति पुरैव सूचितम्। इदानीं मद्रास्पत्तनस्थप्राच्यकोशागाराय सम्पादितायाः सप्तमाधिकरणसप्तमाध्यायात् आ च द्वादशाधिकरणचतुर्थाध्यायादुपलब्धायाः वादिकविचूडामणिमहोपाध्यायश्रीमाधवयज्वमिश्रविरचिताया नयचन्द्रिकाख्याया अर्थशास्त्रव्याख्यायाः प्रत्यन्तरमासादितम्। द्वितीयाधिकरणसप्तमाध्यायादारभ्य द्वादशाधिकरणचतुर्थाध्यायपर्यन्तं विद्यमाने मूले १५०० ग्रन्थपरिमितेऽपि व्याख्येयं ४००० ग्रन्थपरिमिता दृश्यत इति विस्तृतैवेयं समीचीनेत्यपि भाति। अथापि सम्पूर्णव्याख्यानोपलब्धिं विना नेयं मुद्रणार्हेत्येष एव खेदावहो विषयः।

[चाणक्यसूत्राणि]

चाणक्यसूत्राणीति प्रसिद्धानि (एकसप्तत्यधिकपञ्चशतमितानि) नीतिबोधकानि सूत्राणि क्वचिदर्थशास्त्रवाक्यसमानाकाराणीति प्रायेण चाणक्यकृतान्येवेति ग्रन्थान्तेऽत्रानुबन्धे मुद्रितानि। "स्वयमेव विष्णुगुप्तश्चकार सूत्रं च भाष्यं च" इति ग्रन्थान्ते यानि सूत्राणि कौटिल्येन परामृष्टानि न तान्येतानि चाणक्यसूत्राणि, यतोऽर्थशास्त्रं नैतेषां भाष्यम्। परं तु यथा ममार्थशास्त्राङ्गलेयभाषानुवादस्य उपोद्घाते मयोहितं तथैव नयचन्द्रिकाकारेणापि 'प्रकरणाधिकरणसमुद्देशः' इत्युपक्रम्य "तन्त्रयुक्तयः" इत्यन्तं प्रतिप्रकरणविषयसूचनारीत्या कौटिल्येन पठितान्येव वाक्यकदम्बानि अर्थशास्त्रात्मकभाष्यविषयीभूतानि सूत्राणीति स्पष्टीकृतमिति सर्वमनवद्यम्।

MYSORE 1919 — R. SHAMA SASTRY.

---

[1] II. 24; [2] IV. 1, 3.

# तृतीयमुद्रणोपोद्घातः

[एतदुपोद्घातोद्देशः]

तृतीयमुद्रणमिदमर्थशास्त्रस्य न द्वितीयमुद्रणादतीव भिद्यत इति नोपोद्घातान्तरमपेक्षते। तथाऽपि महामहोपाध्यायेन गणपतिशास्त्रिणा स्वीयव्याख्यया साकमनन्तशयनसंस्कृतग्रन्थावल्यां-प्रकाशितस्यार्थशास्त्रप्रथमाधिकरणद्वयस्योपोद्घाते –" महीशूरराज-कीयसंस्कृतग्रन्थावल्यां प्रकाशितमर्थशास्त्रमूलं पाठाशुद्धिभूयिष्ठं, तदीयाङ्गलेयभाषानुवादश्चासङ्गतार्थ" इति यत्प्रलपितं; यच्च 'स्वप्रकाशितं मूलं व्याख्यानं च बाढं शुद्धं सङ्गतं चे'ति प्रोद्घुष्टं, तदत्र किंचिद्विचार्यते—

[श्री गणपतिशास्त्रिकृतमुद्रणे मूलपाठदोषाः]

असूयान्धीकृतदृशाऽनेनशास्त्रिणा दृष्टा पाठाशुद्धिः पूर्ववाक्ययोज्यस्य पदस्योत्तरवाक्येन सह योजनमुत्तरवाक्ययोज्यस्य पूर्ववाक्येन सह योजनमित्येवञ्जातीयेत्यवर्णि। सोऽयं पदानां स्थानव्यत्ययोऽधः प्रदर्शितेषु अष्टसु स्थलेषु कृतो दृश्यते—

| पृष्ठ[1] | पङ्क्तौ | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| 81 | 1 | 121 | 7 |
| 82 | 1 | 127 | 8 |
| 99 | 1-2 | 232 | 3 |
| 110 | 2 | 286 | 7 |

[1] पृष्ठसंख्या पङ्क्तिसंख्या चात्र श्री गणपतिशास्त्रिभिः मुद्रितेऽर्थशास्त्रे प्रथमं सम्पुटं परामृशति। किं च—श्रीशामाशास्त्रिणां श्री गणपतिशास्त्रिणां च कारणान्तरप्राप्ततात्कालिकमनोवृत्तिभेदेन परस्परमुद्भाविताः आरोपिताश्च एतादृशाः दोषाः किञ्चिदसमाहितमनःपरिणामा इति, नैषां दोषाणां तावद्याथार्थ्यं सम्भवेदिति च समाहितैः विभावनीयम्. विवरणं तु भूमिकाभागे द्रष्टव्यम्.

एतेषु सर्वेषु प्रदेशेषु पदानां स्थानव्यत्ययेन न काऽप्यर्थान्तर-परिस्फूर्तिर्दृश्यते ।

यत्पुन. 353 तमपृष्ठे प्रथमपङ्क्त्यां "पादः पञ्चघटीनाम्" इति विभज्य, वाक्यान्तरं कृत्वा "सार्धद्वादशघटिकात ऊर्ध्वं सार्धसप्तदशघटिकातः प्राक् याः पञ्चघटिकाः तासां संबन्धिन्यग्निकार्यकरणे पादः पणचतुर्भागदण्ड" इति तेन व्याख्यातं—तदसमञ्जसम् । न हि पञ्चघटिकाः सार्धद्वादश सार्धसप्तदशमध्यवर्तिन्य एव ग्राह्या इत्यत्र गमकं वर्तते। मध्यमयोरह्नश्चतुर्भागयोरिति पूर्ववाक्ये यच्चतुर्भागद्वयमुक्तं तत्राग्न्यप्रतीकारेऽष्टभागो दण्डो विहित इति न तदस्य पाददण्डस्य विषयः। तस्मिन्नप्यस्य विषये सति एकस्यापराधस्य विरुद्धदण्डद्वयविधानापत्तिः। किंचाह्नश्चतुर्भागयोरिति पूर्ववाक्य इवात्रापि घटिकास्विति सप्तम्यन्तं विहाय घटीनामिति षष्ठ्यन्तप्रयोगे कारणं मृग्यम्। किं च—घटीशब्दोऽत्र ग्रन्थे न कुत्रापि नालिकार्थे प्रयुक्तो दृश्यते। यत्पुनः द्वितीयाधिकरणे एकाविंशतितमेऽध्याये घटिकास्थाने स्थानमिति वाक्यं दृश्यते तत्र घटिकास्थानशब्दश्शुल्कगृहे कंचित्प्रदेशं वाऽभिधत्ते इति भट्टस्वामिनाऽन्यथा व्याख्यातम्—किं चात्रसंबन्धिपदं न निर्दिष्टम्। 'अग्निकार्यकरणे' इत्यध्याहारे न किमपि गमकम्। किंचात्र व्याख्याने गणपतिशास्त्रिणा "अग्निकार्य" शब्दोऽनेकवारं प्रयुक्तो दृश्यते। अग्निकार्यशब्दोऽग्न्युपासनमभिधत्ते न तु लौकिकमग्न्युद्दीपनमिति नाद्यापि तेन ज्ञातमिति विस्मयावहमेतत्। किंच—पादः पणचतुर्भागदण्ड इति प्रतिपदोपन्यासः गणपतिशास्त्रिणः प्रमाद एव। न हि पादशब्दो दण्डमप्यभिधत्ते ।

अपि च मर्यादाशब्दस्य तात्पर्यार्थे पुरस्कारमुपादाय कृतमाङ्लेयभाषानुवादमधिक्षिपन् गणपतिशास्त्री स्वीये पदप्रयोगे पदशक्यार्थमपि न गणयतीति विस्मयावहमेतत्। किंच द्राविडकर्णाटादिभाषासु अनुल्लङ्घनीयसीमास्थानीयपुरस्कारार्थे प्रयुज्यमानः मर्यादाशब्दः संस्कृतभाषाया एव संगृहीत इति न कोऽपि सन्देग्धि ।

तदित्थं पदव्यत्ययेन वाक्ययोजनां कृत्वा गणपतिशास्त्रिणा महाननर्थस्संपादितः॥

[तत्कृतव्याख्यादोषाः]

व्याख्याने तावत्कल्पितानन्थान् किञ्चित्पश्यामः—

असत्प्रग्रहः=अपूज्यपूजनं इति शास्त्रिणा व्याख्यातम्। (पृ. 49 प. 15) नैतादृशार्थकल्पने किमपि प्रमाणं वर्तते। नाप्यर्थोपधा-प्रकरणे ईदृशार्थस्य साङ्गत्यं दृश्यते।

कुलं=बहुपुत्रसङ्घः इति व्याख्यातम्। (पृ. 89 प. 22) बहु-भ्रातृसङ्घो बहुदारसङ्घो वाऽन्यो वा किं न स्यात्?

प्रवासयेत्=हन्यादित्यर्थः इति व्याख्यातम्। (पृ. 93 प. 9) प्रमाणं तु नानूदितम्।

परिहारः=दौस्स्थ्यपरिहारेण स्वास्थ्यसिद्ध्यर्थं दीयमानं द्रव्य-मिति परिहारशब्दार्थः परिष्कृतः (पृ. 111 प. 23) नात्र किमपि प्रमाणमनूदितम्—प्रत्युत परिहारशब्दः प्राचीनशासनेषु करविसर्ग एवार्थे प्रयुक्तो दृश्यते। अत्रापि ग्रन्थे पाञ्चवार्षिकः परिहार इति (Vol. 3. 55 तमे पृष्ठे) करविसर्गरूपार्थे एव प्रयुक्तो दृश्यते।

बाहिरिकान्=कितववञ्चकनटनर्तकान् इति व्याचक्षाणस्य (पृ. 131. प 17) शास्त्रिणः प्रमाणं स्वोक्तिरेवेति कः प्रत्येति?

लक्षणाध्यक्षः=क्षेत्रारामादिसीमाचिह्नाध्यक्षः इति (पृ. 136 प. 15) व्याख्यानं, 205 तमे पृष्ठे तृतीयपङ्क्त्यां लक्षणाध्यक्षः= टङ्कशालाध्यक्ष इति स्वोक्त्यैव विसंवदति।

व्याजी=विंशतिभाग इति व्याख्यातम्। (पृ. 137 प. 25) •पञ्चकं शतं व्याजी इत्यस्य (पृ. 206 प. 23) किमर्थं त्यागः?

तत्रैव "परिघः=आतरद्रव्यम्" इति व्याख्यानं 208 तमपृष्ठे द्वितीयपङ्क्त्यां "परिघः पारीक्षिकम्" इति व्याख्यानेन विरुद्धम्।

राजवर्षं मासः पक्षो दिवसश्च व्युष्टं=राजवर्षादि चतुष्टयं व्युष्टसंज्ञमित्यर्थः इति (पृ. 138 प. 5) व्याख्यातम्। नेयं संज्ञा, लोकप्रसिद्धा प्रयोगाभावात्। परंतु ग्रन्थकृतस्स्वसंज्ञा शास्त्रे व्यव-हारार्थं कृता—इति वक्तव्यम्। यदीदमित्थं स्यात् तर्हि संज्ञा-प्रदेशाः "व्युष्टदेशकालेति 149 तमे पृष्ठे दृश्यमानाः 23, 24, 25

पंक्तय एव। तत्र च व्युष्टशब्देन साकं कालशब्दस्यापि प्रयोगदर्शनात् राजवर्षमासपक्षदिवसदेशकालेति कालवाचकयोरन्यतरस्य वैयर्थ्यं स्यात्। ततश्च व्युष्टशब्दस्यात्र न राजवर्षादिरर्थः, परं तु अन्य एवार्थ इत्यभ्युपगन्तव्यम्। श्रावणकृष्णप्रतिपदि तदानीमारब्धो वर्षादिर्व्युष्टमिति पौर्णमास्यन्तो मासस्तदानीमासीदित्यन्यत्र विस्तरः। आषाढीं गाणनिक्यान्यागच्छेयुः इति गाणनिक्यागमनानन्तरं वत्सरादौ श्रावणकृष्णप्रतिपदि गाणनिक्यपरीक्षोपक्रमः तदानीमासीदिति विद्वांसो विदांकुर्वन्तु।

138 तमे पुटे 5 पङ्क्तयां—

"वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षाः, शेषाः पूर्णाः। पृथगाधिमासक" इत्यत्र शास्त्रिणा—राजवर्षस्य त्रिधा विभक्तस्य सिंहादिवृश्चिकान्ता रविमासा वर्षर्तुः, धनुरादिमीनान्ता हेमन्तः, मेषादिकुलीरान्ता ग्रीष्म इति त्रयाणामेषामृतूनां प्रत्येक मष्टौ पक्षाः। तेषु तृतीये सप्तमे चैकैको दिवसो हीयते, पृथगधिमासकः सौरमासाच्चान्द्रमासोऽतिरिक्तः इति व्याख्यातम्। इयं व्याख्या चाणक्यकालिकज्योतिषसिद्धान्त-ग्रन्थकर्त्रभिप्रायोभयाज्ञानविजृम्भितैव।

आ वराहमिहिरकालात् अद्ययावत् सौरसंवत्सरो हि सपादषष्ठ्यधिकत्रिशतदिवसात्मकः गृहीतोऽस्ति, तत्र षट्सु दिनेषु न्यूनितेषु एकोनषष्ठ्यधिकत्रिशतदिवसाश्शिष्यन्ते। किमेतावता प्राप्तम्? किं वाऽनेन दिवससमुदायेनात्रोपपादनीयं वर्तते? किमीदृगुक्तेः प्रयोजनम्? सेयं तु कल्पनैव। किं च अधिमासकः= अतिरिक्तश्चान्द्रमास इति कथमयमर्थस्समुपलभ्यते? ग्रन्थकृतस्त्वयमाशयः—

कालमानाध्यायान्तिमश्लोकोक्तरीत्या "त्रिशतं चतुःपञ्चाशच्चाहोरात्राणामिति" गाणनिक्याधिकाराध्यायोक्तरीत्या च षट्षष्ठ्यधिकशतत्रयदिवसात्मकस्सौरस्संवत्सरः चतुःपंचाशदधिकत्रिशतदिवसात्मकश्चान्द्र इति ग्रन्थकृदभिप्रेतौ संवत्सरौ। पञ्चदशाहोरात्रः पक्षः इति कालमानोक्तरीत्या $24 \times 15 = 360$ दिवसात्मकः चान्द्रसंवत्सरो मा भूदिति चतुर्विंशतिपक्षेषु तृतीये सप्तमे

एकादशे पञ्चदशे एकोनविंशे त्रयोविंशे च पक्षे एकैकदिवसत्यागात् षड्दिवसाः न्यूनीकृताः। तथा च 354 दिवसात्मकश्चान्द्रः सिध्यति। 366 दिवसात्मकात्सौराद्द्वादशदिनैर्न्यूनश्चान्द्रः सार्धसंवत्सरद्वये एकमधिमासं करोतीति।

व्युष्टदेशकालेत्यादिवाक्यानां व्युष्टादिविवरणयुक्तामायगणनां सम्पादयेदित्यर्थ इति विवरणं (पृ. 149 प 23) केवलं शब्दाडम्बर एव। किं च समानयेदित्यस्य सम्पादयेदिति नार्थः।

युक्तप्रतिषेधः=अध्यक्षाणां धनापहाराद्वारणमिति व्याख्यातम्।—(पृ. 152 प. 21) किं धनापहारः अध्यक्षैः राजसमक्षमेव क्रियते येन राजा तांस्तस्माद्वारयेत्? "ज्ञातुं न शक्या धनमाददानाः" इति ग्रन्थकृतैवोक्तम्। अत इदं व्याख्यानमसङ्गतमेव। ग्रन्थकृदाशयस्तु युक्तानाममितानां प्रतिषेधः विसर्गः, अनियोगो वा इति।

उपयुक्तः=युक्तानामुपरिनियुक्तः इति गणपतिशास्त्रिणा कृता व्याख्या (पृ. 150 प. 20), युक्तः प्रधानः उपयुक्तः तत्सहकारीति स्वकृतया व्याख्यया (पृ. 134 प. 30) विसंवादिनीति समाकलनीयम्।

## [निगमनम्]

तदेवं सत्यामपि सव्याख्यात्रयमातृकासामग्र्यां एतैरन्यैश्च बहुभिर्दोषैः परिपूर्णा गणपतिशास्त्रिणः कृतिरित्येतद्विस्मयावहम्। असत्यामप्येतादृशसामग्रीसम्पत्त्यां एकमातृकानिबन्धने महीशूरग्रन्थावल्यां प्रकाशितेऽर्थशास्त्रग्रन्थे तस्याङ्ग्लेयभाषानुवादे च प्राज्ञेनाप्यवार्याः केचिद्दोषास्सम्भवेयुरित्येतदस्माकं भूषणं न तु दूषणमित्यलम्।

MYSORE } R. SHAMASASTRY.
1924 }

सू—एते त्रयोऽप्युपोद्धाताः श्री शामाशास्त्रिभिः लिखिताः।

# विषयानुक्रमणिका

# कौटलीयार्थशास्त्राधिकरणानुक्रमणिका

## अथ कौटलीये अर्थशास्त्रे

# विनयाधिकारिकं नाम

## प्रथममधिकरणम्

---

### *अस्येयं प्रकरणानुक्रमणिका



---

*एवं प्रत्यधिकरणं आदौ प्रकरणानुक्रमणिका, तत्तत्प्रकरणप्रतिपादितार्थसङ्ग्रहश्चेति द्वयमपि प्रविविक्षूणां अवलोकनग्रहणाद्यानुकूल्यकल्पनाय एकत्र सङ्कलय्य प्रत्येकमप्यस्माभिः निवेशितमिति ज्ञेयम्.

## एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं सङ्ग्रहः

## भारतीमिमां वसुमतीं सुखमयीं द्रष्टुकामाः सुमनसः !
## शास्त्रेऽस्मिन् सारं स्वदन्ताम्

1. विश्वक्षेमावहानां सकलसुचरितालम्बनानां गुणानां
   जीवातुर्नीतिपद्धत्यनुविहितसुसूत्रात्मवर्त्मैव नान्यत् ।
   मार्गेऽस्मिन्नध्वनीनान् कुटिलवलयितात् कण्टकात् त्रातुकामः
   धर्मज्ञो विष्णुगुप्तः समयविदखिलं व्याकरोदर्थशास्त्रम् ॥

2. दैवीयं पूरयोध्या निखिलशिवकरैश्शासनैरात्मराजः
   स्वे स्वे धर्मे स्थिताभिः श्रियमनुभवति स्वेन्द्रियादिप्रजाभिः ।
   एवं तद् धर्मराज्यं जयति नियमनैरार्यराजस्य नित्यं
   श्रेयःप्रेयोऽनुभूत्या त्रिदिवमिव महीमास्थितैः सर्वजीवैः ॥

3. सद्विद्याशुद्धदृष्टिः नयति नरपतिं नीतिमार्गे पुरोधाः
   दुष्टप्रध्वंसनाय प्रभवति नृपतेः यत्र दण्डोऽनिरुद्धः ।
   धर्मं सत्यं च मोक्षं सततमनुगतावर्थकामौ पुमर्थौ
   शिष्टाः सन्तुष्टचित्ताः; तदिह विमृशतात् रामराज्यं मनो नः ॥

4. उन्मूल्याधर्मवृत्तान् त्रिकरणकुटिलान् सर्वतः संप्रवृद्धान्
   नीत्या संस्थाप्य दिव्यामधिभुवि महतीं शाश्वतीं राज्यलक्ष्मीम् ।
   आधातुं सत्सु पूर्णामविहतसुखदां धर्मसम्पत्समृद्धिं
   सन्दिष्टं शास्त्रमेतत्, न तु कुटिलहृदा, नापि नैर्घृण्यभूम्ना ॥

5. सन्तः ! शास्त्रेऽत्र सर्वानुभवबहुमतिन्याययुक्त्यादिगण्ये
   धर्मप्रेम्णोपदिष्टे कुमतिविमतिभिः कल्पनास्वप्रसक्ताः ।
   शान्तस्वान्ताः नितान्तं विमलहृदि मुनेर्भावमन्वेषमाणाः
   सौराज्यं द्रष्टुकामाः स्वरसपरिचयैः शास्त्रसारं स्वदन्ताम् ॥

इति भवदीयः
सदामोदसरससुमनोविलासलालसः
**वेङ्कटनाथशर्मा.**

॥ जय श्रीः ! ॥

# कौटलीयं अर्थशास्त्रम्

विषयविभागटिप्पणीभ्यां सहितम्

---

## विनयाधिकारिकं—प्रथममधिकरणम्

### प्रथमोऽध्यायः—राजवृत्तिः

---

[ मङ्गलम् ]

ॐ नमश्शुक्रबृहस्पतिभ्याम् ॥

[ ग्रन्थस्यास्य समूलत्वागतार्थत्वे ]

पृथिव्याः लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि, प्रायशस्तानि सङ्गृह्य एकमिदमर्थशास्त्रं कृतम् ॥

---

जय श्रीरङ्ग !

॥ ॐ नमो धर्माय महते ॥

सर्वार्थानां सवित्री प्रकृतिनियतिमन्वाश्रितानां प्रजानां
मङ्गल्या मङ्गलानामशरणशरणा सर्वलोकाधिराज्ञी ।
शास्तैकान्तं खलानां अमृतमिह सतां पूर्णकामस्स सम्राट्
इत्येतौ दिव्यदम्पत्यखिलजगदिदं रक्षतां धर्मपूर्णम् ॥ १ ॥

कृत्स्नानां पुरुषार्थानामाकरो भारती मही ।
अर्थः, तत्क्षेमयोगार्थं अर्थशास्त्रमिदं कृतम् ॥ २ ॥

अत्राधिकरणानां तु संख्याः पञ्चदश स्मृताः ।
तत्र पञ्चसु तन्त्राख्यं स्वराष्ट्रक्षेमसाधनम् ॥ ३ ॥

आवापोऽष्टसु शत्रुक्ष्माहरणे साधकस्ततः ।
ततो द्वयोर्मन्त्रतन्त्रन्यायाः समुपपादिताः ॥ ४ ॥

[ कृत्स्नशास्त्रार्थसंग्राहकः प्रकरणाधिकरणविभागः ]

[तत्र १–प्रथममधिकरणम् ]

**तस्यायं प्रकरणाधिकरणसमुद्देशः—**

**१. विद्यासमुद्देशः** p 16F. । **२. वृद्धसंयोगः** p 16J । **३. इन्द्रियजयः** p 16K । **४. अमात्योत्पत्तिः** p 16M । **५. मन्त्रि-**

---

तत्राद्ये पात्रतासिद्ध्यै राज्ञो विद्यादिशिक्षणम् ।
द्वितीये राष्ट्ररचनाकर्माध्यक्षप्रवर्तने ॥ ५ ॥
तृतीये तु यथाधर्मं व्यवहारविनिर्णयः ।
नीत्यध्वकण्टकध्वंसः चतुर्थे दुर्गराष्ट्रयोः ॥ ६ ॥
पञ्चमे गूढदण्डः स्यात् दस्यूनां राजराज्ययोः ।
मण्डलात्मा तु षाड्गुण्यप्रकृतिष्षष्ठ ईरिता ॥ ७ ॥
सन्ध्यादिषड्गुणव्याख्याप्रपञ्चः सप्तमे कृतः ।
व्यसनानां राष्ट्रपीडाकराणां व्याक्रियाऽष्टमे ॥ ८ ॥
नवमे चिन्तनीयांशाः जयार्थमभियास्यताम् ।
दशमे युधि सेनादिव्यवस्थाक्रम उच्यते ॥ ९ ॥
एकादशे तु सङ्घानां वशीकारविधिः स्मृतः ।
द्वादशे प्रबलाक्रान्तदुर्बलक्षितिपक्रियाः ॥ १० ॥
त्रयोदशे शत्रुदुर्गाक्रमणोपायचिन्तनाः ।
चतुर्दशे मन्त्रमायाप्रयोगो धर्मगुप्तये ॥ ११ ॥
शास्त्रप्रयुक्तयुक्तीनां व्याख्याः पञ्चदशे कृताः ।
विश्वकल्याणसिद्ध्यर्थमेवं शास्त्रं प्रवर्तितम् ॥ १२ ॥

---

(१) १. विद्याविभागतत्तत्स्वरूपप्रयोजनादिविवरणम्.
२. ज्ञानविज्ञानानुभवपूर्णेषु सत्सु तत्तदध्यक्षेषु च संश्रयः.
३. सर्वेषामिन्द्रियाणां नीतिपथात्मपथयोरविरोधेन प्रवर्तनम्.
४. मन्त्रिवर्गसहकारिणाममात्यानां स्वरूपं नियोजनविधिश्च.
५. मन्त्रिपुरोहितयोः स्वरूपनियोजने.

[ २—द्वितीयमधिकरणम् ]



---

६. धर्मादिवाचोयुक्त्याछलनैरमात्यानांभावशुद्ध्यशुद्ध्योःपरिज्ञानक्रमः.

७-८. गूढचाराणां सङ्ग्रहः, तत्तत्कार्येषु नियोजनं च.

९. स्वराष्ट्रे क्रोधलोभादिना परोपजापभेद्यानां फल्गुहृदयानां अतथाविधानां च उपजापेभ्यो रक्षणम्.

१०. शत्रुराष्ट्रस्थितानां तादृशानां उपजापादिना स्वायत्तीकरणम्.

११. मन्त्रिमन्त्रयोः संख्यास्वरूपादिनिर्णयः.

१२. त्रिविधदूतप्रेषणविधिः.

१३. राज्ञि वैरस्यानुत्पादविधया राजपुत्रसंरक्षणम्.

१४-१५. बहुषु राजपुत्रेष्वेकस्य यौवराज्यादौ स्थापनेन अन्येषां अवरोधे (स्वसन्निधेर्विवासनादौ) प्राप्ते तेषां राज्ञि राज्ञश्च तेषुवर्तनक्रमः.

१६. उत्थानादीनां राजव्यापाराणां निरूपणम्.

१७. सर्वप्रकारैः स्वरक्षणार्थं तदनुकूल राजभवननिर्माणविधिः.

१८. आत्मरक्षणप्रकाराः.

(२) १९. जनपदरचनाक्रमः.

२०. सस्याद्यनर्हभूभागस्य प्रकारान्तरेण साफल्यसम्पादनविधयः.

२१. दुर्गरचनाक्रमः.

२२. दुर्गेषु तत्तद्वास्तुरचनाविधिः.

२३. भाण्डागाराधिपतिकर्तव्यानां द्रव्यसंग्रहरक्षणादिकर्मणां विवरणम्.

---

२४. मूलस्थानेषु धनोत्पत्तिप्रवर्तनविधिः.

२५. आयव्ययगणनलेखनाद्यर्थनिर्मितशालासु गणने नियुक्तानां कर्माणि.

२६. तत्तत्कर्माध्यक्षैरेव मूलस्थानेभ्योऽपहृतस्य द्रव्यस्य प्रत्यानयनविधिः.

२७. तत्तत्कर्माध्यक्षपरीक्षार्थं नियमितानां अधिकारिणां परीक्षाः.

२८. लिखितमूलकशासनप्रवर्तनाय लेखनस्वरूपादिविवरणम्.

२९. कोश प्रवेशार्हाणां रत्नसार फल्गुकुप्यानां स्वरूपादिविवरणम्.

३०. सुवर्णाद्याकरेषु तत्तदुत्पत्त्यनुकूलाः क्रियाप्रवर्तनाः.

३१. सुवर्णरौप्यादिनिर्माणार्थनिर्मितासु शालासु सुवर्णाध्यक्षकर्तव्यानि.

३२. सुवर्णापणेषु सुवर्णकारकर्तव्यनियमाः.

३३. आहारद्रव्यसंग्रहरक्षणविधयः.

३४. राजद्रव्यक्रयविक्रयव्यवहारविधिः.

३५. उपयुक्तवन्यद्रव्यरक्षणविधिः.

३६. यन्त्रबाणायुधादिसाङ्ग्रामिकद्रव्यरक्षणविधिः.

३७. मानोन्मानसाधनानां प्रस्थतुलादीनां परिशोधनविधिः.

३८. देशकालयोः परिमाणविवरणम्.

३९. राजदेयशुल्कव्यवस्थाः.

४०. कार्पासोर्णादिसूत्रवस्त्रादिप्रवर्तनविधिः.

४१. कृषिकर्मप्रवर्तनविधिः.

४२. सुरासंधानविनियोगादिनियमाः.

---

४३. भक्ष्यप्राणिनां वधस्थानेषु अनुसरणीयाः नियमाः.

४४. वेश्यानां स्थानमानादिसंरक्षणव्यवस्थाः,

४५. नौसम्बन्धिव्यवहारनियमाः.

४६. पशुपालनव्यवस्थाः.

४७. अश्वरक्षणतदुपयोगादिव्यवस्थाः.

४८. हस्तिशास्त्राभिज्ञ तदध्यक्षकारयितव्यानि हस्तिरक्षणकर्माणि.

४९. रथाध्यक्षकर्माणि.

५०. पदात्यध्यक्षकर्माणि.

५१. सेनापतिव्यापाराः

५२. मुद्राप्रयोगादिनियमाः.

५३. गोप्रचारार्हतृणादिभूयिष्ठप्रदेशरक्षणादिव्यवस्थाः.

५४. तत्तदादायस्थानेभ्यः खन्यादिभ्यो राजप्राप्यार्थस्याहरणप्रकाराः.

५५ गृहपतिकव्यञ्जनादीनां गूढपुरुषाणां ग्रामजनपदादिषु नियोजनम्.

५६. नगररक्षणादौ नियुक्तानां आधिकारिकपुरुषाणां व्यापाराः.

(३) ५७. विवाहादिसम्बन्धिनां द्वादशव्यवहाराणां ग्राह्यत्वाग्राह्यत्वव्यवस्थाः.

५८. विवादप्राप्तौ वादिप्रतिवादिवचनानां लिखितेन स्थापनक्रमः.

५९. वैवाहिकधनात्याचारातिक्रमादिव्यवस्थाः.

६०. दायभागिनां तत्तद्वस्तुविभागक्रमः.

६१. गृहारामक्षेत्रादिविवादनिर्णयः.

कम् p 177 । ६२. समयस्यानपाकर्म p 181 । ६३. ऋणादानम् p 184 । ६४. औपनिधिकम् p 187 । ६५. दासकर्मकरकल्पः p 191 । ६६. सम्भूयसमुत्थानम p 193 । ६७. विक्रीतक्रीतानुशयः p 196 । ६८. दत्तस्यानपाकर्म p 198 । ६९. अस्वामिविक्रयः p 198 । ७०. स्वस्वामिसम्बन्धः p 198 । ७१. साहसम् p 200 । ७२. वाक्पारुष्यम् p 202 । ७३. दण्डपारुष्यम् p 203 । ७४. द्यूतसमाह्वयम् p 206 । ७५. प्रकीर्णकानि p 206 ॥ इति धर्मस्थीयं तृतीयमधिकरणम् ॥

[ ४—चतुर्थमधिकरणम् ]

७६. कारुकरक्षणम् p 212 । ७७. वैदेहकरक्षणम् p 216 । ७८. उपनिपातप्रतीकारः p 219 । ७९. गूढाजीविनां रक्षा p 221 ।

---

६२. सम्भूयकल्प्यमानव्यवस्थारक्षणविधिः.

६३. वृद्ध्यर्थप्रयुक्तधनव्यवहारनिर्णयः.

६४. निधिनिक्षेपादिविषयकविवादपरिहारविधयः.

६५. गर्भदासानां कर्षकगोपालकादिकर्मकराणां च आधानविक्रयादिव्यवस्थाः.

६६. बहुभिः सम्भूयकर्मणि कर्मप्रवर्तनतल्लब्धधनविभागादिव्यवस्थाः.

६७. विक्रीतक्रीतयोः पदार्थयोः दुष्टत्वादिदर्शनेन विसंवादे कल्पनीयाः व्यवस्थाः.

६८. धर्मादिदत्तविषये तादृशी व्यवस्था.

६९. अस्वामिकृते पदार्थविक्रये दण्डादिव्यवस्थाः.

७०. स्वस्वामिनोः देशकालानुगुणसम्बन्धानुवृत्तितदभावादिः.

७१. बलदर्पादिना हठात्क्रियमाणपरस्वापहरणविषये दण्डादिव्यवस्थाः.

७२. उद्वेजकवाक्यप्रयोगविवरणं, दण्डाश्च.

७३. दण्डहस्तादिभिः प्रहरणादिना परोद्वेजने दण्डादयः.

७४. अक्षशलाकाद्यप्राणिक्रीडनानां मल्लमेषादिप्राणिक्रीडनानां च देशकालजयापजयदण्डादिव्यवस्थाः.

७५. पूर्वोक्तशेषाणां तत्तदर्थानां विवरणम्.

(४) ७६. तक्षायस्कारादिभ्यः तस्करेभ्यः प्रजानां रक्षणम्.

७७. प्रधानकण्टकेभ्यो वणिग्भ्यः प्रजानां रक्षणम्.

७८. अग्न्यादीनां दैवीनां आपदां प्रतीकाराः.

७९. प्रच्छन्नलञ्चग्रहणजीवनानां कूटसाक्ष्यादिगूढजीवनानां च प्रतिक्रियाः.

---

८०. मुण्डजटिलादिभिः प्रच्छन्नचारिभिः चोरपारदारिकादिकुपुरुषग्राहणम्.

८१. शङ्काभिः लब्धवस्तुभिः क्रियाभिश्च चोराणां ग्रहणविधयः.

८२. अकाण्डे मृतानां मरणहेत्वादिपरीक्षाक्रमः.

८३. विचारैः कर्मविशेषैश्च शङ्कागृहीतानां परीक्षाविधयः.

८४. राजधनापहारिणां तत्तद्धनोत्पत्तिस्थानेषु परिशोधनक्रमाः.

८५. अपराधविशेषेषु एकैकाङ्गच्छेदनविधयः, तत्प्रतिनिधयः धनदण्डाश्च.

८६. अक्लेशवधानां चित्रवधानां च विवरणम्.

८७. कन्यास्वतिचरतां दण्डाः.

८८. अभक्ष्यभक्षणागम्यागमनादेर्दण्डाः.

८९. अपराधिविशेषेषु गूढवधप्रयोगाः.

९०. सुवर्णधान्यादीनां क्लृप्तादधिकतयाऽपि सङ्ग्रहणकालाः विधयश्च.

९१. सभृत्यभरणव्यवस्थाः.

९२. मन्त्रिप्रभृतीनामनुजीविनां स्वामिनि वर्तनक्रमः.

९३. अर्थाधिकारिभिराश्रयणीयव्यवस्थानां निरूपणम्.

९४. राजव्यसनादिषु तत्पुत्रादीनां राज्ये स्थापनविधिः.

९५. राज्यैश्वर्यस्य एकपुत्रविषयकत्वनिर्णयः.

[ ६—षष्ठमधिकरणम् ]

९६. प्रकृतिसम्पदः p 271 । ९७. शमव्यायामिकम् p 273 ॥ इति मण्डलयोनिः षष्ठमधिकरणम् ॥

[ ७—सप्तममधिकरणम् ]

९८. षाड्गुण्यसमुद्देशः p 283 । ९९. क्षयस्थानवृद्धिनिश्चयः p 283 । १००. संश्रयवृत्तिः p 286 । १०१. समहीनज्यायसां गुणाभिनिवेशः p 288 । १०२. हीनसन्धयः p 288 । १०३. विगृह्यासनम् p 291 । १०४. सन्धायासनम् p 291 । १०५. विगृह्य यानम् p 291 । १०६. सन्धाय यानम् p 291 । १०७. सम्भूय प्रयाणम् p 291 । १०८. यातव्यामित्रयोरभिग्रहचिन्ता p 293 । १०९. क्षयलोभविरागहेतवः प्रकृतीनाम् p 293 । ११०. सामवायिकविपरिमर्शः p 293 । १११. संहितप्रयाणिकम् p 297 । ११२. परिपणितापरिपणितापसृताश्च सन्धयः p 297 ।

---

(६) ९६. स्वाम्यमात्यादिप्रकृतिभिः सम्पादनीया गुणाः.

९७. शमव्यायामयोः व्याख्यानम्.

(७) ९८. सन्ध्यादिषड्गुणस्वरूपप्रयोगादिव्यवस्थाः.

९९. कोशदण्डयोः न्यूनत्वसमत्वाधिक्ययोः स्वरूपादिनिर्णयः.

१००. प्रबलाश्रयणेन स्वशक्तिपूरणम्.

१०१. शत्र्वपेक्षया हीनशक्तौ समशक्तौ अधिकशक्तौ च षड्गुणप्रयोगविधयः.

१०२. शक्त्यादिभिः शत्रोरपकृष्टेन राज्ञा कर्तव्याः सन्धयः.

१०३–१०६. शत्रुणा सह विग्रहादिकरणेन आसनयानानां निरूपणम्.

१०७. समहीनज्यायसां शत्रुं प्रति प्रयाणविधिः.

१०८. व्यसनिनः सामन्तस्य वा अमित्रस्य पीडनकर्शनादिविधयः.

१०९. प्रकृतिक्षयलोभविरागहेतूपपादनेन तन्निवारणविधयः.

११०. सम्भूयप्रयाणे विजिगीषोरनुयायिषु गुरुलघुभावचिन्ता.

१११. परस्परं कृतसन्धिनोः विजिगीष्वोः स्वस्वयातव्यं प्रति प्रयाणविधयः.

११२. देशकालकार्यानुरोधिसन्धेः, तद्विपरीतसन्धेः, मध्येमार्गं परित्यक्तमित्रभावैर्भृत्यादिभिः सह क्रियामाणायाः सन्धेश्च निरूपणम्.

[ ८—अष्टममधिकरणम् ]



---

११३. द्वैधीभावसमये कर्तव्यसन्धीनां विक्रमाणां च निरूपणम्.

११४. यातव्यस्य सामवायिकेषु वर्तनक्रमाः.

११५. सहायदानेन उपकार्याणां मित्राणां निरूपणम्.

११६. मित्रहिरण्यभूमिदुर्गादिलाभैः क्रियमाणाः सन्धयः.

११७. पृष्ठप्राप्तशत्र्वाक्रान्तस्य राज्ञः कर्तव्यानि.

११८. बहुभिरभियोगसमये अपचितशक्त्यभिवर्धनविधिः.

११९. प्रबलशत्रुणा सह विरोधेन तद्दुर्गोपरोधदेशकालादिनिरूपणम्.

१२०. ज्यायसा दण्डेनाधःकृतस्य राज्ञः तस्मिन् वर्तनक्रमः.

१२१. दण्डेन शत्रूनुपनमयितुः शूरस्य वृत्तम्.

१२२. सन्धिदृढीकरणप्रकारः.

१२३. सन्ध्यर्थमाहितानां पुत्रादीनां विमोचनोपायाः.

१२४. विजिगीषोर्मध्यमे वर्तनक्रमः.

१२५. विजिगीषोरुदासीने वर्तनक्रमः.

१२६. अरिमित्रात्मकमण्डले विजिगीषोर्वर्तनक्रमः.

(८) १२७. स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानां संभावितानि व्यसनानि, तेषां गौरवलाघवचिन्ताश्च.

१२८. अभिषिक्तस्य राज्ञः अमात्यादिराज्यप्रकृतीनां च संभावितेषु व्यसनेषु गुरुलघुभावचिन्ताः.

१२९. लोके पुरुषसामान्यसम्भावितानां व्यसनानां गुरुलघुभावचिन्ताः.

१३०. दैवमानुषपीडानां निरूपणम्.

**इति व्यसनाधिकारिकं अष्टममधिकरणम् ॥**

[ ९—नवममधिकरणम् ]



---

१३१. तत्तत्क्रियमाणराजार्थोपरोधभेदनिरूपणम्.

१३२. कोशप्राप्यधनाप्रदानभाण्डागाराप्रवेशनादिदौष्ट्यानां निरूपणम्.

१३३. सेनासंबन्धिव्यसनानि.

१३४. मित्रसंबन्धिव्यसनानि.

(९) १३५. युद्धार्थमभियास्यद्भिः स्वशक्तिदेशकालानां बलाबलचिन्तनेन क्रियमाणानि कार्याणि.

१३६. शत्रुमुद्दिश्य विजययात्रां प्रति समुचितकालनिरूपणम्.

१३७. सेनायाः कार्यानुगुण्येन विनियोगकालाः.

१३८. उद्युक्तबलेषु तारतम्यनिरूपणम्.

१३९. परबलानुरूपस्वबलकर्तव्यानि कार्याणि.

१४०. (राज्ञि जयार्थं प्रस्थिते सति स्वराष्ट्रे दुष्टैः क्रियमाणः दाहविलोपनादिः अनर्थः पश्चात्कोपः.) राज्ञा चिन्तनीयः पुरस्ताल्लाभपश्चात्कोपयोः गुरुलघुभावविचारः.

१४१. राष्ट्रमुख्यान्तपालादिबाह्यकोपस्य मन्त्रिपुरोहिताद्याभ्यन्तरकोपस्य च प्रतीकारविधयः.

१४२. वाहनकर्मकरादिक्षय-हिरण्यधान्यादिव्यय-लभ्यलाभानां गुरुलघुभावविचारः.

१४३. राष्ट्रमुख्यान्तपालादिजन्यानां बाह्यापदां, मन्त्रिपुरोहितादिजन्यानां अन्तरापदां च विवरणं, प्रतिक्रियाश्च.

१४४. दूष्यशत्रुजन्यानां आपदां विवरणं, प्रतिक्रियाश्च.

१४५. हिरण्यभूम्याद्यर्थप्राप्तितन्नाशतत्संशयैर्युक्तानामापदां निरूपणम्.

नर्थसंशययुक्ताः p 377 । १४६. तासामुपायविकल्पजाः सिद्धयः p 377 ॥ इति अभियास्यत्कर्म नवममधिकरणम् ॥

[ १० —दशममधिकरणम् ]

१४७. स्कन्धावारनिवेशः p 386 । १४८. स्कन्धावारप्रयाणम् p 387 । १४९. बलव्यसनावस्कन्दकालरक्षणम् p 387 । १५०. कूटयुद्धविकल्पाः p 389 । १५१. स्वसैन्यप्रोत्साहनम् p 389 । १५२. स्वबलान्यबलव्यायोगः p 389 । १५३. युद्धभूमयः p 393 । १५४. पत्त्यश्वरथहस्तिकर्माणि p 393 । १५५. पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः p 395 । १५६. सारफल्गुबलविभागः p 395 । १५७. पत्त्यश्वरथहस्तियुद्धानि p 395 । १५८. दण्डभोगमण्डलासंहतव्यूहव्यूहनम् p 399 । १५९. तस्य प्रतिव्यूहस्थापनम् p 399 ॥ इति सांग्रामिकं दशममधिकरणम् ॥

---

१४६. सामदानाद्युपायभेदप्रयोगनिबन्धनाः उक्तापदां प्रतिक्रियाः.

(१०) १४७. युद्धाङ्गणसमीपे सेनानिवेशनप्रकाराः.

१४८. यथोक्तनिर्मितसैन्यस्थानं प्रति राज्ञः प्रयाणविधिः.

१४९. स्वसैन्येषु सम्भावितेभ्यः अमाननविमाननादिनिमित्तबलव्यसनेभ्यः, दीर्घाध्वारण्यानीप्रवेशेषु जायमानेभ्यः श्रमेभ्यश्च रक्षणक्रमः.

१५०. कपटयुद्धेन पराभिहननप्रकाराः.

१५१. स्वसैन्यस्य युद्धार्थं प्रोत्साहनप्रकाराः.

१५२. शत्रुबलापेक्षया विशिष्टवेषेण स्वसैन्येषु अनुकूलव्यूहरचनाप्रकाराः.

१५३. युद्धानुगुणभूभागस्वरूपविवरणम्.

१५४. युद्धाङ्गणं प्रासवतां पदात्यश्वरथहस्तिनां कर्माणि.

१५५. स्वसैन्यपरिमाणानुगुण्येन पक्षभागयोः कक्षभागयोः मध्ये च व्यूहरचनाविधिः.

१५६. सर्वविधसेनागुणयुक्तानां तद्रहितानां च सेनानां पक्षादिषु व्यूहविन्यासविधिः.

१५७. पदात्यादियुद्धक्रमः.

१५८. दण्डादिचतुर्विधव्यूहरचनक्रमः.

१५९. उक्तबलव्यूहस्य प्रतिबलव्यूहस्थापनम्.

[ ११— एकादशमधिकरणम् ]

१६०. भेदोपादानानि p 403 । १६१. उपांशुदण्डः p 403 ॥ इति सङ्घवृत्तं एकादशमधिकरणम् ॥

[ १२— द्वादशमधिकरणम् ]

१६२. दूतकर्माणि p 409 । १६३. मन्त्रयुद्धम् p 411 । १६४. सेनामुख्यवधः p 413 । १६५. मण्डलप्रोत्साहनम् p 413 । १६६. शस्त्राग्निरसप्रणिधयः p 415 । १६७. वीवधासारप्रसार-वधः p 415 । १६८. योगातिसन्धानम् p 417 । १६९. दण्डाति-सन्धानम् p 417 । १७०. एकविजयः p 417 ॥ इति आबलीयसं द्वादशमधिकरणम् ॥

[ १३ – त्रयोदशमधिकरणम् ]

१७१. उपजापः p 423 । १७२. योगवामनम् p 425 । १७३. अपसर्पप्रणिधिः p 428 । १७४. पर्युपासनकर्म p 431 ।

---

(११) १६०. प्रतिकूलसङ्घविश्लेषणोपायाः.

१६१. दुष्टानां गूढवधप्रकाराः.

(१२) १६२. दुर्बलकर्तव्यसन्धियाचनादीनि दूतकर्माणि.

१६३. सन्धिं अनभ्युपगच्छत्सु शत्रुषु प्रयोक्तव्याः घातनार्थवञ्चन भेदनप्रकाराः.

१६४. सेनासु मुख्यानां वधप्रकाराः.

१६५. मण्डलस्य बलवत्तरामियोक्तरि युद्धार्थप्रोत्साहनविधिः.

१६६. अविधेयमण्डले शस्त्राग्निविषाणां गूढं प्रयोगप्रकाराः.

१६७. युद्धसमये शत्रुभिः अपेक्षितानां धनधान्यादीनां सुहृद्बलानां तृणकाष्ठाद्युपकरणानां च विघातकरणविधिः

१६८. कपटोपायेन शत्रुवञ्चनाद्युपायाः.

१६९. वधेन अर्थहरणादिना च शत्रुवञ्चनाद्युपायाः.

१७०. असहायेनैव राज्ञा शत्र्वभिभवप्रकाराः.

(१३) १७१. अद्भुतः भेदप्रयोगः.

१७२. कपटोपायप्रयोगेण शत्रोः तद्दुर्गान्निष्क्रामणम्.

१७३. गूढपुरुषाणां परदेशेषु निवासनेन दुष्टचोरादिघातनविधिः.

१७४. शत्रुदुर्गपरितः स्वसैन्यस्थापनप्रकारः.

**१७५. अवमर्दः** p 431 । **१७६. लब्धप्रशमनम्** p 435 ॥ **इति दुर्गलम्भोपायः त्रयोदशमधिकरणम् ॥**

इति परराष्ट्रजयाधिकारः आवापाख्यः द्वितीयो भागः

**[ १४—चतुर्दशमधिकरणम् ]**

**१७७. परघातप्रयोगः** p 440 । **१७८. प्रलम्भनम्** p 443 । **१७९. स्वबलोपघातप्रतीकारः** p 453 ॥ **इति औपनिषदिकं चतुर्दशमधिकरणम् ॥**

**[ १५—पञ्चदशमधिकरणम् ]**

**१८०. तन्त्रयुक्तयः** p 457—**इति तन्त्रयुक्तिः पञ्चदशमधिकरणम् ॥**

इति तन्त्रावापशेषाख्यः तृतीयो भागः

**[ शास्त्रेयत्तानिष्कर्षः ]**

**शास्त्रसमुद्देशः—पञ्चदशाधिकरणानि (१५), सपञ्चाशदध्यायशतं (१५०), साशीतिप्रकरणशतं (१८०), षट्श्लोकसहस्राणि (६०००)—इति ॥**

**[ग्रन्थगुणाः]**

**[1]सुखग्रहणविज्ञेयं [2]तत्त्वार्थपदनिश्चितम् ।**
**कौटल्येन कृतं शास्त्रं विमुक्तग्रन्थविस्तरम् ॥ १ ॥**

इति कौटलीयेऽर्थशास्त्रे विनयाधिकारिके प्रथमाधिकरणे

राजवृत्तिः प्रथमोऽध्यायः

---

१७५. शत्रुदुर्गाक्रमणकालदेशप्रकाराः.

१७६. विजयलब्धे परदुर्गे निवासिनां जनानां स्वस्मिन् नूतनत्वप्रयुक्तभयशङ्कापनोदनेन तेषु विश्वासजननविधयः.

(१४) १७७. शत्रुवधार्थः औषधप्रयोगः.

१७८. आश्चर्यकरमायामन्त्रप्रयोगादिना शत्रुवञ्चनम्.

१७९. स्वसैन्येषु परप्रयुक्ततादृशोपघातानां प्रतीकारविधयः.

(१५) १८०. अर्थशास्त्रे तत्तदर्थनिर्णयोपयोगितया प्रयुक्तानां युक्तीनां व्याख्यानम्.

[1] सुकुमारमतिभिरपि विविच्य ज्ञेयम्. [2] तत्त्वतोऽर्थतः पदतश्च निश्चितम्.

# प्रथमं प्रकरणम्–विद्यासमुद्देशः

## द्वितीयोऽध्यायः—आन्वीक्षिकीस्थापना

[विद्याविभागः]

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः ॥

[तद्विषये मतभेदाः स्वमतं च]

त्रयी वार्ता दण्डनीतिश्चेति [1] मानवाः [2] त्रयीविशेषो ह्यान्वीक्षिकीति। वार्ता दण्डनीतिश्चेति बार्हस्पत्याः—[3] संवरणमात्रं हि त्रयी लोकयात्राविदः इति । दण्डनीतिरेका विद्येत्यौशनसाः [4]—तस्यां हि सर्वविद्यारम्भाः[5] प्रतिबद्धाः इति ॥ चतस्र एव विद्या इति कौटल्यः। ताभिर्धर्मार्थौ यद्विद्यात् [6] तद्विद्यानां विद्यात्वम् ॥

[आन्वीक्षिकीस्वरूपं तस्य विलक्षणप्रयोजनवत्त्वं च]

साङ्ख्यं योगो लोकायतं चेत्यान्वीक्षिकी। धर्माधर्मौ त्रय्याम्, अर्थानर्थौ वार्तायाम्, नयापनयौ दण्डनीत्याम्; बलाबले चैतासां [7] हेतुभिः अन्वीक्षमाणा आन्वीक्षिकी लोकस्योपकरोति, व्यसनेऽभ्युदये च बुद्धिं [8] अवस्थापयति, [9] प्रज्ञावाक्यक्रियावैशारद्यं च करोति ॥

प्रदीपस्सर्वविद्यानां उपायस्सर्वकर्मणाम् ।
आश्रयस्सर्वधर्माणां शश्वदान्वीक्षिकी मता ॥ २ ॥

इति विनयाधिकारिके विद्यासमुद्देशे आन्वीक्षिकी
स्थापना द्वितीयोऽध्यायः

---

[1] मनुशिष्याः. [2] त्रयीमनुसृत्यैव त्रय्यर्थविवरणरूपतया त्रयीविशेषता. [3] स्वस्मिन् वेदापरिगृहीतृत्वादिरूपनास्तिक्यप्रचारप्रयुक्तनिन्दानिवारणार्थं कवचरूपतामापद्यते त्रयीति भावः. [4] शुक्रशिष्याः. [5] सम्पादनरक्षणादयः. [6] विद्यात्–प्राप्नुयात. [7] समीचीनन्यायैः व्यवस्थापयन्ती. [8] तत्तत्प्रयुक्तविकारानुत्पादनेन स्थैर्यविशिष्टां करोति. [9] पर्यालोचनभाषणक्रियासु असदृशीं पटुताम्.

# तृतीयोऽध्यायः -- त्रयीस्थापना

[त्रयीवेदतदङ्गानां स्वरूपं तदुपकारश्च]

सामर्ग्यजुर्वेदास्त्रयः त्रयी, अथर्ववेदे[1]तिहासवेदौ च वेदाः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोविचितिः ज्योतिषमिति चाङ्गानि। एष [2]त्रयीधर्मः चतुर्णां वर्णानामाश्रमाणां च स्वधर्मस्थापनादौपकारिकः॥

[वर्णधर्माः]

स्वधर्मो ब्राह्मणस्य—अध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्चेति; क्षत्रियस्य—अध्ययनं यजनं दानं [3]शस्त्राजीवो भूतरक्षणं च; वैश्यस्य—अध्ययनं यजनं दानं कृषिपाशुपाल्ये वणिज्या च; शूद्रस्य—द्विजातिशुश्रूषा वार्ता [4]कारुकुशीलवकर्म च॥

[आश्रमधर्माः]

गृहस्थस्य-स्वकर्माजीवः, तुल्यैरसमानर्षिभिर्वैवाह्यं, ऋतुगामित्वं, देवपित्रतिथिभृत्येषु [5]त्यागः, शेषभोजनं च। ब्रह्मचारिणः —स्वाध्यायोऽग्निकार्याभिषेकौ भैक्षव्रतत्वं[6], आचार्ये प्राणान्तिकी वृत्तिः, तदभावे गुरुपुत्रे [7]सब्रह्मचारिणि वा। वानप्रस्थस्य—ब्रह्मचर्यं भूमौ शय्या जटाऽजिनधारणं अग्निहोत्राभिषेकौ देवतापित्रतिथि-

---

[1] पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं च इतिहासवेदः. [2] वेदप्रतिपाद्यः धर्मः. [3] आजीवः जीवनम्. [4] शिल्पक्रिया-कारुकर्म, स्तोत्रकरणं-कुशीलवकर्म. [5] दानम्. एतच्च वृन्तात् पक्वफलपरित्यागवत् मनोवाक्कायानां किञ्चिदप्यहिंसनेन वस्तुनस्सत्पात्रायत्तीकरणम्. न तु अगतिविधिसमाजादिपारवश्यतः शलाटूनां वृन्तेभ्यो बलादपचयवत् चित्तादिहिंसनेन बलात् परायत्तीकरणम्, सर्वथा अनुपयोगात्. नहि शलाटवः क्वचिदुप्ताः अङ्कुरं पुष्पं फलं वा जनयन्ति. [6] एतावदुपकुर्वाणब्रह्मचारिणो धर्माः, उत्तरत्र नैष्ठिके विशेषः. [7] स्वसमानशाखाध्यायिनि वयोवृद्धे.

पूजा [1] वन्यश्चाहारः। परिव्राजकस्य—संयतेन्द्रियत्वं [2] अनारम्भो [3] निष्किञ्चनत्वं सङ्गत्यागो भैक्षमनेकत्र अरण्यवासो बाह्यमाभ्यन्तरं च शौचम् ॥

[सर्वसाधारणाः धर्माः, सर्वेषां स्वस्व-
धर्मानुष्ठानावश्यकता च]

सर्वेषां—अहिंसा सत्यं शौचमनसूयाऽऽ[4] नृशंस्यं क्षमा च। स्वधर्मः स्वर्गाय [5]आनन्त्याय च। तस्यातिक्रमे लोकस्सङ्करादुच्छिद्येत ॥

[धर्मानुष्ठापनस्य राजधर्मता]

तस्मात् स्वधर्मं भूतानां राजा [6] न व्यभिचारयेत्।
[7] स्वधर्मं संदधानो हि प्रेत्य चेह च नन्दति ॥ ३ ॥

[त्रय्याः लोककल्याणहेतुता]

व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ॥ ४ ॥

इति विनयाधिकारिके विद्यासमुद्देशे
त्रयीस्थापना तृतीयोऽध्यायः.

---

## चतुर्थोऽध्यायः — वार्तादण्डनीतिस्थापने

[वार्तास्वरूपप्रयोजने]

कृषिपाशुपाल्ये वणिज्या च वार्ता; धान्यपशुहिरण्य[8]कुप्य-[9] विष्टिप्रदानादौपकारिकी। तया स्वपक्षं परपक्षं च वशीकरोति [10] कोशदण्डाभ्याम् ॥

---

[1] वन्यः-वनेभवः कन्दमूलादिः. [2] कामसंकल्पवर्जितः आरम्भः. [3] वस्तुसामान्ये स्वत्वाभिमानत्यागः. [4] दयार्द्रहृदयता. [5] संसारबन्धमोचनेन अनन्तत्वप्राप्तये च. [6] अतिक्रम्य वर्तितुं अवकाशं न दद्यात्. [7] प्रजासु स्वधर्मं योजयन्. [8] सुवर्णरजतातिरिक्तः लोहः कुप्यं. [9] कर्मकरविशेषः. 'त्रिषु कर्मकरे विष्टिः स्त्रियामभृतिकर्मणि' इति रुद्रकोशः. [10] धनसमूहसेनाभ्याम्. तया सम्पादिताभ्यामित्यन्वयः.

[दण्डनीतिस्वरूपप्रयोजने]

आन्वीक्षिकीत्रयीवार्तानां [1]योगक्षेमसाधनो [2]दण्डः, तस्य नीतिर्दण्डनीतिः; अलब्धलाभार्था लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादनी च। तस्यामायत्ता लोकयात्रा। तस्मा- ल्लोकयात्रार्थी नित्यमुद्यतदण्डस्यात् ॥

[कीदृशो दण्डः प्रयोक्तव्यः ?]

न ह्येवंविधं वशोपनयनमस्ति भूतानां यथा दण्ड इत्याचार्याः। नेति कौटल्यः—तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः, मृदुदण्डः परिभूयते, यथार्हदण्डः पूज्यः। सुविज्ञातप्रणीतो हि दण्डः प्रजाः धर्मार्थकामैर्योजयति। दुष्प्रणीतः कामक्रोधाभ्यामज्ञानाद्वानप्रस्थ- परिव्राजकानपि कोपयति, किमङ्ग! पुनर्गृहस्थान् ? ॥

[सर्वथा दण्डाप्रणयने दोषः]

अप्रणीतो हि [3]मात्स्यन्यायमुद्भावयति। बलीयानबलं हि ग्रसते दण्डधराभावे। [4]तेन गुप्तः [5]प्रभवतीति ॥

[दण्डस्य सन्मार्गहेतुता]

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः।
स्वधर्मकर्माभिरतो वर्तते स्वेषु [6]वर्त्मसु ॥ ५ ॥

इति विनयाधिकारिके विद्यासमुद्देशे वार्तादण्डनीतिस्थापने
चतुर्थोऽध्यायः. विद्यासमुद्देशस्समाप्तः.

---

[1] अलब्धस्य लाभः योगः, लब्धस्य परिरक्षणं क्षेमः. [2] चतुर्थोपायः. [3] बलवता मत्स्येन क्षुद्रमत्स्यग्रसनमिव, प्रजास्वपि बलवता दुर्बलस्य हिंसनं मात्स्यन्यायः. [4] शास्त्रानुगुणदण्डप्रयोगवता राज्ञा. [5] दुर्बलोऽपि समर्थो भवति. [6] वेश्मसु इति पाठान्तरम्.

# द्वितीयं प्रकरणं--वृद्धसंयोगः

## पञ्चमोऽध्यायः

[सुदण्डमूलविनयहेतुविद्याधिकारिवृत्तम्]

तस्मात् दण्डमूलास्तिस्रो विद्याः। विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः। कृतकः स्वाभाविकश्च विनयः। क्रिया हि [1]द्रव्यं विनयति नाद्रव्यम्[2]। [3]शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम्। विद्यानां तु यथास्वं[4] आचार्यप्रामाण्यात् विनयो नियमश्च ॥

[आविवाहात् विद्याग्रहणक्रमः]

वृत्तचौलकर्मा लिपिं सङ्ख्यानं चोपयुञ्जीत[5]; वृत्तोपनयनस्त्रयीमान्वीक्षिकीं च शिष्टेभ्यः, वार्तामध्यक्षेभ्यः, दण्डनीतिं वक्तृप्रयोक्तृभ्यः। ब्रह्मचर्यं चाषोडशाद्वर्षात्। अतो [6]गोदानं [7]दारकर्म च ॥

[गृहिणः प्रतिदिनं विद्याभ्यासक्रमः]

अस्य नित्यश्च विद्यावृद्धसंयोगो विनयवृद्ध्यर्थं, तन्मूलत्वाद्विनयस्य ॥ पूर्वमहर्भागं हस्त्यश्वरथप्रहरणविद्यासु विनयं गच्छेत्, पश्चिममितिहासश्रवणे। पुराणमितिवृत्तमाख्यायिकोदाहरणं धर्मशास्त्रं अर्थशास्त्रं चेतीतिहासः। शेषमहोरात्रभागं अपूर्वग्रहणं गृहीतपरिचयं च कुर्यात्। [8]अगृहीतानां आभीक्ष्ण्यश्रवणं च ॥

---

[1] प्रशस्तद्रव्यं सुवर्णादिकम्. [2] अद्रव्यं हीनद्रव्यं शिलाखण्डादिकम्. [3] श्रोतुमिच्छा. [4] आचार्येच्छानुगुण्येन. [5] उपयोगः-नियमपूर्वकविद्याग्रहणम्. [6] गोदानं संस्कारविशेषः. [7] विवाहः. [8] ईषद्गृहीतानाम्.

[विद्याश्रवणफलानि]

[1]श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया [2]योगः, योगादात्मवत्ता—इति विद्यासामर्थ्यम् ॥

[विद्यायाः सौराज्यमूलता]

विद्याविनीतो राजा हि प्रजानां [3]विनये रतः ।
अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः ॥ ६ ॥

इति विनयाधिकारिके वृद्धसंयोगः

पञ्चमोऽध्यायः

---

# तृतीयं प्रकरणम्—इन्द्रियजयः

## षष्ठोऽध्यायः — अरिषड्वर्गत्यागः

[इन्द्रियजयपदार्थतद्धेतू]

विद्याविनयहेतुः इन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात् कार्यः । कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिः[4] इन्द्रियजयः, शास्त्रार्थानुष्ठानं वा । कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः ! ॥

[कामाद्यरिषड्वर्गप्राभवेन चञ्चलेन्द्रियाणां
विनाशे निदर्शनाः]

तद्विरुद्धवृत्तिरवश्येन्द्रियः [5]चातुरन्तोऽपि राजा सद्यो विनश्यति—यथा दाण्डक्यो नाम भोजः कामात् ब्राह्मणकन्यामभिमन्यमानस्सबन्धुराष्ट्रो विननाश, करालश्च वैदेहः । कोपाज्जनमेजयो ब्राह्मणेषु [6]विक्रान्तः, तालजङ्घश्च भृगुषु । लोभादैलश्चातुर्वर्ण्यमत्या-

---

[1] श्रुतं = शास्त्रार्थश्रवणम [2] योगः = अध्यात्मयोगः = धीन्द्रियात्ममनसां परस्परानुकूल्येनाचञ्चलैकध्येयविशेषसम्बन्धः. [3] सच्छिक्षणे. [4] अविप्रतिपत्तिः- यत्नाभावः. [5] चतुस्सागरान्तभूमीश्वरोपि. [6] आरब्धकलहः.

हारयमाणः,[1] सौवीरश्चाजबिन्दुः। मानात् रावणः परदारान-प्रयच्छन्, दुर्योधनो राज्यादंशं च। मदाद्दम्भोद्भवो भूतावमानी, हैहयश्चार्जुनः। हर्षाद्वातापिरगस्त्यमत्यासादयन्[2], वृष्णिसङ्घश्च द्वैपायनमिति ॥

एते चान्ये च बहवः शत्रुषड्वर्गमाश्रिताः।
सबन्धुराष्ट्रा राजानो विनेशुरजितेन्द्रियाः ॥ ७ ॥

[जितेन्द्रियानुभाव्यसौख्ये निदर्शने]

शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः।
अम्बरीषश्च नाभागो बुभुजाते चिरं महीम् ॥ ८ ॥

इति विनयाधिकारिके इन्द्रियजये अरिषड्वर्गत्यागः
षष्ठोऽध्यायः

---

## सप्तमोऽध्यायः—राजर्षिवृत्तम्

[राज्ञा अभ्यसनीयाः अंशाः]

तस्मादरिषड्वर्गत्यागेनेन्द्रियजयं कुर्वीत, वृद्धसंयोगेन प्रज्ञां, चारेण चक्षुः, [3]उत्थानेन योगक्षेमसाधनं, कार्यानुशासनेन स्व-धर्मस्थापनं, विनयं विद्योपदेशेन, लोकप्रियत्वमर्थसंयोगेन, हितेन [4]वृत्तिम् ॥

[तेन वर्जनीयाः अंशाः]

एवं वश्येन्द्रियः परस्त्रीद्रव्यहिंसाश्च वर्जयेत्, [5]स्वप्नलौल्यं, अनृतं, उद्धतवेषत्वं, [6]अनर्थसंयोगं च, अधर्मसंयुक्तमनर्थसंयुक्तं च व्यवहारम् ॥

---

[1] बहुधनापहरणादिना हिंसां कुर्वन्. [2] अत्यासादयन् = वर्जयन् [3] उद्योगेन. [4] लोकानुसरणम्. [5] अतिनिद्रा स्वप्नः, चञ्चलमनस्कता-लौल्यम्. [6] धनादीनां दानं प्रतिग्रहश्च अर्थसंयोगः तद्विरुद्धः अनर्थसंयोगः.

[धर्मादिषु प्राधान्यनिर्णयः]

धर्मार्थाविरोधेन कामं सेवेत, न निस्सुखस्स्यात्। समं वा त्रिवर्गमन्योन्यानुबन्धम्[1]। एको ह्यत्यासेवितो धर्मार्थकामानां आत्मानमितरौ च पीडयति॥ 'अर्थ एव प्रधानः' इति कौटल्यः– अर्थमूलौ हि धर्मकामाविति॥

[आचार्यामात्यादिसचिवसंपत्त्यावश्यकता]

[2] मर्यादां स्थापयेत् आचार्यानमात्यान् वा, [3] य एनमपायस्थानेभ्यो वारयेयुः, [4] छायानालिकाप्रतोदेन वा रहसि प्रमाद्यन्तमभितुदेयुः॥

सहायसाध्यं राजत्वं चक्रमेकं न वर्तते।
कुर्वीत सचिवांस्तस्मात् तेषां च शृणुयान्मतम्॥ ९॥

इति विनयाधिकारिके इन्द्रियजये राजर्षिवृत्तं

सप्तमोऽध्यायः. इन्द्रियजयस्समाप्तः.

---

## चतुर्थं प्रकरणम्—अमात्योत्पत्तिः

### अष्टमोऽध्यायः

[अमात्ययोग्यताविषये मतभेदाः स्वमतं च]

सहाध्यायिनोऽमात्यान् कुर्वीत दृष्टशौचसामर्थ्यत्वात् इति भारद्वाजः—ते ह्यस्य विश्वास्याः भवन्तीति॥

नेति विशालाक्षः—सहक्रीडितत्वात् परिभवन्त्येनम्। ये ह्यस्य [5] गुह्यसधर्माणस्तानमात्यान् कुर्वीत,—समानशीलव्यसनत्वात्; ते ह्यस्य मर्मज्ञभयान्नापराध्यन्तीति॥

---

[1] अन्योन्यानुबन्धं = किञ्चिदपि परस्पराविलोपकम्. [2] सीमेव आत्मनः अलंघनस्थानतयेत्यर्थः. [3] "नृपस्य ते हि सुहृदस्त एव गुरवो मताः। य एनमुत्पथगतं वारयन्त्यनिवारिताः" इति कामन्दकः. [4] छाया नालिकेत्युभे अपि कालप्रमाणविशेषप्रदर्शकसाधनविशेषौ, इमे एव तत्तत्कालीनकर्तव्यांशविस्मरणेन कामादिपरतया स्थितस्य राज्ञः प्रतोदतुल्ये. प्रतोदः हिंसकः सूच्यादिः. तुद व्यथने. [5] परस्त्रीव्यामोहादिरूपगोपनीयदुर्गुणेषु स्वसमानयोगक्षेमाः.

साधारण एष दोषः इति पराशरः—तेषामपि मर्मज्ञभयात्[1] कृताकृतान्यनुवर्तेत ॥

यावद्भ्यो [2]गुह्यमाचष्टे जनेभ्यः पुरुषाधिपः ।
अवशः कर्मणा तेन वश्यो भवति तावताम् ॥ १० ॥

य एनमापत्सु [3]प्राणाबाधयुक्तास्वनुगृह्णीयुः तानमात्यान् कुर्वीत, दृष्टानुरागत्वादिति ॥

नेति पिशुनः—भक्तिरेषा न बुद्धिगुणः । [4]सङ्ख्यातार्थेषु कर्मसु नियुक्ताः ये यथाऽऽदिष्टमर्थं सविशेषं वा कुर्युः तानमात्यान् कुर्वीत, दृष्टगुणत्वादिति ॥

नेति कौणपदन्तः—अन्यैरमात्यगुणैरयुक्ता ह्येते । पितृपैतामहानमात्यान् कुर्वीत, [5]दृष्टापदानत्वात् । ते ह्येनं [6]अपचरन्तमपि न त्यजन्ति, सगन्धत्वात् । अमानुषेष्वपि चैतत् दृश्यते—गावो ह्यसगन्धं गोगणमतिक्रम्य [7]सगन्धेष्वेवावतिष्ठन्ते इति ॥

नेति वातव्याधिः—ते ह्यस्य सर्वमवगृह्य [8]स्वामिवत् प्रचरन्तीति । तस्मान्नीतिविदो नवानमात्यान् कुर्वीत । नवास्तु यमस्थाने [9]दण्डधरं मन्यमानाः नापराध्यन्तीति ॥

नेति बाहुदन्तीपुत्रः—[10]शास्त्रवित् अदृष्टकर्मा कर्मसु विषादं गच्छेत् । अभिजनप्रज्ञाशौचशौर्यानुरागयुक्तानमात्यान् कुर्वीत, गुणप्राधान्यादिति ॥

सर्वमुपपन्नमिति कौटल्यः—कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं कल्प्यते । सामर्थ्यतश्च—

विभज्यामात्यविभवं[11] देशकालौ च कर्म च ।
आमात्यास्सर्व एवैते कार्यास्स्युर्न तु मन्त्रिणः ॥ ११ ॥

इति विनयाधिकारिके अमात्योत्पत्तिः

अष्टमोऽध्यायः.

[1] कृताकृतानि = असम्यक्कृतानि. [2] शीलभ्रंशादिकम्. [3] आबाधः—हिंसा. [4] इयत्तया परिगणितादायविशिष्टेषु. [5] दृष्टपूर्वचरितत्वात्. [6] स्वापकारिणमपि. [7] सततसन्निकर्षादिना स्वत्यागायोग्य(त्यागविरोधि)भावविशिष्टेषु परिचितेषु. [8] अवगृह्य=स्वाधीनीकृत्वा. [9] राजानम्. [10] शास्त्रज्ञानवानपि तदनुसारिक्रियाकरणेऽकुशलः. [11] विभवः=तदीयसद्गुणसमूहः.

# पञ्चमं प्रकरणम्—मन्त्रिपुरोहितोत्पत्तिः

## नवमोऽध्यायः

[ गुणसम्पदानुगुण्येन अमात्यभेदाः ]

[1]जानपदः अभिजातः [2]स्ववग्रहः कृतशिल्पः [3]चक्षुष्मान् प्राज्ञः धारयिष्णुर्दक्षः वाग्मी प्रगल्भः [4]प्रतिपत्तिमान् उत्साहप्रभावयुक्तः क्लेशसहः शुचिः मैत्रः दृढभक्तिः शीलबलारोग्यसत्त्वसंयुक्तः [5]स्तम्भचापल्यवर्जितः संप्रियः वैराणामकर्ता—इति [6]अमात्यसम्पत्। अतः पादार्धगुणहीनौ मध्यमावरौ ॥

[ तत्तद्गुणपरीक्षाक्रमाः ]

तेषां जनपदमवग्रहं चाप्ततः परीक्षेत, समानविद्येभ्यः शिल्पं शास्त्रचक्षुष्मत्तां च ; कर्मारम्भेषु प्रज्ञां धारयिष्णुतां दाक्ष्यं च, [7]कथायोगेषु वाग्मित्वं प्रागल्भ्यं प्रतिभानवत्त्वं च ; आपद्युत्साहप्रभावौ क्लेशसहत्वं च ; संव्यवहाराच्छौचं मैत्रतां दृढभक्तित्वं च ; सवासिभ्यः शीलबलारोग्यसत्त्वयोगं अस्तम्भं अचापल्यं च ; प्रत्यक्षतः संप्रियत्वं अवैरित्वं च ॥

[ राजव्यवहारेष्वावश्यकानि साधनानि ]

प्रत्यक्षपरोक्षानुमेया हि [8]राजवृत्तिः। स्वयंदृष्टं प्रत्यक्षम्, परोपदिष्टं परोक्षम्। कर्मसु कृतेनाकृतावेक्षणमनुमेयम् ॥

[ मन्त्रिस्थापनावश्यकता ]

[9]अयौगपद्यात्तु कर्मणां अनेकत्वादनेकस्थत्वाच्च देशकालात्ययो मा भूदिति परोक्षममात्यैः कारयेदित्यमात्यकर्म ॥

---

[1] जानपदः—विजिगीषुजनभरितराष्ट्रे जातः. [2] सुखेन अकार्यात् वारयितुं शक्यः. [3] अर्थशास्त्राभिज्ञः. [4] तत्तत्कालीनकर्तव्यार्थनिश्चयवान्. [5] स्तम्भः—गर्वः. [6] सम्पत्—गुणसमृद्धिः. [7] कार्यकथनसमयेषु. [8] राजप्रासाः व्यवहाराः. [9] एकस्मिन्नेव काले कर्तुमशक्यत्वात्.

[पुरोहितयोग्यताः, तत्स्थापनावश्यकता च]

पुरोहितं [1]उदितोदितकुलशीलं, षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां च अभिविनीतं, आपदां दैवमानुषीणां अथर्वभिरुपायैश्च प्रतिकर्तारं कुर्वीत। तं आचार्यं शिष्यः, पितरं पुत्रः, भृत्यस्स्वामिनमिव चानुवर्तेत॥

[उक्तार्थनिगमनम्]

ब्राह्मणेनैधितं क्षत्रं [2]मन्त्रिमन्त्राभिमन्त्रितम्।
जयत्य[3]जितमत्यन्तं शास्त्रानुगमशस्त्रितम्[4]॥१२॥

इति विनयाधिकारिके मन्त्रिपुरोहितोत्पत्तिः
नवमोऽध्यायः

## षष्ठं प्रकरणम्—

# उपधाभिश्शौचाशौचज्ञानममात्यानाम्

## दशमोऽध्यायः

[मन्त्रिपरीक्षाविधिः]

मन्त्रिपुरोहितसखः सामान्येष्वधिकरणेषु[5] स्थापयित्वाऽमात्यान् [6]उपधाभिः शौचयेत्[7]॥

[धर्मव्याजेन तत्परीक्षाक्रमः]

पुरोहितमयाज्ययाजनाध्यापने नियुक्तममृष्यमाणं राजा [8]अवक्षिपेत्। स [9]सत्रिभिः शपथपूर्वमेकैकममात्यं [10]उपजापयेत्—

---

[1] शास्त्रानुभवादिपरिगृहीतविद्यावंशादिसम्पत्समृद्धम्. [2] मन्त्रिसमालोचनेन संस्कृतम्. [3] अजितं—स्वेन अप्राप्तं सर्वमपि पदार्थजातम्. [4] अशस्त्रितं-शस्त्रप्रयोगावश्यकताशून्यमेव. [5] अधिकारस्थानेषु. [6] वक्ष्यमाणैः धर्मादिरक्षणकथनव्याजैः [7] शुद्धिपरीक्षां कुर्यात्. [8] स्थानात् प्रच्यावयेत्. [9] शकुनशास्त्रज्ञत्वादिप्रसिद्ध्या गूढवेषेण संचरमाणैः. [10] बुद्धिभेदजनकानि वाक्यानि प्रयोजयेत्.

अधार्मिकोऽयं राजा, साधु धार्मिकमन्यमस्य तत्कुलीनमवरुद्धं कुल्य[1]मेकप्रग्रहं सामन्तमाटविकमौपपादिकं[2] वा [3]प्रतिपादयामः। सर्वेषामेतद्रोचते, कथं वा तवेति। प्रत्याख्याने शुचिरिति धर्मोपधा।

[अर्थसम्पादनोपायकथनव्याजेन तत्परीक्षा]

सेनापतिः [4]असत्प्रग्रहेणावक्षिप्तस्सत्त्रिभिरेकैकममात्यमुपजापयेल्लोभनीयेनार्थेन [5]राजविनाशनाय—सर्वेषामेतद्रोचते, कथं वा तवेति। प्रत्याख्याने शुचिरित्यर्थोपधा।

[कामपूरणोपायकथनव्याजेन तत्परीक्षा]

परिव्राजिका लब्धविश्वासाऽन्तःपुरे कृतसत्कारा [6]महामात्रमेकैकमुपजपेत्—राजमहिषी त्वां कामयते कृतसमागमोपाया; [7]महानर्थश्च भविष्यतीति। प्रत्याख्याने शुचिरिति कामोपधा।

[त्रासभयनिवारणोपायकथनव्याजेन तत्परीक्षा]

[8]प्रवहणनिमित्तमेकोऽमात्यः सर्वानमात्यानावाहयेत्। तेनो[9]द्वेगेन राजा तान[10]वरुन्ध्यात्। [11]कापटिकश्छात्रः पूर्वावरुद्धस्तेषामर्थमाना [12]वक्षिप्तमेकैकममात्यमुपजपेत्—असत्प्रवृत्तोऽयं राजा, साध्वेनं हत्वा अन्यं प्रतिपादयिष्यामः। सर्वेषामेतद्रोचते, कथं वा तवेति। प्रत्याख्याने शुचिरिति भयोपधा।

---

[1] सर्वत्र समपूजकम्. सर्वैरविशेषेण पूजितमितिवा, राज्ञा सह एकपूजमिति वा. [2] समितौ समर्थनीययोग्यताविशिष्टमन्यमराजबीजिनम्. [3] अस्य स्थाने निवेशयामः. [4] प्रग्रहः पूजा. अमुं दासीपुत्रं सत्कारेण पूजयेति राज्ञा उक्तः तदकुर्वन् स्थानात् प्रच्यावितः इत्यर्थः. असत्प्रतिग्रहेणावक्षिप्तः इति पाठान्तरम्-ग. [5] अर्थेन लोभयेद्राजविनाशायेति पाठान्तरम्-ग. (पा) [6] मन्त्रिणम्. [7] महान् अर्थ इति वा महांश्चासौ अनर्थ इति वा। आद्ये अर्थपदेन 'धर्मार्थयोः फलं कामः कामः स्त्रीभोगमुख्यकः' इत्युक्तप्रकारेण कामरूप एव पुरुषार्थः विवक्षितः। द्वितीये 'एतदनङ्गीकारे राजमहिषीक्रोधान्महाननर्थ' इति भावः। तथा च नार्थोपधाया अस्या अभेदः। [8] जलस्थलयोः प्रयाणे साधनभूतं नौदोलादिकं प्रवहणमित्युच्यते। अत्र तु तत्सहायेन क्रियमाणजलक्रीडादिकं अभिप्रेतम्। "सामुद्रिकाः व्यापारिणः महासमुद्रं प्रवहणैस्तरन्ति" इति उत्तराध्ययनसूत्रटीकायाम्- प. २४६. उद्वाहादिरुत्सव इति केचित्. [9] उद्वेगेन असहनेन. [10] अपकुर्यात् बन्धनं कुर्याद्वा. [11] शिष्यवेषच्छन्नः गूढचारः. [12] अवक्षिप्तं त्याजितम्.

[एवं परीक्षितानां तत्तद्योग्यतानुगुणकार्य
विशेषेषु नियोजनम् ]

तत्र धर्मोपधाशुद्धान् धर्मस्थीयकण्टकशोधनेषु स्थापयेत्। अर्थोपधाशुद्धान् [1]समाहर्तृसन्निधातृनिचयकर्मसु। कामोपधाशुद्धान् [2]बाह्याभ्यन्तरविहाररक्षासु। भयोपधाशुद्धानासन्नकार्येषु राज्ञः। सर्वोपधाशुद्धान् मन्त्रिणः कुर्यात्। सर्वत्राशुचीन् खनिद्रव्यहस्तिवन[3]कर्मान्तेषूपयोजयेत्।

[एतासु परीक्षासु उक्तक्रमेण राज्ञ एव लक्ष्यत्व
मित्याचार्यमतनिगमनम् ]

त्रिवर्गभयसंशुद्धानमात्यान् स्वेषु कर्मसु।
अधिकुर्याद्यथाशौचमित्याचार्या व्यवस्थिताः ॥ १३ ॥

[राजातिरिक्तस्यैव लक्ष्यत्वमिति
सयुक्तिकं स्वमतकथनम्]

न त्वेव कुर्यादात्मानं देवीं वा [4]लक्ष्यमीश्वरः।
शौचहेतोरमात्यानामेतत्कौटल्यदर्शनम् ॥ १४ ॥

न दूषणमदुष्टस्य विषेणेवाम्भसश्चरेत्।
कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम् ॥ १५ ॥

कृता च कलुषा बुद्धिरुपधाभिश्चतुर्विधा।
[5]नागत्वाऽन्तं निवर्तेत स्थिता सत्त्ववतां धृतौ ॥ १६ ॥

तस्माद्बाह्यमधिष्ठानं कृत्वा [6]कार्ये चतुर्विधे।
शौचाशौचममात्यानां राजा मार्गेत सत्रिभिः ॥ १७ ॥

इति विनयाधिकारिके उपधाभिश्शौचाशौचज्ञानममात्यानां
दशमोऽध्यायः

---

[1] समाहर्तृकर्म–धनसम्पादनकर्म, सन्निधातृनिचयः–सम्पादितधनरक्षणम्. [2] राज्ञा बाह्यक्रीडार्थं स्वीकृताः स्त्रियःभोगिन्यः, आभ्यन्तरविहारार्थं स्वीकृताः देव्यः, तासां रक्षणकर्मसु. तदुपवनरक्षण कर्मस्वितिकेचित् [3] व्यापारस्थानेषु. उपयोजयेत् अन्यैरधिकृतैस्सह योजयेत्. [4] लक्ष्यम्. [5] अन्तं अगत्वा-राजानं देवीं वा अविनाश्य. सत्त्ववन्तः-आरब्धकार्यावसायिनः. स्थिथिता-समर्थासती च [6] उपधानां प्रयोगे इत्यर्थः. चौर्ये चतुर्विधे ख.

# सप्तमं प्रकरणम्--गूढपुरुषोत्पत्तिः

## एकादशोऽध्यायः—संस्थोत्पत्तिः

### [राज्ञः कापटिकादिगूढपुरुषसम्पादनावश्यकता]

उपधाभिश्शुद्धामात्यवर्गो गूढपुरुषानुत्पादयेत्, कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनान् सत्त्रितीक्ष्णरसदभिक्षुकीश्च।

### [कापटिकनियोजनक्रमः]

परमर्मज्ञः प्रगल्भः छात्रः [1]कापटिकः। तमर्थमानाभ्यामुत्साह्य मन्त्री ब्रूयात् राजानं मां च प्रमाणं कृत्वा यस्य यदकुशलं पश्यसि तत्तदानीमेव [2]प्रत्यादिशेति।

### [उदास्थितनियोजनक्रमः]

[3]प्रव्रज्याप्रत्यवसितः प्रज्ञाशौचयुक्त उदास्थितः। स वार्ताकर्म[4]प्रदिष्टायां भूमौ प्रभूतहिरण्यान्तेवासी कर्म कारयेत्। कर्मफलाच्च [5]सर्वप्रव्रजितानां ग्रासाच्छादनावसथान् [6]प्रतिविदध्यात्। वृत्तिकामांश्चो[7]पजपेत्—एतेनैव [8]वेषेण राजार्थश्चरितव्यो [9]भक्तवेतनकाले चोपस्थातव्यमिति। सर्वप्रव्रजिताश्च स्वं स्वं वर्गमुपजपेयुः।

### [गृहपतिकव्यञ्जननियोजनक्रमः]

कर्षको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो गृहपतिकव्यञ्जनः। स कृषिकर्मप्रदिष्टायां भूमाविति समानं पूर्वेण।

### [वैदेहकव्यञ्जननियोजनक्रमः]

वाणिजको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो वैदेहकव्यञ्जनः। स वणिक्कर्मप्रदिष्टायां भूमाविति समानं पूर्वेण॥

---

[1] सर्वत्र मित्रायमाणः कपटेन चरतीति कापटिकः. [2] प्रत्यादिश-अस्मासु निवेदय. [3] सन्न्यासाश्रमात् च्युतः इत्यर्थः. प्रव्रज्याप्रत्यपसृतः इति ख (ग). प्रवृज्य प्रत्यवप्रत इति ग. अपवर्गार्थमुद्यम्य निवृत्तः सर्वाश्रमत्यागी कर्तव्यशून्यः इति उदास्थित इति संज्ञास्य. [4] तदर्थं उपकल्पितायां भूमौ. [5] सर्ववेषधारिणां-ख. [6] कल्पयेत्. [7] उपजपेत् भेदोपायेन वा दानेन वा वशीकुर्यात्. [8] दोषेण—ग. [9] भक्त—अन्नम्.

[तापसव्यञ्जनस्य भाव्यर्थकथकत्व
वेषेण नियोजनक्रमः]

मुण्डो जटिलो वा वृत्तिकामस्तापसव्यञ्जनः। स नगराभ्याशे प्रभूतमुण्डजटिलान्तेवासी शाकं यवसमुष्टिं वा मासद्विमासान्तरं प्रकाशमश्नीयात्, गूढमिष्टमाहारम्। वैदेहकान्तेवासिनश्चैनं समिद्धयोगैरर्चयेयुः शिष्याश्चास्यावेदयेयुः—"असौ सिद्ध[1]स्सामेधिकः" इति। [2]समेधाशास्तिभिश्चाभिगतानाम[3]ङ्गविद्यया शिष्यसंज्ञाभिश्च कर्माण्यभिजनेऽ[4]वसितान्यादिशेदल्पलाभं, [5]अग्निदाहं, चोरभयं, दूष्यवधं, [6]तुष्टदानं, विदेशप्रवृत्तिज्ञानं, "इदमद्य श्वो वा भविष्यतीदं वा राजा करिष्यति" इति॥

[तत्कथितानां अर्थानां निगूढं यथार्थताकरणम्,
सदसतोर्भेदेन क्रियावैलक्षण्यं च]

तदस्य गूढास्सत्रिणश्च [7]संवादयेयुः। सत्त्वप्रज्ञावाक्यशक्तिसम्पन्नानां [8]राजभाव्यमनुव्याहरेत् मन्त्रिसंयोगं च। मन्त्री चैषां [9]वृत्तिकर्मभ्यां वियतेत। ये च कारणादभिक्रुद्धास्तानर्थमानाभ्यां शमयेत्। अकारणक्रुद्धान् [10]तूष्णींदण्डेन राजद्विष्टकारिणश्च॥

पूजिताश्चार्थमानाभ्यां राज्ञा राजोपजीविनाम्।
जानीयुः शौचमित्येताः पञ्च [11]संस्थाः प्रकीर्तिताः॥ १८॥

इति विनयाधिकारिके गूढपुरुषोत्पत्तौ संस्थोत्पत्तिः एकादशोऽध्यायः

---

[1] भाविसम्पदभिज्ञः. [2] भाविसम्पदपेक्षिभिः. [3] तत्तदङ्गचेष्टादीनां फलबोधकेन शास्त्रेण. आकाशवाण्या इत्येके. [4] पूर्वकाले वृत्तानि. [5] अग्निदाहमित्याद्युत्तराणि प्रष्टृस्वरूपानुगुण्येन देयानि. [6] तुष्टिदानं–ख. सन्तोषोत्पादनार्थं कृतं दानम्. [7] स्वोक्त्यनुसारेण तानि तानि कार्याणि निगूढं निर्वर्तयेयुः. [8] राजसकाशाल्लभ्यमर्थविशेषम्. राजभाग्यं–ग. पा. [9] जीविकावाणिज्यादिपरिकल्पनेषु विशेषप्रयत्नं कुर्यात. [10] गूढशिक्षया. राजद्विष्टकारिणः–राज्ञोऽनभिमतं महान्तमनर्थं कर्तुकामान्. [11] तत्तत्क्लृप्तप्रदेशे स्थिरनिवासपूर्वकं प्राप्तकार्यनिर्वाहकाः इत्यर्थः. प्रकृते तु तेषां स्वरूपाणि विवक्षितानि.

# अष्टमं प्रकरणम्—गूढपुरुषप्रणिधिः

## द्वादशोऽध्यायः—सञ्चारोत्पत्तिः

### [सत्रितीक्ष्णरसदभिक्षुकीणां क्रमेण लक्षणानि]

[1]ये चाप्यसंबन्धिनोऽवश्यभर्तव्यास्ते [2]लक्षणमङ्गविद्यां [3]जम्भकविद्यां [4]मायागतमाश्रमधर्मं निमित्त[5]मन्तरचक्रमित्यधीयानाः [6]सत्रिण[7]स्संसर्गविद्या वा।

ये जनपदे शूराः [8]त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधयेयुस्ते तीक्ष्णाः।

ये बन्धुषु निस्नेहाः क्रूराश्चालसाश्च ते रसदाः।

परिव्राजिका वृत्तिकामा दरिद्रा विधवा प्रगल्भा ब्राह्मण्यन्तःपुरे कृतसत्कारा महामात्रकुलान्यधिगच्छेत्॥

एतया मुण्डा वृषल्यो व्याख्याताः। इति [9]सञ्चाराः।

### [तेषां नियोजनक्रमः]

तान् राजा स्वविषये मन्त्रिपुरोहितसेनापतियुवराजदौवारिका[10]न्तर्वंशिक [11]प्रशास्तृसमाहर्तृ [12]संनिधातृप्रदेष्टृनायकपौरव्यावहारिक[13]कार्मान्तिकमन्त्रिपरिषदध्यक्षदण्डदुर्गान्त [14]पालाटविकेषु श्रद्धेयदेशवेषशिल्पभाषाभिजनापदेशात् भक्तितः सामर्थ्ययोगाच्चा[15]पसर्पयेत्॥

### [मन्त्रिप्रभृत्यष्टादशवर्गेषु बाह्यसमाचारपरिज्ञानक्रमः]

तेषां बाह्यं [16]चारं छत्र[17]भृङ्गारव्यजनपादुकासनयानवाहनोपग्राहिणः तीक्ष्णा [18]विद्युः। तं सत्रिणः संस्था[19]स्वर्पयेयुः॥

---

[1] ये चास्य सम्बन्धिनः—ख. [2] लक्षणं-हस्तसामुद्रिकादिशास्त्रम्. [3] परवशीकरणहेतुभूतं अन्तर्धानादिकम्. जभि गात्रविनामे. [4] इन्द्रजालादिकम्. मायायोगं. घ. [5] अन्तरचक्रं-पक्षिशकुनशास्त्रम्. [6] सत्रिणः इति विधेयनिर्देशः. सत्त्रं—कपटं अस्त्येषामिति सत्त्रिणः. [7] कामशास्त्रं नृत्तगीतादिशास्त्रं च. [8] त्यक्तात्मानः-नात्मरक्षणपराः [9] तत्र तत्र सञ्चरणपूर्वकं राजकार्यनिर्वर्तकाः. [10] अन्तर्वंशिकः अन्तःपुराधिकृतः. [11]स्कन्धावारनिवेशयिता [12] भाण्डागाराधिकृतः. [13]खन्यादिषु अधिकृतः. [14] अस्य पालशब्दस्य दण्डादिषु प्रत्येकमन्वयः. [15]अपसर्पयेत् तैस्तैस्सह गतागतादि कारयेत्. [16]समाचारं. [17]भृङ्गारः कनकालुकः, मङ्गलकलश इति यावत्. [18] जानीयुः. [19] अर्पयेयुः निवेदयेयुः.

[अमात्यादिविषयकाऽऽन्तरसमा-
चारपरिज्ञानक्रमः]

[1] सूदारालिकस्नापक [2]संवाहकास्तरक [3]कल्पकप्रसाधकोदक-परिचारका रसदाः [4]कुब्जवामन[5]किरातमूकबधिरजडान्धच्छद्मानो-नटनर्तकगायनवादकवाग्जीवनकुशीलवाः स्त्रियश्चाभ्यन्तरं चारं विद्युः । तं भिक्षुक्यः संस्थास्वर्पयेयुः ॥

[ज्ञातानां वृत्तान्तानां राज्ञि गूढं
निवेदने उपायः]

संस्थानामन्तेवासिनः संज्ञालिपिभिश्चारसञ्चारं कुर्युः । न चान्योन्यं संस्थास्ते वा विद्युः ॥

[चारे प्रवृत्तानां भिक्षुक्यादीनां अन्तःप्रवेशा-
लाभकाले तद्वृत्तान्तावेदनोपायाः]

भिक्षुकीप्रतिषेधे द्वास्स्थपरम्परा मातापितृव्यञ्जनाः शिल्प-कारिकाः [6]कुशीलवा दास्यो वा [7]गीतवाद्य भाण्डगूढलेख्यसंज्ञा-भिर्वा चारं निर्हरेयुः । दीर्घरोगोन्मादाग्निरसविसर्गेण वा गूढ-निर्गमनम् ॥

[चारनिवेदितानां च वृत्तान्तानां परी-
क्षयैव विश्वास्यत्वं]

त्रयाणामेकवाक्ये सम्प्रत्ययः । तेषामभीक्ष्ण[8]विनिपाते तूष्णीं-दण्डः प्रतिषेधो वा ॥

---

[1] सूदः अन्नकर्ता. आरालिकः भक्ष्यकर्ता. [2] संवाहकः-अङ्गमर्दकः. आस्तरकः-शय्याप्रसाधयिता. [3] कल्पकः क्षुरकर्मकर्ता. प्रसाधकः अलंकर्ता. उदकपरिचारकः-जलाहरणकर्ता. [4] कुब्जः-विलक्षणस्थूलमांसग्रन्थिविशिष्टः "गून" इति भाषायां प्रसिद्धः. [5] किरातः-अल्पतनुः जंघाबलहीनः वर्षदेशीय-बालवत् उपसर्पकर्ता. किरातः-म्लेच्छविशेष इति तु मन्दम्. जडः-यो न वक्ति न श्रृणोति च सः. नटः-रसाभिनेता-नर्तकः-अङ्गमात्रविक्षेपकः, गायनः-गान्धर्व-वेत्ता, वादकः वीणादिवादनकर्ता, वाग्जीवनः-कथोपन्यासकः, कुशीलवाः-लङ्घनप्लवनादिकुशलाः रङ्गोपजीविनो वा. [6] कुशीलवदास्यः-रङ्गोपजीविदास्यः इति–घ. [7]गीतपाठ्यवाद्यभाण्ड–क. [8]विनिपातः-वाक्यभेदः. तूष्णीं-निगूढतया.

[सौलभ्येन परराष्ट्रवृत्तान्तावेदनोपायः]

कण्टकशोधनोक्ताश्चा[1]पसर्पाः परेषु कृतवेतना वसेयुः [2]सम्पातचोरार्थं त उभयवेतनाः ॥

[तदावेकानां च परीक्षा]

गृहीतपुत्रदारांश्च कुर्यादुभयवेतनान् ।
तांश्चारिप्रहितान् विद्यात्तेषां शौचं च तद्विधैः ॥ १९ ॥

[चाराणां वासार्थस्थानकल्पनाचातुर्यं निगमनं च]

एवं शत्रौ च मित्रे च मध्यमे चा[3]वपेच्चरान् ।
उदासीने च तेषां च [4]तीर्थेष्वष्टादशस्वपि ॥ २० ॥
अन्तर्गृहचरास्तेषां कुब्जवामनषण्डकाः ।
शिल्पवत्यः स्त्रियो मूकाश्चित्राश्च म्लेच्छजातयः ॥ २१ ॥
दुर्गेषु वणिजस्संस्थाः [5]दुर्गान्ते सिद्धतापसाः ।
कर्षकोदास्थिता [6] राष्ट्रे राष्ट्रान्ते [7]व्रजवासिनः ॥ २२ ॥
वने वनचराः कार्याश्श्रमणाटविकादयः ।
परप्रवृत्तिज्ञानार्थाः शीघ्राश्चारपरम्पराः ॥ २३ ॥
परस्य चैते बोद्धव्याः तादृशैरेव तादृशाः ।
चारसञ्चारिणस्संस्था गूढाश्चागूढसंज्ञिताः ॥ २४ ॥
अकृत्यान् कृत्यपक्षीयैः[8] दर्शितान् कार्यहेतुभिः ।
परापसर्पज्ञानार्थं मुख्यानन्तेषु वासयेत् ॥ २५ ॥

इति विनयाधिकारिके गूढपुरुषोत्पत्तौ सञ्चारोत्पत्तिः

द्वादशोऽध्यायः

---

[1] अपसर्पाः-गूढपुरुषाः. [2] चौर्येण वृत्तान्ताहरणाय. सम्पातचारार्थम्-क. सम्पातनिश्चारार्थं–ख. [3] आवपेत्-प्रहिणुयात्. [4] मन्त्रिप्रभृतिषु उक्ताष्टादशवर्गेषु. [5] संस्थाः-गूढपुरुषाः नियोजनीया इति शेषः. [6] उदास्थितः-सन्न्यासाश्रमाच्च्युतः प्रतिभाधैर्ययुक्तः [7] गोरक्षकाः. [8] बोधितस्वानुकूलमार्गान्, कृत्वेति शेषः,

# नवमं प्रकरणम्. स्वविषये कृत्याकृत्यपक्ष[1]रक्षणम्.

## त्रयोदशोऽध्यायः.

[स्वराष्ट्रीयप्रजानां परीक्षार्थं गूढपुरुष नियोजनावश्यकता]

([2]गूढपुरुषप्रणिधिः) कृत[3]महामात्यापसर्पः पौरजानपदान् [4]अपसर्पयेत् ।

[परीक्षाक्रमः]

[5]सत्रिणो द्वन्द्विनस्तीर्थसभाशाला[6]पूगजनसमवायेषु विवादं कुर्युः—"सर्वगुणसम्पन्नश्चायं राजा श्रूयते, न चास्य कश्चित् गुणो दृश्यते, यः पौरजानपदान् दण्डकराभ्यां पीडयति" इति ।

[तदनु च क्षुद्रत्वेन ज्ञातान् जनान् प्रति नीतिवादक्रमः]

तत्र येऽनुप्रशंसेयुः तानितरस्तं च प्रतिषेधयेत्—"मात्स्यन्यायाभिभूताः प्रजाः मनुं वैवस्वतं राजानं चक्रिरे । धान्यषड्भागं [7]पण्यदशभागं हिरण्यं चास्य [8]भागधेयं प्रकल्पयामासुः । तेन भृता राजानः प्रजानां योगक्षेमवहाः । तेषां किल्बिषं [9]दण्डकरा हरन्ति, योगक्षेमवहाश्च प्रजानाम् । [10]तस्मादुञ्छषड्भागं आरण्यका अपि [11]निवपन्ति—'तस्यैतद्भागधेयं योऽस्मान् गोपायति' इति ।

---

[1] रक्षणं च परोपजापात्. [2] उक्तप्रकारेण गूढपुरुषप्रणिधिमानित्यर्थः. गूढपुरुषप्रणिधिः इति क. ख. घ. पुस्तकेषु नास्ति. [3] महामात्याः उक्ताः मन्त्रिपुरोहितादयः. महामात्रापसर्पः—क. [4] गूढपुरुषद्वारा राजानुरागित्वाननुरागित्वादीन् परीक्षयेत्. [5] मन्त्रिणो द्वन्द्विनः इति घ. द्वन्द्वं-वैरं, जनसंवरणार्थं इतरेतरप्रख्यातवैरा इत्यर्थः. [6] पूगाः कायश्रमजीविनः. [7] पण्यं विक्रेयद्रव्यम्. [8] देयांशम्. [9] शिक्षाः देयांशाश्च. अदण्डकराः अयोगक्षेमवहाश्च इति—पा. ग. [10] ऋषयः. [11] अर्पयन्ति.

इन्द्रयमस्थानमेतत् राजानः प्रत्यक्ष[1]हेडप्रसादाः। तान्[2]वमन्यमानं दैवोऽपि दण्डः स्पृशति। तस्माद्राजानो नावमन्तव्याः" इति क्षुद्रकान् प्रतिषेधयेत्।

[जनप्रवादादिनापि प्रजासु तुष्ट्यतुष्ट्यादि ज्ञानावश्यकता]

[3]किंवदन्तीं च [4]विद्युः। ये चास्य धान्यपशुहिरण्यान्या[5]जीवन्ति, तैरुपकुर्वन्ति व्यसने अभ्युदये वा, कुपितं बन्धुं राष्ट्रं वा [6]व्यावर्तयन्ति, अमित्रमाटविकं वा [7]प्रतिषेधयन्ति, तेषां मुण्डजटिलव्यञ्जनास्तुष्टातुष्टत्वं विद्युः।

[सन्तुष्टानां विशेषमर्यादा, असन्तुष्टानां सामाद्युपायेन सन्तोषोत्पादनयत्नः, यत्नवैफल्ये शिक्षा च]

तुष्टान् भूयोऽर्थमानाभ्यां [8]पूजयेत्। अतुष्टान् तुष्टिहेतोस्त्यागेन साम्ना च [9]प्रसादयेत्, [10]परस्पराद्वा भेदयेदेनान् सामन्ताटविकतत्कुलीनावरुद्धेभ्यश्च। तथाऽप्यतुष्यतो[11] दण्डकरसाधनाधिकारेण वा जनपदविद्वेषं ग्राहयेत्। विद्विष्टानुपांशुदण्डेन जनपदकोपेन वा [12]साधयेत्। गुप्तपुत्रदारानाकरकर्मान्तेषु वा वासयेत् परेषामास्पदभयात्।

[स्वदेशीयकृत्यवृत्तान्तानां ज्यौतिषिकादिद्वारा ज्ञानम्]

[13]क्रुद्धलुब्धभीतावमानिनस्तु परेषां कृत्याः। तेषां [14]कार्तान्तिकनैमित्तिकमौहूर्तिकव्यञ्जनाः परस्पराभिसम्बन्धं [15]अमित्रप्रतिसम्बन्धं वा विद्युः।

---

[1] हेडः-निग्रहः.-घ. [2] अवमन्यमानान्-क. दैवो दण्डः-वह्न्युदकादिपीडा. [3] जनवार्ता [4] जानीयुः. [5] आजीवन्ति-उपाश्रित्य जीवन्ति, तैः-धान्यादिभिः. [6] व्यावर्तनं-कोपान्निवर्तनम्. [7] प्रतिषेधः-शत्रुभावाद्वारणम्. [8] भूयः पूजयेत्-क. ग. [9] प्रतिसाधयेत्-ख. प्रसाधयेत्-घ. [10] परस्परं सङ्घीभवनावकाशं न दद्यात् [11] साधनाधिकारपदस्य दण्डकरयोः प्रत्येकमन्वयः. [12] दमयेत्. [13] क्रुद्धलुब्धभीतमानिनस्त्वित्येव पाठः युक्तः, उत्तराध्याये तथैवव्युत्पादनात्. [14] कार्तान्तिकः-ज्यौतिषिकः पूर्ववृत्तज्ञः. नैमित्तिकःशकुनशास्त्रज्ञः. मौहूर्तिकः कालत्रयवृत्तज्ञः इति भेदः. [15] अमित्राटविक प्रतिसम्बन्धम्-क.

[उपायैश्च तेषां वशीकरणम्, अतादृशा-
नां सम्यक् रक्षणं च]

तुष्टानर्थमानाभ्यां पूजयेत्। अतुष्टान् सामदानभेददण्डै-स्साधयेत्।

एवं स्वविषये कृत्यानकृत्यांश्च विचक्षणः।
परोपजापात् संरक्षेत् प्रधानान् क्षुद्रकानपि॥ २६॥

इति विनयाधिकारिके स्वविषये कृत्याकृत्यपक्षरक्षणं त्रयोदशोऽध्यायः

---

## दशमं प्रकरणम्—परविषये कृत्याकृत्य पक्षो[1]पग्रहः.

### चतुर्दशोऽध्यायः.

[ससंगति प्रकरणावतरणम्]

कृत्याकृत्यपक्षोपग्रहस्स्वविषये व्याख्यातः परविषये वाच्यः।

[क्रुद्धवर्ग परिगणनम्]

[2]संश्रुत्यार्थान् विप्रलब्धः, तुल्यकारिणोश्शिल्पे वोपकारे वा विमानितः, [3]वल्लभावरुद्धः, समाहूय पराजितः, प्रवासोपतप्तः, कृत्वा व्ययमलब्धकार्यः, स्वधर्माद्दायाद्याद्वोपरुद्धः, मानाधिकाराभ्यां भ्रष्टः, [4]कुल्यैरन्तर्हितः, प्रसभाभिमृष्टस्त्रीकः, काराभिन्यस्तः, [5]परोक्तदण्डितः, [6]मिथ्याचारवारितः, सर्वस्व[7]माहारितः [8]बन्धनपरिक्लिष्टः, प्रवासितबन्धुरिति क्रुद्धवर्गः।

---

[1] उपग्रह :स्ववशीकरणम्. [2] संश्रुत्य—ददामीत्यादि प्रतिज्ञाय, विप्रलब्धः-वञ्चितः. [3] राजवल्लभनिवारितान्तःप्रवेशः. [4] अन्तर्हितः-अप्रासस्वविद्यावैभवादि-प्रकाशः. तुल्यैरन्तर्हितः—ग. [5] परोक्षदण्डितः—ग. घ. [6] मिथ्याचारत्वप्रकटनेन यागादेर्वारितः. [7] आहारितः—अपहारितः. [8] बन्धनं—स्वायोग्यकार्येषु निर्बन्धेन नियोजनम्.

[भीतवर्गपरिगणनम्]

[1]स्वयमुपहतः, [2]विप्रकृतः, पापकर्माभिख्यातः, तुल्यदोषदण्डेनोद्विग्नः, [3]पर्यात्तभूमिः, दण्डेनो[4]पनतः, [5]सर्वाधिकरणस्थः, [6]सहसोपचितार्थः, [7]तत्कुलीनोपाशंसुः, प्रद्विष्टो राज्ञा, राजद्वेषी चेति भीतवर्गः ॥

[लुब्धवर्ग व्युत्पादनम]

[8]परिक्षीणः, अत्यात्तस्वः, [9]कदर्यः, [10]व्यसनी, अत्याहितव्यवहारश्चेति लुब्धवर्गः।

[मानिवर्गस्वरूपकथनम्]

आत्मसम्भावितः, मानकामः, शत्रुपूजामर्षितः, [11] नीचैरुपहितः, तीक्ष्णः, साहसिकः, [12] भोगेनासन्तुष्ट इति मानिवर्गः।

[क्रुद्धविषये उपजापक्रमः]

तेषां मुण्डजटिलव्यञ्जनैर्यो यद्भक्तिः कृत्यपक्षीयस्तं तेनोपजापयेत्। "यथा मदान्धो हस्ती मत्तेनाधिष्ठितो यद्यदासादयति तत्सर्वं प्रमृद्नाति, एवमयमशास्त्रचक्षुरन्धो राजा अन्धेन मन्त्रिणाधिष्ठितः पौरजानपदवधाया[13]भ्युत्थितः ; शक्यमस्य [14]प्रतिहस्तिप्रोत्साहनेनापकर्तुं, अमर्षः क्रियतां" इति क्रुद्धवर्गमुपजापयेत्।

[भीतवर्गे उपजापक्रमः]

"यथा लीनस्सर्पो यस्माद्भयं पश्यति तत्र विषमुत्सृजति, एवमयं राजा जातदोषाशङ्कस्त्वयि [15]पुरा क्रोधविषमुत्सृजति, अन्यत्र गम्यतां" इति भीतवर्गमुपजापयेत्।

---

[1] स्वकृतदुष्कार्येणैव दूषितः. [2] प्रक्रान्तस्वस्वरूपविरुद्धक्रियः. [3] पर्यात्ता—अपहृता. [4] उपनतः—कार्शितः. [5] अधिकरणं—अधिकारस्थानम्. [6] साहसोप—ख. [7] राजकुलीनं कंचित् कामपूरणार्थं आश्रितः. तत्कुलीनो वाऽऽशंसुः—ग. घ. अस्मिन् पाठे 'कदाहं राजा स्यामिति सदाऽऽशंसनशीलः राजकुलीनोवा' इत्यर्थः [8]नष्टैश्वर्यः [9] कृपणः [10] स्त्रीपानादिव्यसनवान् धननिमित्तं अतिव्यवहार कर्ता च [11] क्वचित् हीनकार्ये प्रेरितः [12] क्लृप्तवेतनेन [13] अभ्युत्थित — उद्युक्तः [14] प्रतिहस्ती-शत्रुः [15] पुरा-प्रथमम्. उत्स्रक्ष्यतीत्यर्थे पुरा उत्सृजतीत्यन्वयो वा. यावत्पुरानिपातयोर्लट्. पा. ३-३-४.

[लुब्धवर्गे उपजापक्रमः]

"यथा श्वगणिनां धेनुश्श्वभ्यो दुग्धे न ब्राह्मणेभ्यः, एवमयं राजा सत्त्वप्रज्ञावाक्यशक्तिहीनेभ्यो दुग्धे नात्मगुणसम्पन्नेभ्यः। [1]असौ राजा पुरुषविशेषज्ञस्सेव्यतां" इति लुब्धवर्गमुपजापयेत्।

[मानिवर्गे उपजापक्रमः।]

"यथा [2]चण्डालोदपानश्चण्डालानामेवोपभोग्यो नान्येषां, एवमयं राजा नीचो नीचानामेवोपभोग्यो न त्वद्विधानामार्याणाम्। असौ राजा पुरुषविशेषज्ञः, तत्र गम्यतां" इति मानिवर्गमुपजापयेत्।

[एवं कृतोपजापेन विनीतानां शपथपूर्वकं स्वराष्ट्र संयोजनादि सन्नाहकरणम्]

तथेति प्रतिपन्नांस्तान् [3]संहितान् [4]पणकर्मणा।
योजयेत यथाशक्ति [5]सापसर्पान् स्वकर्मसु॥ २७॥

लभेत सामदानाभ्यां कृत्यांश्च परभूमिषु।
अकृत्यान् भेददण्डाभ्यां परदोषांश्च दर्शयेत्॥ २८॥

इति विनयाधिकारिके परविषये कृत्याकृत्यपक्षोपग्रहः चतुर्दशोऽध्यायः

---

# एकादशं प्रकरणम्—मन्त्राधिकारः.

## पञ्चदशोऽध्यायः.

[कर्तव्यकार्यारम्भेषु मन्त्रालोचनतद्गोपनयोः आवश्यकता]

कृतस्वपक्षपरपक्षोपग्रहः कार्यारम्भांश्चिन्तयेत्। मन्त्रपूर्वास्सर्वारम्भाः। [6]तदुद्देशः संवृतः [7]कथानामनिःस्रावी पक्षिभिरप्य-

---

[1] असाविति स्वामिमतव्यक्त्यन्तरनिर्देशः. [2] उदपानः—कूपः. [3] कृतसन्धानान्. [4] शपथेन. [5] गूढचारादिसहितान् [6] मन्त्रालोचनयोग्यः प्रदेशः. [7]अनिःस्रावी-बहिःप्रसरणावकाशशून्यः, प्रतिध्वनिविवर्जित इति जयमङ्गला.

नालोक्यस्स्यात्। श्रूयते हि शुकशारिकाभिः मन्त्रो भिन्नश्श्वभि रन्यैश्च तिर्यग्योनिभिः। तस्मान्मन्त्रोद्देशं[1]अनायुक्तो नोपगच्छेत्। उच्छिद्येत मन्त्रभेदी॥

[मन्त्रभेदे सम्भावितानां हेतूनां उपपादनेन मन्त्ररक्षणोपायकथनम्]

मन्त्रभेदो हि दूतामात्यस्वामिनामिङ्गिताकाराभ्याम्। इङ्गितमन्यथावृत्तिः।[2]आकृतिग्रहणमाकारः। तस्य संवरणं आयुक्तपुरुषरक्षणमाकार्यकालादिति। तेषां हि प्रमादमदसुप्तप्रलापकामादिरुत्सेकः[3]प्रच्छन्नोऽवमतो वा मन्त्रं भिनत्ति। तस्माद्रक्षेन्मन्त्रम्।

[मन्त्रभेदे दोषोपपादनपूर्वकं मन्त्रकर्तुरेकत्वमतोपपादनम्]

[4]मन्त्रभेदो ह्ययोगक्षेमकरो राज्ञस्तदायुक्तपुरुषाणां च।

तस्मात्—"गुह्यमेको मन्त्रयेत" इति भारद्वाजः। मन्त्रिणामपि हि मन्त्रिणो भवन्ति। तेषामप्यन्ये। सैषा मन्त्रिपरम्परा मन्त्रं भिनत्ति।

तस्मान्नास्य परे विद्युः कर्म किञ्चिच्चिकीर्षितम्।
आरब्धारस्तु जानीयुरारब्धं कृतमेव वा॥ २९॥

[मन्त्रकर्मणः बहुजनसाध्यत्वोपपादकमतम्]

"नैकस्य मन्त्रसिद्धिरस्ति" इति विशालाक्षः। प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः। अनुपलब्धस्य ज्ञानं, उपलब्धस्य निश्चयबलाधानं, अर्थद्वैधस्य संशयच्छेदनं, एकदेशदृष्टस्य शेषोपलब्धिरिति मन्त्रिसाध्यमेतत्। तस्माद्बुद्धिवृद्धैस्सार्धमासीत मन्त्रम्॥

न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम्।
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः॥ ३०॥

---

[1] राज्ञा मन्त्रालोचनकर्मणि अनियुक्तः [2] ग्र॒णं-ज्ञानसाधनम् [3] कुड्यादीनां अपरभागे गूढं स्थितः. [4] मन्त्रभेदोऽन्ययोग–ग.

[निर्दिष्टविषयाप्रकाशेनैव मन्त्रकर्मकरणमतं]

'एतन्मन्त्रज्ञानं, नैतन्मन्त्ररक्षणं' इति पाराशराः। यदस्य कार्यमभिप्रेतं [1]तत्प्रतिरूपकं मन्त्रिणः पृच्छेत्—'कार्यमिदमेवमासीदेवं वा यदि भवेत्तत्कथं कर्तव्यं' इति। ते यथा ब्रूयुः तत्कुर्यात्। एवं [2]मन्त्रोपलब्धिः संवृतिश्च भवतीति।

[तन्निरसनेन, तत्तत्कार्यज्ञैः सर्वैः साकं मन्त्रकरणमतम्]

"न" इति पिशुनः। मन्त्रिणो हि [3]व्यवहितमर्थं वृत्तमवृत्तं वा [4]पृष्टमनादरेण ब्रुवन्ति प्रकाशयन्ति वा स दोषः। तस्मात्कर्मसु ये येष्वभिप्रेतास्तैस्सह मन्त्रयेत्। तैर्मन्त्रयमाणो हि मन्त्रबुद्धिं गुप्तिं च लभत इति॥

[विस्तरेण स्वमतोपपादनम्]

"न" इति कौटिल्यः। [5]अनवस्था ह्येषा। मन्त्रिभिस्त्रिभिश्चतुर्भिर्वा सह मन्त्रयेत।

मन्त्रयमाणो ह्येकेना[6]र्थकृच्छ्रेषु निश्चयं नाधिगच्छेत्। एकश्च मन्त्री यथेष्टमनवग्रहश्चरति।

द्वाभ्यां मन्त्रयमाणो द्वाभ्यां संहताभ्या[7]मवगृह्यते। विगृहीताभ्यां विनाश्यते।

[8]त्रिषु चतुर्षु वा [9]नैकान्तं कृच्छ्रेणोपपद्यते [10]महादोषम्। [11]उपपन्नं तु भवति। ततःपरेषु कृच्छ्रेणार्थनिश्चयो गम्यते। मन्त्रो वा रक्ष्यते।

देशकालकार्यवशेन त्वेकेन सह द्वाभ्यामेको वा यथासामर्थ्यं मन्त्रयेत।

---

[1]प्रसक्तकार्यसमानशरीरकं कार्यान्तरम्. [2]उपलब्धिःज्ञानम्. [3]रूपान्तराच्छादितम्. [4]पृष्टाः अनादरेण–ख. [5]सा च अनवस्था कार्यबाहुल्यप्रयुक्तमन्त्रीयत्ताऽनवधारणप्रयोज्या. [6]कष्टनिर्णयेषु कार्येषु [7]अवगृह्यते-(राजैव) तद्वशं नीयते. विगृहीताभ्यां-परस्परविरुद्धमतिभ्यां मन्त्रिभ्यां. उक्तं च 'इतरेतर विद्विष्टमन्त्रिबुद्ध्यनुगो नृपः। विकलीभवति क्षिप्रमपरोऽध्यापको यथा' इति. [8]तत् त्रिषु चतुर्षु ख. [9]एकान्तं-नियतम्. [10]पूर्वोक्तं राजस्वाधीनकरणादिकम्. [11]महादोष उपपन्नो भवति. ग.

[मन्त्रस्य अङ्गपञ्चकसम्पन्नत्वोपपादनम्,
मन्त्रणरीतिश्च]

कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, [1] विनिपातप्रतीकारः; कार्यसिद्धिरिति पञ्चाङ्गो मन्त्रः।

तानेकैकशः पृच्छेत् समस्तांश्च।

हेतुभिश्चैषां मतिप्रविवेकान् विद्यात्। अवाप्तार्थः कालं नातिक्रामयेत्। न दीर्घकालं मन्त्रयेत, न च तेषां पक्ष्यैर्येषां अपकुर्यात्।

मन्त्रान्वययोग्यमन्त्रिसंख्याविषये
मतभेदाः स्वमतं च]

"मन्त्रिपरिषदं द्वादशामात्यान्कुर्वीत" इति मानवाः।
"षोडश" इति बार्हस्पत्याः।
"विंशतिम्" इत्यौशनसाः।
"यथासामर्थ्यम्" इति कौटल्यः।

[अधिकारे नियुक्तानामेषां कर्तव्यव्यवस्था]

ते ह्यस्य स्वपक्षं परपक्षं च चिन्तयेयुः। अकृतारम्भमारब्धानुष्ठानमनुष्ठितविशेषं [2] नियोगसम्पदं च कर्मणां कुर्युः। [3]आसन्नैस्सह कार्याणि पश्येत्। अनासन्नैस्सह पत्रसम्प्रेषणेन मन्त्रयेत्।

[दार्ढ्याय अर्थवादविशेषः]

इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रम्। स तच्चक्षुः। तस्मादिमं द्व्यक्षं सहस्राक्षमाहुः।

[बह्वपायसन्दर्भे राज्ञः कार्यम्]

[4]आत्ययिके कार्ये मन्त्रिणो मन्त्रिपरिषदं चाहूय ब्रूयात्। तत्र यद्भूयिष्ठाः कार्यसिद्धिकरं वा ब्रूयुस्तत्कुर्यात्। कुर्वतश्च—

---

[1] विनिपातः-कार्यविघ्नः. [2] अधिकारवर्गेषु गुणवृद्धिं संख्याभिवृद्धिं च
[3] अनासन्नैः. [4] प्राणापायशङ्कावहे.

[निगमनम]

नास्य गुह्यं परे विद्युः छिद्रं विद्यात् परस्य च ।
गूहेत् कूर्म इवाङ्गानि यत्स्याद्विवृतमात्मनः ॥ ३१ ॥
यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुमर्हति ।
एवमश्रुतशास्त्रार्थो न मन्त्रं श्रोतुमर्हति ॥ ३२ ॥

इति विनयाधिकारिके मन्त्राधिकारः पञ्चदशोऽध्यायः

---

## द्वादशं प्रकरणम् दूत[1]प्रणिधिः

### षोडशोऽध्यायः

[दूतप्रेषणस्य मन्त्रनिश्चयानन्तरकर्तव्यत्वं दूतभेदाश्च]

[2] उद्धृतमन्त्रो दूतप्रणिधिः ।

अमात्यसम्पदोपेतो निसृष्टार्थः । पादगुणहीनः परिमितार्थः । अर्धगुणहीनः शासनहरः ॥

[प्रस्थितस्य च दूतस्य मार्गे चिन्तनक्रमः अवधेया अंशाश्च]

[3] सुप्रतिविहितयानवाहनपुरुष[4]परिवापः प्रतिष्ठेत "शासनमेवं वाच्यः परः, स वक्ष्यत्येवं, तस्येदं प्रतिवाक्यं, एव[5]मतिसन्धातव्यम्" इत्यधीयानो गच्छेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च [6]प्रतिसंसर्गं गच्छेत् । अनीकस्थानयुद्धप्रतिग्रहा[7]पसारभूमीरात्मनः परस्य चावेक्षेत । दुर्गराष्ट्रप्रमाणं [8]सारवृत्तिगुप्तिच्छिद्राणि चोपलभेत ॥

---

[1] सम्प्रेषणम्. [2] मन्त्रनिर्धारणानन्तरकालकर्तव्यताकः. [3] सुप्रतिविहितं सम्यक् सज्जीकृतम्. [4] परिवापः—शय्याद्युपकरणम्. [5] वञ्चयितव्यम्. [6] स्नेहम् [7] निगूढपलायनानुकूलान् भूभागान् [8] 'सारवत्तागुप्तिच्छिद्राणि इति—पा. सारः—धान्याद्युत्पत्तिः.

[प्राप्तपरदेशस्य च तस्य तैस्तैः चिह्नैः शत्रुप्रसादादि परिज्ञानम्, शत्रोरप्रसन्नताज्ञाने तस्मिन् निवेदनीयाः अंशाश्च]

[1] पराधिष्ठानमनुज्ञातः प्रविशेत्। शासनं च यथोक्तं ब्रूयात् प्राणाबाधेऽपि दृष्टे। परस्य वाचि वक्त्रे दृष्ट्यां च प्रसादं, वाक्यपूजनं, इष्टपरिप्रश्नं, गुणकथासङ्गं, आसन्नमासनं, सत्कारं, इष्टेषु स्मरणं, विश्वासगमनं च लक्षयेत्तुष्टस्य, विपरीतमतुष्टस्य। तं ब्रूयात्—"दूतमुखा वै राजानस्त्वं चान्ये च; तस्मात्[2] उद्धृतेष्वपि शस्त्रेषु यथोक्तं वक्तारः; तेषां[3] अन्तावसायिनोऽप्यवध्याः, किमङ्ग! पुनर्ब्राह्मणाः; परस्यैतद्वाक्यं, एष दूतधर्मः" इति॥

[कारणविशेषेण राज्ञा दूतस्याविसर्जने तत्राव स्थितिक्रमः, परिशीलनीयाः अंशाश्च]

वसेदविसृष्टः, प्रपूजया नोत्सिक्तः, परेषु [4] बलित्वं न मन्येत, वाक्यमनिष्टं सहेत, स्त्रियः पानं च वर्जयेत्; एकश्शयीत, सुप्तमत्तयोर्हि [5] भावज्ञानं दृष्टम्। कृत्यपक्षोपजापं, अकृत्यपक्षे गूढप्रणिधानं, रागापरागौ भर्तरि [6] रन्ध्रं च प्रकृतीनां, तापसवैदेहकव्यञ्जनाभ्यामुपलभेत। तयोरन्तेवासिभिः चिकित्सकपाषण्डव्यञ्जनोभयवेतनैर्वा, तेषाम[7] सम्भाषायां याचकमत्तोन्मत्तसुप्तप्रलापैः पुण्यस्थान[8] देवगृहचित्रैर्लेख्यसंज्ञाभिर्वा चारमुपलभेत। उपलब्धस्योपजापमुपेयात्। परेण चोक्तः स्वासां प्रकृतीनां परिमाणं नाचक्षीत। "सर्वं वेद भवान्," इति ब्रूयात् [9] कार्यसिद्धिकरं वा।

[शत्रुराजेन दूतस्य चिरकालोपरोधे तत्कारणपरिचिन्तनक्रमाः।]

[10] कार्यस्य सिद्धावुपरुध्यमानस्तर्कयेत्—किं भर्तुर्मे व्यसनमासन्नं पश्यन्, स्वं वा व्यसनं प्रतिकर्तुकामः, [11] पार्ष्णिग्राहासारावन्तः

---

[1] शत्रुवसतिं. [2] उद्यतेष्वपि. ख. घ. [3] चण्डालाः. तेषामन्तेवासिनोपि घ. पाठः. [4] आत्मन इति शेषः. [5] स्वाप्नप्रलापादिषु इति शेषः [6] द्वेषहेतुभूतं तं तमंशम्. [7] सम्भाषणसौकर्यालाभे. [8] देवगृहविचित्र—पा. [9] यावत्परिमाणे उच्यमाने दूतस्य स्वकार्यसिद्धिर्भवति तावदेव परिमाणं ब्रूयादित्यर्थः. [10] कार्यस्यासिद्धौ—घ. [11] अरिं प्रति निर्यातस्य स्वदेशाक्रमणशीलः पृष्ठवर्ती शत्रुराजमित्रं पार्ष्णिग्राहः. पार्ष्णिग्राहमित्रं आसारः.

कोपमाटविकं वा[1] समुत्थापयितुकामः, मित्र[2]माक्रन्दं वा व्यापादयितुकामः, स्वं वा परतो विग्रहमन्तःकोपमाटविकं वा प्रतिकर्तुकामः, संसिद्धं मे भर्तुर्यात्राकालमभिहन्तुकामः, सस्य-कुप्यपण्यसङ्ग्रहं दुर्गकर्म बलसमुत्थानं वा कर्तुकामः, स्वसैन्यानां व्यायामदेशकालावाकाङ्क्षमाणः, परिभव[3]प्रमादाभ्यां वा, संसर्गानुबन्धार्थी वा, मामुपरुणद्धीति ॥

[अनन्तरं च आनुकूल्ये ज्ञाते वासः, प्रातिकूल्ये स्वयमेवापसरणं च । ]

ज्ञात्वा वसेदपसरेद्वा । प्रयोजनमिष्टमवे[पे]क्षेत वा । शासनमनिष्टमुक्त्वा बन्धवधभयादविसृष्टोऽप्यपगच्छेत्[4], अन्यथा नियम्येत ।

[दूतकर्तव्यसङ्ग्रहः]

[5]प्रेषणं सन्धिपालत्वं प्रतापो मित्रसङ्ग्रहः ।
उपजापः सुहृद्भेदः गूढदण्डातिसारणम् ॥ ३३ ॥
बन्धुरत्नापहरणं चारज्ञानं पराक्रमः ।
[6]समाधिमोक्षो दूतस्य कर्म [7]योगस्य चाश्रयः ॥ ३४ ॥

[निगमनम्]

स्वदूतैः कारयेदेतत् परदूतांश्च रक्षयेत् ।
प्रतिदूतापसर्पाभ्यां दृश्यादृश्यैश्च रक्षिभिः ॥ ३५ ॥

इति विनयाधिकारिके दूतप्रणिधिः षोडशोऽध्यायः

---

[1] कोपादाटविकं वा—घ. [2] आक्रन्दः—स्वयजमानस्य पश्चान्मित्रम्. मित्रमाक्रन्दाभ्यां वा इति—पा. [3] प्रमादोऽनवधानता. प्रमदाभ्यमिति—ख. प्रमदः-स्वसहसंवासप्रीतिः [4] बन्धवधभयादपि विसृष्टो व्यपगच्छेत्—ग. [5] प्रेषणं (ईषगति हिंसादर्शनेषु, भावेल्युट् ) गमनं आगमनं च. सन्देशप्रापणं वा. गूढाः—गूढपुरुषाः दण्डः—सेना, तेषामाक्रामणमित्यर्थः । दण्डगूढातिसारणमिति—पा. [6] कालविशेषे बद्धः शत्रुपक्षीयतत्पुत्रादिः समाधिशब्दवाच्यः. तस्य मोचनं सन्धिविश्वासार्थमित्यर्थः. [7] योगस्य=अथर्वोक्तस्य आभिचारिककर्मणः, आश्रयः—आचरणम्. इत्येतत् सर्वं दूतस्य कर्मेत्यन्वयः ।

# त्रयोदशं प्रकरणम्—राजपुत्ररक्षणम्

## सप्तदशोऽध्यायः

[राज्ञः स्वपुत्रादिभ्यो रक्षणावश्यकता]

रक्षितो राजा राज्यं रक्षत्यासन्नेभ्यः [1]परेभ्यश्च, पूर्वं दारेभ्यः पुत्रेभ्यश्च ।

[2]दाररक्षणं निशान्तप्रणिधौ । वक्ष्यामः पुत्ररक्षणम् ।

[तदर्थं पूर्वं पुत्रशिक्षाया आवश्यकत्वं,
तत्क्रमविषये मतभेदाश्च]

जन्मप्रभृति राजपुत्रान् रक्षेत् । "कर्कटकसधर्माणो हि जनकभक्षाः राजपुत्राः, [3]तेषामजातस्नेहे पितर्युपांशुदण्डश्श्रेयान्" इति भारद्वाजः ।

"[4]नृशंसमदृष्टवधः, क्षत्रबीजविनाशश्चेति" विशालाक्षः । तस्मात् एकस्थानावरोधश्श्रेयानिति ।

"अहिभयमेतदिति" पाराशराः । कुमारो हि विक्रमभयान्मां पिता रुणद्धीति ज्ञात्वा तमेवाङ्के[5] कुर्यात् । तस्मादन्त[6]पालदुर्गे वासश्श्रेयानिति ।

"[7]औरभ्रकं भयमेतत्" इति पिशुनः । [8]प्रत्यापत्तेर्हि तदेव कारणं ज्ञात्वाऽन्तपालसखः स्यात् । तस्मात् स्वविषयादपकृष्टे[9] सामन्तदुर्गे वासश्श्रेयानिति ।

---

• [1] छात्रेभ्यश्च-ग. [2] अस्मिन् वाक्ये वक्ष्यत इति शेषः, उत्तरवाक्ये अधुनेत्यादिः. निशान्तप्रणिधिर्नाम सप्तदशं प्रकरणम्. [3] तेषां पुत्राणां स्वपितृस्नेहे अजाते सतीत्यर्थः. [4] अज्ञातदोषस्योत्प्रेक्षया वधः अतिक्रूरकर्मेत्यर्थः. एकस्थानावरोधः अन्तःपुरादौ क्वचित् स्थाने अवरोधः. [5] स्ववासस्थाने. [6] अन्तः—राष्ट्रसीमा. [7] मेषजन्यभयसदृशभयस्थानम्. यथा कलहायमानयोः मेषयोःअन्यतरः मेषान्तरं स्वमूर्ध्ना जघट्टयिषुः तदनुगुणशक्त्यतिशयाधानायैव पूर्वं किंचिद्दूरमपसरन् अनुपदमेवागत्य सवेगं घट्टयति, एवं कुमारस्यापि किंचिद्दूरे स्थापनं राजहिंसाप्रयोजकशक्तिविशेषाधायकमेव भवेदिति भावः । [8] पितृद्रोहबुद्ध्यनुवर्तनात्. स्वातन्त्र्यनिवृत्तेरितिवा. [9] अतिदूरवर्तिनि.

"वत्सस्थानमेतत्" इति कौणपदन्तः। वत्सेनेव हि धेनुं पितरमस्य सामन्तो दुह्यात्। तस्मान्मातृबन्धुषु वासश्श्रेयानिति।

"ध्वजस्थानमेतत्" इति वातव्याधिः। तेन हि ध्वजे-[1]नादितिकौशिकवदस्य मातृबान्धवा भिक्षेरन्। तस्मात् [2]ग्राम्य-धर्मेष्वेनमवसृजेयुः। सुखोपरुद्धा हि पुत्राः पितरं नाभिद्रुह्यन्तीति।

[तत्र स्वमतम्]

"जीवन्मरणमेतत्" इति कौटल्यः। काष्ठमिव हि घुण-जग्धं राजकुलमविनीतपुत्रमभियुक्तमात्रं[3] भज्येत। तस्मादृतु-मत्यां महिष्यां ऋत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः। [4]आपन्न-सत्त्वायां [5]कौमारभृत्यो गर्भ[6]भर्मणि [7]प्रजनने च वियतेत। [8]प्रजा-तायाः पुत्रसंस्कारं पुरोहितः कुर्यात्। समर्थं तद्विदो विनयेयुः॥

[शिक्षितस्यापि कुमारस्य स्वपितृद्रोहबुद्ध्यनुत्पाद-नाय किंकर्तव्यमित्यस्मिन् विषये आम्भाचार्य-मतम्]

सत्रिणामेकश्चैनं मृगयाद्यूतमद्यस्त्रीभिः प्रलोभयेत्—पितरि विक्रम्य राज्यं गृहाणेति। तदन्यस्सत्री प्रतिषेधयेत्" [9]इत्या-म्भीयाः।

[तत्र स्वमतम्]

"महादोषमबुद्धबोधनमिति" कौटल्यः। नवं हि द्रव्यं येन येनार्थजातेनो[10]पदिह्यते तत्त[11]दाचूषति, एवमयं नवबुद्धि-

---

[1] अदितिः–भिक्षुकः, कौशिकः–सर्पग्राही तौ यथा प्रतिमाः सर्पांश्च ध्वजीकृत्य तत्प्रसादकोपादिकं उपदिशन्तौ लोकं भिक्षेयाताम्, एवं मातृबान्धवा अपि "इदमिदानीमस्य दौस्थित्यं, अयं वो राजा भविता" इत्यादिकं बोधयन्तः भिक्षेरन्नित्यर्थः. [2] मैथुनादिषु मृगयादिषु च. [3] परकृतजिगीषोद्योगमात्रेणापीत्यर्थः. [4] गर्भिण्यां. [5] शिशुवैद्यः. [6] भर्म–पोषणम्. [7] सुखप्रसवानुकूलवैद्यकर्मणि. प्रसवने–ग. प्रसवे–ख. [8] जातपुत्रायाः. [9] इत्याजीम्भीयाः–ख. आम्भवीयाः–घ. [10] लिप्यते. [11] अन्तः गृह्णाति.

येयदुच्येत तत्तच्छास्त्रोपदेशमिवाभिजानाति । तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च ।

[राजपुत्रे स्वत एव दुर्मार्गे सति तस्य सत्त्रि द्वारा समीकरणम् ]

सत्त्रिणस्त्वेनं 'तव स्मः' इति वदन्तः पालयेयुः । यौवनोत्सेकात् परस्त्रीषु मनः कुर्वाणं आर्याव्यञ्जनाभिः स्त्रीभिः[1]अमेध्याभिः शून्यागारेषु रात्रा[2]वुद्वेजयेयुः । मद्यकामं योगपानेनोद्वेजयेयुः । द्यूतकामं कापटिकैः पुरुषैरुद्वेजयेयुः । मृगयाकामं [3]प्रतिरोधकव्यञ्जनैस्त्रासयेयुः । पितरि विक्रमबुद्धिं 'तथा' इत्यनुप्रविश्य [4]भेदयेयुः—"[5]अप्रार्थनीयो राजा, [6]विपन्ने घातः, [7]सम्पन्ने नरकपातः, [8]संक्रोशः, प्रजाभि[9]रेकलोष्टवधश्च" इति ॥

[तथापि अननुरक्तपुत्रकाणां राज्ञां तदेकपुत्रकत्वे बहुपुत्रकत्वे च तच्छिक्षणक्रमः सुपुत्ररक्षणं च]

विरागं प्रियमेकपुत्रं वा बध्नीयात् । बहुपुत्रः [10]प्रत्यन्तमन्यविषयं वा प्रेषयेद्यत्र [11]गर्भः [12]पण्यं [13]डिम्बो वा न भवेत् । आत्मसम्पन्नं सैनापत्ये यौवराज्ये वा स्थापयेत् ॥

[पुत्रभेदाः, तेषां लक्षणानि च । ]

बुद्धिमानाहार्यबुद्धिर्दुर्बुद्धिरिति पुत्रविशेषाः । [14]शिष्यमाणो धर्मार्थावुपलभते चानुतिष्ठति च [15]बुद्धिमान् । [16]उपलभमानो नानुतिष्ठत्याहार्यबुद्धिः । [17]अपायनित्यो धर्मार्थद्वेषी चेति दुर्बुद्धिः ॥

---

[1] असेव्याभिः–ग. [2] यथा न पुनः तत्र प्रवर्तेत तथा जुगुप्सां जनयेयुः. योगपानं-अनिष्टरसयुक्तं मद्यम्. [3] प्रतिरोधकः–चोरः. [4] ततो निवर्तयेयुः. [5] अद्वेष्यः. [6] वधोद्यमवैफल्ये. [7] वधोद्यमसाफल्ये. [8] लोकनिन्दा. [9] प्रतिव्यक्ति एकैकशिलाप्रक्षेपेण घातः. [10] प्रत्यन्तो म्लेच्छदेशः स्यादित्यमरः. विषयः-देशः. [11] उचिताहारसौकर्यं गर्भः. यत्र चास्य पुत्रतया जामातृतया वा स्वीकारप्रसङ्गः सच गर्भः. गर्वः–क. [12] उचितभोग्यवस्तुजातम्. [13] डिम्बः-प्रजानां उपप्लवः. [14] गुरुभिरुपदिश्यमानौ उपलभते-बुध्यते. शिष्यमाणो–क. ख. ग. [15] प्रशंसायां मतुप्. [16] ज्ञातार्थः. [17] अपायकारणेषु कामादिषु नित्यसंनिहितः.

[राज्ञः दुर्मार्गैकपुत्रकत्वे कर्तव्यांशाः]

स यद्येकपुत्रः पुत्रोत्पत्तावस्य प्रयतेत, पुत्रिकापुत्रानुत्पादयेद्वा। वृद्धस्तु व्याधितो वा राजा मातृबन्धु[1]कुल्यगुणवत्सामन्तानामन्यतमेन [2]क्षेत्रे बीजमुत्पादयेत् । न चैकपुत्रमविनीतं राज्ये स्थापयेत् ।

[पुत्राणामेकत्र मेलनेन विनयाधानपूर्वकं ज्येष्ठस्य वा सर्वेषामपि वा राज्यभागित्वकरणस्य युक्तत्वकथनम्]

[3]बहूनामेकसंरोधः पिता पुत्राहितो भवेत् ।
अन्यत्रापदः ऐश्वर्यं ज्येष्ठभागि तु पूज्यते ॥ ३६ ॥
[4]कुलस्य वा भवेद्राज्यं कुलसङ्घो हि दुर्जयः ।
[5]अराजव्यसनाबाधः शश्वदावसति क्षितिम् ॥ ३७ ॥

इति विनयाधिकारिके राजपुत्ररक्षणं सप्तदशोऽध्यायः

---

# चतुर्दशपञ्चदशे प्रकरणे—अवरुद्धवृत्तं, अवरुद्धे च वृत्तिः

## अष्टादशोऽध्यायः

[अविनीतेन राज्ञा निराचिकीर्षितस्य तत्पुत्रस्य वृत्तिक्रमाः]

राजपुत्रः कृच्छ्रवृत्तिरसदृशे कर्मणि नियुक्तः पितरमनुवर्तेत, अन्यत्र प्राणाबाधक[6]प्रकृतिकोप पातकेभ्यः ॥

---

[1] तुल्य—ग. [2] स्वमहिष्यां. [3] अयं भावः—सर्वेषां पुत्राणां अविनीतत्वे तेषां विनयाधानार्थं एकत्र वासं कल्पयित्वा सदा परस्परगुणस्पर्धामुत्पाद्य तद्धितानुशासनपरो भवेत । अङ्गवैकल्यादिरूपमहापदामभावे ज्येष्ठस्यैव राज्यभागित्वं प्रशस्यते इति धर्मापेक्षया: प्रथमो विधिः ॥ २६ ॥ अर्थापेक्षया कुलस्यैव वा राज्यमिति द्वितीयोविधिः ॥ २७ ॥ [4] तावत्पुत्रसमूहस्य. [5] राजव्यसननिमित्तजनपीडाभावः इति वा, राजव्यसनशून्यः शत्रुपीडाशून्यश्चेति वा अर्थः. [6] प्रकृतिकोपक पातकेभ्यः–ग.

पुण्यकर्मणि नियुक्तः [1]पुरुषमधिष्ठातारं याचेत । पुरुषाधिष्ठितश्च सविशेषमादेशमनुतिष्ठेत् । [2]अभिरूपं च कर्मफल[3]मौपायनिकं च लाभं [4]पितुरुपनाययेत् ॥

[सद्वर्तनेनापि स्वपितर्यतुष्यति, सामन्तराजाश्रयणस्यैव युक्तत्वकथनम् ]

तथाऽप्यतुष्यन्तमन्यस्मिन् पुत्रे दारेषु वा स्निह्यन्त[5]मरण्याय [6]आपृच्छेत । बन्धवधभयाद्वा यस्सामन्तो न्यायवृत्तिर्धार्मिकः सत्यवाग[7]विसंवादकः प्रतिग्रहीता मानयिता [8]चाभिपन्नानां तमाश्रयेत ।

[तादृशबलसिद्धौ असिद्धौ च कार्यक्रमः]

तत्रस्थः कोशदण्ड सम्पन्नः प्रवीरपुरुषकन्यासम्बन्ध[9]मटवीसम्बन्धं कृत्यपक्षोपग्रहं वा कुर्यात् । एकचर [10]स्सुवर्णपाक[11]मणि[12]रागहेमरूप्यपण्याकरकर्मान्तानाजीवेत् ।

पाषण्डसङ्घद्रव्यमश्रोत्रियभोग्यं [13]देवद्रव्यमाढ्यविधवाद्रव्यं वा गूढमनुप्रविश्य सार्थयानपात्राणि च मदनरसयोगेना[14]तिसन्धाया[15]पहरेत्, [16]पारग्रामिकं वा योगमातिष्ठेत्. मातुः परिजनोपग्रहेण वा चेष्टेत, कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपाषण्डच्छद्मभिर्वा नष्टरूपस्तद्व्यञ्जनसखः छिद्रे प्रविश्य राज्ञः शस्त्ररसाभ्यां [17]प्रहृत्य ब्रूयात्—" अहमसौ कुमारः, सहभोग्यमिदं

---

[1] स्वकर्तृककर्मसाक्षिणं कंचन पुरुषं (दोषपरिहाराय). आदिश्यत इत्यादेशः, राजाज्ञप्तं स्वकर्म. [2] सुसदृशं. [3] उपायनरूपेण कर्षकादिभ्यः आगतम्. [4] पित्रे अर्पयेत्. [5] अरण्यगमनाय. क्रियार्थोपपदस्येत्यादिना चतुर्थी. [6] अनुज्ञां याचेत. [7] अवञ्चकः. [8] अभिपन्नाः आश्रिताः. [9] अटवी– आटविकः. [10] सुवर्णपाकः—रसतन्त्रप्रयोगः. [11] पण्यपदस्य मण्यादिषु प्रत्येकमन्वयः. मणिः वज्रवैडूर्यादिः. [12] रागः लाक्षादि रञ्जकद्रव्यम्. स्फटिकस्य जात्यन्तरगुणाधानार्थं रञ्जनं मणिरागः इति जयमङ्गला. [13] देशद्रव्य- ख. [14] वञ्चयित्वा. [15] अवहरेत्–ख. [16] आतिष्ठेत्-आद्रियेत. दुर्गलम्भोपायाधिकरणे वक्ष्यमाणं उपायं आद्रियेतेत्यर्थः. [17] पितरमेव हत्वेति शास्त्रिणः. पितृपक्षीयानेव हत्वा न तु पितरमिति जयमङ्गला.

राज्यमेको नार्हति भोक्तुं, तत्र ये कामयन्ते [1]भर्तुं तानहं द्विगुणेन भक्तवेतनेनोपस्थास्ये" इति। इत्यवरुद्धवृत्तम् ॥

[अवरुद्धे पुत्रे, राज्ञः वर्तनक्रमः]

[2]अवरुद्धं तु मुख्यपुत्रमपसर्पाः [3]प्रतिपाद्यानयेयुः, माता वा प्रतिगृहीता। त्यक्तं गूढपुरुषाः शस्त्ररसाभ्यां हन्युः। अत्यक्तं तुल्यशीलाभिस्स्त्रीभिः पानेन मृगयया वा प्रसज्य रात्रावुपगृह्यानयेयुः ॥

[निगमनम्]

उपस्थितं च राज्येन मदूर्ध्वमिति सान्त्वयेत्।
[4]एकस्थमथ संरुन्ध्यात् पुत्रवान् वा प्रवासयेत् ॥ ३८ ॥

इति विनयाधिकारिके अवरुद्धेषु वृत्तमवरुद्धे च वृत्तिः
अष्टादशोऽध्यायः

---

## षोडशं प्रकरणम्—राजप्रणिधिः

### एकोनविंशोऽध्यायः

[राज्ञः स्वकर्मार्थे उत्थानस्यावश्यकता]

[5]राजानमुत्तिष्ठमानमनूत्तिष्ठन्ते भृत्याः, प्रमाद्यन्तमनुप्रमाद्यन्ति, कर्माणि चास्य [6]भक्षयन्ति, द्विषद्भिश्चातिसन्धीयते, तस्मादुत्थानमात्मनः कुर्वीत ॥

[दिनस्य अष्टधा विभागेन कार्यक्रमविधानम्]

नालिकाभिरहरष्टधा रात्रिं च विभजेत्, छायाप्रमाणेन वा। त्रिपौरुषी पौरुषी [7]चतुरङ्गुला च छाया मध्याह्न [8]इति पूर्वं दिवसस्याष्टभागाः[9]। तैः पश्चिमाः व्याख्याताः ॥

---

[1] भर्तुं-अमात्यादिस्थाने अधिकर्तुम्. उपस्थास्ये-सम्मानयिष्यामि. [2] प्रत्यन्तमन्यविषयं वा प्रेषितं. [3] प्रतिपाद्य-सामादिना समाधाय. [4] भातृशून्यं एकं दुर्मार्गम् [5] राजानमुत्थितमनूतिष्ठन्ते-ग. [6] नाशयन्ति [7] चतुरङ्गुला अच्छायो मध्याह्नः-क. [8] इति चत्वारः पूर्वे-क. [9] अष्टमभागाः,

तत्र पूर्वे दिवसस्याष्टभागे रक्षाविधानमायव्ययौ च शृणुयात्। द्वितीये पौरजानपदानां कार्याणि पश्येत्। तृतीये स्नानभोजनं सेवेत, स्वाध्यायं च कुर्वीत। चतुर्थे [1]हिरण्यप्रतिग्रहमध्यक्षांश्च[2]कुर्वीत। पञ्चमे मन्त्रिपरिषदा पत्रसंप्रेषणेन मन्त्रयेत, चारगुह्यबोधनीयानि च बुद्ध्येत। षष्ठे स्वैरविहारं मन्त्रं वा सेवेत। सप्तमे हस्त्यश्वरथायुधीयान् पश्येत्। अष्टमे सेनापतिसखो विक्रमं चिन्तयेत्। [3]प्रतिष्ठितेऽहनि सन्ध्यामुपासीत।

[रात्रेः अष्टधा विभागेन तत्कार्यक्रमविधानम्।]

प्रथमे रात्रिभागे गूढपुरुषान् पश्येत्। द्वितीये पानभोजनं कुर्वीत स्वाध्यायं च। तृतीये तूर्यघोषेण संविष्टः [4]चतुर्थपञ्चमौ शयीत। षष्ठे तूर्यघोषेण प्रतिबुद्धः शास्त्रमितिकर्तव्यतां च चिन्तयेत्। सप्तमे मन्त्रमध्यासीत, गूढपुरुषांश्च प्रेषयेत्। [5]अष्टमे ऋत्विगाचार्यपुरोहितसखः स्वस्त्ययनानि प्रतिगृह्णीयात्, चिकित्सकमाहानसिकमौहूर्तिकांश्च पश्येत्, सवत्सां धेनुं वृषभं च प्रदक्षिणीकृत्योपस्थानं गच्छेत्[6]।

आत्मबलानुकूल्येन वा निशाहर्भागान् [7]प्रविभज्य कार्याणि सेवेत।

[राज्ञा आस्थानमण्डपवर्तनकाले सर्वसुखदर्शनानुकूल्य करणविधिः, अन्यथा दोषाश्च]

[8]उपस्थानगतः कार्यार्थिनां [9]अद्वारासङ्गं कारयेत्। दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते। तेन प्रकृतिकोपमरिवशं वा गच्छेत्। तस्माद्देवताश्रमपाषण्डश्रोत्रियपशुपुण्यस्थानानां[10]

---

[1] पूर्वदिनसम्बन्ध्यादायस्वीकारम्. [2] कुर्यात् नियुञ्जीत च यथाक्रमम्. [3] प्रतिष्ठिते-परिसमाप्ते. [4] अत्यन्तसंयोगे द्वितीया. [5] ऋत्विगाचार्य पुरोहितेभ्यः–घ. [6] उपस्थानं-आस्थानमण्डपम्. अवसितायां रात्रौ सन्ध्यामुपासीतेति च योज्यम्. [7] प्रतिविभज्य–ख. [8] आस्थानमण्डपगतः. [9] द्वारं अप्रावृतं कुर्यादित्यर्थः. [10] देवताशब्देन तदाराधकाः, आश्रमशब्देन आश्रमिणः, पशुशब्देन तत्पालकाश्च लक्ष्यन्ते.

बालवृद्धव्याधितव्यसन्यनाथानां स्त्रीणां च क्रमेण कार्याणि पश्येत्, [1]कार्यगौरवादात्ययिकवशेन वा।

[अवश्यकरणीयातिक्रमस्य अनर्थहेतुत्वम्,
तत्तत्कार्य विशेषनियमाश्च]

सर्वमात्ययिकं[2] कार्यं शृणुयान्नातिपातयेत्।
कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वा विजायते॥ ३९ ॥
अग्न्यगारगतः कार्यं पश्येद्वैद्य[3]तपस्विनाम्।
पुरोहिताचार्यसखः प्रत्युत्थायाभिवाद्य च॥ ४० ॥
तपस्विनां तु कार्याणि त्रैविद्यैस्सह कारयेत्।
[4]मायायोगविदां चैव न स्वयं कोपकारणात्॥ ४१ ॥

[राजधर्मसङ्ग्रहः]

राज्ञो हि व्रतमुत्थानं यज्ञः कार्यानुशासनम्।
दक्षिणा वृत्तिसाम्यं च दीक्षितस्याभिषेचनम्॥ ४२ ॥

[राज्ञः उत्थाने आवश्यकता]

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्॥ ४३ ॥
तस्मान्नित्योत्थितो राजा कुर्यादर्थानुशासनम्।
अर्थस्य मूलमुत्थानमनर्थस्य विपर्ययः॥ ४४ ॥
अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य ।
प्राप्यते फलमुत्थानाल्लभते चार्थसम्पदम्॥ ४५ ॥

इति विनयाधिकारिके राजप्रणिधिः एकोनाविंशोऽध्यायः.

---

[1] कार्यगौरवसत्त्वे, कालातिक्रमे अनर्थादिसंभवे च, उक्तं क्रमं परित्यज्यापि कार्याणि कर्तव्यानीत्यर्थः. [2] आत्ययिकं-अतिपाति. [3] वैद्याः-विद्यामधीतवन्तः. [4] मायाविदः-ऐन्द्रजालिकाः, योगविदः-मन्त्रौषधयोगैः अर्थान् विकुर्वन्तः.

# सप्तदशं प्रकरणम् निशान्तप्रणिधिः

## विंशोऽध्यायः

### [अन्तःपुरशय्यागृहादि निर्माणविधानम्]

[1]वास्तुकप्रशस्ते देशे सप्राकारपरिखाद्वारं अनेककक्ष्यापरिगतं अन्तःपुरं कारयेत्। [2]कोशगृहविधानेन वा मध्ये वासगृहं, [3]गूढभित्तिसञ्चारं मोहनगृहं तन्मध्ये वा वासगृहं, भूमिगृहं वा [4]आसन्नकाष्ठचैत्यदेवताविधानद्वारमनेकसुरुङ्गासञ्चारं, प्रासादं वा गूढभित्तिसोपानं, सुषिरस्तम्भप्रवेशा[5]पसारं वा वासगृहं [6]यन्त्रबद्धतलावपातं कारयेत्, आपत्प्रतीकारार्थम्। आपदि वा कारयेत्। अतोऽन्यथा वा विकल्पयेत् [7]सहाध्यायिभयात्।

### [तत्राग्निभयपरिहारोपायः]

[8]मानुषेणाग्निना त्रिरपसव्यं [9]परिगतमन्तःपुरमग्निरन्यो न दहति, न चात्रा[10]न्योऽग्निर्ज्वलति; [11]वैद्युतेन भस्मना मृत्संयुक्तेन [12]करकवारिणाऽवलिप्तं च।

---

[1] वास्तुविद्यानिपुणैः उत्तमत्वेन निर्दिष्टे. [2] कोशगृहविधानेन वासगृहम्–क. कोशगृहनिर्माणप्रकारस्तु द्वितीयाधिकरणे पञ्चमाध्याये स्पष्टम्. गर्भागारं वासगृहमित्यमरः. वासागारं तल्पगृहमिति वैजयन्ती. इयमेव युक्ता स्यात्. [3] यद्गृहसम्बन्धिनां सञ्चारः तद्गूढभित्तिषु सुकरः तादृशं गृहं, तच्च आगन्तुकानां मोहजननार्थत्वात् मोहनगृहमित्युच्यते. [4] समीपदिग्वृत्त्यालयाधिष्ठितदेवताचिह्नितपिधानफलकसहितद्वारविशिष्टमित्यर्थः. आसन्नकाष्ठचैत्यदेवताविधानद्वारं ख. आसन्नचैत्यकाष्ठदेवताऽपिधानद्वारं–घ. [5] अपसारः-निर्गमः. [6] यन्त्रेण धारितं इच्छया अधः पातयितुं शक्यं च. [7] स्वज्ञातसमानयुक्तिज्ञानवतः शत्रोः भयात्. [8] शूलप्रोतमनुष्यास्थ्युत्पादितेन. [9] परिगतं-नीराजितमिति–ज. म. [10] अन्यः अग्निः-वैद्युतादिः. नातो पौनरुक्त्यं दीपज्वलनानवकाशशङ्का वा. [11] विद्युद्दग्धवृक्षादिसम्बन्धिना, [12] करकः-वर्षोपलः,

[विषभयप्रतीकारोपायः विषज्ञानोपायाश्च]

[1]जीवन्ती श्वेतामुष्ककपुष्पवन्दाकाभिः, अक्षीबे जातस्याश्वत्थस्य [2]प्रतानेन वा गुप्तं सर्पा विषाणि वा [3]न प्रसहन्ते ।

[4]मार्जारमयूरनकुलपृषतोत्सर्गः सर्पान् भक्षयति । [5]शुकश्शारिका भृङ्गराजो वा सर्पविषशङ्कायां क्रोशति । क्रौञ्चो विषाभ्याशे माद्यति । ग्लायति जीवञ्जीवकः । म्रियते मत्तकोकिलः । चकोरस्याक्षिणी [6]विरज्येते । इत्येवं अग्निविषसर्पेभ्यः प्रतिकुर्वीत ॥

[वासगृहस्य पश्चात्पूर्वमध्यभागेषु कल्पनीयाः सन्निवेशाः]

पृष्ठतः कक्ष्याविभागे स्त्रीनिवेशो गर्भव्याधिवैद्य[7]प्रख्यातसंस्था वृक्षोदकस्थानं च । बहिः कन्याकुमारपुरम् । पुरस्तादलङ्कारभूमिः मन्त्रभूमिरुपस्थानं कुमाराध्यक्षस्थानं च । कक्ष्यान्तरेष्व[8]न्तर्वंशिकसैन्यं तिष्ठेत् ॥

[देवीदर्शनावश्यकतायां तस्या एव स्वगृहा नयनं, राज्ञ एव तद्गृहगमने सदृष्टान्तं दोषोपपादनं च]

अन्तर्गृहगतः स्थविरस्त्रीपरिशुद्धां देवीं पश्येत् । [9]न काञ्चिदभिगच्छेत् । देवीगृहे लीनो हि भ्राता भद्रसेनं जघान, मातुश्शय्यान्तर्गतश्च पुत्रः कारूशम्, लाजान्मधुनेति विषेण पर्यस्य देवी काशिराजम्, विषदिग्धेन नूपुरेण वैरन्त्यं, मेखलामणिना सौवीरं, जालूथमादर्शेन, वेण्यां गूढं शस्त्रं कृत्वा देवी विदूरथं जघान । तस्मादेतान्यास्पदानि परिहरेत् ।

---

[1] जीवन्ती श्वेतागिरिकर्णिकामुष्कक–घ. गृहनिवेशिताभिरितिशेषः. [2] प्रतानेन-विस्तरणेन, गृहे तत्र तत्र स्थापनेनेति यावत्. गुप्तं-रक्षितं गृहम्. [3] न प्रसहन्ते-नाभिभवन्ति, तेषां सन्निधानेनैषां वीर्यापहारात्. [4] 'मयूरपृषतोत्सर्गे न भवन्ति भुजङ्गमाः' इति कामन्दकः. [5] शुकशारिका–क. [6] शुक्ला भवतः. [7] प्रत्याख्यात–पा. [8] अन्तःपुराधिकृतानां समूहः. [9] राजा स्वयं कामपि देवीं द्रष्टुं तासां गृहं न गच्छेत् इत्यर्थः.

[देवीनां सन्मार्गरक्षणे अपेक्षणीयाः
नियमाः परिवारश्च]

मुण्डजटिलकुहक[1]प्रतिसंसर्गं बाह्याभिश्च दासीभिः प्रतिषेधयेत्। न चैनाः [2]कुल्याः पश्येयुरन्यत्र गर्भव्याधिसंस्थाभ्यः। [3]रूपाजीवाः स्नानप्रघर्षशुद्धशरीराः परिवर्तितवस्त्रालङ्काराः पश्येयुः। [4]आशीतिकाः पुरुषाः पञ्चाशत्काः स्त्रियो वा मातापितृव्यञ्जनाः स्थविरवर्षवराभ्यागारिकाश्चावरोधानां शौचाशौचं विद्युः, स्थापयेयुश्च स्वामिहितं।

[सपरिवारस्य राज्ञः स्थितिगतिव्यवहारेष्वपि
नियमस्यावश्यकत्वम्]

स्वभूमौ च वसेत्सर्वः परभूमौ न सञ्चरेत्।
न च बाह्येन संसर्गं कश्चिदाभ्यन्तरो व्रजेत्॥ ४६॥
[5]सर्वं चावेक्षितं द्रव्यं [6]निबद्धागमनिर्गमम्।
निर्गच्छेदधिगच्छेद्वा मुद्रासङ्क्रान्त[7]भूमिकम्॥ ४७॥

इति विनयाधिकारिके निशान्तप्रणिधिः विंशोऽध्यायः

---

# अष्टादशं प्रकरणम्—आत्मरक्षितकम्

## एकविंशोऽध्यायः

[कक्ष्याक्रमेण निर्दिष्टपरिवारस्थापनेनात्मनो रक्षणम्]

शयनादुत्थितः स्त्रीगणै[8]र्धन्विभिः परिगृह्येत, द्वितीयस्यां

---

[1] परिचयम् देवीनामितिशेषः। [2] कुल्याः—देवीकुलजाः मातृष्वस्रादयः स्त्रियोऽपि. [3] वेश्यास्त्रियः. [4] आशीतिकाः—अशीतिवयस्काः, पञ्चाशत्काः—पञ्चाशद्वयस्काः। [5] लघ्वपि पुष्पफलादिकं सर्वं द्वास्थैः सम्यगवलोकितं सत् इत्यर्थः. [6] अस्मात्प्रदेशादागतं इमं देशं गमिष्यतीत्यादिरूपेण पुस्तकार्पितागमनिर्गमनम्। [7] भूमिः आधारभाण्डम्। [8] धन्विभिः- धनुष्पणिभिः, वन्दिभिः—स्तुतिपाठकैरिति जयमङ्गला. परिगृह्येत—इदं च राजप्रकोष्ठ एव.

कक्ष्यायां कञ्चुकोष्णीषिभिः [1]वर्षवरा[2]भ्यागारिकैः, तृतीयस्यां कुब्जवामनकिरातैः, चतुर्थ्यां मन्त्रिभिस्सम्बधिभिर्दौवारिकैश्च प्रासपाणिभिः।

[अङ्गरक्षणकर्मणि योग्याः अयोग्याश्च]

पितृपैतामहं महा[3]सम्बन्धानुबन्धं शिक्षितमनुरक्तं कृतकर्माणं जनमासन्नं कुर्वीत। नान्यतोदेशीयमकृतार्थमानं, स्वदेशीयं वाप्यपकृत्योपगृहीतम्। [4]अन्तर्वंशिकसैन्यं राजानमन्तःपुरं च रक्षेत्।

[पाककर्मभोजनयोः समीक्ष्यकरणविधिः]

गुप्ते देशे माहानसिकः सर्वमास्वादबाहुल्येन कर्म कारयेत्। तद्राजा [5]तथैव प्रतिभुञ्जीत, पूर्वमग्नये [6]वयोभ्यश्च बलिं कृत्वा।

[विषयुक्तत्वज्ञानोपायाः।]

अग्नेर्ज्वालाधूमनीलता शब्दस्फोटनं च विषयुक्तस्य, वयसां [7]विपत्तिश्च; अन्नस्योष्मा मयूरग्रीवाभः, शैत्यं आशु, [8]क्लिष्टस्येव वैवर्ण्यं, सोदकत्वं, [9]अक्लिन्नत्वं च; व्यञ्जनानामाशुशुष्कत्वं च, क्राथः, [10]श्यामफेनपटलविच्छिन्नभावः, [11]गन्धस्पर्शरसवधश्च; द्रवेषु [12]हीनातिरिक्तच्छायादर्शनं, फेनपटलसीमन्तोर्ध्वराजीदर्शनं च; रसस्य मध्ये नीला राजी, पयसस्ताम्रा, मद्यतोययोः काली, दध्नश्श्यामा च; मधुनःश्वेता, द्रव्याणामार्द्राणामाशुप्रम्लानत्वं, उत्पक्वभावः [13]क्राथनीलश्यावताच; शुष्काणामाशुशातनं वैवर्ण्यं

---

[1] नपुंसकैः. [2] राजगृहकार्यचिन्तकैः. [3] सम्बन्धः—वंशः. [4] अन्तर्वंशिकाः राज्ञामाभ्यन्तरगृहे नियुक्ताः, तेषां समूहः (कर्तृ). [5] ननु आपन्नशल्ययातयामत्वादिकं. [6] विहङ्गमेभ्यः. [7] मरणम्. [8] सम्यक् करमर्दितस्यैव. [9] असम्यक् पक्वता. [10] श्यामवर्णस्य फेनपटलस्य व्यञ्जनाद्विभक्ततया स्थितिरिति शास्त्रिणः. भावशब्दस्य प्रत्येकान्वयेन, अदग्धस्यापि श्यामता, अग्नेश्चिरावतारितस्यापि सफेनता, आम्लसंसृष्टक्षीरस्येव अवयवानां विच्छिन्नता चेति जयमङ्गला. [11] वधः नाशः. [12] छाया—आत्ममुखम्. [13] श्यावः-कपिशवर्णः.

च; कठिनानां मृदुत्वं, मृदूनां काठिनत्वं च; तदभ्याशे क्षुद्रसत्ववधश्च; आस्तरणप्रावरणानां श्याममण्डलता, तन्तुरोमपक्ष्मशातनं च; लोहमणिमयानां [1]पङ्कमलोपदेहता, स्नेहरागगौरवप्रभाववर्णस्पर्शवधश्चेति विषयुक्तलिङ्गानि।

[विषप्रयोक्तृपुरुषचिह्नानि।]

विषप्रदस्य तु शुष्कश्याववक्त्रता, [2]वाक्सङ्गः, स्वेदः, विजृम्भणं चातिमात्रं, वेपथुः, [3]प्रस्खलनं, [4]वाक्यविप्रेक्षणं, [5]आवेशः, कर्मणि स्वभूमौ चानवस्थानमिति।

[विषवैद्यस्यावश्यकता, तत्कर्तव्यानि च।]

तस्मादस्य [6]जाङ्गलीविदो भिषजश्चासन्नास्स्युः। भिषक् भैषज्यागारादास्वादविशुद्धमौषधं गृहीत्वा पाचकपेषकाभ्यामात्मना च प्रतिस्वाद्य राज्ञे प्रयच्छेत्।

[7] पानं पानीयं चौषधेन व्याख्यातम्।

[नापितादीनां राजपरिचारकाणां नियमाः]

[8]कल्पकप्रसाधकाः स्नातशुद्धवस्त्रहस्ताः [9]समुद्रमुपकरणमन्तर्वंशिकहस्तादादाय परिचरेयुः। स्नापकसंवाहकास्तरकरजकमालाकारकर्म दास्यः कुर्युः, ताभिरधिष्ठिता वा शिल्पिनः आत्मचक्षुषि निवेश्य वस्त्रमाल्यं दद्युः। स्नानानुलेपनप्रघर्षचूर्णवासस्नानीयानि स्ववक्षोबाहुषु च। एतेन परस्मादागतकं च व्याख्यातम्।

---

[1] पाकलोपदेहता—ग. 'लोहानां च मणिनां च मलपङ्कोपदिग्धता' इति कामन्दकः. [2] वाक्सङ्गः-वाक्स्खलनम्. [3] समेऽपि भूभागे इति शेषः. [4] केनापि कस्मिन्नपि उच्यमाने तत्रावधानदानं वा, केनाप्येवमेवं पृष्टे किं किं वक्ष्यामिति विशेषतः पर्यालोचनं वा. [5] आवेगः.–घ. [6] जाङ्गली-विषविद्या. [7] पानं-मद्यं, पानीयं जलम्. [8] कल्पकः-नापितः. प्रसाधकः-अलङ्कर्ता [9] समुद्रं-मुद्राङ्कितम्.

कुशीलवाश्शस्त्राग्निरसवर्जं [1]नर्मयेयुः। [2]आतोद्यानि चैषामन्तस्तिष्ठेयुः, अश्वरथद्विपालङ्काराश्च।

[राज्ञः यानाद्यारोहणेषु सावधानता ससहायता च]

[3]मौलपुरुषाधिष्ठितं यानवाहनमारोहेत्, नावं चाप्तनाविकाधिष्ठिताम, अन्यनौप्रतिबद्धां वातवेगवशां च नोपेयात्। [4]उदकान्ते सैन्यमासीत। मत्स्यग्राहविशुद्धमवगाहेत। व्यालग्राहपरिशुद्धमुद्यानं गच्छेत्। लुब्धकैः श्वगणिभिरपास्तस्तेनव्याल[5]पराबाधभयं [6]चललक्षपरिचयार्थं मृगारण्यं गच्छेत्। आप्तशस्त्रग्राहाधिष्ठितस्सिद्धतापसं पश्येत्, मन्त्रिपरिषदा सामन्तदूतम्। सन्नद्धोऽश्वं हस्तिनं रथं वाऽऽरूढस्सन्नद्धमनीकं गच्छेत्। निर्याणेऽभियाने च राजमार्गमुभयतःकृतारक्षं दण्डिभि[7]रपास्तशस्त्रहस्तप्रव्रजितव्यङ्गं गच्छेत्। न पुरुष[8]सम्बाधमवगाहेत। यात्रासमाजोत्सवप्रवहणानि च दशवर्गिकाधिष्ठितानि गच्छेत्।

[सर्वथा परोपद्रवेभ्यः आत्मरक्षणोपदेशेन प्रथमाधिकरणनिगमनम्]

यथा च [9]योगपुरुषैरन्यान् राजा[10]धितिष्ठति।
तथाऽयमन्यबाधेभ्यो रक्षेदात्मानमात्मवान्॥ ४८॥

इति विनयाधिकारिके आत्मरक्षितकम् एकविंशोऽध्यायः. एतावता कौटलीयस्यार्थशास्त्रस्य विनयाधिकारिकं नाम प्रथमाधिकरणं समाप्तम्.

---

[1] क्रीडां दर्शयेयुः. [2] वाद्योपकरणानि. [3] आप्तपुरुषः. [4] स्नातुकामस्येत्यादिः. [5] परहिंसा. [6] हरिणादिरूपचञ्चललक्ष्यवेधाभ्यासं कर्तुम्. [7] शस्त्रधारिणः साम्नयासिनः अङ्गहीनाश्च यथा दृष्टिगोचराः न भवेयुः तथा. [8] सङ्कुलम्. [9] गूढचारैः. [10] अधितिष्ठति-बाधते.

# अथ कौटलीये अर्थशास्त्रे
# अध्यक्षप्रचारो नाम
## द्वितीयमधिकरणम्

---

अस्येयं प्रकरणानुक्रमणिका



आहत्य ३८ प्रकरणानि ३६ अध्यायाः ७२ कारिकाः.

---

## एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं सङ्ग्रहः.

---

### 19. जनपदविनिवेशः (पु. 49)

राष्ट्ररचनतद्रक्षणयोर्विधिः.
धर्मार्थं देयानि क्षेत्राणि.
कृषिसौकर्यकल्पनम्.
व्यवहारानुकूलरथ्याकल्पनम्.
अस्वामिकानां स्वामिपरिकल्पनम्.
स्वदेशस्थापनानर्हा जनाः शालादयश्च.
राजकर्तव्यानां संग्रहः.

### 20. भूमिच्छिद्रविधानम् (पु. 53)

अकृष्यासु भूमिषु तपोवनमृगवनौषधिवनहस्तिवनानां कल्पनम्.
हस्तितद्वनयोः पालनावश्यकता.
हस्तिभेदाः.

### 21. दुर्गविधानम् (पु. 56)

विविधदुर्गपरिखयोः रचनम्.
परिखार्थं खातानां मृदां विनियोगः.
प्राकारः, तस्मिन् द्वाराणि च.
परिखाया बहिः रथ्याः, महाद्वारं च.
कुल्याः, तासु स्थापनीयाः साङ्ग्रामिकाः पदार्थाश्च.

### 22. दुर्गनिवेशः (पु. 61)

वास्तुनो वीथीनां च विभागाः.
राजभवनदेवालयश्मशानानां निर्माणम्.
क्षेत्रमर्यादाः, तत्र संग्राह्याः पदार्थाश्च.
शूराणां सैन्येषु योजनं, दुष्टानां बहिष्कारश्च.

### 23. संनिधातृनिचयकर्म. (पु. 65)

कोशपण्यकोष्ठकुप्यायुधकारागृहाणां कल्पनम्.
तेषु संग्राह्याः पदार्थाः.
तत्सम्बन्धिनां अनृजुवृत्तीनां चोराणां च दण्डाः निगमनं च.

### 24. समाहर्तृसमुदयप्रस्थापनम् (पु. 67)

दुर्गादीनि धनागमस्थानानि सप्त.
धनव्ययस्थानानि चतुर्दश.
व्यवहारोपयोगिकालविभागः.
अवश्यचिन्तनीयानां करणीयादीनां षण्णां निर्देशः.

ग्रहस्थितिवृष्टिपरिमाणादिविमर्शेन सस्यस्थापनविधिः.

तत्तत्स्थानेभ्यः राजग्राह्यभागाः.

जलप्रमाणदेशादिभेदेन स्थापनीयानि विभिन्नानि सस्यानि.

बीजसंस्काराः, तदावापविधिश्च.

एवं निष्पन्नानां पुष्पादीनां सस्यादीनां च रक्षणम्.

## 42. सुराध्यक्षः (पु. 126)

सुरासन्धानतद्विक्रयपानानां नियमाः.

मेदकप्रसन्नासवारिष्टमैरेयमधुकिण्वयोगाः.

सुराभेदाः, स्वच्छीकरणक्रमश्च.

सुराप्राप्तिपानयोः नियतकालाः.

सुराश्रपणकर्तारः.

## 43. सूनाध्यक्षः (पु. 128)

अहन्तव्यप्राणिहनने दण्डाः.

रक्षणीयाः प्राणिनः.

विक्रेयाः अविक्रेयाश्च मांसाः.

अवध्याः वध्याश्च मृगाः.

## 44. गणिकाध्यक्षः (पु. 130)

वेश्यास्त्रीणां व्यवस्थितवृत्तिकल्पनावश्यकता.

अतिचरतां कामुकानां वेश्यानां च दण्डाः.

नटादिभिः नियतांशग्रहणेन कलाभिमानिनां प्रोत्साहावश्यकता.

नटादिस्त्रीवशीकरणावश्यकता.

## 45. नावध्यक्षः (पु. 132)

तरपण्यराजदेयादिव्यवस्थाः.

पालनीयाः अनुग्राह्याः ध्वंसनीयाश्च नावः.

सनियन्त्रणं नौप्रवर्तनविधिः, उल्लङ्घने दण्डाः.

परदेशादागन्तॄणां व्यवस्थाः, अपराधिचिह्नानि च.

## 46. गोऽध्यक्षः (पु. 134)

गोऽध्यक्षावेक्षणीयाः अष्टौ अंशाः.

गवादिहन्त्रपहर्तृविक्रेतॄणां दण्डाः.

आहर्तॄणां संमाननम्

गोरक्षणव्यवस्थाः, तल्लब्धवस्तूपयोगाश्च.

दोहनकालक्षीरादिप्रमाणादिव्यवस्थाः.

गवादीनामाहारव्यवस्थाः.

## 47. अश्वाध्यक्षः (पु. 138)

अश्वभेदाः.

अश्वशालातदाहारादिनिरूपणेन अश्वरक्षणविधिः.

उत्तमत्वादिव्यवस्थाः.

## 48. हस्त्यध्यक्षः (पु. 142)

हस्तिशालाऽऽलानस्तम्भादिनिर्माणविधिः

हस्तिनां दिनचर्याः.

कालावस्थयोर्भेदेन ग्राह्या अग्राह्याश्च गजाः.

प्रमाणादिभेदेन उत्तमत्वादिव्यवस्था, तदानुगुण्येनाहारव्यवस्था च.

सप्त शोभाः, व्यायामविधिश्च.

*चतुर्णां गजभेदानां निरूपणम्.

उपकरणानां परिचारकवर्गतत्कर्तव्ययोश्च संग्रहः.

शान्तिकर्माणि, दन्तग्रहणविधिश्च.

### 49-51. रथाध्यक्षपत्त्यध्यक्षसेनापतिप्रचाराः (पु. 146)

रथाध्यक्षकर्तव्यविशेषाः, रथभेदाश्च.

पदात्यध्यक्षावेक्षणीयाः अंशाः.

सेनापतिभिः अभ्यसनीयाः कर्तव्याश्चांशाः.

### 52-53. मुद्राध्यक्षविवीताध्यक्षौ (पु. 147)

मुद्राध्यक्षविवीताध्यक्षाभ्यां नियन्तव्याः अंशाः.

### 54-55. समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनाः प्रणिधयश्च (पु. 148)

जनपदविभागतत्परिमाणादिलेखनावश्यकता.

तत्तत्स्वामिकुलभृत्यादिनिर्देशेन ग्रामक्षेत्रादिपरिमाणनिर्देशव्यवस्थाः.

गृहपतिवैदेहकतापसव्यञ्जनैः परिशीलनपूर्वकं ज्ञेयाः अंशाः.

### 56. नागरिकप्रणिधिः (पु. 150)

नागरिकचिन्तनीयाः ग्रामभागाः.

धर्मकर्तृप्रभृतिकर्तव्येषु नगररक्षकनिवेदनेन स्वप्रामाण्येन च कर्तव्याः अंशाः.

गूढचारिणां कर्तव्यानि.

अग्निनिमित्तापायवारणविधयः.

तीर्थरथ्यादिकलुषीकरणदण्डाः.

यामविशेषसूचकतूर्यादिप्रचारेण अकालसञ्चारिणां दण्डविशेषाः.

कारागृहबद्धानां मोक्षनिमित्तानि

# अथ अध्यक्षप्रचारो नाम द्वितीयमधिकरणम्

---

## एकोनविंशं प्रकरणम् जनपदनिवेशः

### प्रथमोऽध्यायः

[स्थानीयादिपरिकर्मित साराक्षिदुर्गपरिवृत ससीम ग्रामवृन्दविशिष्ट राष्ट्ररचनाविधिः]

[1] भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहनेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत्। शूद्रकर्षकप्रायं [2] कुलशतावरं पञ्चशतकुलपरं ग्रामं क्रोशाद्विक्रोशसीमानमन्योन्यारक्षं निवेशयेत्। नदीशैलवन[3]गृष्टिदरीसेतुबन्धशाल्मलीशमी[4]क्षीरवृक्षान् अन्तेषु सीम्नां स्थापयेत्॥

---

[1] पूर्वमेव स्थिते अभिनवतया निर्मिते वा राष्ट्रे, जनानामल्पसंख्यत्वे देशान्तरस्थानां आनयनेन, अत्यधिकसङ्ख्याकत्वे अल्पसङ्ख्याकजनवद्देशप्रेषणेन वा राष्ट्ररचनां कुर्यादित्यर्थः. [2] गृहशतान्यूनं पञ्चशतगृहानधिकमित्यर्थ इति केचित्. 'मध्यमहलद्वयेन यावती भूमिः कृष्यते तावद्भूमिः कुलमित्युच्यते' इति "दशी कुलन्तु भुञ्जीत" इति मनुवाक्यव्याख्यानावसरे कुल्लूकभट्टोक्तमनुसृत्य, 'मध्यमहलशतद्वयान्यूनविस्तारं तादृशहलसहस्रानधिकविस्तारं चेत्यर्थः' इति जयमङ्गला. 'षड्गवं मध्यमं हलं' इत्युक्तः, दिनेनैकेन यावती भूमिः गोषट्केन कृष्यते तद्विगुणितपरिमाणा भूमिः कुलमित्युच्यत इति ज्ञायते. "कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीबं" इति मेदिनी। [3] गृष्टिः=बदरवृक्षः. श्रीपर्णी कुमुदा गृष्टिर्गम्भारी भद्रपर्णिका इति, दरी गुहा कन्दरोऽक्री इति च वैजयन्ती. [4] क्षीरवृक्षः=वटादिः. क्षीरवृक्षान्तेषु सीमां स्थापयेत्--घ.

[1] अष्टशतग्राम्याः मध्ये स्थानीयं, चतुश्शतग्राम्याः द्रोणमुखं, द्विशतग्राम्याः [2] खार्वटिकं, दशग्रामीसङ्ग्रहेण सङ्ग्रहणं स्थापयेत्। अन्तेष्वन्तपालदुर्गाणि जनपदद्वाराण्यन्तपालाधिष्ठितानि स्थापयेत्। तेषामन्तराणि [3] वागुरिकशबरपुळिन्दचण्डालारण्यचराः रक्षेयुः॥

[ब्रह्मदेयादिरूपेण क्षेत्रपरिकल्पनाविधिः]

ऋत्विगाचार्यपुरोहितश्रोत्रियेभ्यो [4] ब्रह्मदेयान्यदण्डकराण्यभिरूपदायकानि प्रयच्छेत्। अध्यक्ष[5]सङ्ख्यायकादिभ्यो [6] गोपस्थानीकस्थचिकित्सकाश्वदमकजङ्घाकरिकेभ्यश्च [7] विक्रयाधानवर्जम्॥

---

[1] स्थानीयादयः तत्परिवृततावद्ग्रामवासिजनतायाः क्रयविक्रयादिकमोपजीव्यः रमणीयनगरविशेषाः. "नगरं राजधानी, प्रांसुप्राकारनिबद्धं खेटम्. क्षुल्लकप्राकारवेष्टितं खर्वटम्. अर्धगव्यूततृतीयान्तग्रामान्तररहितं मण्टपम्. 'पत्तनं शकटैर्गम्यं घाटिकैर्नौभिरेव च। नौभिरेव तु यद्गम्यं पट्टणं तत्प्रचक्षते' द्रोणमुखं जलनिर्गमप्रवेशं पट्टणमित्यर्थः" इति रायपसेणीसूत्रव्याख्याने--प. २०६. "नगराणि करवर्जितानि निगमवणिजां स्थानानि। जनपदा देशाः, पुरवराणि नगरैकदेशभूतानि, द्रोणमुखानि जलस्थलपथोपेतानि, खेटानि धूलीप्राकारोपेतानि, खर्वटानि कुनगराणि, मण्डपानि दूरस्थलसीमान्तराणि, संवाहाः स्थापिन्यः, पत्तनानि जलस्थलपथयोरन्यतरयुक्तानि" इति प्रश्नव्याकरणसूत्रव्याख्याने--प. ३०६. [2] कार्वाटिकं--पा. [3] वागुरिकः--मृगबन्धनजीवी. शबरः--शूद्रात् भिल्ल्यां जातः, पुलिन्दः-- निष्टयात किरात्यां जातः. [4] ब्राह्मणेभ्यः धर्मार्थं देयानि क्षेत्राणि ब्रह्मदेयानि. बहुकृत्वः कृषिसस्यसमारोपणादिना अधिकजलोपयोगे विधीयमानः दण्डः, षष्ठांशः करः, तदुभय शून्यानि अदण्डकराणि. वृत्ताध्ययनसम्पन्नतत्पुत्रपौत्रादिपरम्परानुभाव्यानि अभिरूपदायकानि. [5] सङ्ख्यायकः--गणकः. [6] दशकुलीचिन्तकः गोपः. दुर्गचतुर्भागाधिकारी स्थानीकः. हस्तिविद्याविचक्षणः अनीकस्थः. वैद्यः चिकित्सकः. जङ्घावेगवान् लेखहारकः जङ्घाकरिकः. [7] दाने आधीकरणे च तेषामधिकारं न दद्यादित्यर्थः. ब्रह्मदेयानि विक्रयाधेयानीति भावः.

[क्षेत्रेषु कृषिसौकर्यपरिकल्पनम्]

करदेभ्यः [1]कृतक्षेत्राण्यैकपुरुषिकाणि प्रयच्छेत्। [2]अकृतानि कर्तृभ्यो नादेयात्[3]। अकृषतामाच्छिद्यान्येभ्यः प्रयच्छेत्; [4]ग्रामभृतकवैदेहका वा कृषेयुः। अकृषन्तोऽवहीनं [5]दद्युः। [6]धान्यपशुहिरण्यैश्चैनाननुगृह्णीयात्, [7]तान्यनु सुखेन दद्युः। [8]अनुग्रहपरिहारौ चैभ्यः [9]कोशवृद्धिकरौ दद्यात्, कोशोप(घा)घातिकौ वर्जयेत्। अल्पकोशो हि राजा पौरजानपदानेव ग्रसते। [10]निवेशसमकालं यथागतकं वा परिहारं दद्यात्। निवृत्तपरिहारान् पितेवानुगृह्णीयात्॥

[क्रयविक्रयानुकूलस्थानकल्पनं, तदनुकूलसेतुबन्धनविधिश्च]

[11]आकरकर्मान्तद्रव्यहस्तिवनव्रजवणिक्पथप्रचारान् वारिस्थलपथपण्यपत्तनानि च निवेशयेत्। [12]सहोदकमाहार्योदकं वा सेतुं बन्धयेत्। अन्येषां वा बध्नतां भूमिमार्गवृक्षोपकरणानुग्रहं कुर्यात्, पुण्यस्थानारामाणां च[13]। सम्भूयसेतुबन्धादपक्रामतः कर्मकरबलीवर्दाः कर्म कुर्युः, व्ययकर्मणि च भागी स्यात्, न चांशं लभेत॥

---

[1] सस्यसमारोपणयोग्यतामापन्नानि सज्जीकृतानि क्षेत्राणि राजभागदायिभ्यः प्रयच्छेदित्यन्वयः. ऐकपुरुषिकाणि—तत्क्षेत्रप्रतिगृहीतृमात्रभोग्यानि यथा भवेयुः तथा. [2] असज्जीकृतानि. [3] आदेयादिति परस्मैपदमार्षम्. 'आङो दोऽनास्यविहरणे' इति आत्मनेपदविधानात्. [4] ग्रामभृतकः-नापितादिः. शातातपस्मृतौ तु—राजभृतकः, क्रयविक्रयी, बहुयाज्यः, ग्रामयाजकः, ग्रामभृतकः, सन्ध्याहीनः इत्येते षडपि अब्राह्मणाः इत्युक्तम्. बहुजनभरणीयः इत्यर्थः तत्र विवक्षितः. वैदेहकः—वर्णी. [5] अवहीनं—नष्टम्. [6] एनान्—अपेक्षितकृष्युपकरणाभावात् अकृष्यमाणान्. [7] कृषिफलप्राप्त्यनन्तरं धान्यादीनि कृषीवलाः सुखेन दद्युः. [8] अनुग्रहः—धनदानं, परिहारः—करमोक्षणम्. [9] राजकोशाभिवर्धनपर्यवसन्नौ भवेतां चेत्. [10] निवेशः—इदम्प्रथमकुलस्थापनम्. [11] आकरकर्मान्तः—सुवर्णव्यापारस्थानम्. द्रव्यं—दार्वादि. वनशब्दस्य द्रव्यहस्तिपदयोः, पथप्रचारशब्दस्य व्रजवणिक्छब्दयोश्च प्रत्येकमन्वयः. [12] नित्यप्रवृत्तोदकम्. [13] बध्नतामित्यन्वेति.

[राज्ञा ग्रामवृद्धैश्च भरणीयानां संक्षेपः]

मत्स्य[1]प्लवहरितपण्यानां सेतुषु राजा स्वाम्यं गच्छेत्। [2]दासाहितकबन्धूनश्रृण्वतो [3]राजा विनयं ग्राहयेत्। बालवृद्धव्याधितव्यसन्यनाथांश्च राजा बिभृयात्, स्त्रियमप्रजातां, [4]प्रजातायाश्च पुत्रान्। [5]बालद्रव्यं ग्रामवृद्धाः [6]वर्धयेयुः आव्यवहारप्रापणात्, देवद्रव्यं च॥

[उत्पथगामिनां गृहस्थसन्न्यासिनां दण्डविधिः]

अपत्यदारान् मातापितरौ भ्रातॄनप्राप्तव्यवहारान् भगिनीः कन्याः विधवाश्चाबिभ्रतः शक्तिमतो द्वादशपणो दण्डोऽन्यत्र पतितेभ्यः [7]अन्यत्र मातुः। पुत्रदारं [8]अप्रतिविधाय [9]प्रव्रजतः [10]पूर्वः साहसदण्डः, स्त्रियं च प्रव्राजयतः। [11]लुप्तव्यवायः प्रव्रजेदापृच्छय धर्मस्थान्, [12]अन्यथा नियम्येत॥

[स्वदेशवासानर्हाणां परिगणनम्]

[13]वानप्रस्थादन्यः प्रव्रजितभावः, [14]सजातादन्यः सङ्घः, [15]सामुत्थायकादन्यः समयानुबन्धो वा नास्य जनपदमुपनिविशेत॥

---

[1] 'हंस सारस काचाक्ष बक क्रौञ्च सरारिकाः। नान्दीमुखीसकादम्बाः बलाकाद्याः प्लवाः स्मृताः' (भावप्र). हरिताः शाकादयः. [2] अन्यस्वामिनः अर्थं गृहीत्वाऽऽगतः आहितकः, [3] अननुश्रृण्वतो–ग. [4] अप्रजाता–वन्ध्या. गर्भिणीति जयमङ्गला. अनाथानित्यन्वेति. [5] बालः अप्राप्तव्यवहारः, आषोडशाद्वर्षात् पुमान्, आद्वादशवर्षात् स्त्री च. [6] वर्जयेयुः ग. न स्वार्थमुपयुञ्जीरन्नित्यर्थः. [7] मातुः पतितत्वेऽपि भरणमेव शास्त्रसम्मतमिति भावः. [8] अप्रतिविधाय–तेषां जीवनोपायमकल्पयित्वा. [9] प्रव्रजतः–सन्न्यस्यतः. [10] 'पणानां द्वे शते सार्धे प्रथमः साहसः स्मृतः' इति मनुः. [11] नष्टमैथुनशक्तिः. लुप्तव्यायामः–घ. व्यायामः–पौरुषम्. [12] प्रव्रजेदापृच्छ्य धर्मस्थान्–क. [13] श्रमणादिः. [14] स्वराष्ट्रीयैः सह जातात्. सुजातादिति–ग. राष्ट्रहितभावेनोत्पन्नादित्यर्थः. [15] धर्मार्थमिवृद्धिनिमित्तं सम्मेलनेन कर्मकराः सामुत्थायिकाः. तेभ्यो भिन्नाः सङ्केतिनो वेत्यर्थः.

[ग्रामेषु विनोदस्थानानां उपवनप्रेक्षणशाला
दीनां निषेधः, तत्फलं च]

न च तत्रारामाः विहारार्थाः [1] शालाःस्युः । नटनर्तनगायनवादकवाग्जीवनकुशीलवा वा न कर्मविघ्नं कुर्युः; [2] निराश्रयत्वात् ग्रामाणां, क्षेत्राभिरतत्वाच्च पुरुषाणां, कोशविष्टिद्रव्यधान्यरसवृद्धिर्भवतीति ॥

[राजकर्तव्यसङ्ग्रहः]

[3]परचक्राटवीग्रस्तं व्याधिदुर्भिक्षपीडितम् ।
देशं [4]परिहरेद्राजा व्ययक्रीडाश्च वारयेत् ॥ ४९ ॥
दण्डविष्टिकराबाधैः रक्षेदुपहतां कृषिम् ।
स्तेनव्यालविषग्राहैः व्याधिभिश्च पशुव्रजान् ॥ ५० ॥
[5] वल्लभैः कार्मिकैः स्तेनैः अन्तपालैश्च पीडितम् ।
शोधयेत् [6] पशुसङ्घैश्च क्षीयमाणवणिक्पथम् ॥ ५१ ॥
एवं द्रव्यं द्विपवनं सेतुबन्धमथाकरान् ।
रक्षेत् पूर्वकृतान् राजा नवांश्चाभिप्रवर्तयेत् ॥ ५२ ॥

इत्यध्यक्षप्रचारे जनपदनिवेशः प्रथमोऽध्यायः. आदितो द्वाविंशः.

---

# विंशं प्रकरणम्—[7]भूमिच्छिद्रविधानम्

## द्वितीयोऽध्यायः

[अकृष्यभूमौ गोप्रचार तपोवनाराम मृगवनादि
परिकल्पनेन साफल्यकरणम्]

अकृष्यायां भूमौ [8] पशुभ्यो [9] विवीतानि प्रयच्छेत् ।

---

[1] धर्मादिविरुद्धा इति शेषः. धर्माविरोधिनां तु न निषेधः. [2] विहारशालादिरूपव्यर्थकालहरणप्रयोजकस्थानाभावात्. [3] शत्रुसैन्यतदटवीपालरूपद्रुतं. [4] तत्तद्भयशून्यं कुर्यात्. [5] वल्लभाः—राजवल्लभाः. कार्मिकाः—शुल्ककर्मणि नियुक्ताः. [6] पशवः—व्याघ्राः हस्तिनो वा. तेषां सङ्घैः पीडितमित्यर्थः. [7] भूमिच्छिद्रं—कृष्यनर्हा भूमिः. तस्य विधानं साफल्यसम्पादनम्. भूमिच्छिद्रापिधानं इति—घ. वक्ष्यमाण कर्मच्छिद्रस्याच्छादनमिव भवतीति भावः. पूर्वप्रकरणशेषोऽयम्. [8] पशवः गोमहिषादयः खरोष्ट्रादयश्च. [9] विविधं वीतं—पशूनां गत्यादिः येषु स्थलेषु तानि विवीतानि. वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु. (धा. १०४८).

प्रदिष्टाभयस्थावरजङ्गमानि च ब्राह्मणेभ्यो [1]ब्रह्मसोमारण्यानि, तपोवनानि च तपस्विभ्यो [2]गोरुतपराणि प्रयच्छेत्। तावन्मात्रमेकद्वारं [3]खातगुप्तं स्वादुफल[4]गुल्मगुच्छं अकण्टकिद्रुमं [5]उत्तानतोयाशयं दान्तमृगचतुष्पदं [6]भग्ननखदंष्ट्रव्यालं [7]मार्गायुक हस्तिहस्तिनीकलभं मृगवनं विहारार्थं राज्ञः कारयेत्। [8]सर्वातिथिमृगं प्रत्यन्ते चान्यन्मृगवनं भूमिवशेन वा निवेशयेत्॥

## [ओषधिवन हस्तिवनयोः विधानम्]

[9]कुप्यप्रदिष्टानां च द्रव्याणामेकैकशो वा वनं निवेशयेत्, द्रव्यवनकर्मान्तान् अटवीश्च [10]द्रव्यवनापाश्रयाः। प्रत्यन्ते हस्तिवनं [11]अटव्या रक्षन् निवेशयेत्॥

## [हस्तिवनरक्षणविधिः]

नागवनाध्यक्षः पार्वतं नादेयं सारसं आनूपं च नागवनं विदित पर्यन्तप्रवेशनिष्कसनं नागवनपालैः पालयेत्। हस्तिघातिनं हन्युः। दन्तयुगं स्वयंमृतस्याहरतः सपादचतुष्पणो लाभः[12]॥

---

[1] ब्रह्म–वेदः. यत्रारण्यकैः सद्भिः वेदादिशास्त्राण्यधीयते सोमादियज्ञकर्माणि च क्रियन्ते तादृशानीत्यर्थः. [2] गोरवश्रवणयोग्यः क्रोशद्वयात्मकः भागः गोरुतं, तावत्परिमाणमात्राणि. अन्यथा चोराद्यवकाशः स्यात्. [3] खातं–परिखा, तेन रक्षितं परिवृतमित्यर्थः. [4] मूलत एव यत्र लतासमूहः भवति न प्रकाण्डानि ते गुच्छाः मल्लिकादयः, गुल्माः एकमूलाः सङ्घातजाताः शरेक्षुप्रभृतयः इति कुल्लूकभट्टः. गुल्माः–लतावल्लयः, गुच्छाः– शाखाप्रतानवन्तः प्राचीनामलकादयः इति जयमङ्गला. [5] उत्तानं–अनगाधम्. [6] चतुष्पदाः गोमहिषादयः. [7] मार्गायुकाः–मृगयुकर्मयोग्याः, तादृशाः हस्त्यादयः यस्मिन्. [8] लुब्धकोपद्रवेन वनान्तरादागतानां मृगाणां वासभूतं. [9] कुप्याध्यक्षप्रकरणे उक्तानाम्. कुप्यप्रविष्टानां–घ. [10] द्रव्यवनं परितः स्थिताः. [11] मटव्यारक्षं–घ. [12] अध्यक्षेण कार्यः इति शेषः.

[हस्तिसञ्चारसीमादिपरिज्ञानं प्रशस्तानां ग्रहणं च]

नागवनपालाः [1] हस्तिपकपादपाशिकसैमिकवनचरकपारिकर्मिकसखाः हस्तिमूत्रपुरीषच्छन्नगन्धाः भल्लातकीशाखाप्रतिच्छन्नाः पञ्चभिस्सप्तभिर्वा [2] हस्तिबन्धकीभिः सह चरन्तः शय्यास्थान-[3] पद्यालण्डकूलपातोद्देशेन हस्तिकुलपर्यग्रं[4] विद्युः ॥

यूथचरं एकचरं निर्यूथं यूथपतिं हस्तिनं [5] व्याळं मत्तं पोतं [6] बद्धमुक्तं च [7] निबन्धेन विद्युः । [8] अनीकस्थप्रमाणैः प्रशस्तव्यञ्जनाचारान् हस्तिनो गृह्णीयुः ॥

[हस्तिरक्षणफलं, हस्तिभेदाश्च]

हस्तिप्रधानो हि विजयो राज्ञाम् । [9] परानीकव्यूहदुर्गस्कन्धावारप्रमर्दना ह्यतिप्रमाणशरीराः प्राणहरकर्माणो हस्तिनः इति ॥

कळिङ्गाङ्गगजाः श्रेष्ठाः प्राच्याः चेदिकरूशजाः ।
[10] दाशार्णाश्चापरान्ताश्च द्विपानां मध्यमा मताः ॥ ५३ ॥
सौराष्ट्रिकाः [11] पाञ्चनदाः तेषां[12] प्रत्यवराः स्मृताः ।
सर्वेषां कर्मणा वीर्यं जवस्तेजश्च वर्धते ॥ ५४ ॥

इत्यध्यक्षप्रचारे भूमिच्छिद्रविधानं द्वितीयोऽध्यायः.
आदितस्त्रयोविंशः.

---

[1] हस्त्यारोह पादपाशबन्धनकुशल वनमर्यादाभिज्ञ लुब्धक रज्जुवेण्याद्युपकरणसम्पादकसहिताः इत्यर्थः. 'सैमिक' इत्यस्य स्थाने 'सीमक' इति–घ. [2] हस्तिगणिकाभिः. [3] पद्या-पदपङ्क्तिः. लण्डः–पुरीषम्. कूलपातः— नदीकूलस्य दन्ताभ्यां घातः. एतद्रूपचिह्नेन. [4] समग्रसञ्चारम्. [5] दुष्टं. [6] बन्धमुक्तम्.–पा. [7] गणनपुस्तके लेखनेन. [8] हस्तिविद्याविचक्षणानामुपदेशैः. [9] परस्य– शत्रोः. अनीकव्यूहः–सैन्यसङ्घः. स्कन्धावारः–कटकसन्निवेशः. [10] दशार्णः देश विशेषः, तद्भवाः. आपरान्ताः–पश्चिमदेशजाः. [11] पाञ्चजनाः–ग [12] प्रत्यवराः–अधमाः.

# एकविंशं प्रकरणम्—दुर्गविधानम्

## तृतीयोऽध्यायः

### [राष्ट्रान्तेषु चतुर्विधदुर्गनिर्माणविधिः, तत्प्रयोजनं च]

चतुर्दिशं जनपदान्ते [1] साम्परायिकं दैवकृतं दुर्गं कारयेत्, [2] अन्तर्द्वीपं स्थलं वा निम्नावरुद्धमौदकं, [3] प्रास्तरं गुहां वा पार्वतं, निरुदकस्तम्बं [4] इरिणं वा धान्वनं, [5] खञ्जनोदकं स्तम्बगहनं वा वनदुर्गम्। तेषां नदीपर्वतदुर्गं [6] जनपदारक्षस्थानं, धान्वनवनदुर्गं [7] अटवीस्थानं, आपद्यपसारो वा [8]॥

### [राष्ट्रमध्ये स्थानीयरूपदुर्गरचनाविधिः]

जनपदमध्ये [9] समुदयस्थानं [10] स्थानीयं निवेशयेत्, वास्तुकप्रशस्ते देशे, नदीसङ्गमे, [11] ह्रदस्य वा अविशोषस्याङ्के सरसः तटाकस्य वा, वृत्तं दीर्घं चतुरश्रं वा वास्तुकवशेन, प्रदक्षिणोदकं, पण्यपुटभेदनं [12] अंसवारिपथाभ्यामुपेतम् ॥

---

[1] 'सम्परायस्तु संग्रामे चापदुत्तरकालयोः इति मेदिनी. तस्मै हितमिति प्रभवतीति वा साम्परायिकम्. दैवकृतं—स्वभावतो विषमस्थलम्. [2] नद्यादिस्वाभाविकजलाशयपरिवृतद्वीपमध्यगतमित्येकं, कृत्रिमगभीरजलाशयपरिवृतभूभागरूपमित्यपरमित्युभयमौदकं दुर्गम्. 'निम्नं गभीरं गम्भीरम् इत्यमरः. [3] प्रस्तरः—शिला, देवखातबिले गुहा. [4] 'स्तम्बोगुच्छस्तृणादीनामकाण्डद्रुम गुच्छयोः' इति, इरिणं तूषरस्थाने भूभागे च निराश्रये' इति च वैजयन्ती. धन्वा तु मरुदेशे स्यात्. तत्रभवम् धान्वनम्. [5] विच्छिन्नप्रवाहोदकं, क्वचित्क्वचिदेवोदकविशिष्टमित्यर्थः. [6] जनपदारक्षाः—अन्तपालाः. [7] अटवीपदं आटविकपरम्. [8] अपसारो वा—अपसरणस्थानं वा. [9] समुदयः—समाहर्तृसमानीतः कोशः [10] राज्ञोऽवस्थानाय हितम्. [11] अविशोषस्य ह्रदस्य सरसः तटाकस्य वा अङ्के इत्यन्वयः-अविशोषः—जलशोषणरहितः देवखात. स्वयंसिद्धो वा अनगाधजलाशय: सरः, पुरुषनिर्मितः पद्माकरः तटाक इति भेदः. इति ज. अङ्के समीपे. [12] अंसपथः भूमार्गः, वारिपथः जलमार्गः.

[स्थानीयं परितः सपरिमाणनिर्देशं
परिखानिर्माणविधिः]

तस्य परिखास्तिस्रः [1]दण्डान्तराः कारयेत्, चतुर्दश द्वादश दशेति [2]दण्डान् विस्तीर्णाः, [3]विस्तारादवगाधाः पादोनमर्धं वा त्रिभागमूलाः, [4]मूलचतुरश्राः, [5]पाषाणोपहिताः पाषाणेष्टकाबद्धपार्श्वा वा, [6]तोयान्तिकीः आगन्तुतोयपूर्णा वा, सपरिवाहाः, [7]पद्मग्राहवतीश्च ॥

[स्थानीयपरिखयोर्मध्ये मृच्चयनिर्माण
विधिः, मृच्छेषविनयोगश्च]

[8]चतुर्दण्डावकृष्टं परिखायाः, षड्दण्डोच्छ्रितं अवरुद्धं तद्द्विगुण विष्कम्भं खाताद्वप्रं कारयेत्, ऊर्ध्वचयं मञ्चपृष्ठं कुम्भकुक्षिकं वा, हस्तिभिर्गोभिश्च क्षुण्णं, [9]कण्टकिगुल्मविषवल्लीप्रतानवन्तं। [10]पांसुशेषेण [11]वास्तुच्छिद्रं राजवास्तु वा पूरयेत् ॥

---

[1] अन्योन्यतः दण्डेन प्रमाणेनान्तरिताः. द्विचत्वरिंशदङ्गुलः एको हस्तः, चत्वारो हस्ताः एको दण्डः. [2] दण्डानु विस्तीर्णाः–पा. [3] विस्तारपरिमितेः भागत्रयपरिमाणं अर्धपरिमाणं तृतीयभागपरिमाणं वा निम्नत्वं परिखायां कार्यमित्यर्थः. [4] मूलभागसमसूत्रोर्ध्वभागयुताः इत्यर्थः. [5] परिखानां परस्परं यद्दण्डमात्रमन्तरं तस्य स्थैर्यार्थं पाषाणरचिताऽन्तरभागयुताः इत्यर्थः. [6] आजलोदयखाताः. [7] पद्मैः नक्रैश्च युता इत्यर्थः. [8] आभ्यन्तरपरिखापेक्षया षोडषहस्तभागदूरे. उच्छ्रितं–उन्नतं. अवरुद्धं मृद्गलनवारणाय पाषाणबद्धपार्श्वभागं. विष्कम्भः–विस्तारः. खातादुद्धृतया मृदा वप्रं–मृद्राशिं कारयेदित्यर्थः. तस्यैव वप्रस्य भेदाः ऊर्ध्वचयादयः. अधःस्थूलं ऊर्ध्वकृशं ऊर्ध्वचयम्. ऊर्ध्वाधस्तुल्यवैपुल्यं मञ्चपृष्ठम्. ऊर्ध्वाधः कृशं मध्यस्थूलं कुम्भकुक्षिकमिति भेद . [9] गुल्मः–तृणादिसङ्घातः, प्रतानः–विस्तारः. [10] परिखोद्धृतवप्रोपयुक्तमृच्छेषेण. पांसुविशेषेण इति पा. [11] वास्तुच्छिद्रं राजवास्तु वा–नगरे, राजगृहसंबन्धिभूभाग एव वा विद्यमानं निम्नभागं. वास्तुछिद्रं वा पूरयेदित्येव बहुषु पुस्तकेषु दृश्यते.

[प्राकारनिर्माणविधिः, तत्र दारुसंसर्गनिषेधश्च]

वप्रस्योपरि प्राकारं [1] विष्कम्भद्विगुणोत्सेधं ऐष्टकं द्वादशहस्तादूर्ध्वं [2] ओजं युग्मं वा आचतुर्विंशतिहस्तादिति कारयेत्। [3] रथचर्यासञ्चारं [4] तालमूलं [5] मुरजकैः कपिशीर्षकैश्चाचिताग्रं, पृथुशिलासहितं वा[6] शैलं कारयेत्। न त्वेव काष्ठमयं; अग्निरवहितो हि तस्मिन् वसति ॥

[प्राकारोपरि तत्तत्स्थानेषु अट्टालक प्रतोलीन्द्र-
कोश देवपथ चार्या प्रधावितिका निष्कुह
द्वाराणां परिकल्पनविधिः]

विष्कम्भचतुरश्रं [7] अट्टालकं उत्सेधसमावक्षेपसोपानं कारयेत्, [8] त्रिंशद्दण्डान्तरं च द्वयोरट्टालकयोर्मध्ये सहर्म्यद्वितलां द्व्यर्धायामां [9] प्रतोळीं कारयेत्। अट्टालकप्रतोळीमध्ये त्रिधानुष्काधिष्ठानं सापिधानच्छिद्रफलकसंहितमितीन्द्रकोशं [10] कारयेत्।

---

[1] विष्कम्भः=विस्तारः, उत्सेधः=औन्नत्यम्. ऐष्टकं=पक्वेष्टकाभिः रचितम्. [2] ओजं=विषमहस्तसङ्ख्यम्. युग्मं=समहस्तसङ्ख्यम्. [3] चर्या–पन्थाः, पञ्चारत्नयो रथपथः इति वक्ष्यति, तत्प्रमाणोर्ध्वभागं सत् योधादिसञ्चारार्हमित्यर्थः. [4] ताळस्येव मूलं यस्य. बहिः इष्टकाभिरुपचितमूलं तत्समसूत्रेऽन्तर्भागे गुहादिवत् योधावरणस्थानसंयुतमित्यर्थः तालमूलमुरजकैरिति पाठोऽप्युपलभ्यते. [5] मुरज कपिशीर्ष सदृशतया इष्टकादिभिः बद्धाग्रभागम्. समशिरस्त्वे मुरजसादृश्यम्. अश्वत्थपत्राकारत्वे कपिशीर्षसादृश्यमिति जयमङ्गला. "कविसीसअवट्टरयिअसंविय विरायमाणा–कपिशीर्षकैर्वृत्तसंस्थितैः वर्तुलीकृतसंस्थानैर्विराजमाना" इति रायपसेणीव्याख्याने–प. ३. "कपिशीर्षकैः वृत्तरचितैः वर्तुलीकृतैः संस्थितैः विशिष्टसंस्थानैः विराजमाना" इति ज्ञाताधर्मकथाङ्गसूत्रव्याख्याने–प. ५. [6] शैलं वा इत्यन्वयः. शिलामयं वेत्यर्थः. [7] प्राकारोपरि गृहविशेषम्. अट्टालकाः प्राकरोपरिभृत्याश्रय विशेषाः इति रायपसेणीव्याख्याने–प ३. अवक्षेपः=निर्गमः. [8] अट्टालकानां परस्परं त्रिंशद्दण्डप्रमाणं व्यवधानं कार्यमित्यर्थः. [9] प्रतोळी-गृहविशेषः इति-ग. [10] इन्द्रकोशः खट्वाकारः पेटिकाविशेषः.

अन्तरेषु द्विहस्तविष्कम्भं पार्श्वे चतुर्गुणायामं अनुप्राकारं अष्टहस्तायतं देवपथं [1] कारयेत्। दण्डान्तराः द्विदण्डान्तरा वा [2] चार्याः कारयेत्। [3] अग्राह्ये देशे [4] प्रधावितिकां [5] निष्कुहद्वारं च ॥

[परिखाबहिर्भागे सापायरथ्यापरिकल्पनविधिः]

[6] बहिर्जानुभञ्जनीत्रिशूलप्रकरकूटकूपावपातकण्टकप्रतिसाराहिपृष्ठ[7]तलपत्रशृङ्गाटकश्वदंष्ट्रार्गळोपस्कन्दनपादुकाम्बरीषोदपानकैः छन्नपथं कारयेत् ॥

[प्राकारे सपरिकरप्रतोलीमहाद्वारपरिकल्पनम्]

[8]प्राकारमुभयतो [9]मण्डपकं अध्यर्धदण्डं कृत्वा [10]प्रतोलीषट्तुलान्तरं द्वारं निवेशयेत्, पञ्चदण्डादेकोत्तरवृद्ध्या आष्टदण्डा-

[1] देवपथः=गुप्तमार्गः. [2] चार्याः=आरोहावरोहमार्गाः. चरिका=चार्या, अष्टहस्तप्रमाणो मार्गः इति रा. प. प. ३. [3] परैरधृष्ये. [4] परप्रयुक्तबाणलक्ष्यतापरिहाराय निर्मितं आवरणं प्रधावितिका. [5] निष्करद्वारं–घ. निष्कुरद्वारं–ग. निष्कुहद्वारं=निगूढं बहिर्भागदर्शनाय निर्मितं कोटरविवरम्. [6] बहिः=तृतीयपरिखाया बहिर्भागे, जानुभञ्जन्यः–शरभा इव अष्टाभिः जानुमात्रोत्सेधैः दार्वादिपादैः क्षिप्ताः जानुभञ्जनयोग्याः यन्त्रकीलाः. कूटाः शलाकाः. कूपाः–मृगपातयन्त्राः. अवपाताः–तृणादिच्छन्नाः हस्तिपातार्थाः गर्ताः, त्रिशूलप्रकराः तीक्ष्णाग्रायुधविशेषपङ्क्तयः. कण्टकप्रतिसाराः–कण्टकमयायसरजवः. अहिपृष्ठं तु निर्मांसपृष्ठास्थ्याख्यमयोमयम्. [7] तलपत्रं=क्षुरसंस्थानमातपत्रबद्धावृतमिति. ज.म. 'तलयन्त्रं क्षुराकारं यदि वा क्रकचोपमम्' इति वैजयन्ती. शृङ्गाटकः=शृङ्गाटफलसदृशः यन्त्रविशेषः. श्वदंष्ट्रा=तदाकारो यन्त्रविशेषः. अर्गलानि=विष्कम्भाकाराणि यन्त्राणि. उपस्कन्दनं=स्खलनार्थं काष्ठमिति. ग. विच्छिद्रा भूमिरिति. ज. पादुकाकण्टकीगर्तः पांसुच्छन्नः महापथे. वै. अम्बरीषं=अग्निमयः भ्राष्ट्रः. उदपानकानि=दुष्पीतोदकपूर्णाः कूपाः. छन्नैरेतैश्छन्नपथं सुरङ्गादिः कृतश्च यः. वै. [8] उभसर्वतसोः कार्या (वा. १४४४) इति द्वितीया. [9] मण्डलकं. क. मण्डकं. घ. [10] प्रतोलीं षट्तुलान्तरं इति. घ. प्रतोलीषट्तलान्तरम्. क.

दिति चतुरश्रं, [1] षड्भागमायामादधिकमष्टभागं वा । पञ्चदशहस्तादेकोत्तरमाष्टादशहस्तादिति [2] तुलोत्सेधः। स्तम्भस्य परिक्षेपाष्षडायामाः द्विगुणो निखातः चूळिकायाश्चतुर्भागः ॥ आदितलस्य पञ्च भागाः शाला वापी सीमागृहं च। दशभागिकौ (समत्तवारणौ) द्वौ प्रतिमञ्चौ ; [3] अन्तरामणिहर्म्यं च समुच्छ्रयादर्धतलं, स्थूणावबन्धश्च, आर्धवास्तुकमुत्तमागारं त्रिभागान्तरं वा इष्टकावबन्धपार्श्वं, वामतः प्रदक्षिणसोपानं, गूढभित्तिसोपानमितरतः, द्विहस्तं तोरणशिरः, त्रिपञ्चभागिकौ द्वौ कवाटयोगौ, द्वौ द्वौ परिघौ, [4] अरत्निरिद्रकीलः, पञ्चहस्तमाणिद्वारं, [5] चत्वारो हस्तिपरिघाः, [6] निवेशार्धं हस्तिनखः मुखसमस्सङ्क्रमोऽसंहार्यो वा भूमिमयो वा निरुदके ॥

## [गोपुरादि द्वारेषु विशेषः]

प्राकारसमं मुखमवस्थाप्य त्रिभागगोधामुखं गोपुरं कारयेत् । प्राकारमध्ये कृत्वा वापीं [7] पुष्करिणीं द्वारं, चतुश्शालं[8] अध्यर्धान्तराणिकं कुमारीपुरं, [9] मुण्डहर्म्यं द्वितलं मुण्डकद्वारं भूमिद्रव्यवशेन वा ॥

## [कुल्यापरिकल्पनं, कुल्यासु निवेशनीयानां भाण्डानां सङ्ग्रहश्च ]

त्रिभागाधिकायामाः भाण्डवाहिनीः कुल्याः कारयेत् ।

---

[1] चतुरश्रं द्विदण्डं वा षड्भागमिति घ. तलोत्सेधः. क. उत्सेधः औन्नत्यम्. [2] मञ्चाकारौ द्वौ इष्टकारचितौ. [3] अन्तरं आणिः. हर्म्यं च. ख. आणिः क्षुद्रद्वारम्. अन्तरमाणिहर्म्यं. पा. [4] अरत्निः=निष्कनिष्ठमुष्टिकहस्तदीर्घः. छेवारियरयिय दटफलिह इन्द्रकीला. छेकेन निपुणेनाचार्येण शिल्पोपाध्यायेन रचित दढो बलवान् परिघः अर्गलः इन्द्रकीलश्च सम्पुटितकपाटद्वयाधारभूतः प्रवेशमध्यभागः यस्यां सा इति रायपसेणीव्याख्याने. प. ३. [5] पञ्चहस्तमाणिद्वारं. पा. [6] निवेशार्धं. ख. [7] पुष्करिणीद्वारं. पा. [8] अध्यर्धान्तराणीकं इति पा. [9] मुण्डहर्म्यद्वितलं. पा.

तासु पाषाणकुद्दालकुठारी[1]काण्डकल्पनाः ।
मुसृण्ठि[2]मुद्गरा दण्डचक्रयन्त्रशतघ्नयः ॥ ५५ ॥
कार्याः [3]कार्मारिकाः शूलवेधनाग्राश्च वेणवः ।
उष्ट्रग्रीव्योऽग्निसंयोगाः [4]कुप्यकल्पे च यो विधिः ॥ ५६ ॥

इत्याध्यक्षप्रचारे दुर्गविधानं तृतीयोऽध्यायः.
आदितश्चतुर्विंशः.

---

# द्वाविंशं प्रकरणम्--दुर्गनिवेशः

## चतुर्थोऽध्यायः

### [वास्तुविभागक्रमारम्भः]

त्रयः प्राचीना राजमार्गाः, त्रय उदीचीनाः इति वास्तुविभागः। सः द्वादशद्वारः युक्तोदक[5]भूमिच्छन्नपथः ॥

### [वीथीविभागाः तत्परिमाणविशेषाश्च]

चतुर्दण्डान्तराः [6]रथ्याः, राजमार्गद्रोणमुखस्थानीयराष्ट्रविवीत[7]पथाः, संयानीयव्यूहश्मशानग्रामपथाश्चाष्टदण्डाः, चतुर्दण्डस्सेतुवनपथः, द्विदण्डो हस्तिक्षेत्रपथः, [8]पञ्चा[9]रत्नयो रथपथः चत्वारः पशुपथः, द्वौ क्षुद्रपशुमनुष्यपथः ॥

---

[1] काण्डः=बाणः, कल्पना=गजानां सज्जीकरणसाधनम्. [2] मुसुण्ठिः=गदा. मुसृण्ठिः इति, मुसृण्ठी इति च. पा. [3] कर्मारसृज्याः आयुधविशेषाः. [4] कुप्याध्यक्षप्रकरणे यो यो विधीयते सोऽपीत्यर्थः. [5] भूमिः=जलनिर्गममार्गः इति व्याख्या. [6] उपवीथ्यः. [7] पथशब्दस्य द्रोणमुखादिषु चतुर्ष्वप्यन्वयः. [8] पथशब्दस्य संयानीयादिषु चतुर्ष्वप्यन्वयः. संयानीयं=क्रयविक्रयव्यवहारप्रधानं पत्तनम्. सयोनीय इति सन्धानीय इति च पा. व्यूहपथः=अपाय सम्भवे गूढमपसर्तुं परिकल्पितः सैन्यमार्गः. [9] अरत्निः=निष्कनिष्ठमुष्टिकः हस्तः (गुढुमोळ इति भाषायाम्).

## [राजभवनपरिकल्पनं, तस्य च नवधा विभागेन उत्तरभागमारभ्य क्रमेण अन्तः-पुरादिकल्पनं च]

प्रवीरे वास्तुनि [1]राजनिवेशः। चातुर्वर्ण्यसमाजीवे। [2]वास्तुहृदयादुत्तरे नवभागे यथोक्तविधानमन्तःपुरं प्राङ्मुख मुदङ्मुखं वा कारयेत्। तस्य पूर्वोत्तरं भागमाचार्यपुरोहिते-[3]ज्यातोयस्थानं मन्त्रिणश्चावसेयुः[4]। पूर्वदक्षिणं भागं महानसं हस्तिशाला कोष्ठागारं च। ततः परं [5]गन्धमाल्यधान्यरसपण्याः प्रधान[6]कारवः क्षत्रियाश्च पूर्वां दिशमधिवसेयुः। दक्षिणपूर्वं भागं भाण्डागारमक्षपटलं [7]कर्मनिषद्याश्च। दक्षिणपश्चिमं भागं [8]कुप्यगृहमायुधागारं च। ततः परं नगरधान्य[9]व्यावहारिक-कार्मान्तिक[10]बलाध्यक्षाः पक्वान्नसुरामांसपण्याः [11]रूपाजीवाः[12]तालावचराः वैश्याश्च दक्षिणां दिशमधिवसेयुः। पश्चिमदक्षिणं भागं खरोष्ट्र[13]गुप्तिस्थानं कर्मगृहं च। पश्चिमोत्तरं भागं यानरथशालाः। ततः परं [14]ऊर्णासूत्रवेणुचर्मवर्मशस्त्रावरणकारवः शूद्राश्च पश्चिमां दिशमधिवसेयुः। उत्तरपश्चिमं भागं पण्यभैषज्यगृहम्। उत्तर-पूर्वं भागं कोशः गवाश्वं च। ततः परं नगरराजदेवताः लोहमणि-कारवः ब्राह्मणाश्चोत्तरां दिशमधिवसेयुः। वास्तुच्छिद्रा[15]नुलासेषु [16]श्रेणीप्रवहणिकनिकायाः आवसेयुः॥

---

[1] राजभवनम्. राजनिवेशाः इति–पा. [2] नवधा विभक्तस्य वास्तुनः मध्यमः नवमो भागः वास्तुहृदयम्. [3] इज्या (यज्ञ) स्थानं, तोय (तीर्थ) स्थानं च. [4] आवसेयुः–आश्रयेयुः. [5] पण्यशब्दस्य प्रत्येकमन्वयः, तत्तद्वि-क्रेतार इत्यर्थः. [6] कारुः–शिल्पी. [7] स्वर्णरजतशिल्पस्थानानि. [8] तदितरलोह-शिल्पस्थानम्. [9] व्यावहारिकेति नगरे धान्ये चान्वितम्. [10] बलं–सेना. [11] वेश्यास्त्रियः. [12] नटाः. [13] कारागृहम् (दोड्डि) [14] कारुशब्दस्य प्रत्येक-मन्वयः, तथा च ऊर्णा(वान)कारवः,सूत्र (कार्पासतन्तुवान) कारवः. वेणु (वान)कारवः, चर्मकारवः, शस्त्रावरणकारवश्च इति फलितम्. [15] अनु-लासः–अवकाशः. [16] श्रेणी–रजकतन्तुवायतुन्नवायादयः, प्रवहणिकाः देशान्तरा दागताः वणिजः. प्रवहणी इति पाठोऽपि दृश्यते.

[पुरमध्ये बहिश्च तत्तद्देवालयनिर्माणविधिः]

[1] अपराजिताऽप्रतिहतजयन्तवैजयन्तकोष्ठकान् शिववैश्रवणाश्विश्रीमदिरागृहं च पुरमध्ये कारयेत्। कोष्ठकालयेषु यथोद्देशं वास्तुदेवताः स्थापयेत्। ब्राह्मैन्द्रयाम्यसैनापत्यानि द्वाराणि। बहिः परिखायाः [2]धनुश्शतावकृष्टाः चैत्यपुण्यस्थानवनसेतुबन्धाः कार्याः, यथादिशं च दिग्देवताः॥

[व्यवस्थया श्मशानपरिकल्पनम्, पाषण्डा-
दीनां तत्समीपवासित्वं च]

उत्तरः पूर्वो वा श्मशानवाटः, दक्षिणेन [3] वर्णोत्तमानाम्। तस्यातिक्रमे [4] पूर्वः स्साहसदण्डः। पाषण्डचण्डालानां श्मशानान्ते वासः॥

[कर्षकादिशक्त्यानुगुण्येन क्षेत्रादिसारानुगुण्येन
च तत्तदुपयोक्तव्यक्षेत्रमर्यादास्थापन
विधिः, तत्र सङ्ग्राह्याः पदार्थाश्च]

[5] कर्मान्तक्षेत्रवशेन वा कुटुम्बिनां सीमानं स्थापयेत्। तेषु पुष्पफलवाट[6]षण्डकेदारान् धान्यपण्यनिचयांश्च अनु-

---

[1] अपराजिता–दुर्गा, अप्रतिहतः–विष्णुः, जयन्तः–सुब्रह्मण्यः, वैजयन्तः–इन्द्रः. एतेषां आलयान्. "विजआ वैजयन्ता अ जयन्ता अपराजिआ। सव्वट्ठसिद्धिगा चैव पञ्चहाणुत्तरा सुरा। विजयजयन्तवैजयन्तापराजितसर्वार्थसिद्धिगाश्च पञ्चधाऽनुत्तराः देवाः इति उत्तराध्यायसूत्रे–प. १०८७. "इन्द्राण अ खंदाण अ रुद्दसिवुवेसमणनागाणं भूयाण अ जक्खाण अ अज्जकोट्ठकिरियाण अ बहूणि उवायिमाणि चिट्ठन्ति। इन्द्रस्य च स्कन्दस्य च रुद्रशिववैश्रवणनागानां भूतानां च यक्षाणां च आर्या कोष्ठक्रियायाश्च बहूनि उपार्जितानि तिष्ठन्ति" इति ज्ञाताधर्मकथाङ्गसूत्रे. प. ७५२. नागपूजा चैतद्ग्रन्थरचनाकाले प्रबला आसीदिति कोशसंहरणाध्यायात् ज्ञायते. [2] धनुरिति दण्डप्रमाणपर्यायः. धनुश्शतापकृष्टा इति–पा. [3] शूद्राणां. वर्णोत्तराणां–पा. [4] सार्धद्विशतपणरूपः. [5] तत्तत्क्रियानिर्वर्तनानुगुण्येन क्षेत्रस्थित्यानुगुण्येन चेत्यर्थः. [6]षण्डः–कमलवनम्.

ज्ञाताः कुर्युः, [1]दशकुलीवाटं [2]कूपस्थानम्। सर्वस्नेहधान्यक्षारलवणभैषज्यशुष्कशाकयवस[3]वल्लूरतृणकाष्ठलोहचर्मा[4]ङ्गारस्नायुविषविषाणवेणुवल्कलसारदारुप्रहरणावरणाश्मनिचयान् अनेकवर्षोपभोगसहान् कारयेत्। [5]नवेनानवं शोधयेत्॥

[चतुरङ्गसैन्ये निर्वाहकशूरजनप्राचुर्यस्यावश्यकता]

हस्त्यश्वरथपादातं अनेकमुख्यं अवस्थापयेत्। अनेकमुख्यं हि परस्परभयात् परोपजापं नोपैतीति। एतेनान्तपालदुर्गसंस्कारा व्याख्याताः॥

[जनोपप्लावकानां दुष्टानां आवासस्थानव्यवस्था]

न च [6]बाहिरिकान् कुर्यात् पुरराष्ट्रोपघातकान्।
[7]क्षिपेज्जनपदस्यान्ते सर्वान् वा दापयेत् करान्॥ ५७॥

इत्यध्यक्षप्रचारे दुर्गनिवेशः चतुर्थोऽध्यायः.

आदितः पञ्चविंशः.

---

[1] हलद्वयकर्षणीया भूमिः कुलम्. दशकुलप्रमाणं भूप्रदेशमित्यर्थः. दशगवकृष्याभूमिः दशकुलीति केचित्. [2] कूपमातृकम्. [3] वल्लूरं–शुष्कमांसं. [4] अङ्गारः–निर्वाणाग्निकं इन्धनम्. [5] नवनवेषु तत्तत्पदार्थेषु लब्धेषु तांस्तान् पुरातनान् व्यययेदित्यर्थः. [6] कितव वञ्चक नटी नर्तकादीन् नगरान्तः न निवासयेत्. "रायगिहे णामं णयरे .... नालंदा णामं बाहिरिआ होत्तो अणेगभवणसअसण्णिविद्वा—राजगृहे नाम नगरे .... नालन्दा नाम बाहिरिका आसीत् अनेकभवनशतसन्निविष्टा" इति परमैश्वर्यसमृद्धबाहिरिकजातिवर्णनं 'सूयङ्गाङ्गसूत्रे नालन्दाध्ययने दृश्यते.' प. ९५५. "बाहिरिअ उवट्ठाणसालाए सीहसणवरगए पुरत्थाभिमुहे सण्णुसण्णे स इएहि अ, साहस्सिएहिअ सअसाहस्सिएहि अ जाएहिं दाएहिं बाएहिं दलअमाणे पडिच्छमाणे" बहिरिका उपस्थानशालायै सिंहासनवरगृहे पूर्वाभिमुखे सन्निषण्णे शतिकैस्साहस्रैश्शतसाहस्रैश्च जातैर्दानैः भागैः दीयमानं प्रतियच्छन्तु" इति ज्ञाताधर्मकथाङ्गसूत्रे. प. १७७. [7] क्षिपेज्जनपदे चैतान् इति पा.

# त्रयोविंशं प्रकरणम्

# [1]सन्निधातृनिचयकर्म.

## पञ्चमोऽध्यायः

---

[कोशाधिपतिकर्तव्यसङ्ग्रहः]

सन्निधाता कोशगृहं पण्यगृहं कोष्ठागारं कुप्यगृहमायुधागारं बन्धनागारं च कारयेत् ॥

[कोशगृहनिर्माणप्रकारः]

चतुरश्रां वापीं [2]अनुदकोपस्नेहां खानयित्वा पृथुशिलाभिरुभयतः पार्श्वं मूलं च प्रचित्य सारदारुपञ्जरं [3]भूमिसमं त्रितलमनेकविधानं कुट्टिमदेशस्थानतलं एकद्वारं यन्त्रयुक्तसोपानं देवतापिधानं भूमिगृहं कारयेत्। तस्योपरि [4]उभयतोनिषेधं [5]सप्रग्रीवं ऐष्टकं भाण्डवाहिनीपरिक्षिप्तं कोशगृहं कारयेत्। प्रासादं वा जनपदान्ते ध्रुवनिधिं आपदर्थं [6]अभित्यक्तैः पुरुषैः कारयेत् ॥

[पण्यगृहादिनिर्माणप्रकारः]

पक्वेष्टकास्तम्भं चतुश्शालं एकद्वारं अनेकस्थानतलं विवृतस्तम्भापसारं उभयतः पण्यगृहं कोष्ठागारं च, दीर्घबहुलशालं कक्ष्यावृत कुड्यं अन्तः कुप्यगृहं, तदेव भूमिगृहयुक्तं आयुधागारं, पृथग् धर्मस्थीयं महामात्रीयं विभक्तस्त्रीपुरुषस्थानं अपसारतः सुगुप्तकक्ष्यं बन्धनागारं कारयेत् ॥

---

[1] कोशाधिपतेः द्रव्यसङ्ग्रहरक्षणादिव्यापारक्रम इत्यर्थः. सन्निधातृनिचेय कर्मेति ख. [2] उदकोपक्लेदरहिताम्. [3] भूमिसमत्रितलम् ख. [4] बहिरन्तश्चेत्युभयत्राप्यर्गलयुक्तम्. [5] मुखशालासहितम्. [6] वध्यैः. अभियुक्तैरित्यपि पाठः.

[उक्तानां षण्णामप्यगाराणां तत्तत्प्रकारैः रक्षणविधिः,
वृष्टिमापकयन्त्रपरिकल्पनविधिश्च]

सर्वेषां शालाखातोदपानवर्च्चः स्नानगृहाग्निविषत्राणमार्जार [1]नकुलारक्षाः स्वदैवपूजन(युक्ताः)वृत्ताः कारयेत्। कोष्ठागारे [2]वर्षमानं अरत्निमुखं कुण्डं स्थापयेत्।

[रत्नादीनां सङ्ग्रहविधानं वञ्चकानां
दण्डश्च]

[3]तज्जातकरणाधिष्ठितः पुराणं नवं च [4]रत्नं सारं फल्गु कुप्यं वा प्रतिगृह्णीयात्। तत्र [5]रत्नोपधावुत्तमो दण्डः कर्तुः कारयितुश्च, सारोपधौ मध्यमः, फल्गुकुप्योपधौ तच्च तावच्च दण्डः। रूपदर्शकविशुद्धं हिरण्यं प्रतिगृह्णीयात्। अशुद्धं छेदयेत्। आहर्तुः पूर्वः साहसदण्डः। शुद्धं पूर्णमभिनवं च धान्यं प्रतिगृह्णीयात्। विपर्यये मूलद्विगुणो दण्डः। तेन पण्यं कुप्यमायुधं च व्याख्यातम्॥ सर्वाधिकरणेषु युक्तोपयुक्ततत्पुरुषाणां [6]पणद्विपणचतुष्पणाः, परं अपहारेषु पूर्वमध्यमोत्तमवधा दण्डाः॥

[कोशचौर्ये तत्कर्तुः ज्ञाताज्ञाततत्परिचार-
काणां च शिक्षाविशेषाः]

कोशाधिष्ठितस्य [7]कोशावच्छेदे घातः। [8]तद्वैयावृत्यकाराणां

---

[1] नकुलारक्षास्वादैव इति–पा. [2] वृष्टिर्मीयतेऽनेनेति विग्रहेण वृष्टिमापकयन्त्रविशेषम् इत्यर्थः [3] तत्तद्वस्तुव्यवहारिवंशोत्पन्नैः तत्सहायभूतैश्च परिवृतः. [4] रत्नं–मणिमुक्तादिकम्, सारं –चन्दनादिकम्, फल्गु–वस्त्रादिकं, कुप्यं–दारुचर्मादिकम्. [5] दुष्टरत्नं निधाय सद्रत्नापहरणे सतीत्यर्थः. एवमुत्तरत्रापि. [6]पणद्विपण चतुष्पण परमापहारेषु इति–पा. [7] कोशस्यैव सुरङ्गादिना अपहारे सति. [8] तत्परिचारकाणां इत्यर्थः, विशेषेण आ समन्तात् वर्तते इति व्यावृत्तः परिचारकः, तस्य कर्म परिचर्या वैयावृत्यं, तत्कुर्वन्तः परिचारकाः तेषामिति विग्रहः. प्रश्नव्याकरणसूत्रव्याख्याने तु (४१५ पत्रे) वैयावृत्यं व्यावृत्तकर्मरूपं उपष्टम्भनमित्यर्थः इत्युक्तं. तदा वैयावृत्यं- साहाय्यमित्यर्थो लभ्यते.

अर्धदण्डः । परिभाषणं [1]अविज्ञाते । चोराणां [2]अभिप्रधर्षणे चित्रो घातः। तस्मादाप्तपुरुषाधिष्ठितः सन्निधाता निचयाननुतिष्ठेत् ।

[अध्यायार्थसारः]

बाह्यमाभ्यन्तरं चायं विद्याद्वर्षशतादपि ।
यथा पृष्टो न सज्जेत व्ययशेषं च दर्शयेत् ॥ ५८ ॥

इत्यध्यक्षप्रचारे सन्निधातृनिचयकर्म पञ्चमोऽध्यायः
आदितष्षड्विंशः

---

# चतुर्विंशं प्रकरणम्

# [3]समाहर्तृसमुदयप्रस्थापनम्.

## षष्ठोऽध्यायः

---

[समाहर्त्रा चिन्तनीयाः अंशाः]

समाहर्ता दुर्गं राष्ट्रं खनिं सेतुं वनं व्रजं वणिक्पथं चावेक्षेत ।

[दुर्गपदार्थविवरणम्]

[4]शुल्कं दण्डः [5]पौतवं नागरिको [6]लक्षणाध्यक्षो मुद्राध्यक्षः सुरा [7]सूना सूत्रं तैलं घृतं क्षारः सौवर्णिकः पण्यसंस्था वेश्या

---

[1] अविज्ञाने इति–पा. [2] अभिप्रधर्षणं कुड्यसन्धिच्छेदादिना धनापहरणं इति केचत्. अन्येतु प्रश्नव्याकरणसूत्रव्याख्याने (१९३ पत्रे) "तर्जा हस्तादिना चोरं प्रति प्रेषणादि संज्ञाकरणं" इत्युक्तत्वात् अभिप्रधर्षणस्य तर्जापर्यायत्वात्तदेवात्रापि विवक्षितमित्याहुः. [3] राजार्थानां सम्यक् समन्ताद्वा आहर्ता समाहर्ता, तत्कर्तृकं धनोदयमार्गपरिकल्पनमित्यर्थः. [4] घट्टेषु देयम्. शुल्कदण्ड इति समस्तपाठोऽपि–क. पुस्तके दृश्यते. [5] तुलामानपरिच्छेदः. [6] अत्र लक्षणपदं क्षेत्रारामादिलक्षणपरम्. [7] प्राणिवधः.

द्यूतं वास्तुकं कारुशिल्पिगणो देवताध्यक्षो [1]द्वारबाहिरिकादेयं च दुर्गम् ।

[राष्ट्रखनिपदार्थौ]

[2]सीता भागो बलिः करो वणिक् नदीपालः [3]तरो नावः पट्टनं विवीतं वर्तनी [4]रज्जूः [5]चोररज्जूश्च राष्ट्रम् । सुवर्णरजतवज्रमणिमुक्ताप्रवालशङ्खलोहलवणभूमिप्रस्तररसधातवः खनिः ॥

[सेतुवनपदार्थौ]

पुष्पफलवाटषण्डकेदारमूलवापाः सेतुः । पशुमृगद्रव्यहस्तिवनपरिग्रहो वनम् ॥

[व्रजवणिक्पथपदार्थौ]

गोमहिषं अजाविकं खरोष्ट्रं अश्वाश्वतराश्च व्रजः ॥ स्थलपथो वारिपथश्च वणिक्पथः । इत्यायशरीरम् ॥

[आयमुखसङ्ग्रहः]

[6]मूलं भागो व्याजी परिघः क्लृप्तं रूपिकं अत्ययश्च आयमुखम् ।

[व्ययशरीरविवरणम्]

देवपितृपूजादानार्थं स्वस्तिवाचनं अन्तःपुरं महानसं [7]दूतप्रावर्तिमं कोष्ठागारं आयुधागारं पण्यगृहं कुप्यगृहं कर्मान्तो विष्टिः

---

[1] द्वारपालेभ्यः नटनर्तकादिभ्यश्च आदेयं धनम्. [2] कृषिः. [3] तरः=नद्यादितरणम्. [4] नगरपालेभ्य आदेयम्. [5] चोरग्राहकेभ्यः ग्रामदेयम्. [6] क्रमेण विक्रयलब्धधनषड्भागविंशतिभागतरपण्यतत्तद्ग्रामनियतादायलवणभागदण्डद्रव्याणि पदार्थाः । तत्र पूर्वं केनचिन्मानेन मितस्य पुनः माने न्यूनता मा भूदित्येतदर्थं अधिकं गृह्यमाणः विंशतिभाग एव व्याजी. मूलमित्यस्य स्थाने मूल्यमित्येवक्वचित्पाठः । [7] दूतानां गतागताय दीयमानं द्रव्यम्. दूतप्रवर्तनं इति–क.

पत्त्यश्वरथद्विपपरिग्रहो गोमण्डलं पशुमृगपक्षिव्याळवाटाः[1] काष्ठ-तृणवाटश्चेति व्ययशरीरम् ॥

[कालविभागक्रमप्रदर्शनम्]

[2]राजवर्षं मासः पक्षो दिवसश्च व्युष्टम् । [3]वर्षाहेमन्तग्रीष्माणां तृतीयसप्तमा दिवसोनाः पक्षशेषाः पूर्णाः । पृथगधिमासक इति कालः ।

[समाहर्तृचिन्तनीयाः अवशिष्टाः षडंशाः]

करणीयं सिद्धं शेषं आयव्ययौ नीवी च[4] ॥

[करणीयसिद्धशेषाणां प्रत्येकं षोढा विभजनेन तेषां निर्वचनम्]

[5]संस्थानं प्रचारः शरीरावस्थापनं आदानं सर्वसमुदयपिण्डः सञ्जातम्–एतत्करणीयम् । [6]कोशार्पितं राजहारः पुरव्ययश्च प्रविष्टं, परमसंवत्सरानुवृत्तं शासनमुक्तं मुखाज्ञप्तं चापातनीयम्—एतत्सिद्धम् ॥ [7]सिद्धिप्रकर्मयोगः दण्डशेषं आहरणीयं, बलात्कृतप्रतिस्तब्धं [8]अवसृष्टं च प्रशोध्यम्—एतच्छेषम् ; असारमल्पसारं च ॥

---

[1] वाटः=रक्षणस्थानम्. [2] तत्तद्राजराज्याभिषेकदिनमारभ्य प्रवृत्तः संवत्सरः. [3] राजवर्षस्य त्रिधा विभागेन सिंहादिधनुरादिमेषादिमासचतुष्काणां प्रत्येकं पक्षाष्टकरूपत्वसिद्ध्या तेषु तृतीयसप्तमपक्षयोः एकैकदिवसन्यूनता, अन्येषां तु पूर्णतेत्यर्थः. [4] समाहर्त्रा चिन्तनीयाः इति शेषः. [5] संस्थानं= देशकालकर्तव्यनियमः, तत्तद्ग्रामादेयवस्त्वियत्ताक्लृप्तिर्वा. प्रचारः=देशः. शरीरावस्थापनं=आयशरीर परिगणनम्. धान्यादेर्यथाकालग्रहणमादानम्. तत्तद्ग्रामनगरादुत्पन्नधनसमूहज्ञानं सर्वसमुदयपिण्डः. स्वलब्धधनेयत्ताज्ञानं सञ्जातम्. [6] सिद्धं प्रविष्टापातनीयभेदेन द्विधा विभज्य विवृणोति—कोशार्पितमित्यादिना. कोशाधिकारिणे अर्पितं राज्ञा स्वकार्यार्थं तदा तदा गृहीतं, नगरपरिष्करणार्थं व्ययश्चेत्येतत्त्रयं प्रविष्टम्. [7] स्वायत्तीकरणप्रवृत्तिविषयभूतसिद्धधान्यादिः सैन्योपयुक्तद्रव्यशेषश्चाहरणीयसंज्ञः, अधिकारिवाल्लभ्याद्दत्तः स्वेच्छया अदत्तश्चेति द्वयमपि प्रशोध्यसंज्ञम्, निष्फलमल्पफलं चेत्याहृत्य षडपि शेषसंज्ञका इत्यर्थः. [8] अपसृष्टं–पा.

[आयस्य प्रकारभेदेन द्विधा ततः पञ्चधा च विभजनेन तत्स्वरूपनिर्वचनम्]

वर्तमानः पर्युषितोऽन्यजातश्चायः। दिवसानुवृत्तो वर्तमानः। परमसांवत्सरिकः [1] परप्रचारसंक्रान्तो वा पर्युषितः। नष्टप्रस्मृतमायुक्तदण्डः पार्श्वं पारिहीणिकमौपायनिकं [2] डमरगतकस्वमपुत्रकं निधिश्चान्यजातः। [3] विक्षेपव्याधितान्तरारम्भशेषश्च व्ययप्रत्यायः। विक्रये पण्यानामर्घवृद्धिः [4] उपजा मानोन्मानविशेषो [5] व्याजी क्रयसङ्घर्षे वा वृद्धिरित्यायः।

[व्ययविभागः तत्स्वरूपाणि च]

नित्यो नित्योत्पादिको लाभोलाभोत्पादिक इति व्ययः। दिवसानुवृत्तो नित्यः; पक्षमाससंवत्सरलाभो लाभः। तयोरुत्पन्नो नित्योत्पादिको लाभोत्पादिक इति।

[नीवीपदार्थः तद्विभागश्च]

[6] व्ययसंजातादायव्ययविशुद्धा नीवी, प्राप्ता चानुवृत्ता चेति।

[अदायापेक्षया व्ययस्य न्यूनत्वावश्यकता]

एवं कुर्यात्[7] समुदयं वृद्धिं चायस्य दर्शयेत्।
ह्रासं व्ययस्य च प्राज्ञः [8] साधयेच्च विपर्ययम्॥ ५९॥

इत्यध्यक्षप्रचारे समाहर्तृसमुदयप्रस्थापनं षष्ठोऽध्यायः.
आदितः सप्तविंशः.

---

[1] शत्रुदेशादागतः. [2] डमरगतमृत-पा. "डिम्बाः स्वदेशोत्था विप्लवाः, डमराणि परराजकृता उपद्रवाः" इति जीवाभिगमसूत्रव्याख्याने प. ६५७. [3] शेषशब्दस्य प्रत्येकमन्वयः. अन्तरारम्भशेषः=देवताद्यर्थव्ययितावशिष्टम्. [4] प्रतिषिद्धविक्रयजं धनम्. [5] विंशतिभागः [6] सञ्जातः=समूहः. सर्वविधव्ययद्वारादित्यर्थः. उत्थितेति शेषः. [7] समुदयः धनोत्पत्तिः. [8] समीकुर्याच्च.

# पञ्चविंशं प्रकरणम्—

# [1] अक्षपटले गाणनिक्याधिकारः

## सप्तमोऽध्यायः

---

[गणने नियुक्तानां संघीभूय लेखनादिकर्म-
करणार्थं शालानिर्माणविधिः]

अक्षपटलं अध्यक्षः [2] प्राङ्मुखमुदङ्मुखं वा [3] विभक्तोपस्थानं निबन्धपुस्तकस्थानं कारयेत् ।

[तत्र पुस्तकेषु लेखनीया: अंशाः]

तत्र [4] अधिकरणानां सङ्ख्यां, प्रचारसञ्जाताग्रं, कर्मान्तानां द्रव्य-प्रयोगे वृद्धिक्षयव्ययप्रयामव्याजीयोगस्थानवेतनविष्टिप्रमाणं, रत्न-सारफल्गुकुप्यानामर्घप्रतिवर्णकप्रतिमानमानोन्मानावमानभाण्डं, दे-शग्रामजातिकुलसङ्घानां धर्मव्यवहारचरित्रसंस्थानं, राजोप-जीविनां प्रग्रहप्रदेशभोगपरिहारभक्तवेतनलाभं, राज्ञश्च पत्नीपुत्राणां रत्नभूमिलाभं, [5] निर्देशौत्पातिकप्रतीकारलाभं, मित्रामित्राणां च सन्धिविक्रमप्रदानादानं, निबन्धपुस्तकस्थं कारयेत् ।

ततः [6] सर्वाधिकरणानां करणीयं सिद्धं शेषं आयव्ययौ नीवीं [7] उपस्थानं [8] प्रचारचरित्रसंस्थानं च निबन्धेन प्रयच्छेत् ॥

[जनिमतिकृतिशक्त्याद्यानुगुण्येन अध्यक्षपदवीनियोजनम्,
कुपथप्रवृत्ताध्यक्षनष्टद्रव्यभागिनां निर्देशश्च]

उत्तममध्यमावरेषु च कर्मसु तज्जातिकमध्यक्षं कुर्यात्; सामुदायिकेष्ववक्लृप्तिकं [9] यमुपहत्य न राजाऽनुतप्येत । सह-

---

[1] अर्थानां आयव्ययादीयत्तालेखनाद्यर्थं निर्मिता राजकीया शाला अक्षपटलमित्युच्यते. गणने नियुक्ताः पुरुषाः गाणनिकाः तेषां कर्म गाणनिक्यम्. [2] प्रत्यङ्मुखमिति. ख. [3] उपस्थानं=कक्ष्या. [4] अधिकरणानि= द्रव्योत्पत्तिस्थानानि. [5] निदशोत्पादिक. ग. [6] सर्वासु तासु शालासु कर्म-कर्तृणामिति यावत्. [7] स्वस्वकार्यदर्शनार्थसन्निधानकालम्. [8] देशाचारस्थितीः, [9] व्ययमुपहृत्य इति ख.

ग्राहिणः प्रतिभुवः कर्मोपजीविनः पुत्राः भ्रातरो भार्या दुहितरो भृत्याश्चास्य [1] कर्मच्छेदं वहेयुः ।

[वेतनदानोपयोगिसंवत्सरादिविभागः]

त्रिशतं चतुःपञ्चाशच्चाहोरात्राणां कर्मसंवत्सरः । तमाषाढीपर्यवसानं [2] ऊनं पूर्णं वा दद्यात् । [3] करणाधिष्ठितमधिमासकं कुर्यात् ॥

[चारद्वारा देशवृत्तान्तज्ञानस्यावश्यकता, तदभावे धनहानिः तत्र हेत्वष्टकनिर्देशश्च]

[4] अपसर्पाधिष्ठितं च प्रचारम् । प्रचारचरित्रसंस्थानान्यनुपलभमानो हि प्रकृतः [5] समुदयं अज्ञानेन परिहापयति, उत्थानक्लेशासहत्वादालस्येन, शब्दादिष्विन्द्रियार्थेषु प्रमादेन, सङ्क्रोशाधर्मानर्थभीरुर्भयेन, कार्यार्थिष्वनुग्रहबुद्धिः कामेन, हिंसाबुद्धिः कोपेन, विद्याद्रव्य वल्लभापाश्रयाद्दर्पेण, तुलामानतर्कगणिकान्तरोपधानाल्लोभेन ॥

[एवं धनहानिसंभवे मतभेदेन दण्डनिर्देशः]

'तेषां आनुपूर्व्या यावानर्थोपघातः तावानेकोत्तरो दण्डः' इति मानवाः । 'सर्वत्राष्टगुणः' इति पाराशराः । 'दशगुणः' इति बार्हस्पत्याः । विंशतिगुणः' इत्यौशनसाः । 'यथाऽपराधम्' इति कौटल्यः ।

---

[1] अनेन अदत्तं देयकर्तव्यादिशेषम्. [2] ऊनं पूर्णमिति कर्मकरनिवृत्तिकालानुगुण्येन. मासमध्ये वर्षमध्ये च निवृत्तौ ऊनम्, अन्यथापूर्णमिति भावः. [3] गणकः करणशब्देनोच्यते. अधिकमासादिगणनां तद्द्वारा कुर्यात्. [4] अपसर्पः—चारपुरुषः तदवेक्षितं कुर्यादित्यर्थः. प्रचारः देशः. [5] धनोत्पत्तिम्.

[अध्यक्षाणां वार्षिकगणितप्रदर्शनकालः, कपटालापनिषेधः, न्यूनाधिकभावदर्शने व्यवस्था च]

गाणनिक्यान्याषाढीमागच्छेयुः । आगतानां [1] समुद्रपुस्तभाण्डनीवीकानामेकत्र सम्भाषावरोधं कारयेत् । आयव्ययनीवीनां [2] अग्राणि श्रुत्वा नीवीं [3] अवहारयेत् । यच्चाग्रात् आयस्य [4] अन्तरवर्णे नीव्याः वर्धेत व्ययस्य वा यत्परिहापयेत्, तदष्टगुणमध्यक्षं दापयेत् । विपर्यये तमेव प्रति स्यात् ॥

[अकाले, प्रदर्शनीयोपकरणशून्यतया चागतानां त्यक्तस्वस्वकर्मणोः गणककार्मिकयोश्च दण्डः]

यथाकालमनागतानां अपुस्तनीविकानां वा देयदशबन्धो दण्डः । कार्मिके चोपस्थिते [5] कारणिकस्य [6] अप्रतिबध्नतः पूर्वस्साहसदण्डः । विपर्यये कार्मिकस्य द्विगुणः ॥

[आयव्यादिपट्टिकायाः सर्वज्ञेयता अपप्रचारकर्तृणां दण्डश्च]

[7] प्रचारसमं महामात्रास्समग्राः श्रावयेयुः । [8] अविषममन्त्रः पृथग्भूतो मिथ्यावादी चैषामुत्तमदण्डं दद्यात् ॥

[उपनेतव्यद्रव्यानुपनेतृणां निरीक्षणीयकालः ततः परीक्ष्य दण्डश्च]

अकृताहोरूपहरं मासमाकांक्षेत । मासादूर्ध्वं मासद्विशतोत्तरं दण्डं दद्यात् ॥

अल्पशेषलेख्यनीवीकं पञ्चरात्रमाकाङ्क्षेत । ततः परं [9] कोशपूर्वमहोरूपहरं धर्मव्यवहारचरित्रसंस्थानसङ्कलननिर्वर्तनानुमानचारप्रयोगैरवेक्षेत ।

---

[1] मुद्रया सहितं समुद्रम्. [2] इयत्ताः. [3] उपनाययेत्. [4] अन्तरं=प्रकारः. वर्णः=वर्णनपुस्तकम्. [5] गणकस्य. [6] सकाले सिद्धोपकरणैः पुस्तकादिभिः साकं अनुपस्थितस्य. [7] अविशेषेण सर्वेषां जनानामिति यावत्. [8] अविषममात्रा इति पाठः, अस्य पूर्ववाक्यान्वयश्च ग पुस्तके. [9] कोशः गणनपुस्तकमिति—ग.

[गणनलेखनपरिपाठ्यः]

दिवसपञ्चरात्रपक्षमासचातुर्मास्यसंवत्सरैश्च [1] प्रतिसमानयेत् । व्युष्टदेशकालमुखोत्पत्त्यनुवृत्तिप्रमाणदायकदापकनिबन्धकप्रतिग्राहकैश्चायं समानयेत् । व्युष्टदेशकालमुखलाभकारणदेययोगपरिमाणाज्ञापकोद्धारकविधातकप्रतिग्राहकैश्च व्ययं समानयेत् व्युष्टदेशकालमुखानुवर्तनरूपलक्षणपरिमाणनिक्षेपभाजनगोपायकैश्च नीवीं समानयेत् ॥

[दुष्टवृत्तानां गणकादीनां दण्डः]

राजार्थे कारणिकस्याप्रतिबध्नतः प्रतिषेधयतो वाऽऽज्ञां निबन्धात् आयव्ययमन्यथा वा विकल्पयतः पूर्वस्साहसदण्डः । क्रमावहीनमुत्क्रममविज्ञातं पुनरुक्तं वा वस्तुकमवलिखतो द्वादशपणो दण्डः । नीवीमवलिखतो द्विगुणः । भक्षयतोऽष्टगुणः । नाशयतः पञ्चबन्धः प्रतिदानं च । मिथ्यावादे स्तेयदण्डः । पश्चात् प्रतिज्ञाते द्विगुणः प्रस्मृतोत्पन्ने च ।

[संक्षेपेण राज्ञो हितोपदेशः]

अपराधं सहेताल्पं तुष्येदल्पेऽपि चोदये ।
महोपकारं चाध्यक्षं [2]प्रग्रहेणाभिपूजयेत् ॥ ६० ॥

इत्यध्यक्षप्रचारे अक्षपटले गाणनिक्याधिकारः

सप्तमोऽध्यायः आदितोऽष्टाविंशः.

---

# षड्विंशं प्रकरणम्—[3]समुदयस्य युक्तापहृतस्य प्रत्यानयनम्

## अष्टमोऽध्यायः

[धनसंग्रहावश्यकता]

कोशपूर्वास्सर्वारम्भाः । तस्मात् पूर्वं कोशमवेक्षेत ॥

---

[1] सम्यक् सङ्ख्यानपूर्वकं निर्दिशेदित्यर्थः. [2] यावज्जीवं परिग्रहः प्रग्रहः.

[3] तत्तत्स्थानेभ्यः उत्थितस्य धनस्य.

[धनाभिवृद्धितन्नाशहेतूनां परिगणनम्]

[1] प्रचारसमृद्धिः [2]चरित्रानुग्रहः चोरग्रहः [3]युक्तप्रतिषेधः सस्यसम्पत् पण्यबाहुल्यं [4]उपसर्गप्रमोक्षः परिहारक्षयः हिरण्योपायनम्—इति कोशवृद्धिः।

प्रतिबन्धः प्रयोगः व्यवहारः अवस्तारः परिहापणं उपभोगः परिवर्तनं अपहारश्च—इति कोशक्षयः।

[धनक्षयहेतुभूतानां प्रतिबन्धादीनां अष्टानां स्वरूपविवरणम् तत्तत्कर्तॄणां दण्डाश्च.]

सिद्धीनामसाधनं अनवतारणं अप्रवेशनं वा प्रतिबन्धः; तत्र दशबन्धो दण्डः। कोशद्रव्याणां वृद्धिप्रयोगः प्रयोगः; पण्यव्यवहारो व्यवहारः; तत्र फलद्विगुणो दण्डः। [5]सिद्धं कालमप्राप्तं करोति, अप्राप्तं प्राप्तं वेत्यवस्तारः; तत्र पञ्चबन्धो दण्डः। क्लृप्तं आयं परिहापयति व्ययं वा विवर्धयतीति परिहापणम्; तत्र हीनचतुर्गुणो दण्डः। स्वयमन्यैर्वा राजद्रव्याणामुपभोजनमुपभोगः; तत्र रत्नोपभोगे घातः, सारोपभोगे मध्यमः साहसदण्डः, फल्गु कुप्योपभोगे तच्च तावच्च दण्डः। राजद्रव्याणामन्यद्रव्येणादानं परिवर्तनं; तदुपभोगेन व्याख्यातम्। सिद्धं आयं न प्रवेशयति, निबद्धं व्ययं न प्रयच्छति, प्राप्तां नीवीं विप्रतिजानीते इत्यपहारः; तत्र द्वादशगुणो दण्डः।

[चत्वारिंशतां राजद्रव्यापहरणद्वाराणां निर्देशः]

तेषां हरणोपायाश्चत्वारिंशत्—

पूर्वं सिद्धं पश्चादवतारितं, पश्चात्सिद्धं पूर्वमवतारितं, साध्यं न सिद्धं, असाध्यं सिद्धं, सिद्धमसिद्धं कृतं, असिद्धं सिद्धं कृतं, अल्पसिद्धं बहुकृतं, बहुसिद्धमल्पं कृतं, अन्यत् सिद्ध-

---

[1] प्रचारः—देशः. [2] देशजातिकुलाचाराणां पूर्वस्थित्यनतिक्रमेण पालनम्. [3] प्रतिषेधश्च धनापाहरात्. [4] उपसर्गः अग्न्याद्युपद्रवः. [5] प्राप्तकालस्य अप्राप्तीकरणं अप्राप्तकालस्य प्राप्तीकरणं चेति द्वयमपि अवस्तार इत्यर्थः. इदं च उत्कोचाद्यपेक्षया संभवि.

मन्यत्कृतं, अन्यतस्सिद्धमन्यतः कृतं, देयं न दत्तं, अदेयं दत्तं, काले न दत्तं, अकाले दत्तं, अल्पं दत्तं बहुकृतं, बहुदत्तमल्पं कृतं, अन्यद्दत्तमन्यत्कृतं, अन्यतो दत्तमन्यतः कृतं, प्रविष्टमप्रविष्टं कृतं, अप्रविष्टं प्रविष्टं कृतं, कुप्यमदत्तमूल्यं प्रविष्टं, दत्तमूल्यं न प्रविष्टं, सङ्क्षेपो विक्षेपः कृतः, विक्षेपः सङ्क्षेपो वा, महार्घमल्पार्घेण परिवर्तितं, अल्पार्घं महार्घेण वा, समारोपितोऽर्घः, प्रत्यवरोपितो वा, रात्रयः समारोपिता वा, प्रत्यवरोपिता वा, संवत्सरो मासविषमः कृतः, मासो दिवसविषमो वा, समागमविषमः, मुखविषमः, धार्मिकविषमः, निर्वर्तनविषमः, पिण्डविषमः, वर्णविषमः, अर्घविषमः, मानविषमः, मापनविषमः भाजनविषमः इति हरणोपायाः ॥

[उक्तैरुपायैः द्रव्यापहरणशङ्कायां प्रश्नपूर्वकं सत्यांश-
परिज्ञानेन राष्ट्रे ख्यापनम्, तत्तदपहृत द्रव्य-
प्रतिनिवर्तनं च]

[1] तत्रोपयुक्तनिधायकनिबन्धकप्रतिग्राहकदायकदापकमन्त्रि-[2]मन्त्रिवैयावृत्यकरान् एकैकशोऽनुयुञ्जीत। मिथ्यावादे चैषां युक्तसमो दण्डः। प्रचारे चावघोषयेत्—'अमुना प्रकृतेनोपहताः [3]प्रज्ञापयन्तु' इति। प्रज्ञापयतो यथोपघातं दापयेत्। अनेकेषु चाभियोगेषु [4]अपव्ययमानः सकृदेव परोक्तः सर्वं भजेत। [5]वैषम्ये सर्वत्रानुयोगं दद्यात्। महत्यर्थापचारे चाल्पेनापि सिद्धः सर्वं भजेत।

[अध्यक्षादिकृतदुष्कार्यसूचकानां सत्यत्वादिशोधनेन
सत्यत्वे सम्मानम्, अन्यथा दण्डश्च]

कृतप्रतिघातावस्थः सूचको निष्पन्नार्थः षष्ठमंशं लभेत। द्वादशमंशं भृतकः। प्रभूताभियोगादल्पनिष्पत्तौ निष्पन्नस्यांशं लभेत। अनिष्पन्ने शारीरं हैरण्यं वा दण्डं लभेत, न चानुग्राह्यः।

---

[1] तत्र· उक्तहरणोपायेषु केनचिदनुष्ठिततया शङ्क्यमानेषु. [2] मन्त्र्यसन्निधौ तत्कर्मकरान्. [3] स्वां स्वां पीडामावेदयन्तु. [4] सर्वमुपघातं आत्मकृतं अनभ्युपगच्छन्. [5] नष्टद्रव्यादिनिवेदकेषु मध्ये कस्यचिद्रागद्वेषादिनिमित्तमपवादारोपण शङ्कायां ससाक्षिकविचारावकाशं दद्यात् इत्यर्थः.

[सूचकेन स्वसूचितांशसत्यत्वसिद्ध्यनुपदमेव
स्वमोचनम्, दूष्येण साकं उपजा
पादिना मेलने वधश्च]

निष्पत्तौ निक्षिपेद्वादं आत्मानं वाऽपवाहयेत् ।
अभियुक्तोपजापात्तु सूचको वधमाप्नुयात् ॥ ६१ ॥

इत्यध्यक्षप्रचारे समुदयस्य युक्तापहृतस्य प्रत्यानयनं
अष्टमोध्यायः । आदित एकोनत्रिंशः

---

## सप्तविंशप्रकरणम्–[1]उपयुक्तपरीक्षा

### नवमोऽध्यायः

---

[नियोज्यानां नियुक्तानां चाध्यक्षाणां
शक्तिपरीक्षावश्यकता, परीक्षाक्रमः,
कर्मप्रवर्तनक्रमश्च]

[2]अमात्यसम्पदोपेताः सर्वाध्यक्षाः शक्तितः कर्मसु नियोज्याः । कर्मसु चैषां नित्यं परीक्षां कारयेत्, चित्तानित्यत्वान्मनुष्याणाम् । अश्वसधर्माणो हि मनुष्याः नियुक्ताः कर्मसु [3]विकुर्वते । तस्मात् कर्तारं [4]करणं देशं कालं कार्यं [5]प्रक्षेपमुदयं चैषु विद्यात् । ते यथासन्देशं असंहता [6]अविगृहीताः कर्माणि कुर्युः ; संहताः भक्षयेयुः, विगृहीताः विनाशयेयुः । न चानिवेद्य भर्तुः किञ्चिदारम्भं कुर्युः अन्यत्रापत्प्रतीकारेभ्यः ।

[कर्मकरेषु असतां निग्रह; सतां अनुग्रहश्च]

प्रमादस्थानेषु चैषामत्ययं स्थापयेद्दिवसवेतनव्ययद्विगुणम् । यश्चैषां यथाऽऽदिष्टमर्थं सविशेषं वा करोति, सः स्थानमानौ लभेत ।

---

[1] संनिधातृसमाहर्त्रतिरिक्ताः अध्यक्षास्सर्वेऽप्युपयुक्तपदवाच्याः. [2] पञ्चमप्रकरणोक्तजानपदत्वादिना युक्ताः उत्तममध्यमाधमाः सर्वेऽप्यध्यक्षाः [3] अन्यादृशीं गतिं कुर्वते, विकारं भजन्ते च. [4] साधनम्. [5] भृतिम्. [6] अकृतान्योन्यविरोधाः.

[राजजनपदसम्बन्धिनां द्रव्याणां कर्मकरकृतभक्षणादिज्ञाने मतभेदेनोपायद्वयम्]

"अल्पायतिश्चेत् महाव्ययो भक्षयति; विपर्यये, यथायतिव्ययश्च न भक्षयति" इत्याचार्याः। "अपसर्पेणैवोपलभ्यते" इति कौटल्यः।

[व्ययेषु न्यूनाधिक्यदर्शनेनानुमेयाः अनर्थाः, तद्धेत्वानुगुण्येन दण्डः तत्परिहारश्च]

यः समुदयं परिहापयति स राजार्थं भक्षयति। स चेद्-ज्ञानादिभिः परिहापयति, तदेनं यथागुणं दापयेत्। यः समुदयं द्विगुणमुद्भावयति स जनपदं भक्षयति। स चेद्राजार्थमुपनयति, अल्पापराधे वारयितव्यः; महति यथापराधं दण्डयितव्यः। यः समुदयं व्ययमुपनयति स पुरुषकर्माणि भक्षयति। स कर्मदिवसद्रव्यमूल्यपुरुषवेतनापहारेषु यथाऽपराधं दण्डयितव्यः। तस्मादस्य यो यस्मिन्नधिकरणे शासनस्थः स तस्य कर्मणो याथातथ्यं आयव्ययौ च व्याससमासाभ्यामाचक्षीत।

[अनालोचितभाविपर्यवसानवतां त्रिविधानां कुपुरुषाणां निर्देशः, स्वरूपविवरणम् तेषां निग्रहश्च]

मूलहरतादात्विककदर्यांश्च प्रतिषेधयेत्। यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः। यो यद्यदुत्पद्यते तत्तद्भक्षयति स तादात्विकः। यो भृत्यात्मपीडाभ्यां उपचिनोत्यर्थं स कदर्यः। स [1] पक्षवांश्चेदनादेयः, विपर्यये पर्यादातव्यः। यो महत्यर्थसमुदये स्थितः कदर्यः [2]सन्निधत्ते, [3]उपनिधत्ते, [4]अवस्रावयति वा— सन्निधत्ते स्ववेश्मनि, अवनिधत्ते पौरजानपदेषु, अवस्रावयति परविषये—तस्य सत्री मन्त्रिमित्रभृत्यबन्धुपक्षमागतिं गतिं च

---

[1] बहुबन्धुजनयुक्तश्चेत्. [2] भूगर्तादिषु गुप्तं स्थापयति. [3] रक्षणार्थं निक्षिपति. [4] सञ्चारयति.

द्रव्याणामुपलभेत। यश्चास्य परविषये सञ्चारं कुर्यात्तमनुप्रविश्य मन्त्रं विद्यात्। सुविदिते शत्रुशासनापदेशेनैनं घातयेत्।

[ससाक्षिकव्यवहारस्यैव युक्तता, उत्तराध्यक्षयोः
तच्छिष्ययोग्यताश्च]

तस्माद्ध्यक्षाः सङ्ख्यायकलेखक[1]रूपदर्शकनीवीग्राहकोत्तराध्यक्षसखाः कर्माणि कुर्युः। उत्तराध्यक्षाः हस्त्यश्वरथारोहाः। तेषामन्तेवासिनः शिल्पशौचयुक्ताः सङ्ख्यायकादीनामपसर्पाः।

[कर्मप्रवर्तनोपयोगिशालाकल्पनविधिः]

[2]बहुमुख्यमनित्यं चाधिकरणं स्थापयेत्।

[एवं विश्वप्रयत्ने कृतेऽपि कर्मकरैः अर्थभक्षणस्य
दुष्परिहार्यता दुर्ज्ञेयता च]

यथा ह्यनास्वादयितुं न शक्यं
जिह्वातलस्थं मधु वा विषं वा।
अर्थस्तथा ह्यर्थचरेण राज्ञः
स्वल्पोऽप्यनास्वादयितुं न शक्यः॥ ६२॥
मत्स्या यथाऽन्तस्सलिले चरन्तो
ज्ञातुं न शक्याः सलिलं पिबन्तः।
युक्तास्तथा कार्यविधौ नियुक्ताः
ज्ञातुं न शक्या धनमाददानाः॥ ६३॥
अपि शक्या गतिर्ज्ञातुं पततां खे पतत्रिणाम्।
न तु प्रच्छन्नभावानां [3]युक्तानां चरतां गतिः॥ ६४॥

[एवं अन्यायेनार्थभक्षकाणां शिक्षाः
प्राज्ञानामुत्तेजनं च]

आस्रावयेच्चोपचितान् [4]विपर्यस्येच्च कर्मसु।
यथा न भक्षयन्त्यर्थं भक्षितं निर्वमन्ति वा॥ ६५॥

---

[1] द्रव्यवर्णपरिशोधकाः. [2] अनेकप्रधानजनयुक्तं अचिरस्थायिजनयुक्तं चेत्यर्थः. [3] कर्मकराणाम्. [4] नीचस्थाने नियोजयेच्च.

न भक्षयन्ति ये त्वर्थान् न्यायतो वर्धयन्ति च ।
नित्याधिकाराः कार्यास्ते राज्ञः प्रियहिते रताः ॥ ६६ ॥

इत्यध्यक्षप्रचारे उपयुक्तपरीक्षा नवमोऽध्यायः
आदितस्त्रिंशः

---

## अष्टाविंशं प्रकरणम्—शासनाधिकारः

### दशमोऽध्यायः

---

[शासनपदार्थः, तत्प्राधान्यम्, लेखक-
योग्यताः लेखनक्रमश्च]

[1]शासने शासनमित्याचक्षते । शासनप्रधाना हि राजानः, तन्मूलत्वात् सन्धिविग्रहयोः । तस्मादमात्यसम्पदोपेतः सर्वसमयवित् आशुग्रन्थः चार्वक्षरो लेखवाचनसमर्थो लेखकः स्यात् । सोऽव्यग्रमना राज्ञस्सन्देशं श्रुत्वा निश्चित्यार्थं समीक्ष्य कार्यं लेखं विदध्यात् । देशैश्वर्यवंशनामधेयोपचारमीश्वरस्य, देशनामधेयोपचारमनीश्वरस्य ।

जातिं कुलं स्थानवयश्श्रुतानि
कर्मर्द्धिशीलान्यथ देशकालौ ।
यौनानुबन्धं च समीक्ष्य कार्ये
लेखं विदध्यात् पुरुषानुरूपम् ॥ ६७ ॥

[लेखनसौन्दर्यहेतुभूताः अंशाः
तेषां विवरणं च]

अर्थक्रमः सम्बन्धः परिपूर्णता माधुर्यं औदार्यं स्पष्टत्वं—इति लेखसम्पत् । तत्र यथावदनुपूर्वक्रिया—प्रधानस्यार्थस्य पूर्वमभि-

---

[1] लेखनेन पत्रेषु निर्दिष्टोऽर्थः शासनमित्युच्यते इत्यर्थः.

निवेशः इत्यर्थस्य क्रमः। प्रस्तुतस्यार्थस्यानुपरोधात् उत्तरस्य विधानमासमाप्तेरिति सम्बन्धः। अर्थपदाक्षराणामन्यूनातिरिक्तता हेतूदाहरणदृष्टान्तैरर्थोपवर्णनाऽश्रान्तपदतेति परिपूर्णता। सुखोपनीतचार्वर्थशब्दाभिधानं माधुर्यम्। अग्राम्यशब्दाभिधानमौदार्यम्। प्रतीतशब्दप्रयोगः स्पष्टत्वमिति ॥

[वर्णपदवाक्यानां स्वरूपविभागादिः]

अकारादयो वर्णाः त्रिषष्टिः। वर्णसङ्घातः पदम्। तच्चतुर्विधं नामाख्यातोपसर्गनिपाताश्चेति। तत्र नाम सत्त्वाभिधायि। अविशिष्टलिङ्गमाख्यातं क्रियावाचि। क्रियाविशेषिताः प्रादय उपसर्गाः। अव्ययाः चादयो निपाताः। पदसमूहो वाक्यमर्थपरिसमाप्तौ ॥

[लेखने दीर्घसमासपदप्रयोगनिषेधः उपसंहारक्रमश्च]

एकपदावरस्त्रिपदपरः परपदार्थानुरोधेन[1] वर्गः कार्यः। [2]लेखपरिसंहरणार्थः इतिशब्दः वाचिकमस्य इति च।

[लेखनीयतया सम्भावितानां अर्थानां निर्देशः विवरणं च]

निन्दा प्रशंसा पृच्छा च तथाऽऽख्यानमथार्थना।
प्रत्याख्यानमुपालम्भः प्रतिषेधोऽथ चोदना॥ ६८॥
सान्त्वमभ्यवपत्तिश्च भर्त्सनानुनयौ तथा।
एतेष्वर्थाः प्रवर्तन्ते त्रयोदशसु लेखजाः॥ ६९॥

तत्राभिजनशरीरकर्मणां दोषवचनं निन्दा। गुणवचनमेतेषामेव प्रशंसा। 'कथमेतत्' इति पृच्छा। 'एवम्' इत्याख्यानम्। 'देहि' इत्यर्थना। 'न प्रयच्छामि' इति प्रत्याख्यानम्। 'अननुरूपं भवतः' इत्युपालम्भः। 'मा कार्षीः' इति प्रतिषेधः। 'इदं क्रियताम्' इति चोदना। 'योऽहं स भवान्, मम यद् द्रव्यं तद्भवतः'

---

[1] समासः. [2] परिसंहरणम्—उपसंहारः—समाप्तिः. लेखकपरिसंहरणार्थ इति—ख.

इत्युपग्रहः सान्त्वम्। व्यसनसाहाय्यमभ्यवपत्तिः। सदोषमायति-प्रदर्शनमभिभर्त्सनम्। अनुनयस्त्रिविधः—अर्थकृतावतिक्रमे पुरुषादि-व्यसने चेति ॥

[शासनभेदानां निर्देशः]

प्रज्ञापनाज्ञापरिदानलेखाः
तथा परीहारनिसृष्टिलेखौ।
प्रावृत्तिकश्च प्रतिलेख एव
सर्वत्रगश्चेति हि शासनानि ॥ ७९ ॥

[तत्र प्रज्ञापनालेखः]

अनेन विज्ञापितमेवमाह
तद्दीयतां चेद्यदि तत्त्वमस्ति।
राज्ञस्समीपे (व)परकारमाह
प्रज्ञापनैषा विविधोपदिष्टा ॥ ७० ॥

[आज्ञालेखः]

भर्तुराज्ञा भवेद्यत्र निग्रहानुग्रहौ प्रति।
विशेषेण तु भृत्येषु तदाज्ञालेखलक्षणम् ॥ ७२ ॥

[परिदानलेखः]

यथाऽर्हगुणसंयुक्ता पूजा यत्रोपलक्ष्यते।
अप्याधौ परिदाने वा भवतस्तावुपग्रहौ ॥ ७३ ॥

[परिहारलेखः]

जातेर्विशेषेषु पुरेषु चैव
ग्रामेषु देशेषु च तेषु तेषु।
अनुग्रहो यो नृपतेर्निदेशा त्
तज्ज्ञः परीहार इति व्यवस्येत् ॥ ७४ ॥

[निसृष्टिलेखः]

निसृष्टिस्थापना कार्या करणे वचने तथा।
एष वाचिकलेखस्स्यात् भवेन्नैसृष्टिकोऽपि वा ॥ ७५ ॥

[प्रावृत्तिकम्]

विविधां दैवसंयुक्तां तत्त्वजां चैव मानुषीम् ।
[1] द्विविधां तां व्यवस्यन्ति प्रवृत्तिं शासनं प्रति ॥ ७६ ॥

[प्रतिलेखः]

दृष्ट्वा लेखं यथातत्त्वं ततः प्रत्यनुभाष्य च ।
प्रतिलेखो भवेत्कार्यो यथा राजवचस्तथा ॥ ७७ ॥

[सर्वत्रगः]

यत्रेश्वरांश्चाधिकृतांश्च राजा
[2] रक्षोपकारौपयिकार्थमाह ।
सर्वत्रगो नाम भवेत्स मार्गे
देशे च सर्वत्र च वेदितव्यः ॥ ७८ ॥

[शासनाधीनसन्धिविग्रहानुष्ठानो-
पयोग्युपायाः]

उपायाः सामोपप्रदानभेददण्डाः ।

[पञ्चविधसामोपपादनम्]

तत्र साम पञ्चविधं-गुणसङ्कीर्तनं सम्बन्धोपाख्यानं परस्परोपकारसन्दर्शनं आयतिप्रदर्शनं आत्मोपनिधानमिति । तत्राभिजनशरीरकर्मप्रकृति[3]श्रुतिद्रव्यादीनां गुणागुणग्रहणं प्रशंसा स्तुतिर्गुणसङ्कीर्तनम् । ज्ञातियौनमौखस्रौवकुलहृदयमित्रसङ्कीर्तनं सम्बन्धोपाख्यानम् । स्वपक्षपरपक्षयोरन्योन्योपकारसङ्कीर्तनं परस्परोपकारसन्दर्शनम् । अस्मिन्नेवं कृते इदमावयोर्भवतीत्याशाजननमायतिप्रदर्शनम् । 'योऽहं स भवान् यन्मम द्रव्यं तद्भवता स्वकृत्येषु प्रयोज्यताम्' इत्यात्मोपनिधानमिति ।

[दानभेददण्डानां स्वरूपम्]

उपप्रदानमर्थोपकारः । शङ्काजननं निर्भर्त्सनं च भेदः । वधः परिक्लेशोऽर्थहरणं दण्ड इति ।

---

[1] विविधां–पा. [2] रौ पथिकार्थमाह–पा. [3] श्रुतद्रव्यादीनां–पा.

[लेखनदोषाणां परिगणनम् विवरणं च]

अकान्तिः व्याघातः पुनरुक्तं अपशब्दः सम्प्लवः इति लेखदोषाः। तत्र कालपत्रकं अचारुविषमविरागाक्षरत्वं अकान्तिः। पूर्वेण पश्चिमस्यानुपपत्तिर्व्याघातः। उक्तस्याविशेषेण द्वितीयमुच्चारणं पुनरुक्तम्। लिङ्गवचनकालकारकाणामन्यथाप्रयोगोऽपशब्दः। अवर्गे वर्गकरणं वर्गे चावर्गक्रिया गुणविपर्यासः संप्लव इति।

[निगमनम्]

सर्वशास्त्राण्यनुक्रम्य [1] प्रयोगमुपलभ्य च।
कौटल्येन नरेन्द्रार्थे शासनस्य विधिः कृतः॥ ७९॥

इत्यध्यक्षप्रचारे शासनाधिकारः दशमोऽध्यायः
आदित एकत्रिंशः

---

# एकोनत्रिंशं प्रकरणम्–कोशप्रवेश्यरत्नपरीक्षा

## एकादशोऽध्यायः

[कोशप्रवेश्यरत्नादिस्वीकारक्रमः]

कोशाध्यक्षः कोशप्रवेश्यं रत्नं सारं फल्गु कुप्यं वा [2] तज्जातकरणाधिष्ठितः प्रतिगृह्णीयात्।

[मौक्तिकभेदाः तदुत्पत्तिहेतवः उत्तमाधमलक्षणानि च]

ताम्रपर्णिकं पाण्ड्यकवाटकं, पाशिक्यं, कौलेयं, चौर्णेयं, माहेन्द्रं, कार्दमिकं, स्रौतसीयं, ह्रादीयं, हैमवतं च मौक्तिकम्। शुक्तिः शङ्खः प्रकीर्णकं च योनयः।

---

[1] अनुक्रम्य–ज्ञात्वा. [2] तत्र निपुणाः तज्जाताः, करणं तदधिकृतपुरुषाणां सामग्री, तदधिष्ठितस्तत्समेतः–इति टीका. करणाः–कायस्था इति–ग.

मसूरकं त्रिपुटकं कूर्मकं अर्धचन्द्रकं कञ्चुकितं यमकं कर्तकं खरकं सिक्थकं कामण्डलुकं श्यावं नीलं दुर्विद्धं चाप्रशस्तम्।

स्थूलं वृत्तं निस्तलं भ्राजिष्णु श्वेतं गुरु स्निग्धं देशविद्धं च प्रशस्तम् ॥

[मौक्तिकसराणां पञ्चभेदाः, शीर्षकादिसङ्ख्यानुगुण्येन
तेषां परस्परमिश्रणामिश्रणाभ्यां च व्यवहार्याणि
भूषणनामानि]

शीर्षकं उपशीर्षकं प्रकाण्डं अवघाटकं तरलप्रतिबन्धं चेति यष्टिप्रभेदाः।

यष्टीनामष्टसहस्रमिन्द्रच्छन्दः। ततोऽर्धं विजयच्छन्दः। शतं देवच्छन्दः। चतुष्षष्टिरर्धहारः। चतुष्पञ्चाशद्रश्मिकलापः। द्वात्रिंशद्गुच्छः। सप्तविंशतिर्नक्षत्रमाला। चतुर्विंशतिरर्धगुच्छः। विंशतिर्माणवकः। ततोऽर्धमर्धमाणवकः। एत एव मणिमध्यास्तन्माणवका भवन्ति। एकशीर्षकश्शुद्धो हारः। तद्वच्छेषाः। मणिमध्योऽर्धमाणवकः त्रिफलकः फलकहारः पञ्चफलको वा। सूत्रमेकावली शुद्धा। सैव मणिमध्या यष्टिः। हेममणिचित्रा रत्नावली। हेममणिमुक्तान्तरोऽपवर्तकः। सुवर्णसूत्रान्तरं सोपानकम्। मणिमध्यं वा मणिसोपानकम्।

तेन शिरोहस्तपादकटीकलापजालकविकल्पाः व्याख्याताः॥

[मणीनां त्रिधा विभागः]

मणिः—कौटो मालेयकः पारसमुद्रकश्च।

[मणिषु पञ्च माणिक्यभेदाः]

सौगन्धिकः, पद्मरागः, अनवद्यरागः, पारिजातपुष्पकः, बालसूर्यकः।

[अष्टौ वैडूर्यभेदाः]

वैडूर्यः—उत्पलवर्णः शिरीषपुष्पकः उदकवर्णः वंशराग शुकपत्रवर्णः पुष्यरागो गोमूत्रको गोमेदकः।

[अष्टौ इन्द्रनीलभेदाः]

नीलावलीयः इन्द्रनीलः कलायपुष्पकः महानीलः जाम्बवाभः जीमूतप्रभः नन्दकः स्रवन्मध्यः।

[चत्वारः स्फटिकभेदाः]

शुद्धस्फटिकः मूलाटवर्णः शीतवृष्टिः सूर्यकान्तश्चेति मणयः।

[मणिगुणानां एकादशानां निरूपणम्]

षडश्रः चतुरश्रः वृत्तो वा, तीव्ररागः संस्थानवान् अच्छः स्निग्धः गुरुः अर्चिष्मान् अन्तर्गतप्रभः प्रभानुलेपी चेति मणिगुणाः।

[सप्त मणिदोषाः]

मन्दरागप्रभः सशर्करः पुष्पच्छिद्रः खण्डो दुर्विद्धो लेखाकीर्णः इति दोषाः।

[वर्णभेदेन भिन्नाः अष्टादश मणिभेदाः अतिरिक्तानां अप्रशस्तत्वं च]

विमलकः सस्यकः अञ्जनमूलकः पित्तकःसुलभकः [1] लोहितकः अमृतांशुकः ज्योतीरसकः मैलेयकः आहिच्छत्रकः कूर्पः प्रतिकूर्पः सुगन्धिकूर्पः क्षीरपकः शुक्तिचूर्णकः शिलाप्रवालकः पुलकः शुक्रपुलकः इत्यन्तरजातयः। शेषाः काचमणयः॥

[वज्रमणेः आकरप्रदेशाः उत्पत्तिस्थानानि च]

सभाराष्ट्रकं मध्यमराष्ट्रकं [2] काश्मकराष्ट्रकं श्रीकटनकं मणिमन्तकं इन्द्रवानकं च वज्रम्। खनिः स्रोतः प्रकीर्णकं च योनयः।

[वज्रवर्णाः]

मार्जाराक्षकं च शिरीषपुष्पकं गोमूत्रकं गोमेदकं शुद्धस्फटिकं मूलाटीपुष्पकवर्णं मणिवर्णानामन्यतमवर्णमिति वज्रवर्णाः।

---

[1] लोहिताक्षो मृगाश्मकः इति–पा. [2] कास्तीरराष्ट्रकं–पा.

[वज्रेषु उत्तमाः अधमाश्च]

स्थूलं स्निग्धं गुरु प्रहारसहं समकोटिकं भाजनलेखि तर्कुभ्रामि भ्राजिष्णु च प्रशस्तम्। नष्टकोणं निराश्रि पार्श्वापवृत्तं च अप्रशस्तम्।

[प्रवालानां निरूपणम्]

प्रवालकं आलकन्दकं वैवर्णिकं च, रक्तं पद्मरागं च, करटं गर्भिणिकावर्जमिति।

[सारवर्गेषु चन्दनसम्बन्धिजातिवर्ण-
गन्धानां निरूपणम्]

चन्दनं— सातनं रक्तं भूमिगन्धि; गोशीर्षकं कालताम्रं मत्स्यगन्धि; हरिचन्दनं शुकपत्रवर्णं आम्रगन्धि; तार्णसं च; ग्रामेरुकं रक्तं रक्तकालं वा बस्तमूत्रगन्धि; दैवसभेयं रक्तं पद्मगन्धि; जावकं च; जोङ्गकं रक्तं रक्तकालं वा स्निग्धम्; तौरूपं च; मालेयं पाण्डुरक्तम् कुचन्दनं कालवर्णं गोमूत्रगन्धि; कालपर्वतकं रूक्षमगरुकालं रक्तं रक्तकालं वा; कालपर्वतकमनवद्यवर्णं वा; कोशाकारपर्वतकं कालं कालचित्रं वा; शीतोदकीयं पद्माभं कालस्निग्धं वा; नागपर्वतकं रूक्षं शैवलवर्णं वा; शाकलं कपिलमिति॥

[चन्दनगुणाः]

लघु स्निग्धं अश्यानं सर्पिस्स्नेहलेपि गन्धसुखं त्वगनुसारि अनुल्बणं अविरागि उष्णसहं दाहग्राहि सुखस्पर्शनमिति चन्दनगुणाः।

[अगुरुजातिवर्णगन्धानां निरूपणम्]

अगुरु—जोङ्गकं कालं कालचित्रं मण्डलचित्रं वा। श्यामं जोङ्गकं। पारसमुद्रकं चित्ररूपम्। उशीरगन्धि नवमालिकागन्धि वेति।

[अगुरुगुणाः]

गुरु स्निग्धं पेशलगन्धि निर्हारि अग्निसहं असंप्लुतधूमं समगन्धं विमर्दसहमिति अगुरुगुणाः।

[देशवर्णगन्धादिभेदेन भिन्नानां तैलपर्णिका-
भिधानगन्धवृक्षाणां भेदाः]

तैलपर्णिकं—अशोकग्रामिकं मांसवर्णं पद्मगन्धि; जोङ्गकं रक्तपीतकमुत्पलगन्धि गोमूत्रगन्धि वा; ग्रामेरुकं स्निग्धं गोमूत्रगन्धि; सौवर्णकुड्यकं रक्तपीतं मातुलुङ्गगन्धि; पूर्णकद्वीपकं पद्मगन्धि नवनीतगन्धि वेति।

[वर्णगन्धदेशादिभेदेन भिन्नानां भद्रश्रीया-
भिधानचन्दनविशेषाणां भेदाः]

भद्रश्रीयं—पारलौहित्यकं जातीवर्णं; आन्तरवत्यं उशीरवर्णं उभयं कुष्ठगन्धि चेति।

[कालेयकाभिधानकाष्ठविशेषस्य देशादिभेदाः
तैलपर्णिकादीनां गुणाश्च]

कालेयकः—स्वर्णभूमिजः स्निग्धपीतकः; औत्तरपर्वतको रक्तपीतक इति साराः। पिण्डक्वाथधूमसहं अविरागि योगानुविधायि च। चन्दनागुरुवच्च तेषां गुणाः।

[फल्गूनां मध्ये पञ्चदश चर्मजातयः]

कान्तनावकं प्रैयकं चोत्तरपर्वतकं चर्म। कान्तनावकं मयूरग्रीवाभं, प्रैयकं नीलपीतं श्वेतं लेखाचित्रं बिन्दुचित्रं; तदुभयमष्टाङ्गुलायामम्।

बिसी महाबिसी च द्वादशग्रामीये।[1] अव्यक्तरूपा दुहिलितिका चित्रा वा बिसी, परुषा श्वेतप्राया महाबिसी; द्वादशाङ्गुलायाममुभयम्।

श्यामिका कालिका कदली चन्द्रोत्तरा शाकुला चारोहजाः।

कपिला बिन्दुचित्रा वा श्यामिका; कालिका कपिला कपोतवर्णा वा; तदुभयमष्टाङ्गुलायामम्। परुषा कदलीहस्तायता।

सैव चन्द्रचित्रा चन्द्रोत्तरा। कदलीत्रिभागा शाकुला कोठमण्डलचित्रा कृतकर्णिकाऽजिनचित्रा चेति।

---

[1] अव्यक्तवर्णा हिलिका—बहुतररोमोपेता, इति व्याख्या.

सामूरं चीनसी सामूली च बाह्लवेयाः।

षट्त्रिंशदङ्गुलमञ्जनवर्णं सामूरं। चीनसी रक्तकाली पाण्डुकाली वा। सामूली गोधूमवर्णेति।

सातिना नलतूला वृत्तपुच्छा च औद्राः।

सातिना कृष्णा। नलतूला नलतूलवर्णा। कापिला वृत्तपुच्छा च—इति चर्मजातयः।

[चर्मसु प्रशस्तानि]

चर्मणां मृदु स्निग्धं बहुलरोम च श्रेष्ठम्।

[मेषलोमनिर्मितानां आच्छादानां वर्णक्रिया संस्थानभेदैः सप्तदशविधत्वम्]

शुद्धं शुद्धरक्तं [1]पद्मरक्तं च आविकं; खचितं वानचित्रं खण्डसङ्घात्यं तन्तुविच्छिन्नं च। कम्बलः [2]कैचलकः कलमितिका सौमितिका तुरगास्तरणं वर्णकं तलिच्छकं[3] वारवाणः परिस्तोमः समन्तभद्रकं च आविकं।

[तेषु प्रशस्ताः]

पिच्छिलमार्द्रमिव च सूक्ष्मं मृदु च श्रेष्ठम्।

[नेपालदेशीयमेषरोमनिर्मित-वस्त्रभेदाः गुणाश्च]

अष्टप्रोतिसङ्घात्या कृष्णा भिङ्गिसी वर्षवारणमपसारकः इति नैपालकम्।

[मृगरोमजानि षड्विधानि]

सम्पुटिका, चतुरश्रिका, लम्बरा, कटवानकं, प्रावरकः, सत्तलिकेति मृगरोम।

---

[1] पक्षरक्तं—ग. [2] वन्यशिरस्त्राणम्. कौचपकः—पा. [3] तालिन्धरतल्पक इति व्याख्या. कम्बलविशेषः. तल्लिच्छकं—पा.

[दुकूलतद्वानयोः प्रत्येकं त्रयो भेदाः
भेदान्तराणि च]

वाङ्गकं श्वेतं स्निग्धं दुकूलं, पौण्ड्रकं श्यामं मणिस्निग्धं, सौवर्णकुड्यकं सूर्यवर्णम्। मणिस्निग्धोदकवानं चतुरश्रवानं व्यामिश्रवानं च। एतेषामेकांशुकमध्यर्धद्वित्रिचतुरंशुकमिति।

[पट्टसूत्रभेदाः तद्योनयः तद्वर्णाः
तेषूत्तमादिनिर्देशश्च]

तेन काशिकं पौण्ड्रकं च क्षौमं व्याख्यातम्। मागधिका पौण्ड्रिका सौवर्णकुड्यका च पत्त्रोर्णाः। नागवृक्षो लिकुचो वकुलो वटश्च योनयः। पीतिका नागवृक्षिका, गोधूमवर्णा लैकुची, श्वेता वाकुली, शेषा नवनीतवर्णा। तासां सौवर्णकुड्यका श्रेष्ठा। तया कौशेयं चीनपट्टाश्च चीनभूमिजा व्याख्याताः॥

[कार्पासिकेषु उत्तमानि]

माधुरं [1]आपरान्तकं कालिङ्गकं काशिकं वाङ्गकं वात्सकं माहिषकं च कार्पासिकं श्रेष्ठमिति॥

[अनुक्तानां समानन्यायत्वोक्त्या निगमनम्]

अतः परेषां [2]रत्नानां प्रमाणं मूल्यलक्षणम्।
जातिं रूपं च जानीयान्निधानं [3]नवकर्म च॥ ८०॥
पुराणप्रतिसंस्कारं कर्मगुह्यमुपस्करान्।
देशकालपरीभोगं हिंस्राणां च प्रतिक्रियाम्॥ ८१॥

इत्यध्यक्षप्रचारे कोशप्रवेश्यरत्नपरीक्षा एकादशोऽध्यायः
आदितो द्वात्रिंशः

---

[1] अपरान्तः—कोङ्कणदेशः, तद्भवम्. [2] रत्नप्रभृतीनामेषां द्रव्याणाम्.
[3] आकरोद्धृतानां तादात्विकं शोधनादिकम्.

# त्रिंशं प्रकरणम्

## [1] आकरकर्मान्तप्रवर्तनम्

## द्वादशोऽध्यायः

---

[लक्षणैस्सहायसम्पत्त्या च आकर-
स्थानपरीक्षावश्यकता]

आकराध्यक्षः [2] शुल्बधातुशास्त्ररसपाकमणिरागज्ञः तज्ज्ञसखो वा तज्जातकर्मकरोपकरणसम्पन्नः, [3] किट्टमूषाङ्गारभस्मलिङ्गं वाऽऽकरं भूतपूर्वं, अभूतपूर्वं वा भूमिप्रस्तररसधातुं अत्यर्थवर्णगौरवं उग्रगन्धरसं परीक्षेत ।

[सप्तसु लोहधातुषु स्यन्दनस्थानभेदेन पञ्च-
विधानां सुवर्णहेतुरसानां निर्देशः]

पर्वतानामभिज्ञातोद्देशानां [4] बिलगुहोपत्यकालयनानिगूढखातेष्वन्तःप्रस्यन्दिनः जम्बूचूततालफलपक्वहरिद्राभेदहरितालमनःशिलाक्षौद्रहिङ्गुलकपुण्डरीकशुकमयूरपत्रवर्णाः सवर्णोदकौषधिपर्यन्ताः चिक्कणाः विशदाः भारिकाश्च रसाः काञ्चनिकाः ।

[ताम्रादेः सुवर्णत्वापादकरसलक्षणम्,
शिलाजतुवैलक्षण्यं च]

अप्सु निष्ठ्यूतास्तैलवद्विसर्पिणः पङ्कमलग्राहिणश्च [5] ताम्ररूप्ययोश्शतादुपरि वेद्धारः । [6] तत्प्रतिरूपकमुग्रगन्धरसं शिलाजतु विद्यात् ।

---

[1] कर्मान्ता.=फलोपलब्ध्यनुकूलाः तास्ताः क्रियाः. आकरेषु तेषां प्रवर्तनक्रमः इत्यर्थः. [2] शास्त्रपदस्य प्रत्येकं अन्वयः. शुल्बशास्त्रं=भूसिराविज्ञानम्. [3] किट्टं=लोहमलम्. मूषा=आवर्तनभाण्डम्. [4] उपत्यका=शैलासन्नभूमिः. लयनम्=शिलाटङ्कनेन निर्मितं गृहम्. गूढखातं=महाशिलापिहितद्वारं बिलम्. [5] शतपलपरिमाणताम्ररजतयोः सुवर्णत्वापादकाः इत्यर्थः. [6] प्रतिरूपकं=समानवर्णम्.

[ताम्रादेः स्वर्णत्वापादकानां त्रिविधानां भूमिधातु-
रसधातूनां लक्षणानि, तत्परीक्षाक्रमाश्च]

पीतकास्ताम्रकास्ताम्रपीतका वा भूमिप्रस्तरधातवः, [1] भिन्ना नीलराजिमन्तो मुद्गमाषकृसरवर्णा वा दधिबिन्दुपिण्डचित्रा हरिद्राहरीतकीपद्मपत्रशैवलयकृत्प्लीहानवद्यवर्णा वा भिन्नाश्चुञ्चुवालुकालेखाबिन्दुस्वस्तिकवन्तः सगुलिका अर्चिष्मन्तः, ताप्यमाना न भिद्यन्ते, बहुफेनधूमाश्च, सुवर्णधातवः [2] प्रतीवापार्थाः ताम्ररूप्यवेधनाः ।

[रूप्यहेतूनां अष्टादशप्रकाराणां
धातूनां लक्षणानि]

शङ्खकर्पूरस्फटिकनवनीतकपोतपारावतविमलकमयूरग्रीवावर्णाः [3] सस्यकगोमेदकगुडमत्स्यण्डिकावर्णाः कोविदारपद्मपाटलीकलायक्षौमातसीपुष्पवर्णाः ससीसाः साञ्जनाः [4] विस्राः, भिन्नाः श्वेताभाः कृष्णाः कृष्णाभाः श्वेताः, सर्वे वा लेखाबिन्दुचित्राः मृदवो ध्मायमाना न स्फुटन्ति बहुफेनधूमाश्च रूप्यधातवः ।

[धातुसामान्ये गुरुत्वानुगुण्येन साराधिक्यम्,
अशुद्धधातुशोधनक्रमश्च]

सर्वधातूनां गौरववृद्धौ सत्त्ववृद्धिः । तेषामशुद्धाः मूढगर्भा वा [5] तीक्ष्णमूत्रक्षारभाविताः राजवृक्षवटपीलुगोपित्तरोचनामहिषखरकर(भ)टमूत्र[6] लण्डपिण्डबद्धाः [7] तत्प्रतीवापाः तदवलेपा वा विशुद्धाः [8] स्रवन्ति ॥

---

[1] विदारितास्सन्तः. [2] चूर्णीकृत्य प्रक्षेपः प्रतीवापः. [3] मत्स्यण्डिका शर्कराभेदः. [4] दुर्गन्धाः. स्वदोषादप्रकाशमानसत्त्वाः. [5] तीक्ष्णमूत्रं-नरमूत्रम्, गोगजाश्वगर्दभच्छागमूत्रं वा. [6] लण्डः-पुरीषम्. [7] राजवृक्षादि चूर्णप्रक्षेपविशिष्टाः. [8] सत्त्वं उद्गिरन्ति.

[सुवर्णरूप्ययोः मार्दवोपजनकप्रकारद्वयम्,
मार्दवविलोपनप्रकारश्च]

यवमाषतिलपलाशपीलुक्षारैः[1] गोक्षीराजक्षीरैर्वा कदलीवज्र कन्दप्रतीवापो मार्दवकरः ।

मधुमधुकमजापयः सतैलं
[2]घृतगुडकिण्वयुतं सकन्दलीकम् ।
यदपि [3]शतसहस्रधा विभिन्नं
भवति मृदु त्रिभिरेव तन्निषेकैः ॥ ८२ ॥

गोदन्तशृङ्गप्रतीवापो मृदुस्तम्भनः ।

[ताम्रसीसत्रपूणां हेतुभूताः धातवः, तद्वर्णाश्च]

[4]भारिकः स्निग्धो मृदुश्च प्रस्तरधातु[5]र्भूमिभागो वा पिङ्गलो हरितः पाटलो लोहितो वा ताम्रधातुः। काकमेचकः कपोतरोचनावर्णः श्वेतराजिनद्धो वा विस्रस्सीसधातुः । [6]ऊषरकर्बुरः पक्वलोष्टवर्णो वा त्रपुधातुः।

[अयोवैकृन्तकयोः हेतुभूताः धातवः,
मणिधातवश्च]

[7]कुरुम्बः पाण्डुरोहितस्सिन्दुवारपुष्पवर्णो वा तीक्ष्णधातुः। काण्ड[8]भुजपत्रवर्णो वा [9]वैकृन्तकधातुः। अच्छः स्निग्धः सप्रभो घोषवान् शीततीव्रस्तनुरागश्च मणिधातुः ॥

[आकरोत्पन्नद्रव्याणां सदुपयोगविधिः,
आकरकर्मणां प्रवर्तनक्रमश्च]

धातुसमुत्थितं तज्जातकर्मान्तेषु प्रयोजयेत्। कृतभाण्डव्यवहारमेकमुखम्, अत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृणां स्थापयेत्। आकरिकमपहरन्तमष्टगुणं दापयेदन्यत्र रत्नेभ्यः। स्तेनमनिसृष्टोपजीविनं च बद्ध्वा कर्म कारयेत्, [10]दण्डोपकारिणं च ।

---

[1] क्षारं=भस्म. [2] किण्वः=सुराबीजम्. [3] अतिकठिनमपीति भावः. [4] गुरुः. [5] भूमिधातुः. [6] ऊषरप्रदेशवत् आपाण्डुः. [7] श्लक्ष्णपाषाणप्रायः. [8] भूर्जपत्रम्. [9] वैकृन्तकः लोहविशेषः [10] अदत्तदण्डम्.

व्ययक्रियाभारिकमाकरं [2] भागकेन प्रक्रयेण वा दद्यात्, लाघविकमात्मना कारयेत्।

[लोहोत्पादनतत्क्रयविक्रयाणां लोहाध्यक्षकर्तव्यता]

लोहाध्यक्षः ताम्रसीसत्रपुवैकृन्तकारकूटवृत्तकंसताललोहकर्मान्तान् कारयेत्। लोहभाण्डव्यवहारं च।

[विविधप्रमाणयोगेन नाणकादिनिर्माणस्य टङ्कशालाध्यक्षकर्तव्यता]

लक्षणाध्यक्षः चतुर्भागताम्रं रूप्यरूपं तीक्ष्णत्रपुसीसाञ्जनानामन्यतमं माषबीजयुक्तं कारयेत्, पणमर्धपणं पादमष्टभागमिति, पादाजीवं ताम्ररूपं माषकमर्धमाषकं काकणीमर्धकाकणीमिति।

[नाणकप्रचारव्यवस्थाया रूपपरीक्षककर्तव्यता, तत्तद्देयांशाः, चोराणां दण्डश्च]

रूपदर्शकः पणयात्रां व्यावहारिकीं कोशप्रवेश्यां च स्थापयेत्। रूपिकमष्टकं शतं, पञ्चकं शतं व्याजीं, पारीक्षिकमष्टभागिकं शतं; पञ्चविंशतिपणमत्ययं चान्यत्र कर्तृक्रेतृविक्रेतृपरीक्षितृभ्यः॥

[स्वर्णाद्याकराध्यक्षकर्तव्यानि]

खन्यध्यक्षः शङ्खवज्रमणिमुक्ताप्रवालक्षारकर्मान्तान् कारयेत् पणनव्यवहारं च॥

[लवणाध्यक्षकर्तव्यसङ्ग्रहः]

लवणाध्यक्षः [3] पाकमुक्तं लवणभागं प्रक्रयं च यथाकालं सङ्गृह्णीयात्, विक्रयाच्च मूल्यं रूपं व्याजीं च। आगन्तुलवणं षड्भागं दद्यात्। दत्तभागविभागस्य विक्रयः। पञ्चकं शतं व्याजीं,

---

[1] बहुधनप्रयत्नाभ्यां साध्यम्. [2] राजदेयांशभागनिर्णयेन. [3] निष्पन्नम्.

रूपं, रूपिकं च। क्रेता शुल्कं, राजपण्यच्छेदानुरूपं च वैधरणं दद्यात्, अन्यत्रक्रेता षट्छतमत्ययं च। [1]विलवणमुत्तमं दण्डं दद्यात्, [2]अनिसृष्टोपजीवी च अन्यत्र वानप्रस्थेभ्यः। श्रोत्रियास्तपस्विनो विष्टयश्च भक्तलवणं हरेयुः। अतोऽन्यो लवणक्षारवर्गः शुल्कं दद्यात्।

[आकरेषु प्रधानद्रव्यसङ्ग्रहस्य
सर्वार्थसाधकता]

एवं मूल्यं विभागं च व्याजीं परिघमत्ययम्।
शुल्कं वैधरणं दण्डं रूपं रूपिकमेव च ॥ ८३ ॥
खनिभ्यो द्वादशविधं धातुं पण्यं च संहरेत्।
एवं सर्वेषु पण्येषु स्थापयेन्मुखसङ्ग्रहम् ॥ ८४ ॥
आकरप्रभवः कोशः कोशाद्दण्डः प्रजायते।
पृथिवी कोशदण्डाभ्यां प्राप्यते कोशभूषणा ॥ ८५ ॥

इत्यध्यक्षप्रचारे आकरकर्मान्तप्रवर्तनं द्वादशोऽध्यायः
आदितः त्रयस्त्रिंशः

---

# एकत्रिंशं प्रकरणम्

## [3]अक्षशालायां सुवर्णाध्यक्षः

### त्रयोदशोऽध्यायः

---

[भूषणाद्युपकरणनिर्माणशालावश्यकता
सौवर्णिकगुणाश्च]

सुवर्णाध्यक्षः सुवर्णरजतकर्मान्तानां [4]असम्बन्धावेशनचतुश्शालां एकद्वारां अक्षशालां कारयेत्। [5]विशिखामध्ये सौवर्णिकं शिल्पवन्तमभिजातं प्रात्ययिकं च स्थापयेत्।

---

[1] द्विलवणमिति मातृकायाम्, विलवणं विलादिमिश्रितम् इति व्याख्यायां, कृतकलवणमिश्रितमित्यर्थः. [2] राजाननुमत्यैव लवणोत्पादकः. [3] सुवर्णादिपरिकर्मस्थाने. [4] परस्परासंश्लिष्टं शिल्पशालाचतुष्टयम्. [5] रथ्यामध्ये.

[देशवर्णयोः भेदेन सुवर्णस्य पाञ्चविध्यम्,
योनिभेदगुणभेदयोः त्रैविध्यं च]

जाम्बूनदं शातकुम्भं हाटकं वैणवं शृङ्गिशुक्तिजं; [1]जातरूपं रसविद्धं आकरोद्गतं च सुवर्णम्। किञ्जल्कवर्णं मृदु स्निग्धं अनुनादि भ्राजिष्णु च श्रेष्ठम्। रक्तपीतकं मध्यम्। रक्तमवरम्।

[द्रव्यान्तरमिश्रिताकरोत्पन्नयोः
सुवर्णयोः शोधनप्रकारः]

श्रेष्ठानां पाण्डु श्वेतं च [2]अप्राप्तकं। तत् येनाप्राप्तकं तच्चतुर्गुणेन सीसेन शोधयेत्। सीसान्वयेन भिद्यमानं [3]शुष्कपटलैर्ध्मापयेत्। रूक्षत्वाद्भिद्यमानं तैलगोमये निषेचयेत्। आकरोद्गतं सीसान्वयेन भिद्यमानं [4]पाकपत्राणि कृत्वा [5]गण्डिकासु कुट्टयेत् कन्दलीवज्रकन्दकल्के वा निषेचयेत्।

[रूप्यस्य चतुर्धा विभागः, तत्र उत्तमादेः
लक्षणम्, शोधनक्रमश्च]

[6]तुत्थोद्गतं गौडिकं काम्बुकं चाक्रवालिकम् च रूप्यम्। श्वेतं स्निग्धं मृदु च श्रेष्ठम्। विपर्यये स्फोटनं च दुष्टम्। तत् सीसचतुर्भागेन शोधयेत्। [7]उद्गतचूलिकं अच्छं भ्राजिष्णु दधिवर्णं च शुद्धम्।

[शुद्धस्य सुवर्णस्य षोडशवर्णकाः]

शुद्धस्यैको हारिद्रस्य सुवर्णो वर्णकः। [8]ततश्शुल्वकाकण्युत्तरापसारिता आचतुस्सीमान्तादिति षोडशवर्णकाः।

---

[1] स्वतः उत्पन्नम्. [2] अशुद्धतां गतम्. [3] शुष्कारण्यगोमयैः. [4] कृशपत्राणि. [5] काष्ठफलकेषु. [6] तुत्थोद्गतं गौलिकं काममलं कबकम् इति पा. [7] उद्गतबुद्बुदम्. [8] शुद्धे सुवर्णे षोडशमाषप्रमाणे माषचतुर्भागमपहाय तत्स्थाने तावतस्ताम्रभागस्य प्रक्षेपणे एको वर्णकः, एवं माषचतुष्टयपरिमाणपर्यन्तं पादशः आधिक्येन सुवर्णभागमपहाय तत्स्थाने ताम्रमिश्रणे सति षोडशविधाः सुवर्णवर्णकाः सम्पन्ना भवन्तीति भवाः.

[तेषां निकषैः परीक्षाः, निकषगुणाश्च]

सुवर्णं पूर्वं निकष्य पश्चाद्वर्णिकां निकषयेत्। समरागलेखमनिम्नोन्नते देशे निकषितम्। [1]परिमृदितं [2]परिलीढं [3]नखान्तराद्वा गैरिकेणावचूर्णितं उपधिं विद्यात्। जातिहिङ्गुलकेन पुष्पकासीसेन वा गोमूत्रभावितेन दिग्धेनाग्रहस्तेन संस्पृष्टं सुवर्णं श्वेतीभवति। सकेसरः स्निग्धो मृदुः भ्राजिष्णुश्च निकषरागः श्रेष्ठः॥

[4]कालिङ्गकः तापीपाषाणो वा मुद्गवर्णो निकषः श्रेष्ठः। समरागी विक्रयक्रयहितः। हस्तिच्छविकः सहरितः प्रतिरागी विक्रयहितः। स्थिरः परुषो विषमवर्णश्चाप्रतिरागी क्रयहितः॥

[तेषां छेदैः तापैश्च परीक्षाः]

[5]छेदः चिक्कणः समवर्णः श्लक्ष्णो मृदुर्भ्राजिष्णुश्च श्रेष्ठः। तापे बहिरन्तश्च समः किञ्जल्कवर्णः कारण्डकपुष्पवर्णो वा श्रेष्ठः। श्यावो नीलश्चाप्राप्तकः[6]॥

[रूप्यसुवर्णव्यवहारोपयोग्युन्मानविधिः]

तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः। तेनोपदेशेन रूप्यसुवर्णं दद्यादाददीत च॥

[सुवर्णादिपरिकर्मस्थानरक्षणविधिः]

अक्षशालां अनायुक्तो नोपगच्छेत्। अभिगच्छन् उच्छेद्यः। आयुक्तो वा सरूप्यस्वर्णस्तेनैव [7]जीयेत। विचितवस्त्रहस्तगुह्याः काञ्चनपृषतत्वष्टृतपनीयकारवो ध्मायकचरकपांसुधावकाः प्रविशेयुः निष्कसेयुश्च। सर्वं चैषामुपकरणमनिष्ठिताश्च प्रयोगास्तत्रैवावतिष्ठेरन्। गृहीतं सुवर्णं धृतं च प्रयोगं [8]करणमध्ये दद्यात्। सायं प्रातश्च लक्षितं कर्तृकारयितृमुद्राभ्यां निदध्यात्॥

---

[1] गाढनिकषितम्. इदं वर्णोत्कर्षप्रदर्शकं विक्रेतृकर्म. [2] मृदुनिकषितम्. इदं तु वर्णापकर्षप्रदर्शकं क्रेतृकर्म. [3] नखान्तरगूढनिक्षिप्तगैरिकादिचूर्णमिश्रितम्. [4] कालिङ्गकस्थाली पाषाणो वा इति—क. [5] छिन्नः स्वर्णखण्डः. श्वेत इति पा. [6] अप्राप्तकः—अशुद्धः [7] दण्डयेत. [8] साक्षिभूतानां राजलेखकानां मध्ये.

[तत्र प्रवर्तयितव्यानां कर्मणां भेदाः, विवरणं च]

क्षेपणो गुणः क्षुद्रकमिति कर्माणि। क्षेपणः [1]काचार्पणादीनि, गुणः सूत्रवानादीनि, घनं सुषिरं पृषतादियुक्तं क्षुद्रकमिति॥

[शुद्धमिश्रमणिसंयोजनयोः विधिः]

अर्पयेत् काचकर्मणः पञ्चभागं काञ्चनं दशभागं [2]मानम्। ताम्रपादयुक्तं रूप्यं रूप्यपादयुक्तं वा सुवर्णं संस्कृतं तस्माद्रक्षेत्। पृषतकाचकर्मणः त्रयो हि भागाः [3]परिभाण्डं, द्वौ [4]वास्तुकं; चत्वारो वा वास्तुकं त्रयः परिभाण्डम्॥

[संयोजनावलेपनवासनानां तक्षकर्मणां विधिः]

त्वष्टृकर्मणः—शुल्बभाण्डं समसुवर्णेन संव्यूहयेत्। रूप्यभाण्डं घनं घनसुषिरं वा सुवर्णार्धेन अवलेपयेत्। चतुर्भागसुवर्णं वालुकाहिङ्गुलुकस्य रसेन चूर्णेन वा वासयेत्॥

[नीलपीतादिवर्णप्रकृतिभूतानां स्वर्णानां रजतानां च निर्देशः, अशुद्धानां तेषां शुद्धिक्रमः, तत्तद्वर्णोत्पादनरीतयश्च]

तपनीयं ज्येष्ठं सुवर्णं सुरागं, समसीसातिक्रान्तं पाकपत्रपक्वं सैन्धविकयोज्ज्वालितं [5]नीलपीतश्वेतहरितशुकपोतवर्णानां प्रकृतिर्भवति। तीक्ष्णं चास्य मयूरग्रीवाभं श्वेतभङ्गं चिमिचिमायितं पीतचूर्णितं, काकणिकस्सुवर्णरागः। तारमुपशुद्धं वा। [6]अस्थितुत्थे चतुः, समसीसे चतुः, शुष्कतुत्थे चतुः, कपाले त्रिः, गोमये द्विः, एवं सप्तदशतुत्थातिक्रान्तं सैन्धविकयोज्ज्वालितम्। एतस्मात्काकण्युत्तरं आद्विमाषादिति सुवर्णे देयं, पश्चाद्रागयोगः,

---

[1] मणिसंयोजनादीनि. [2] करमानं इति, कटकमानं इति, कटुमानमिति च पाठान्तराणि. मणिदार्ढ्यार्थः वास्तुकोपरि सुवर्णपट्टिकाबन्धः कटुमानमिति, ग. [3] पद्मस्वस्तिकाद्याकारं पृषतमणिपरिवापस्थानम्. [4] आधारपीठबन्धः. [5] नीललोहितपीतश्वेतशुकपत्रवर्णानाम्—पा. [6] अस्थिचूर्णयुक्तमृत्तिकानिर्मितायां मूषायां चतुर्वारान्. एवं अग्रेऽपि.

श्वेततारं भवति। अर्थोऽशाः तपनीयस्य द्वात्रिंशद्भागश्वेततारमूर्छितं सत् श्वेतलोहितकं भवति। ताम्रं पीतकं करोति। तपनीयमुज्ज्वाल्य रागत्रिभागं दद्यात्। पीतरागं भवति। श्वेततारभागौ द्वावेकस्तपनीयस्य मुद्गवर्णं करोति। कालायसस्यार्धभागाभ्यक्तं कृष्णं भवति। [1]प्रतिलेपिना रसेन द्विगुणाभ्यक्तं तपनीयं शुकपत्रवर्णं भवति। तस्यारम्भे रागविशेषेषु प्रतिवर्णिकां गृह्णीयात्। तीक्ष्णताम्रसंस्कारं च बुद्ध्येत, [2]तस्माद्वज्रमणिमुक्ताप्रवालरूपाणां [3]अपनेयिमानं च रूप्यसुवर्णभाण्डबन्धप्रमाणानि चेति ॥

[चतुर्दशानां कनकगुणानां निर्देशः]

[4]समरागं समद्वन्द्वं असक्तपृषतं स्थिरम्।
[5]सुविमृष्टं [6]असंवीतं विभक्तं धारणे सुखम् ॥ ८६ ॥
अभिनीतं प्रभायुक्तं [7]संस्थानमधुरं समम्।
मनोनेत्राभिरामं च तपनीयगुणाः स्मृताः ॥ ८७ ॥

इत्यध्यक्षप्रचारे अक्षशालायां सुवर्णाध्यक्षस्त्रयोदशोऽध्यायः
आदितश्चतुस्त्रिंशः

---

# द्वात्रिंशं प्रकरणम्
## विशिखायां सौवर्णिकप्रचारः
### चतुर्दशोऽध्यायः

---

[निर्दिष्टकालाद्यतिक्रमे दण्डविधानेन रजतस्वर्णसंबन्धिशिल्पप्रवर्तनविधिः]

सौवर्णिकः पौरजानपदानां रूप्यसुवर्णं [7]आवेशनिभिः कारयेत्। निर्दिष्टकालकार्यं च कर्म कुर्युः, [8]अनिर्दिष्टकालं कार्यापदेशम्।

---

[1] द्रवीकृतेन. [2] उक्तेनैव हेतुना. [3] असारमिश्रणेन सारपरिवर्तनपूर्वकं हरणप्रकारं च. [4] असंसक्तगुटिकम्. [5] सुप्रमृष्टं इति, अप्रमृष्टमिति च पा. [6] असम्पीतम् पा. [7] आकृतिरमणीयम्. [7] शिल्पशालीयैः सुवर्णकारादिभिः. [8] क्रियागौरवसत्त्वे प्रतिनिवर्तनकालादिनिर्देशो नावश्यकः इति भावः.

कार्यस्यान्यथाकरणे वेतननाशः तद्द्विगुणश्च दण्डः। कालातिपातने पादहीनं वेतनं तद्द्विगुणश्च दण्डः॥

[संस्कारार्थमर्पितसुवर्णादेः प्रतिग्रहकाले वर्णादिपरीक्षावश्यकता]

यथावर्णप्रमाणं निक्षेपं गृह्णीयुः तथाविधमेवार्पयेयुः। कालान्तरादपि च तथाविधमेव प्रतिगृह्णीयुः अन्यत्र क्षीणपरिशीर्णाभ्याम्। आवेशनिभिः [1]सुवर्णपुद्गललक्षणप्रयोगेषु तत्तज्जानीयात्।

[संस्कारसमये न्यूनीभावार्हाः भागाः]

तप्तकलधौतकयोः काकणिकः सुवर्णे क्षयो देयः। तीक्ष्णकाकणी रूप्यद्विगुणो रागप्रक्षेपः तस्य षड्भागः क्षयः॥

[वर्णादिह्रापकानां अमार्गव्यवहारिणां च दण्डाः]

वर्णहीने माषावरे पूर्वस्साहसदण्डः, प्रमाणहीने मध्यमः, तुलाप्रतिमानोपधावुत्तमः, कृतभाण्डोपधौ च। सौवर्णिकेनादृष्टमन्यत्र वा प्रयोगं कारयतो द्वादशपणो दण्डः; कर्तुर्द्विगुणः, सापसारश्चेत्। अनपसारः कण्टकशोधनाय नीयेत। कर्तुश्च द्विशतो दण्डः पणच्छेदनं वा। तुलाप्रतिमानभाण्डं पौतवहस्तात्क्रीणीयुः, अन्यथा द्वादश पणो दण्डः॥

[षड्विधानि शिल्पिकर्माणि, पञ्चापहरणोपायाश्च]

[2]घनं घनसुषिरं संयूह्यं अवलेप्यं सङ्घात्यं वासितकं च कारुकर्म। तुलाविषमं अपसारणं विस्रावणं पेटको पिङ्कश्चेति हरणोपायाः।

---

[1] सुवर्णं किञ्जल्कवर्णादि, पुद्गलं आभरणादि, लक्षणं चिह्नितम्, प्रयोगः परिवर्तनमिति व्याख्या. [2] यथाक्रमं अङ्गुलीयकादि, भृङ्गारकादि, स्थालपत्रयोजनम्, लघुपत्रयोजनम् कटिसूत्रादि, रसादिना वासितं च पदार्थाः.

[तत्र तुलाविषमम्]

[1] सन्नामिनी उत्कीर्णिका भिन्नमस्तका उपकण्ठी कुशिक्या सकटुकक्ष्या पारिवेल्ली अयस्कान्ता च दुष्टतुलाः ॥

[असारद्रव्यप्रक्षेपेण अपसारितसारद्रव्याणि
चतुर्विधानि, सारद्रव्यापहरणमार्गाश्च]

रूप्यस्य द्वौ भागावेकः शुल्बस्य त्रिपुटकं। तेनाकरोद्गतमपसार्यते तत्त्रिपुटकापसारितं; शुल्बेन शुल्बापसारितं; वेल्लकेन वेल्लकापसारितं; शुल्बार्धसारेण हेम्ना हेमापसारितम्।

मूकमूषा पूतिकिट्टः करटकमुखं नाली सन्दंशो जोङ्गनी सुवर्चिका लवणं तदेव सुवर्णमित्यपसारणमार्गाः।

पूर्वप्रणिहिता वा पिण्डवालुकाः मूषाभेदादग्निष्ठा उद्ध्रियन्ते।

[विस्रावणम्]

पश्चाद्बन्धने आचितकपत्रपरीक्षायां वा रूप्यरूपेण परिवर्तनं विस्रावणम्, पिण्डवालुकानां लोहपिण्डवालुकाभिर्वा।

[पेटकः, तत्परीक्षाश्च]

गाढश्चाभ्युद्धार्यश्च पेटकः संयूह्यावलेप्यसङ्घात्येषु क्रियते। सीसरूपं सुवर्णपत्रेणावलिप्तमभ्यन्तरमष्टकेन बद्धं गाढपेटकः। स एव पटलसम्पुटेष्वभ्युद्धार्यः। पत्रमाश्लिष्टं यमकपत्रं वावलेप्येषु क्रियते। शुल्बं तारं वा गर्भः पत्राणाम्। सङ्घात्येषु क्रियते शुल्बरूपं सुवर्णपत्रसंहतं प्रमृष्टं सुपार्श्वम्। तदेव यमकपत्रसंहतं प्रमृष्टम्। ताम्रताररूपं चोत्तरवर्णकः।

तदुभयं तापनिकषाभ्यां निश्शब्दोल्लेखनाभ्यां वा विद्यात्। अभ्युद्धार्यं बदराम्ले लवणोदके वा सादयन्ति—इति पेटकः।

---

[1] यथाक्रमं मृदुलोहनिर्मिता, यथाकामं नाम्या, चूर्णादिपूरिताभ्यन्तरसुषिरा, सरन्ध्राग्रा, ग्रन्थिबहुला, कुत्सितशिक्या, अप्रवणसूत्रा, परिचलवर्ती, अयस्कान्तनिर्मिता चेति पदार्थाः.

[पिङ्कः तत्परीक्षाश्च]

घनसुषिरे वा रूपे सुवर्णमृन्मालुकाहिङ्गुलुककल्को वा तप्तोऽवतिष्ठते ; दृढवास्तुके वा रूपे वालुकामिश्रजतुगान्धारपङ्को वा तप्तोऽवतिष्ठते । तयोस्तापनमवध्वंसनं विशुद्धिः । सपरिभाण्डे वा रूपे लवणमुल्कया कटुशर्करया तप्तमवतिष्ठते । तस्य क्राथनं शुद्धिः । अभ्रपटलमष्टकेन द्विगुणवास्तुके वा रूपे बध्यते तस्यापिहितकाचकस्योदके निमज्जत एकदेशः सीदति, पटलान्तरेषु वा सूच्या भिद्यते । मणयो रूप्यं सुवर्णं वा घनसुषिराणां पिङ्कः । तस्य तापनमवध्वंसनं वा शुद्धिः—इति पिङ्कः ॥

[अपहरणावकाशनिरोधाय जात्यादि-
ज्ञानस्यावश्यकता]

तस्माद्वज्रमणिमुक्ताप्रवालरूपाणां जातिरूपवर्णप्रमाणपुद्गल-लक्षणान्युपलभेत ॥

[भूषणादिपरीक्षासमये नवीकरणसमये च
संभाविताः अपहरणोपायाः चत्वारः]

कृतभाण्डपरीक्षायां पुराणभाण्डप्रतिसंस्कारे वा चत्वारो हरणोपायाः—परिकुट्टनं अवच्छेदनं उल्लेखनं परिमर्दनं वा ॥

पेटकापदेशेन पृषतं गुणं पिटकां वा यत् [1]परिशातयन्ति तत्परिकुट्टनम् । यद्द्विगुणं वास्तुकानां वा रूपे सीसरूपं प्रक्षिप्य अभ्यन्तरमवच्छिन्दन्ति तदवच्छेदनम् । यत् घनानां तीक्ष्णेनोल्लिखन्ति तदुल्लेखनम् । हरितालमनःशिलाहिङ्गुलुकचूर्णानामन्यतमेन कुरुविन्दचूर्णेन वा वस्त्रं संयूह्य यत् परिमृद्नन्ति तत् परिमर्दनम् । तेन सौवर्णराजतानि भाण्डानि क्षीयन्ते । न चैषां किञ्चिदवरुग्णं भवति ॥

[परिकुट्टनादिसमयपातितद्रव्यपरि-
माणेयत्तानिर्णयोपायः]

भग्नखण्डघृष्टानां संयूह्यानां सदृशेनानुमानं कुर्यात् । अवलेप्यानां यावदुत्पाटितं तावदुत्पाट्यानुमानं कुर्यात् । विरूपाणां वा तापनमुदकपेषणं च बहुशः कुर्यात् ॥

---

[1] पातयन्तीत्यर्थः.

[अन्ये सप्तदश हरणोपायाः]

अवक्षेपः प्रतिमानमग्निर्गण्डिका भण्डिकाधिकारिणी पिञ्छः सूत्रं चेल्लं बोल्लनं शिर उत्सङ्गो माक्षिका स्वकायेक्षा दृतिरुदकशरावमग्निष्ठमिति [1]काचं विद्यात् ॥

[राजतेषु दुष्टानि]

राजतानां विस्रं मलग्राहि परुषं प्रस्तीनं (प्रस्तीतं) विवर्णं वा दुष्टमिति विद्यात् ॥

[निगमनम्]

एवं नवं च जीर्णं च विरूपं चापि भाण्डकम् ।
परीक्षतात्ययं चैषां यथोद्दिष्टं प्रकल्पयेत् ॥ ८८ ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे विशिखायां सौवर्णिकप्रचारः चतुर्दशोऽध्यायः

आदितः पञ्चत्रिंशः.

---

# त्रयस्त्रिंशं प्रकरणम्

## [2]कोष्ठागाराध्यक्षः

### पञ्चदशोऽध्यायः

---

[धान्याद्यध्यक्षचिन्तनीयाः दशांशाः]

कोष्ठागाराध्यक्षः सीताराष्ट्रक्रयिमपरिवर्तकप्रामित्यकापमित्यकसिंहनिकाऽन्यजातव्ययप्रत्यायोपस्थानान्युपलभेत ॥

[तेषां यथोद्देशं विवरणम्]

सीताध्यक्षोपनीतः सस्यवर्णकस्सीता । पिण्डकरः, षड्भागः, सेनाभक्तं, बलिः, करः, उत्सङ्गः, पार्श्वं, पारिहीणिकं, औपायनिकं, कौष्ठेयकं च राष्ट्रम् । धान्यमूल्यं, कोशनिर्हारः, प्रयोगप्रत्यादानं

---

[1] काचं–अपहरणोपायम्. [2] कोष्ठं–उदरं, तदुपयोगिनां धान्यादीनां निक्षेपस्थानं कोष्ठागारः.

च क्रयिमम् । सस्यवर्णानामर्घान्तरेण विनिमयः परिवर्तकः । सस्ययाचनमन्यतः प्रामित्यकम् । तदेव प्रतिदानार्थमापमित्यकम् । कुट्टकरोचकसक्तुशुक्तापिष्टकर्म तज्जीवनेषु तैलपीडनमौरभ्रचाक्रिकेष्विक्षूणां च क्षारकर्म सिंहनिका । नष्टप्रस्मृतादिरन्यजातः । विक्षेपव्याधितान्तरारम्भशेषं च व्ययप्रत्यायः । तुलामानान्तरं हस्तपूरणमुत्करो व्याजी । पर्युषितं प्रार्जितं चोपस्थानमिति ॥

[धान्यादिवर्गाणां विवरणम्]

धान्यस्नेहक्षारलवणानां धान्यकल्पं सीताध्यक्षे वक्ष्यामः । सर्पिस्तैलवसामज्जानः स्नेहाः । फाणितगुड[1]मत्स्यण्डिकाखण्डशर्कराः क्षारवर्गः । सैन्धवसामुद्रबिडयवक्षारसौवर्चलोद्भेदजाः लवणवर्गः । क्षौद्रं मार्द्वीकं च मधु । इक्षुरसगुलमधुफाणितजाम्बवपनसानामन्यतमो मेषशृङ्गीपिप्पलीक्वाथाभिषुतो मासिकष्षाण्मासिकस्सांवत्सरिको वा चिङ्भिटोर्वारुकेक्षुकाण्डाम्रफलामलकावसुतः शुद्धो वा शुक्तवर्गः । वृक्षाम्लकरमर्दाम्रविदलामलकमातुलुङ्गकोलबदरसौवीरकपरूषकादिः फलाम्लवर्गः । दधिधान्याम्लादिः द्रवाम्लवर्गः । पिप्पलीमरिचशृङ्गिबेराजाजीकिराततिक्तगौरसर्षपकुस्तुम्बुरुचोरकदमनकमरुवकशिग्रुकाण्डादिः कटुकवर्गः । शुष्कमत्स्यमांसकन्दमूलफलशाकादि च शाकवर्गः ॥

[स्नेहादिवर्गोपयोगव्यवस्थाः]

ततोऽर्धमापदर्थं जानपदानां स्थापयेत्, अर्धमुपयुञ्जीत । नवेन चानवं शोधयेत् ॥

[द्रव्याणां क्षोदघर्षणादिसंस्कारसमये वृद्धि-
क्षयार्हभागानामियत्तानिर्देशः]

क्षुण्णघृष्टपिष्टभृष्टानामार्द्रशुष्कसिद्धानां च धान्यानां वृद्धिक्षयप्रमाणानि प्रत्यक्षीकुर्वीत । कोद्रवव्रीहीणामर्धं सारः । शालीनामष्टभागोनः । त्रिभागोनो वरकाणाम् । प्रियङ्गूणामर्धं सारः नवभागवृद्धिश्च । उदारकस्तुल्यः । यवा गोधूमाश्च क्षुण्णाः । तिला यवा

[1] गुडशर्करयोः मध्यमावस्था मत्स्यण्डिका.

मुद्गमाषाश्च घृष्टाः। पञ्चभागवृद्धिर्गोधूमः सक्तवश्च। पादोना कलायचमसी। मुद्गमाषाणामर्धपादोनः। शैब्यानामर्धं सारः। त्रिभागोनः मसूराणाम्। पिष्टमामं कुल्माषाश्चाध्यर्धगुणाः। द्विगुणो यावकः। पुलाकः पिष्टं च सिद्धम्। कोद्रववरकोदारकप्रियङ्गूणां त्रिगुणमन्नं, चतुर्गुणं व्रीहीणाम्, पञ्चगुणं शालीनाम्। [1]तिमितं अपरान्नं द्विगुणमर्धाधिकं विरूढानाम्। पञ्चभाग-वृद्धिः भृष्टानाम्। कलायो द्विगुणः, लाजा भरुजाश्च। षट्कं तैलमतसीनाम्। निम्बकुशाम्रकपित्थादीनां पञ्चभागः। चतुर्भागि-कास्तिलकुसुम्भमधूकेङ्गुदीस्नेहाः। कार्पासक्षौमाणां पञ्चपले पल-सूत्रम्॥

[कक्ष्यानुगुण्येन तत्तदभ्यवहार्याः तण्डुलादिभेदाः]

पञ्चद्रोणे शालीनां च दशाढकं तण्डुलानां कलभभोजनम्, एकादशकं व्यालानाम्, दशकं औपवाह्यानां, नवकं सान्नाह्या-नाम्, अष्टकं पत्तीनाम्, सप्तकं मुख्यानाम्, षट्कं देवीकुमारा-णाम्, पञ्चकं राज्ञाम्। अखण्डपरिशुद्धानां वा तण्डुलानां प्रस्थः। चतुर्भागस्सूपः, सूपषोडशो लवणस्यांशः, चतुर्भागस्सर्पिषस्तैलस्य वा, एकं [2]आर्यभक्तम्। प्रस्थषड्भागस्सूपः अर्धस्नेहमवराणाम्, पादोनं स्त्रीणाम्। अर्धं बालानाम्॥

[मांससंस्कारे संयोजनीयस्नेहादिव्यवस्था:]

मांसपलविंशत्या स्नेहार्धकुडुबः, पलिको लवणस्यांशः, क्षारपलयोगः, द्विधरणिकः कटुकयोगः, दध्नश्चार्धप्रस्थः। तेनोत्तरं व्याख्यातम्। शाकानामध्यर्धगुणः, शुष्काणां द्विगुणः स चैव योगः॥

[हस्त्याद्याहारपरिमाणव्यवस्थाः]

हस्त्यश्वयोस्तदध्यक्षे विधाप्रमाणं वक्ष्यामः। बलीवर्दानां माषद्रोणं यवानां वा पुलाकः, शेषमश्वावधानम्। विशेषो घाण-पिण्याकतुला कणकुण्डकं दशाढकं वा। द्विगुणं महिषोष्ट्राणाम्।

---

[1] लवनाद्यवसरे केदारादौ आर्द्रीकृतव्रीह्याद्यन्नम्. [2] मध्यमप्रतिपत्तिकस्य पुरुषस्य भोजनम्.

अर्धद्रोणं खरपृषतरोहितानाम्। आढकमेणकुरङ्गाणाम्। अर्धाढकमजैलकवराहाणां द्विगुणं वा [1]आकण्ठकुण्डकम्। प्रस्थौदनश्शुनाम्। हंसक्रौञ्चमयूराणामर्धप्रस्थः। शेषाणामतो मृगपशुपक्षिव्यालानां [2]एकभक्तादनुमानं ग्राहयेत्॥

[अङ्गारतुषकणानां विनियोगः]

अङ्गरान् तुषान् लोहकर्मान्तभित्तिलेप्यानां [3]हारयेत्।

[4]कणिकाः दासकर्मकरसूपकाराणां, अतोऽन्यदौदनिकापूपिकेभ्यः प्रयच्छेत्।

[पाकशालोपयोगीन्युपकरणानि]

तुलामानभाण्डं रोचनीदृषन्मुसलोलूखलकुट्टकरोचकयन्त्रपत्रकशूर्पचालनिका[5]कण्डोलीपिटकसंमार्जन्यश्चोपकरणानि।

[विष्टिसंज्ञकाः केचन कर्मकराः]

मार्जकारक्षकधारकमायकमापकदायकदापकशलाकाप्रतिग्राहकदासकर्मकरवर्गश्च विष्टिः॥

[धान्याद्यानुगुण्येन तत्तन्निवेशस्थाननिर्देशः]

उच्चैर्धान्यस्य निक्षेपः, [6]मूताः क्षारस्य संहताः।
[7]मृत्काष्ठकोष्ठाः स्नेहस्य, पृथिवी लवणस्य च॥ ८९॥

इत्यध्यक्षप्रचारे कोष्ठागाराध्यक्षः पञ्चदशोऽध्यायः
आदितष्षट्त्रिंशः

[1] कणकुण्डकम्–ग. [2] एकदिनभुक्तपरीक्षणात्. [3] सन्निनुयात्.
[4] तण्डुलकणान्. [5] कण्डोली—वंशदलादि निर्मितं भाण्डम्. [6] तृणादिबन्धाः.
[7] घृततैलादेः मृद्भाण्डदारुभाण्डादयः निक्षेपस्थानानि इत्यर्थः.

# चतुस्त्रिंशं प्रकरणम्—पण्याध्यक्षः

## षोडशोऽध्यायः

[विक्रेयद्रव्यवैलक्षण्यतदुपयोगकालयोरवश्यज्ञेयता]

पण्याध्यक्षः स्थलजलजानां नानाविधानां पण्यानां स्थलपथवारिपथोपयातानां [1]सारफल्ग्वर्घान्तरं प्रियाप्रियतां च विद्यात्, तथा विक्षेपसंक्षेपक्रयविक्रयप्रयोगकालान्।

[विक्रेयद्रव्यमूल्यविक्रयस्थानलाभादिव्यवस्थाः]

यच्च पण्यं प्रचुरं स्यात्तदेकीकृत्यार्घमारोपयेत्। प्राप्तेऽर्घे वाऽर्घान्तरं कारयेत्। स्वभूमिजानां राजपण्यानामेकमुखं व्यवहारं स्थापयेत्। परभूमिजानामनेकमुखम्। उभयं च प्रजानामनुग्रहेण विक्रापयेत्, [2]स्थूलमपि च लाभं प्रजानामौपघातिकं वारयेत्। [3]अजस्रपण्यानां [4]कालोपरोधं [5]सङ्कुलदोषं वा नोत्पादयेत्। बहुमुखं वा राजपण्यं वैदेहकाः कृतार्घं विक्रीणीरन्। छेदानुरूपं च [6]वैधरणं दद्युः।

[वणिग्भ्यः आदेयाः राजोपदाः, परदेशीयद्रव्यानयनक्रमाश्च]

षोडशभागो मानव्याजी, विंशतिभागस्तुलामानम्, गण्यपण्यानामेकादशभागः। परभूमिजं पण्यमनुग्रहेणावाहयेत्। नाविकसार्थवाहेभ्यश्च परिहारं [7]आयतिक्षमं दद्यात्। अनभियोगश्चार्थेष्वागन्तूनामन्यत्र सभ्योपकारिभ्यः।

[1] बहुमूल्याल्पमूल्ययोर्द्रव्ययोः मूल्यतारतम्यम्. [2] अत्यधिकम्. [3] क्षीरशाकादीनाम्. [4] सकालेषु विक्रयप्रतिषेधम्. [5] प्राचीनेषु अविक्रीतेष्वेव नवानामानयनम्. [6] छेदप्रतिनिधिम्, [7] उत्तरकालेऽबाधकम्.

[विक्रयलब्धधनरक्षणनिवेदनादयः]

पण्याधिष्ठातारः पण्यमूल्यमेकमुखं काष्ठद्रोण्यामेकच्छिद्रापिधानायां निदध्युः । अह्नश्चाष्टमे भागे पण्याध्यक्षस्यार्पयेयुः— 'इदं विक्रीतमिदं शेषम्' इति । तुलामानभाण्डं चार्पयेयुः । इति स्वविषये व्याख्यातम् ।

[परदेशीयद्रव्यविषये लाभव्यवस्थाः,
स्थलजलमार्गव्यवहाररीतयश्च]

परविषये तु—पण्यप्रतिपण्ययोरर्घं मूल्यं च आगमय्य शुल्कवर्तन्यातिवाहकगुल्मतरदेयभक्तभागव्ययशुद्धमुदयं पश्येत् । असत्युदये भाण्डनिर्वहणेन पण्यप्रतिपण्यार्घेण वा लाभं पश्येत् । ततः [1]सारपादेन स्थलव्यवहारमध्वना क्षेमेण प्रयोजयेत् । अटव्यन्तपालपुरराष्ट्रमुख्यैश्च प्रतिसंसर्गं गच्छेदनुग्रहार्थम् ।

आपदि सारमात्मानं वा मोक्षयेत् । आत्मनो वा भूमिमप्राप्तः सर्वदेयविशुद्धं व्यवहरेत् ॥

वारिपथे च यानभाटकपथ्यदनपण्यप्रतिपण्यार्घप्रमाणयात्राकालभयप्रतीकारपण्यपत्तनचारित्राण्युपलभेत ॥

नदीपथे च विज्ञाय व्यवहारं चरित्रतः ।
यतो लाभस्ततो गच्छेत् अलाभं परिवर्जयेत् ॥ ९० ॥

इत्यध्यक्षप्रचारे पण्याध्यक्षःषोडशोऽध्यायः
आदितस्सप्तत्रिंशः

## पञ्चत्रिंशं प्रकरणम्—कुप्याध्यक्षः

### सप्तदशोऽध्यायः

[आरण्यकद्रव्याध्यक्षकर्तव्यसंग्रहः]

कुप्याध्यक्षो द्रव्यवनपालैः कुप्यमानाययेत् । [2]द्रव्यवनकर्मान्तांश्च प्रयोजयेत् । द्रव्यवनच्छिद्रां च देयमत्ययं च स्थापयेदन्यत्रापद्भ्यः ॥

---

[1] समीक्षितलाभचतुर्थांशव्ययेन. [2] दारुनिर्मेयान् गृहशकटादिकांश्च कारयेत्.

[एतत्प्रकरणप्रतिपाद्येषु कुप्यवर्गेषु
सारदार्वादिवर्गपञ्चकव्युत्पादनं]

कुप्यवर्गः--शाकतिनिशधन्वनार्जुनमधूकातिलकसालाशिंशुपाऽरिमेदराजादनशिरीषखदिरसरलतालसर्जाश्वकर्णसोमवल्ककशाम्रप्रियकधवादिः सारदारुवर्गः। उटजचिमियचववेणुवंशसातिनकण्टकभाल्लूकादिः वेणुवर्गः। वेत्रशोकवल्लीवाशीश्यामलतानागलतादिर्वल्लीवर्गः। मालतीमूर्वार्कशणगवेधुकाऽतस्यादिः वल्कवर्गः॥

[रज्जुनिर्माणलेखनरञ्जनानां साधनानि]

मुञ्जबल्बजादि रज्जुभाण्डम्॥
तालीतालभूर्जानां पत्रम्। किंशुककुसुम्भकुंकुमानां पुष्पम्॥

[औषधवर्गः विषवर्गश्च]

कन्दमूलफलादिरौषधवर्गः॥
कालकूटवत्सनाभहालाहलमेषशृङ्गमुस्ताकुष्ठमहाविषवेल्लितकगौरार्द्रबालकमार्कटहैमवतकालिङ्गकदारदकाङ्कोलसारकोष्ट्रकादीनि विषाणि[1]। [2]सर्पाः कीटाश्च। त एव कुम्भगताः[3]—विषवर्गः॥

[संग्राह्यचर्मादिवर्गः]

गोधासेरकद्वीपिशिंशुमारसिंहव्याघ्रहस्तिमहिषचमरसृमरखड्गगोमृगगवयानां चर्मास्थिपित्तस्नाय्वस्थिदन्तशृङ्गखुरपुच्छानि अन्येषां वाऽपि मृगपशुपक्षिव्यालानाम्॥

[लोहवर्गः भाण्डद्वैविध्यं अङ्गारादेः कुप्यता च]

कालायसताम्रवृत्तकांस्यसीसत्रपुवैकृन्तकारकूटानि लोहानि। [4]विदलमृत्तिकामयं भाण्डम्। अङ्गारतुषभस्मानि मृगपशुपक्षिव्यालीवाटाः काष्ठतृणवाटाश्चेति॥

[1] एतानि स्थावराणि विषाणि. [2] जङ्गमविषाणीति शेषः. [3] संस्कृता इत्युच्यन्ते इति शेषः. [4] वंशवेत्रादिकृतं विदलमयमित्युच्यते.

[द्रव्यवनोपकरणावश्यकता]

बहिरन्तश्च कर्मान्ताः विभक्तास्सर्वभाण्डिकाः ।
आजीवपुररक्षार्थाः कार्याः कुप्योपजीविना ॥९१ ॥

इत्यध्यक्षप्रचारे कुप्याध्यक्षः सप्तदशोऽध्यायः
आदितोऽष्टत्रिंशः.

# षट्त्रिंशं प्रकरणम्–आयुधागाराध्यक्षः

## अष्टादशोऽध्यायः

[योगाक्षेमोपकरणयन्त्रायुधादिसम्पादनं
तद्रक्षणादिक्रमश्च]

आयुधागाराध्यक्षः साङ्ग्रामिकं दौर्गकार्मिकं परपुराभिघातिकं चक्रयन्त्रमायुधमावरणमुपकरणं च तज्जातकारुशिल्पिभिः कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारयेत् । स्वभूमौ च स्थापयेत् । स्थानपरिवर्तनमातपप्रवातप्रदानं च बहुशः कुर्यात् । ऊष्मोपस्नेहक्रिमिभिरुपहन्यमानमन्यथा स्थापयेत् । जातिरूपलक्षणप्रमाणागममूल्यनिक्षेपैश्चोपलभेत ॥

[स्थितचलयन्त्राणां आयुधानां च निर्देशः]

सर्वतोभद्रजामदग्न्यबहुमुखविश्वासघाति[1]सङ्घाटियानकपर्जन्यकार्धबाह्वूर्ध्वबाहूनि स्थितयन्त्राणि । पञ्चालिकदेवदण्डसूकरिकामुसलयष्टिहस्तिवारकतालवृन्तमुद्गरद्रुघणगदास्पृक्तलाकुद्दालास्फोटिमोद्घाटिमोत्पाटिमशतघ्नीत्रिशूलचक्राणि चलयन्त्राणि । शक्तिप्रासकुन्तहाटकभिण्डिवालशूलतोमरवराहकर्णकणयकर्पणत्रासिकादीनि च हलमुखानि ॥

---

[1] सङ्घाटि–दीर्घकाष्ठसङ्घटितं अट्टालकादिप्रदीपनार्थं निर्मितं अग्नियन्त्रम्.

[धनुर्ज्याबाणाः बाणाग्रसन्निवेशभेदाश्च]

ताल[1]चापदारवशार्ङ्गाणि कार्मुककोदण्डद्रूणा धनूंषि। मूर्वाकेशणगवेधुवेणुस्नायूनि ज्याः। वेणुशरशलाकादण्डासननाराचाश्च इषवः। तेषां मुखानि छेदनभेदनताडनानि आयसास्थिदारवाणि॥

[खड्गतन्मुष्टीनां आयुधविशेषाणां च भेदाः]

निस्त्रिंशमण्डलाग्रासियष्टयः खड्गाः। खड्गमहिषवारणविषाणदारुवेणुमूलानि त्सरवः। परशुकुठारपट्टसखनित्रकुद्दालक्रकचकाण्डच्छेदनाः क्षुरकल्पाः। यन्त्रगोष्पणमुष्टिपाषाणरोचनीदृषदश्च आयुधानि॥

[कवचभेदाः उपकरणभेदाश्च]

लोहजालजालिकापट्टकवचसूत्रकङ्कटाशिंशुमारकखड्गिधेनुकहस्तिगोचर्मखुरशृङ्गसङ्घातं वर्माणि, शिरस्त्राणकण्ठत्राणकूर्पासकञ्चुकवारवाणपट्टनागोदारिकाः, पेटीचर्महस्तिकर्णतालमूलधमनिकाकवाटाकिटिकाप्रतिहतवलाहकान्ताश्च आवरणानि। हस्तिरथवाजिनां योग्याभाण्डमालङ्कारिकं सन्नाहकल्पनाश्चोपकरणानि। ऐन्द्रजालिकमौपनिषदिकं च कर्म॥

[आयुधाध्यक्षपर्यालोचनीयार्थसंग्रहः]

कर्मान्तानां च—

इच्छामारम्भनिष्पत्तिं प्रयोगं व्याजमुद्दयम्[2]।
क्षयव्ययौ च जानीयात् कुप्यानामायुधेश्वरः॥ ९२॥

इत्यध्यक्षप्रचारे आयुधागाराध्यक्षः अष्टादशोऽध्यायः
आदित एकोनचत्वारिंशः

[1] चापं–वेणुनिर्मितम्. [2] व्याजः=दोषः. उद्दयः=लाभः. दोषं लाभं चेत्यर्थः। व्याजिमुद्धमं–ख.

# सप्तत्रिंशं प्रकरणम्–[1]तुलामानपौतवम्

## एकोनविंशोऽध्यायः

[सुवर्णरूप्ययोः [2]प्रतिमानभेदाः]

पौतवाध्यक्षः पौतवकर्मान्तान् कारयेत् ।

धान्यमाषा दश सुवर्णमाषकः, पञ्च वा गुञ्जाः । ते षोडश सुवर्णः कर्षो वा । चतुःकर्षं पलम् । अष्टाशीतिर्गौरसर्षपाः रूप्यमाषकः । ते षोडश धरणम्, [3]शैम्ब्यानि वा विंशतिः । विंशतितण्डुलम् वज्रधरणम् । अर्धमाषकः, माषकः, द्वौ, चत्वारः, अष्टौ माषकाः ; सुवर्णः, द्वौ, चत्वारः, अष्टौ सुवर्णाः ; दश, विंशतिः, त्रिंशत्, चत्वारिंशत्, शतमिति । तेन धरणानि व्याख्यातानि ।

[प्रतिमाननिर्माणसाधनानि द्रव्याणि]

प्रतिमानानि अयोमयानि [4]मागधमेकलशैलमयानि, यानि वा नोदकप्रदेहाभ्यां वृद्धिं गच्छेयुरुष्णेन वा ह्रासम् ।

[तुलाभेदाः निर्माणविधानञ्च]

षडङ्गुलादूर्ध्वमष्टाङ्गुलोत्तराः दश तुलाः कारयेल्लोहपलादूर्ध्वमेकपलोत्तराः । यन्त्रमुभयतः शिक्यं वा । पञ्चत्रिंशत्पललोहां द्विसप्तत्यङ्गुलायामां समवृत्तां कारयेत । तस्याः पञ्चपलिकं मण्डलं बद्ध्वा समकरणं कारयेत् । ततः कर्षोत्तरं पलं पलोत्तरं दशपलं, द्वादश, पञ्चदश, विंशतिरिति कारयेत् । ततः आशताद्दशोत्तरं कारयेत्, अक्षेषु [5]नद्धीपिनद्धं कारयेत् । द्विगुणलोहां तुलां अतः

---

[1] तुला=उन्मानसाधनम् (ತ್ರಾಸು). मानम्–प्रस्थकुडुबादि (ಅಳತೆಯ ಸಾಧನ). तयोः पोतुः–शोधकः, तस्य कर्मेत्यर्थः. [2] प्रतिमानं–(ಬೊಟ್ಟು). [3] शिम्बिसंज्ञकाः फलविशेषाः. [4] मगधः मेकलश्च देशविशषौ, तदुत्पन्नशिलानिर्मितानीत्यर्थः. [5] नद्धी–वरत्रा, नान्दीपिनद्धं इति पाठः, तस्य स्वस्तिकमित्यर्थश्च टीकायां दृश्यते.

षण्णवत्यङ्गुलायामां [1]परिमाणीं कारयेत् । तस्याः शतपदादूर्ध्वं विंशतिः, पञ्चाशत्, शतमिति पदानि कारयेत् ।

[मानविशेषाः, तेषां मेयद्रव्यभेदेन वैलक्षण्यञ्च]

विंशतितौलिको[2] भारः । दशधरणिकं पलम् । तत्पलशतं आयमानी । पञ्चपलावरा व्यावहारिकी भाजन्यन्तःपुरभाजनी च । तासामर्धधरणावरं पलम् । द्विपलावरमुत्तरलोहम् । षडङ्गुलावराश्चायामाः । पूर्वयोः पञ्चपलिकः प्रयामो मांसलोहलवणमणिवर्जम् । काष्ठतुला अष्टहस्ता पदवती प्रतिमानवती मयूरपदाधि(ष्ठाना ।) ष्ठिता । काष्ठपञ्चविंशतिपलं तण्डुलप्रस्थसाधनम् । एष प्रदेशो बह्वल्पयोः—इति तुलाप्रतिमानं व्याख्यातम् ॥

[द्रोणाढकादिमानानि]

अथ धान्यमाषद्विपलशतं द्रोणं आयमानम् । सप्ताशीतिपलशतमर्धपलं च व्यावहारिकम् । पञ्चसप्ततिपलशतं भाजनीयम् । द्विषष्टिपलशतमर्धपलं चान्तःपुरभाजनीयम् । तेषामाढकप्रस्थकुडुबाश्चतुर्भागावराः । षोडशद्रोणा खारी । विंशतिद्रोणिकः कुम्भः । कुम्भैर्दशभिर्वहः ॥

[मानसाधनानि]

शुष्कसारदारुमयं समं चतुर्भागशिखं मानं कारयेत् , अन्तश्शिखं वा । रसस्य तु सुरायाः पुष्पफलयोः तुषाङ्गाराणां सुधायाश्च शिखामानं द्विगुणोत्तरा वृद्धिः ॥

[तुलानां मानानां च मूल्यव्यवस्था]

सपादपणो द्रोणमूल्यम् । आढकस्य पादोनः । षण्माषकाः प्रस्थस्य । माषकः कुडुबस्य । द्विगुणं रसादीनां मानमूल्यम् । विंशतिपणाः प्रतिमानस्य । तुलामूल्यं त्रिभागः ॥

---

[1] परिमाणीति तुलाविशेषस्य संज्ञा. [2] तुला नाम पलशतम् .

[तुलामानन्यूनाधिकभावपरीक्षाकालनि-
यमः, अपरीक्षितव्यवहारे दण्डः,
परीक्षकदेयांशाश्च]

[1]चतुर्मासिकं प्रातिवेधनिकं कारयेत्। अप्रतिविद्धस्यात्ययः सपादः सप्तविंशतिपणः। प्रातिवेधनिकं काकणीकमहरहः पौतवाध्यक्षाय दद्युः॥

[घृतादिष्वधिकतया ग्राह्या अंशाः
कुडुबादिमानचतुष्टयं च]

द्वात्रिंशद्भागः [2]तप्तव्याजी सर्पिषः, चतुष्षष्टिभागस्तैलस्य। पञ्चाशद्भागो मानस्रावो द्रवाणाम्। कुडुबार्धचतुरष्टभागानि मानानि कारयेत्॥

[वारकघटिकासंज्ञे]

[3]कुडुबाश्चतुर(ा)शीतिः वारकस्सर्पिषो मतः।
चतुष्षष्टिस्तु तैलस्य पादश्च घटिकाऽनयोः॥ ९३॥

इत्यध्यक्षप्रचारे तुलामानपौतवं एकोनविंशोऽध्यायः
आदितश्चत्वारिंशः

# अष्टत्रिंशं प्रकरणम्—देशकालमानम्

## विंशोऽध्यायः

[देशमानानि]

मानाध्यक्षो देशकालमानं विद्यात्॥

अष्टौ परमाणवो [4]रथचक्रविप्रुट्। ता अष्टौ लिक्षा। ता अष्टौ यूकामध्यः। ते अष्टौ यवमध्यः। अष्टौ यवमध्या अङ्गुलम्। मध्य-

---

[1] प्रतिमासचतुष्टयं परिशोधनं कारयेदित्यर्थः. [2] तप्तव्याजीति संज्ञा. [3] सर्पिषः चतुरशीतिकुडुबाः यत्र मान्ति सः वारकसंज्ञः इत्यर्थः. [4] रथचक्रोत्थापितः चक्षुर्ग्राह्यः एको रजःकणः.

मस्य पुरुषस्य मध्यमाया अङ्गुल्या [1]मध्यप्रकर्षो वाऽङ्गुलम्। चतुरङ्गुलो धनुर्ग्रहः। अष्टाङ्गुला धनुर्मुष्टिः। द्वादशाङ्गुला वितस्तिः, छायापौरुषं च। चतुर्दशाङ्गुलं [2]शमश्शलः परिरयः पदं च। द्विवितस्तिररत्निः प्राजापत्यो हस्तः। सधनुर्ग्रहः पौतवविवीतमानम्। सधनुर्मुष्टिः किष्कुः कंसो वा। द्विचत्वारिंशदङ्गुलस्तक्ष्णः [3]क्राकचिककिष्कुः स्कन्धावारदुर्गराजपरिग्रहमानम्। चतुःपञ्चाशदङ्गुलः कुप्यवनहस्तः। चतुरशीत्यङ्गुलो व्यामो रज्जुमानं खातपौरुषं च। चतुररत्निर्दण्डो धनुर्नालिका पौरुषं च। गार्हपत्यमष्टशताङ्गुलं धनुः पथिप्राकारमानं, पौरुषं च अग्निचित्यानाम्। षट्कंसो दण्डो ब्रह्मदेयातिथ्यमानम्। दशदण्डा रज्जुः। द्विरज्जुकः परिदेशः। त्रिरज्जुकं निवर्तनम्। एकतो द्विदण्डाधिको बाहुः। द्विधनुस्सहस्रं गोरुतम्। चतुर्गोरुतं योजनम्। इति देशमानं व्याख्यातम्॥

[कालमानानि—
तत्र तुटादिरात्र्यन्तानां विवरणम्]

कालमानमत ऊर्ध्वम्। [4]तुटः लवो निमिषः काष्ठा कला नालिका मुहूर्तः पूर्वापरभागौ दिवसः रात्रिः पक्षः मासः ऋतुः अयनं संवत्सरः युगमिति कालाः॥

निमेषचतुर्भागः तुटः। द्वौ तुटौ लवः। द्वौ लवौ निमेषः। पञ्च निमेषाः काष्ठा। त्रिंशत्काष्ठाः कला। चत्वारिंशत्कलाः नाडिका। [5]सुवर्णमाषकाश्चत्वारश्चतुरङ्गुलायामाः कुम्भच्छिद्रमाढकमम्भसो वा नालिका। द्विनालिको मुहूर्तः।

पञ्चदशमुहूर्तो दिवसो रात्रिश्च चैत्रे मासि आश्वयुजे च मासि भवतः।

ततः परं त्रिभिर्मुहूर्तैरन्यतरः षण्मासं वर्धते ह्रसते चेति॥

---

[1] मध्यप्रदेशपृथुत्वातिशयः. [2] शमादयः संज्ञाः. [3] क्रकचकर्मोपयोगी किष्कुः. [4] त्रुटिरिति व्याख्यानुसारी पाठः. [5] सुवर्णमाषकचतुष्टयप्रमाणजलनिर्गमनालशलाकायुक्तच्छिद्रात् कुम्भात् आढकपरिमितं जलं छिद्रतः यावता कालेन गलति स एव वा कालः नालिकेत्युच्यत इत्यर्थः.

[छायया कालमानज्ञानविधिः]

छायायामष्टपौरुष्यामष्टादशभागः छेदः[1], षट्पौरुष्यां चतुर्दशभागः, चतुष्पौरुष्यामष्टभागः, द्विपौरुष्यां षड्भागः, पौरुष्यां चतुर्भागः, अष्टाङ्गुलायां त्रयो दशभागाः, चतुरङ्गुलायां अष्टभागाः, अच्छायो मध्याह्न इति । [2]परावृत्ते दिवसे शेषमेवं विद्यात् । आषाढे मासि नष्टच्छायो मध्याह्नो भवति । अतः परं श्रावणादीनां षण्मासानां द्व्यङ्गुलोत्तरा, माघादीनां द्व्यङ्गुलावरा छाया इति ॥

[पक्षमासयोः विवरणं, मासभेदाश्च]

पञ्चदशाहोरात्राः पक्षः । सोमाप्यायनश्शुक्लः, सोमावच्छेदनो[3] बहुलः । द्विपक्षो मासः । त्रिंशदहोरात्रः [4]प्रकर्ममासः । सार्धस्सौरः । अर्धन्यूनश्चान्द्रमासः । सप्तविंशतिर्नाक्षत्रमासः । द्वात्रिंशन्मलमासः । पञ्चत्रिंशदश्ववाहायाः[5] । चत्वारिंशद्धस्तिवाहायाः ॥

[ऋतुप्रभृति युगान्तकालमानविवरणम्]

द्वौ मासावृतुः । श्रावणः प्रोष्ठपदश्च वर्षाः । आश्वयुजः कार्तिकश्च शरत् । मार्गशीर्षः पौषश्च हेमन्तः । माघः फाल्गुनश्च शिशिरः । चैत्रो वैशाखश्च वसन्तः । ज्येष्ठामूलीय आषाढश्च ग्रीष्मः ॥ शिशिराद्युत्तरायणम् । वर्षादि दक्षिणायनम् । द्व्ययनस्संवत्सरः । पञ्चसंवत्सरो युगमिति ॥

[अधिकमाससिद्धिक्रमविवरणम्]

दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः ।
करोत्येकमहश्छेदं तथैवैकं च चन्द्रमाः ॥ ९४ ॥

[1] छेदः=गतांशः. [2] मध्याह्नात् परत इत्यर्थः. [3] अवच्छेदनः—क्षयकरः. [4] कर्मकरभृत्यर्थं गणनीयः मासः. [5] अश्वकर्मकराणाम्.

एवमर्धतृतीयानामब्दानामधिमासकम् ।
ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते च पश्चिमम् ॥ ९५ ॥

इत्यध्यक्षप्रचारे देशकालमानं विंशोऽध्यायः
आदित एकचत्वारिंशः

# एकोनचत्वारिंशं प्रकरणम्

## शुल्काध्यक्षः

### एकविंशोऽध्यायः

[शुल्कशालास्वधिकारिनियोजनेन
शुल्कग्रहणविधिः]

शुल्काध्यक्षः शुल्कशालां [1]ध्वजं च प्राङ्मुखं उदङ्मुखं वा महाद्वाराभ्याशे निवेशयेत् । शुल्कादायिनश्चत्वारः पञ्च वा सार्थोपयातान् वणिजो लिखेयुः—"के? कुतस्त्याः? कियत्पण्याः? क्व चाभिज्ञानमुद्रा वा कृता?" इति ॥

[नियमोल्लङ्घिनां मिथ्याभाषिणां वणिजां दण्डाः,
अनृतव्यवहारपरिज्ञानोपायाश्च.]

अमुद्राणामत्ययो देयद्विगुणः । [2]कूटमुद्राणां शुल्काष्टगुणो दण्डः । [3]भिन्नमुद्राणामत्ययो घटिकाः स्थाने स्थानम् । राजमुद्रापरिवर्तने नामकृते वा सपादपणिकं वहनं दापयेत् । ध्वजमूलोपस्थितस्य प्रमाणमर्घं च वैदेहकाः पण्यस्य ब्रूयुः—"एतत्प्रमाणेनार्घेण पण्यमिदं कः क्रेता?" इति" त्रिरुद्घोषितमर्थिभ्यो दद्यात् । क्रेतृसङ्घर्षे मूल्यवृद्धिः सशुल्का कोशं गच्छेत् । शुल्कभयात् पण्यप्रमाणं मूल्यं वा हीनं ब्रुवतः तदतिरिक्तं राजा हरेत्, शुल्कमष्ट-

---

[1] शुल्कशालायाः असाधारणं चिह्नम्. [2] कपटकृतमुद्राणाम्. [3] नष्टमुद्राणां दण्डस्तु-घटिकात्रयं तत्रैव शुल्कशालैकदेशे अवस्थानमेव इत्यर्थः.

गुणं वा दद्यात् । तदेव निविष्टपण्यस्य भाण्डस्य हीनप्रतिवर्णकेनार्घापकर्षणे सारभाण्डस्य फल्गुभाण्डेन प्रतिच्छादने च कुर्यात् । प्रतिक्रेतृभयाद्वा पण्यमूल्यादुपरि मूल्यं वर्धयतो मूल्यवृद्धिं राजा हरेत्, द्विगुणं वा शुल्कं कुर्यात् । तदेवाष्टगुणमध्यक्षस्यच्छादयतः । तस्माद्विक्रयः पण्यानां धृतो मितो गणितो वा कार्यः । तर्कः फल्गुभाण्डानामानुग्राहिकाणां च । ध्वजमूलमतिक्रान्तानां चाकृतशुल्कानां शुल्कादष्टगुणो दण्डः । [1] पथिकोत्पथिकाः तद्विद्युः ॥

[शुल्काप्रदानेनैव नेयानि द्रव्याणि,
मिथ्याभाषणे दण्डः]

वैवाहिकं [2]अन्वायनं औपायनिकं यज्ञकृत्यप्रसवनैमित्तिकं देवेज्याचौलोपनयनगोदानव्रतदीक्षणादिषु क्रियाविशेषेषु भाण्डं उच्छुल्कं गच्छेत् ।

[3] अन्यथावादिनः स्तेयदण्डः ।

कृतशुल्केनाकृतशुल्कं निर्वाहयतः, द्वितीयमेकमुद्रया भित्वा पण्यपुटमपहरतो वैदेहकस्य तच्च तावच्च दण्डः ।

शुल्कस्थानात् [4]गोमयपलालं प्रमाणं कृत्वाऽपहरत उत्तमस्साहसदण्डः ॥

[अनिर्वाह्यानयने दण्डादयः]

शस्त्रवर्मकवचलोहरथरत्नधान्यपशूनामन्यतमानिर्वाह्यं निर्वाहयतो यथावघुषितो दण्डः पण्यनाशश्च ॥

तेषामन्यतमस्यानयने बहिरेवोच्छुल्को विक्रयः ॥

[राज्यसीमान्तपालानां, वेतनं तत्कर्तव्यांशाश्च]

अन्तपालः सपादपणिकां वर्तनीं गृह्णीयात् पण्यवहनस्य, पणिकामेकखुरस्य, पशूनामर्धपणिकां, क्षुद्रपशूनां पादिकां, अंसभारस्य माषिकाम् । नष्टापहृतं च प्रतिविदध्यात् ।

---

[1] राजानुज्ञया वाणिज्यच्छलेन पथि, इन्धनाहरणादिच्छलेन उत्पथे च सञ्चारिणः. [2] विवाहानन्तरं पतिगृहं गच्छन्त्या नववध्वा पितृगृहान्नीयमानं पदार्थजातम्. [3] मृषावादिनः. [4] गोमयादिकं बहिः प्रदर्श्य तदन्तः सारद्रव्यं निक्षिप्य नयतः.

वैदेह्यं सार्थं कृतसारफल्गुभाण्डविचयनमभिज्ञानं मुद्रां च दत्त्वा प्रेषयेदध्यक्षस्य ॥

[भाण्डनिगूहनवारणोपायाः]

वैदेहकव्यञ्जनो वा सार्थप्रमाणं राज्ञः प्रेषयेत्। तेन प्रदेशेन राजा शुल्काध्यक्षस्य सार्थप्रमाणमुपदिशेत् सर्वज्ञत्वख्यापनार्थम्। ततस्सार्थमध्यक्षोऽभिगम्य ब्रूयात्–"इदममुष्यामुष्य च सारभाण्डं फल्गुभाण्डं च न निगूहितव्यम्, एष राज्ञः प्रभावः" इति। निगूहतः फल्गुभाण्डं शुल्काष्टगुणो दण्डः, सारभाण्डं सर्वापहारः ॥

[नाशनयोग्याः देशान्तरादनानेयाः
शुल्करहिताश्च पदार्थाः]

राष्ट्रपीडाकरं भाण्डं उच्छिन्द्यादफलं च यत्।
महोपकारमुच्छुल्कं कुर्याद्बीजं तु दुर्लभम्[1] ॥९६॥

इत्यध्यक्षप्रचारे शुल्काध्यक्ष एकविंशोऽध्यायः
आदितो द्विचत्वारिंशः

---

## शुल्कव्यवहारः—द्वाविंशोऽध्यायः

[अध्यायार्थः, त्रिधा द्विधा च शुल्कविभागः,
सामान्यतः शुल्कंयत्तानिर्देशश्च]

शुल्कव्यवहारः। [2]बाह्यमाभ्यन्तरं चातिथ्यम्, निष्क्राम्यं प्रवेश्यं च शुल्कम्। प्रवेश्यानां मूल्यपञ्चभागः।

[पुष्पशङ्खक्षौमवस्त्रादीनां विशेषतः
शुल्कव्यवस्थाः]

पुष्पफलशाकमूलकन्दवल्लिक्यबीजशुष्कमत्स्यमांसानां षड्भागं[3] गृह्णीयात्।

---

[1] दुर्लभं धान्यादिबीजं शुल्करहितं कुर्यादित्यर्थः. [2] स्वदेशीयपण्यसंबन्धि बाह्यम्, स्वदेशपरदेशयोर्मध्यदेशोत्पन्नद्रव्यसंबन्धि आभ्यन्तरम्, परदेशीयसंबन्धि आतिथ्यम्. [3] शुल्कमिति शेषः.

शङ्खवज्रमणिमुक्ताप्रवालहाराणां तज्जातपुरुषैः कारयेत् कृत-कर्मप्रमाणकालवेतनफलनिष्पत्तिभिः।

क्षौमदुकूलक्रिमितानकङ्कटहरितालमनःशिलाहिङ्गुलुकलोहवर्णधातूनां चन्दनागुरुकटुककिण्वावरणानां सुरादन्ताजिनक्षौमदुकूलनिकरास्तरणप्रावरणक्रिमिजातानां अजैलकस्य च दश भागः, पञ्चदशभागो वा।

वस्त्रचतुष्पदद्विपदसूत्रकार्पासगन्धभैषज्यकाष्ठवेणुवल्कलचर्ममृद्भाण्डानां धान्यस्नेहक्षारलवणमद्यपक्वान्नादीनां च विंशतिभागः पञ्चविंशतिभागो वा॥

[द्वाराध्यक्षवेतनं तत्तद्द्रव्योत्पत्तिदेशे
तद्विक्रयनिषेधः अतिक्रमे दण्डश्च]

द्वारादेयं शुल्कपञ्चभागः। आनुग्राहिकं वा यथादेशोपकारं स्थापयेत्। जातिभूमिषु च पण्यानामविक्रयः। खनिभ्यो धातुपण्याऽऽदाने षट्छतमत्ययः। पुष्पफलवाटेभ्यः पुष्पफलाऽऽदाने चतुष्पञ्चाशत्पणो दण्डः। षण्डेभ्यः शाकमूलकन्दाऽऽदाने पादोनं द्विपञ्चाशत्पणो दण्डः। क्षेत्रेभ्यस्सर्वसस्याऽऽदाने त्रिपञ्चाशत्पणः। पणोऽध्यर्धपणश्च सीतात्ययः।

[निगमनम्]

अतो नवपुराणानां देशजातिचरित्रतः।
पण्यानां स्थापयेच्छुल्कमत्ययं चापकारतः॥ ९७॥

इत्यध्यक्षप्रचारे शुल्कव्यवहारो द्वाविंशोऽध्यायः
आदितस्त्रिचत्वारिंशः

## चत्वारिंशं प्रकरणम्—सूत्राध्यक्षः

### त्रयोविंशोऽध्यायः

[सूत्राध्यक्षप्रवर्तनीयव्यवहाराः,
कर्मसु नियोजनीयाश्च]

सूत्राध्यक्षः सूत्रवर्मवस्त्ररज्जुव्यवहारं तज्जातपुरुषैः कारयेत्। ऊर्णावल्ककार्पासतूलशणक्षौमाणि च विधवान्यङ्गाकन्याप्रव्रजिता-

दण्डप्रतिकारिणीभिः रूपाजीवामातृकाभिः वृद्धराजदासीभिः व्युपरतोपस्थानदेवदासीभिश्च [1]कर्तयेत् ।

[कर्मवेतनयोरानुगुण्यं, बुद्धिमतां प्रोत्साहनेन तैरपूर्ववस्त्रादिनिर्मापणं च]

श्लक्ष्णस्थूलमध्यतां च सूत्रस्य विदित्वा वेतनं कल्पयेत्, बह्वल्पतां च। सूत्रप्रमाणं ज्ञात्वा तैलामलकोद्वर्तनैरेता अनुगृह्णीयात् ।

तिथिषु प्रतिपादनमानैश्च कर्म कारयितव्याः । सूत्रह्रासे वेतनह्रासः द्रव्यसारात्। कृतकर्मप्रमाणकालवेतनफलनिष्पत्तिभिः कारुभिश्च कर्म कारयेत्, [2]प्रतिसंसर्गं च गच्छेत् ।

क्षौमदुकूलक्रिमितानराङ्कवकार्पाससूत्रवानकर्मान्तांश्च प्रयुञ्जानो गन्धमाल्यदानैरन्यैश्च [3]औपग्राहिकैराराधयेत् । वस्त्रास्तरणप्रावरण[4]विकल्पानुत्थापयेत् । [5]कङ्कटकर्मान्तांश्च तज्जातकारुशिल्पिभिः कारयेत् ॥

[स्त्रीभिः सूत्रनिर्मापणविधिः, तासुवर्तनक्रमः, अतिक्रमे दण्डाश्च]

याश्च [6]अनिष्कासिन्यः [7]प्रोषितविधवाः न्यङ्गाः कन्यका वा आत्मानं बिभृयुः ताः स्वदासीभिरनुसार्य [8]सोपग्रहं कर्म कारयितव्याः । स्वयमागच्छन्तीनां वा सूत्रशालां प्रत्युषसि भाण्डवेतनविनिमयं कारयेत् । सूत्रपरीक्षार्थमात्रः प्रदीपः । स्त्रिया मुखसन्दर्शनेऽन्यकार्यसंभाषायां वा पूर्वस्साहसदण्डः । वेतनकालातिपातने मध्यमः, अकृतकर्मवेतनप्रदाने च ॥

[अङ्गीकृतातिक्रमे तासां दण्डः]

गृहीत्वा वेतनं कर्म अकुर्वत्याः अङ्गुष्ठसन्दंशं दापयेत्, भक्षितापहृतावस्कन्दितानां च। वेतनेषु च कर्मकराणामपराधतो दण्डः ।

[1] सूत्रयेत्. [2] स्नेहभावम्. [3] आनुकूल्यसम्पत्तिफलैः. [4] विकल्पाः—प्रकारभेदाः. [5] सूत्रसन्नाहकर्माणि चेत्यर्थः. [6] परित्यक्तबहिर्निष्क्रमणाः. [7] भर्तृप्रवासनिमित्तं वियुक्तभर्तृकाः. [8] सप्रीतिबहुमानम्.

[रज्ज्वादिनिर्मापणम्]

*रज्जुवर्तकैः चर्मकारैश्च [पूर्वकारैश्च] स्वयं संसृज्येत ।* भाण्डानि च [1]वरत्रादीनि [2]वर्तयेत् ।

सूत्रवल्कमयी रज्जूः वरत्रा वेत्रवैणवीः ।
सान्नाह्या बन्धनीयाश्च यानयुग्यस्य कारयेत् ॥ १८ ॥

इत्यध्यक्षप्रचारे सूत्राध्यक्षस्त्रयोविंशोऽध्यायः
आदितश्चतुश्चत्वारिंशः

# एकचत्वारिंशं प्रकरणम्—सीताऽध्यक्षः

## चतुर्विंशोऽध्यायः

[बीजसंग्रहणतद्वापने]

सीताध्यक्षः कृषितन्त्रगुल्मशुल्बवृक्षायुर्वेदज्ञः तज्ज्ञसखो वा सर्वधान्यपुष्पफलशाककन्दमूल[3]वाल्लिक्यक्षौमकार्पासबीजानि यथाकालं गृह्णीयात् । बहुहलपरिकृष्टायां स्वभूमौ दासकर्मकरदण्डप्रतिकर्तृभिर्वापयेत् ।

[सकाले उपकरणनिर्मापणम्]
[सस्यानुकूलवृष्टिप्रमाणं च]

कर्षणयन्त्रोपकरणबलीवर्दैश्चैषामसङ्गं कारयेत् । कारुभिश्च [4]कर्मारकुट्टाकमेदकरज्जुवर्तकसर्पग्राहादिभिश्च । तेषां कर्मफलविनिपाते तत्फलहानं दण्डः ।

षोडशद्रोणं [5]जाङ्गलानां वर्षप्रमाणं, अध्यर्धं [6]आनूपानाम् । देशवापानाम् [7]—अर्धत्रयोदश अश्मकानां, त्रयोविंशति-

---

[1] गवादिबन्धनीप्रभृतीनि. [2] कारयेत्. [3] वाल्लिक्यं कूश्माण्डादिवल्लीफलम्. [4] क्रमेण—अयस्कारः तक्षा खनकः रज्जुनिर्मापकः सर्पग्राही च. [5] मरुप्रायाणां. [6] जलप्रायाणां [7] प्रमाणं वक्ष्यत इति शेषः.

रवन्तीनां, अमितमपरान्तानां, हैमन्यानां च कुल्यावापानां च कालतः ॥

[उत्तमसंवत्सरस्य लक्षणानि, ग्रह-
स्थितिभ्योऽनुमेया अंशाश्च]

वर्षत्रिभागः [1]पूर्वपश्चिममासयोः, द्वौ त्रिभागौ [2]मध्यमयोः [3]सुषमारूपम् । तस्योपलब्धिः बृहस्पतेः स्थानगमन[4]गर्भाधानेभ्यः, शुक्रोदयास्तमयचारेभ्यः, सूर्यस्य प्रकृतिवैकृताच्च । सूर्याद्बीजसिद्धिः, बृहस्पतेस्सस्यानां स्तम्बकारिता, शुक्राद्वृष्टिरिति ॥

[सस्यनिष्पत्त्यनुकूलवृष्टिक्रमः]

त्रयस्सप्ताहिका मेघाः अशीतिः कणशीकराः ।
षष्टिरातपमेघानां एषा वृष्टिस्समाहिता ॥ ९९ ॥
वातमातपयोगं च विभजन् यत्र वर्षति ।
त्रीन् कर्षकांश्च जनयन् तत्र सस्यागमो ध्रुवः ॥ १०० ॥

ततः प्रभूतोदकमल्पोदकं वा सस्यं वापयेत् ।

[सस्यभेदेन तद्वापकालभेदः]

शालिव्रीहिकोद्रवतिलप्रियङ्गुदारकवरकाः पूर्ववापाः । मुद्गमाषशैब्याः मध्यवापाः । कुसुम्भमसूरकुलुत्थयवगोधूमकलायातसीसर्षपाः पश्चाद्वापाः । यथर्तुवशेन वा बीजवापाः ॥

[अकृष्टक्षेत्रकर्षणव्यवस्था:]

[5]वापातिरिक्तं अर्धसीतिकाः कुर्युः । स्ववीर्योपजीविनो वा चतुर्थपञ्चभागिकाः । यथेष्टमनवसितभागं दद्युरन्यत्र कृच्छ्रेभ्यः ।

[1] श्रावणकार्तिकयोः. [2] भाद्रपदाश्वयुजयोः. [3] शोभनं संवत्सररूपमित्यर्थः. [4] मार्गशीर्षादिमासषट्के तुषारादिदर्शनं गर्भाधानमित्युच्यते. [5]कृतवापातिरिक्तं क्षेत्रं तल्लब्धद्रव्यार्धभागस्वीकरणसंविदा शक्ताः फलविशिष्टं कुर्युः.

[सस्योपयोगिजलसौकर्यानुगुण्येन
राजग्राह्यभागव्यवस्था]

स्वसेतुभ्यः [1] हस्तप्रावर्तिममुदकभागं पञ्चमं दद्युः, स्कन्धप्रावर्तिमं च चतुर्थम्, स्रोतोयन्त्रप्रावर्तिमं च तृतीयम्; चतुर्थं नदीसरस्तटाककूपोद्धाटम् ॥

[सस्यस्थापनस्य सिद्धजलप्रमाणानु-
गुणत्वम् सस्यविभागश्च]

कर्मोदकप्रमाणेन कैदारं हैमनं ग्रैष्मिकं वा सस्यं स्थापयेत्। शाल्यादि ज्येष्ठम्, षण्डो मध्यमः, इक्षुः प्रत्यवरः, इक्षवो हि बह्वाबाधाः व्ययग्राहिणश्च ।

[क्षेत्रसन्निवेशानुगुणानि सस्यादीनि]

फेनाघातो वल्लीफलानां, परीवाहान्ताः पिप्पलीमृद्वीकेक्षूणां, कूपपर्यन्ताः शाकमूलानां, [2]हरणिपर्यन्ताः हरितकानां, [3]पाल्यो [4]लवानां गन्धभैषज्योशीर[ह्रीबेर]ह्रीरबेरपिण्डालुकादीनाम् । यथास्वं भूमिषु च स्था[स्थ]ल्याश्चानूप्याश्चौषधीः स्थापयेत् ।

[बीजसंस्काराः अङ्कुरितानां कीटाद्युपद्रवप्रतीकारश्च]

तुषारपायनमुष्णशोषणं चाऽऽसप्तरात्रादिति धान्यबीजानां, त्रिरात्रं पञ्चरात्रं वा कोशीधान्यानां, मधुघृतसूकरवसाभिःशकृद्युक्ताभिः काण्डबीजानां छेदलेपः, मधुघृतेन कन्दानाम्, अस्थिबीजानां शकृदालेपः, शाखिनां गर्तदाहो गोऽस्थिशकृद्भिः काले दौहृदं च । प्ररूढांश्चाशुष्ककटुमत्स्यांश्च स्नुहिक्षीरेण पाययेत् ।

कार्पाससारं निर्मोकं सर्पस्य च समाहरेत् ।
न सर्पास्तत्र तिष्ठन्ति धूमो यत्रैष तिष्ठति ॥ १०१ ॥

---

[1] कुम्भादिभ्यो जलसेचनेन साधितम्. [2] हरणिः-कुल्या. [3] क्षेत्रमध्यकृताः सेतवः पाल्यः. [4] छिन्नानाम्.

[आद्यबीजावापविधिः]

सर्वबीजानां तु प्रथमवापे सुवर्णोदकसंप्लुतां पूर्वमुष्टिं वापयेत्; अमुं च मन्त्रं ब्रूयात् –

[1] "प्रजापतये काश्यपाय
देवाय च नमः सदा।
सीता मे ऋध्यतां देवी
बीजेषु च धनेषु च" ॥ १०२ ॥

[कर्मकराणां वेतनादिः]

षण्डवाटगोपालकदासकर्मकरेभ्यो यथापुरुषपरिवापं भक्तं कुर्यात्। सपादपणिकं मासं दद्यात्। कर्मानुरूपं कारुभ्यो भक्तवेतनम्।

[स्वयंपतितपुष्पफलादिविनियोगः]

प्रशीर्णं च पुष्पफलं देवकार्यार्थं, व्रीहियवमाग्रयणार्थं श्रोत्रियास्तपस्विनश्चाहरेयुः। राशिमूलमुञ्छवृत्तयः।

[निष्पन्नसस्यानां कोशप्रापणरक्षणादिविधिः]

यथाकालं च सस्यादि जातं जातं प्रवेशयेत्।
न क्षेत्रे स्थापयेत् किञ्चित् पलालमपि पण्डितः ॥ १०३ ॥
प्रकराणां समुच्छ्रायान् [2]वलभीर्वा तथाविधाः।
न संहतानि कुर्वीत [3]न तुच्छानि शिरांसि च ॥ १०४ ॥
खलस्य प्रकरान् कुर्यात् मण्डलान्ते समाश्रितान्।
अनग्निकास्सोदकाश्च खले स्युः परिकर्मिणः ॥ १०५ ॥

इत्यध्यक्षप्रचारे सीताध्यक्षः चतुर्विंशोऽध्यायः

आदितः पञ्चचत्वारिंशः

[1] प्रजापतेः काश्यपाय देवलाय नमः सदा. पा. [2] कूटागाराणि. [3] दण्डवातादिना उत्क्षेपवारणाय लोहपाषाणादिगुरुद्रव्यसंघटितान्येव शिरांसि कुर्वीत न तु लघूनीत्यर्थः.

# द्विचत्वारिंशं प्रकरणम्—सुराध्यक्षः

## पञ्चविंशोऽध्यायः

[सुरासन्धानतद्विक्रयादिदेशकालव्यवस्थाः]

सुराध्यक्षः सुराकिण्वव्यवहारान् दुर्गे जनपदे स्कन्धावारे वा तज्जातसुराकिण्वव्यवहारिभिः कारयेत् एकमुखमनेकमुखं वा विक्रयक्रयवशेन वा। षट्छतमत्ययं [1]अन्यत्र कर्तृक्रेतृविक्रेतॄणां स्थापयेत्।

[सुरातत्पात्रोरनियमेन बहिःप्रचारे दोषाः नियमाश्च]

ग्रामादनिर्णयनं [2]असम्पातं च [3]सुरायाः, प्रमादभयात् कर्मसु निर्दिष्टानां, मर्यादातिक्रमभयादार्याणां, उत्साहभयाच्च तीक्ष्णानाम्। लक्षितमल्पं वा चतुर्भागमर्धकुडुबं कुडुबमर्धप्रस्थं वेति ज्ञातशौचाः निर्हरेयुः।

पानागारेषु वा पिबेयुरसञ्चारिणः॥

[सुराव्यवहारफलानि]

निक्षेपोपनिधिप्रयोगापहृतादीनामनिष्टोपगतानां च द्रव्याणां ज्ञानार्थं अस्वामिकं कुप्यं हिरण्यं चोपलभ्य निक्षेप्तारं अन्यत्र व्यपदेशेन ग्राहयेत्, अतिव्ययकर्तारमनायतिव्ययं च।

[सुराव्यवहार पानागार पातॄणां रक्षणादिव्यवस्थाः मद्यविक्रयिभिरवेक्षणीयोंऽशश्च]

न चानर्घेण [4]कालिकां वा सुरां दद्यादन्यत्र दुष्टसुरायाः। तामन्यत्र विक्रापयेत्, दासकर्मकरेभ्यो वा वेतनं दद्यात्, वाहनप्रतिपान सूकरपोषणं वा दद्यात्। पानागाराण्यनेककक्ष्याणि विभक्तशयनासनवन्ति पानोद्देशानि गन्धमाल्योदकवन्ति ऋतुसुखानि कारयेत। तत्रस्थाः [5]प्रकृत्यौत्पत्तिकौ व्ययौ गूढा विद्युरागन्तूंश्च।

[1] क्लृप्तस्थानातिरिक्तस्थानेषु. [2] जनाकीर्णेषु प्रदेशेष्वगमनम्. [3] अत्र सुरापदं सुरातत्पात्रुभयलक्षकम्. [4] कालान्तरदेयमूल्यामित्यर्थः. [5] प्रकृत्यौत्पत्तिकौ इत्यस्य नित्यनैमित्तिकौ इति व्याख्या.

क्रेतॄणां मत्तसुप्तानामलङ्काराच्छादनहिरण्यानि च विद्युः। तन्नाशे [1]वणिजः तच्च तावच्च दण्डं दद्युः। वणिजस्तु संवृतेषु कक्ष्याविभागेषु स्वदासीभिः पेशलरूपाभिरागन्तूनां वास्तव्यानां च आर्यरूपाणां मत्तसुप्तानां भावं विद्युः॥

[मेदकप्रसन्नासवारिष्टयोगाः]

मेदकप्रसन्नाऽऽसवारिष्टमैरेयमधूनां[2]—उदकद्रोणं, तण्डुलानामर्धाढकं, त्रयः प्रस्थाः किण्वस्य इति[3] मेदकयोगः। द्वादशाढकं पिष्टस्य, पञ्चप्रस्थाः किण्वस्य, [4]पुत्रकत्वक्फलयुक्तो वा जातिसम्भारः प्रसन्नायोगः। कपित्थतुला, फाणितं पञ्चतौलिकं, प्रस्थो मधुनः–इत्यासवयोगः। पादाधिको ज्येष्ठः, पादहीनः कनिष्ठः। चिकित्सकप्रमाणाः प्रत्येकशो [5]विकाराणां [6]अरिष्टाः॥

[मैरेयः मधु किण्वश्च]

मेषशृङ्गीत्वक् क्वाथाभिषुतो गुडप्रतीवापः पिप्पलीमरीचसंभारस्त्रिफलायुक्तो वा मैरेयः। गुडयुक्तानां वा सर्वेषां त्रिफलासम्भारः। मृद्वीकारसो मधु। तस्य स्वदेशो व्याख्यानं कापिशायनं हारहूरकमिति। माषकलनीद्रोणमामं सिद्धं वा त्रिभागाधिकतण्डुलं मोरटादीनां कार्षिकभागयुक्तं किण्वाबन्धः॥

[मेदकप्रसन्नासवानां सम्भाराः, श्वेतसुरायोगश्च]

[7]पाठालोध्र[8]तेजोवत्येलावालुकमधुकमधुरसाप्रियङ्गुदारुहरिद्रामरिचपिप्पलीनां च पञ्चकार्षिकः सम्भारयोगो मेदकस्य। प्रसन्नायाश्च मधुकनिर्यूहयुक्ता कटशर्करा वर्णप्रसादिनी च। चोचचित्रकविलङ्गगजपिप्पलीनां च कार्षिकः क्रमुकमधुकमुस्तालोध्राणां द्विकार्षिकश्च आसवसम्भारः। दशभागश्चैषां बीजबन्धः। प्रसन्नायोगः श्वेतसुरायाः॥

---

[1] मद्यविक्रयिणः. [2] योगविधिरुच्यते इति शेषः. [3] एतेषां मिश्रणे इति शेषः. [4] पुत्रकः वृक्षविशेषः. [5] वातादिविकाररूपरोगाणां शामकाः इत्यर्थः. [6] अभयारिष्टादयः. [7] पाठा–अम्बष्ठा. [8] तेजोवती–इभपिप्पली.

[सुराभेदाः सुरास्वच्छीकरणविधिश्च]

सहकारसुरा, रसोत्तरा बीजोत्तरा वा महासुरा, सम्भारिकी वा। तासां मोरटापलाशपत्तूरमेषशृङ्गीकरञ्जक्षीरवृक्षकषायभावितं दग्धकटशर्कराचूर्णं लोध्रचित्रकविलङ्गपाठामुस्ताकलिङ्गयवदारुहरिद्रेन्दीवरशतपुष्पाऽपामार्गसप्तपर्णनिम्बास्फोतकल्कार्धयुक्तं अन्तर्नखो मुष्टिः [1]कुम्भीं राजपेयां प्रसादयति। फाणितः पञ्चपलिकश्चात्र रसवृद्धिर्देयः॥

[उत्सवेषु सुरासन्धानपानयोरनुज्ञा]

कुटुम्बिनः कृत्येषु श्वेतसुरां औषधार्थं वा अरिष्टमन्यद्वा कर्तुं लभेरन्। उत्सवसमाजयात्रासु [2]चतुरहस्सौरिको देयः। तेष्वननुज्ञातानां [3]प्रहवणान्तं दैवसिकमत्ययं गृह्णीयात्॥

[सुराश्रपणादेः तद्रसानभिज्ञकर्तव्यता शुल्कं च]

सुराकिण्वविचयं[4] स्त्रियो बालाश्च कुर्युः। अराजपण्याः पञ्चकं शतं शुल्कं दद्युः। सुरकामेदकारिष्टमधुफलाम्लाम्लशीधूनां च—

अह्नश्च विक्रयं ज्ञात्वा व्याजीं मानहिरण्ययोः।
तथा वैधरणं कुर्यादुचितं चानुवर्तयेत्॥ १०६॥

इत्यध्यक्षप्रचारे सुराध्यक्षः पञ्चविंशोऽध्यायः
आदितष्षट्चत्वारिंशः

# त्रिचत्वारिंशं प्रकरणम्——[5]सूनाध्यक्षः

## षड्विंशोऽध्यायः

[अहन्तव्यहन्तॄणां दण्डभेदाः]

सूनाध्यक्षः प्रदिष्टाभयानां अभयवनवासिनां च मृगपशुपक्षिमत्स्यानां बन्धवधहिंसायामुत्तमं दण्डं कारयेत्। कुटुम्बिनामभय-

---

[1] खारीपरिमितां सुराम्. [2] चत्वारो दिवसाः सुरापानाय अनुज्ञातव्याः इत्यर्थः. [3] उत्सवसमाप्तिपर्यन्तम्. [4] विचयः—श्रपणादिकर्म. [5] सूना—भक्ष्यप्राणिवधस्थानम्.

वनपरिग्रहेषु मध्यमम्। अप्रवृत्तवधानां मत्स्यपक्षिणां बन्धवध-हिंसायां पादोनसप्तविंशतिपणमत्ययं कुर्यात्। मृगपशूनां द्विगुणम्। प्रवृत्तहिंसानामपरिगृहीतानां षड्भागं गृह्णीयात्। मत्स्यपक्षिणां दशभागं वाऽधिकं, मृगपशूनां शुल्कं वाऽधिकम्॥

[स्थानविशेषेषु रक्षणीयाः प्राणिनः, अरक्षणे दण्डश्च]

पक्षिमृगाणां [1]जीवत्षड्भागं अभयवनेषु प्रमुञ्चेत्। सामुद्र-हस्त्यश्वपुरुषवृषगर्दभाकृतयो मत्स्याः सारसाः नादेयाः तटाक-कुल्योद्भवा वा। क्रौञ्चोत्क्रोशकदात्यूहहंसचक्रवाकजीवञ्जीवकभृङ्ग-राजचकोरमत्तकोकिलमयूरशुकमदनशारिका विहारपक्षिणो मङ्ग-ल्याश्चान्येऽपि प्राणिनः पक्षिमृगाः हिंसाबाधेभ्यो रक्ष्याः। रक्षाति-क्रमे पूर्वस्साहसदण्डः॥

[मांसविक्रयविधिः]

मृगपशूनामनस्थि मांसं सद्योहतं विक्रीणीरन्। अस्थिमतः [2]प्रतिपातं दद्युः। तुलाहीने हीनाष्टगुणम्॥

[सर्वथा अवध्याः प्राणिनः, तद्वधे दण्डश्च]

वत्सो वृषो धेनुश्चैषामवध्याः। घ्नतः पञ्चाशत्को दण्डः, क्लिष्टघातं घातयतश्च॥

[अविक्रेयमांसानि]

[3]परिसूनं अशिरःपादास्थि विगन्धं स्वयंमृतं न विक्रीणीरन्। अन्यथा द्वादशपणो दण्डः॥

[वध्याः मृगादयः]

दुष्टाः पशुमृगव्यालाः मत्स्याश्चाभयचारिणः।
अन्यत्र गुप्तिस्थानेभ्यः[4] वधबन्धमवाप्नुयुः॥ १०७॥

इत्यध्यक्षप्रचारे सूनाध्यक्षः षड्विंशोऽध्यायः

आदितस्सप्तचत्वारिंशः

---

[1] जीवतां मध्ये षड्भागं, न तु मृतानामपि संख्यां सङ्कलय्य. [2] अस्थि-भारेण हीयमानमांसभारांशप्रतिनिधिरूपं मांसम्. [3] सूनातिरिक्तस्थलनिहत-प्राणिदेहोद्भूतं मांसम्. [4] आगताश्चेत् तदेति शेषः.

# चतुश्चत्वारिंशं प्रकरणम्—गणिकाध्यक्षः

## सप्तविंशोऽध्यायः

[वेश्यास्त्रीणां स्थापनभरणयोर्विधिः]

गणिकाध्यक्षः गणिकान्वयामगणिकान्वयां वा रूपयौवन-शिल्पसम्पन्नां [1]सहस्रेण [2]गणिकां कारयेत्, कुटुम्बार्धेन [3]प्रतिगणिकाम्। निष्पतितप्रेतयोर्दुहिता भगिनी वा कुटुम्बं भरेत। तन्माता वा प्रतिगणिकां स्थापयेत्। तासामभावे राजा हरेत्॥

[तासां रूपवयोनुसारेण स्थानमानकल्पनावश्यकता]

सौभाग्यालङ्कारवृद्ध्या सहस्रेण वारं कनिष्ठं मध्यममुत्तमं वाऽऽरोपयेत्। छत्रभृङ्गारव्यजनशिबिकापीठिकारथेषु च विशेषार्थम्। सौभाग्यभङ्गे मातृकां कुर्यात्॥

[कस्याश्चन वेश्यायाः राजदास्यनिर्मोक्षेच्छायां, तस्याः तत्पुत्रदास्योश्च निर्मोक्षमूल्यवृत्तिकल्पनादिविधिः]

निष्क्रयश्चतुर्विंशतिसाहस्रो गणिकायाः। द्वादशसाहस्रो गणिकापुत्रस्य। अष्टवर्षात्प्रभृति राज्ञः कुशीलवकर्म कुर्यात्। गणिकादासी भग्नभोगा कोष्ठागारे महानसे वा कर्म कुर्यात्। अविशन्ती सपादपणं, [4]अवरुद्धा मासवेतनं दद्यात्॥

[वेश्याभिः स्वायव्ययादिनिर्देशावश्यकता, भूषणानां रक्षणविधिः, उद्वेजकानां दण्डश्च]

भोगं दायमायव्ययमायतिं च गणिकायाः निबन्धयेत्। अतिव्ययकर्म च वारयेत्। मातृहस्तादन्यत्राभरणन्यासे सपादचतुष्पणो दण्डः, स्वापतेयं विक्रयमाधानं नयन्त्यास्सपादपञ्चाशत्पणो दण्डः, चतुर्विंशतिपणो वाक्पारुष्ये, द्विगुणो दण्डपारुष्ये, सपादपञ्चाशत्पणः पणोऽर्धपणश्च कर्णच्छेदने॥

[1] रूप्यसहस्रदानेन. [2] अभिनवं गणिकाकुटुम्बम्. [3] द्वितीयां गणिकाम्. [4] अवरुद्धा—केनचित् अवरुध्य गृहे स्थापिता चेत्.

[अतिचरतां कामुकपुरुषाणां दण्डः]

अकामायाः कुमार्या वा [1] साहसे उत्तमो दण्डः, सकामायाः पूर्वः साहसदण्डः।

गणिकामकामां रुन्धतो निष्पातयतो वा, व्रणविदारणेन वा रूपमुपघ्नतः, सहस्रं दण्डः। स्थानविशेषेण वा दण्डवृद्धिः आ निष्क्रयद्विगुणात्, पणसहस्रं वा दण्डः।

प्राप्ताधिकारां गणिकां घातयतो निष्क्रयत्रिगुणो दण्डः। मातृकादुहितृकारूपदासीनां घाते उत्तमस्साहसदण्डः। सर्वत्र [2] प्रथमेऽपराधे प्रथमः; द्वितीये द्विगुणः; तृतीये त्रिगुणः; चतुर्थे यथाकामी स्यात्॥

[अतिचरन्तीनां वेश्यानां तद्भनाद्यपहर्तृणामन्येषां च दण्डः]

राजाज्ञया पुरुषमनभिगच्छन्ती गणिका [3] शिफासहस्रं लभेत; पञ्चसहस्रं वा दण्डः। भोगं गृहीत्वा द्विषत्याः भोगद्विगुणो दण्डः। वसतिभोगापहारे भोगमष्टगुणं दद्यात् अन्यत्र व्याधिपुरुषदोषेभ्यः। पुरुषं घ्नत्याः चिताप्रतापोऽप्सु प्रवेशनं वा॥

गणिकाभरणं अर्थं [4] भोगं वाऽपहरतोऽष्टगुणो दण्डः। गणिका भोगं [5] आयतिं पुरुषं च निवेदयेत्॥

[उक्तार्थानां नटादिष्वप्यतिदेशः, नटादिभिर्देयाः राजभागाश्च]

एतेन नटनर्तकगायकवादकवाग्जीवनकुशीलवप्लवक [6] सौभिकचारणानां स्त्रीव्यवहारिणां स्त्रियो गूढाजीवाश्च व्याख्याताः। तेषां तूर्यमागन्तुकं पञ्चपणं प्रेक्षावेतनं दद्यात्। रूपाजीवाः [7] भोगद्वयगुणं मासं दद्युः॥

[कलापाठकानां अभ्यस्तकलानां गणिकादीनां च सौकर्यपरिकल्पनं]

गीतवाद्यपाठ्यनृत्तनाट्याक्षरचित्रवीणावेणुमृदङ्गपरचित्तज्ञानगन्धमाल्यसंयूहनसंपादनसंवाहनवैशिककलाज्ञानानि गणिकाः

---

[1] बलात्करणे. [2] इदम्प्रथमकृते. [3] सिफा=कशाघातः. [4] सम्भोगवेतनम्. [5] स्ववृत्तिसम्पादितं आयम्. [6] सौभिकाः=ऐन्द्रजालिकाः छायाग्राहका वा. [7] दिनद्वयभोगलभ्यमादाय मासदेयतया राज्ञे दद्युरित्यर्थः.

दासीः रङ्गोपजीविनीश्च ग्राहयतो राजमण्डलादाजीवं कुर्यात्। गणिकापुत्रान् रङ्गोपजीविनश्च मुख्यान्निष्पादयेयुः [1]सर्वतालावचराणां च ॥

[नटादिस्त्रीवशीकरणावश्यकता]

संज्ञाभाषान्तरज्ञाश्च स्त्रियस्तेषामनात्मसु ।
चारघातप्रमादार्थं प्रयोज्या [2]बन्धुवाहनाः ॥ १०८ ॥

इत्यध्यक्षप्रचारे गणिकाध्यक्षस्सप्तविंशोऽध्यायः
आदितोऽष्टचत्वारिंशः

---

# पञ्चचत्वारिंशं प्रकरणम्–

## नावध्यक्षः

### अष्टाविंशोऽध्यायः

[नावध्यक्षव्यवस्थापनीयाः तरपण्यराजदेयादयः]

नावध्यक्षः समुद्रसंयाननदीमुखतरप्रचारान् देवसरोविसरोनदीतरांश्च स्थानीयादिष्ववेक्षेत। तद्वेलाकूलग्रामाः क्लृप्तं दद्युः। मत्स्यबन्धकाः [3]नौकाहाटकं षड्भागं दद्युः। पत्तनानुवृत्तं शुल्कभागं वणिजो दद्युः। यात्रावेतनं राजनौभिस्सम्पतन्तः। शङ्खमुक्ताग्राहिणो नौहाटकान्दद्युः, स्वनौभिर्वा तरेयुः। अध्यक्षश्चैषां खन्यध्यक्षेण व्याख्यातः॥

[पालनीयाः अनुग्राह्याः ध्वंसनीयाश्च नावः]

पत्तनाध्यक्षनिबन्धं पण्यपत्तनचारित्रं नावध्यक्षः पालयेत्। [4]मूढवाताहतां तां पितेवानुगृह्णीयात्। उदकप्राप्तं पण्यमशुल्कमर्धशुल्कं वा कुर्यात्। [5]तथा निर्दिष्टाश्चैताः पण्यपत्तनयात्राकालेषु प्रेषयेत्। संयान्तीर्नावः क्षेत्रानुगताः शुल्कं याचेत। हिंस्रिकाः निर्घातयेत्, अमित्रविषयातिगाः पण्यपत्तनचारित्रोपघातिकाश्च।

---

[1] सर्वेषामपि रङ्गोपजीविनाम्. [2] बन्धुभिर्नीयमानाः. [3] अत्र नौकाभाटकमिति, नौविभागकमिति च पाठान्तरे. [4] मूढां=दिङ्मोहोपयाताम्. [5] यथानिर्दिष्टाश्चैताः–ग.

[पात्रकालादिव्यवस्थया सनियन्त्रणं नौप्रवर्तनं
नियमोल्लङ्घिनां दण्डस्तदपवादाश्च]

शासकनियामकदात्ररश्मिग्राहकोत्सेचकाधिष्ठिताश्च महानावो हेमन्तग्रीष्मतार्यासु महानदीषु प्रयोजयेत्। क्षुद्रिकाः क्षुद्रिकासु वर्षास्राविणीषु। [1]बद्धतीर्थाश्चैताः कार्याः राजद्विष्टकारिणां तरणभयात्। अकालेऽतीर्थे च तरतः पूर्वस्साहसदण्डः। काले तीर्थे च अनिसृष्टतारिणः पादोनसप्तविंशतिपणः तरात्ययः। कैवर्तकाष्ठतृणभारपुष्पफलवाटषण्डगोपालकानामनत्ययः सम्भाव्यदूतानुपातिनां च सेनाभाण्डप्रचारप्रयोगाणां च; स्वतरणैस्तरतां, बीजभक्तद्रव्योपस्करांश्चानूपग्रामाणां तारयताम्।

ब्राह्मणप्रव्रजितबालवृद्धव्याधितशासनहरगर्भिण्यो नावध्यक्षमुद्राभिस्तरेयुः॥

[परदेशादागन्तृणां व्यवस्थाः अपराधिनां
बन्धनविधिः अपराधिचिह्नानि च]

कृतप्रवेशाः पारविषयिकाः सार्थप्रमाणा वा विशेयुः। परस्य भार्यां कन्यां वित्तं वाऽपहरन्तं शङ्कितमाविग्नमुद्भाण्डीकृतं महाभाण्डेन मूर्ध्नि भारेणावच्छादयन्तं [2]सद्योगृहीतलिङ्गिनं अलिङ्गिनं वा प्रव्रजितं अलक्ष्यव्याधितं भयविकारिणं गूढसारभाण्डशासनशस्त्राग्नियोगं विषहस्तं दीर्घपथिकममुद्रं चोपग्राहयेत्॥

[देशकालादिभेदेन द्रव्यभेदेन च तरपण्यविधिः]

क्षुद्रपशुर्मनुष्यश्च [3]सभारो माषकं दद्यात्। शिरोभारः कायभारो गवाश्वं च द्वौ। उष्ट्रमहिषं चतुरः। पञ्च लघुयानम्। षड् गोलिङ्गम्। सप्त शकटम्। पण्यभारः पादम्। तेन भाण्डभारो व्याख्यातः। द्विगुणो महानदीषु तरः। क्लृप्तमानूपग्रामा भक्तवेतनं दद्युः। [4]प्रत्यन्तेषु तराः शुल्कमातिवाहिकं वर्तनीं च गृह्णीयुः। [5]निर्गच्छतश्चामुद्रस्य भाण्डं हरेयुः। अतिभारेणावेलायामतीर्थे तरतश्च।

---

[1] सनियन्त्रण(कृतारक्ष)जलप्रवेशाः. [2] तत्कालपरिगृहीतसंन्यासचिह्नम्. [3] करगृहीतभारयुक्तः. [4] विषयसीमसु. [5] चकारान्निर्गतस्य च.

पुरुषोपकरणहीनायामसंस्कृतायां वा नावि विपन्नायां नावध्यक्षो नष्टं विनष्टं वा [1]अभ्यावहेत् ।

सप्ताहवृत्तामाषाढीं कार्तिकीं चान्तरा तरः ।
कार्मिकप्रत्ययं दद्यात् नित्यं चाह्निकमावहेत् ॥ १०९ ॥

इत्यध्यक्षप्रचारे नावध्यक्षोऽष्टाविंशोऽध्यायः
आदित एकोनपञ्चाशः

# षट्चत्वारिंशं प्रकरणम्—

## गोऽध्यक्षः

### एकोनत्रिंशोऽध्यायः

[गोऽध्यक्षेणावेक्षणीया अष्टा अशाः]

गोऽध्यक्षो वेतनोपग्राहिकं करप्रतिकरं भग्नोत्सृष्टकं भागानुप्रविष्टकं व्रजपर्यग्रं नष्टं विनष्टं क्षीरघृतसञ्जातं चोपलभेत ।

[तत्र वेतनोपग्राहिकम्]

[2]गोपालकपिण्डारकदोहकमन्थकलुब्धकाः शतं शतं धेनूनां हिरण्यभृताः पालयेयुः । [3]क्षीरघृतभृता हि वत्सानुपहन्युरिति वेतनोपग्राहिकम् ।

[करप्रतिकरः]

[4]जरद्धुधेनुगर्भिणीपष्ठौहीवत्सतरीणां समविभागं रूपशतमेकः पालयेत् । घृतस्याष्टौ वारकान्, [5]पणिकं पुच्छं, अङ्कचर्म च वार्षिकं दद्यादिति करप्रतिकरः ।

---

[1] दद्यादित्यर्थः. अभ्याभवेत्—पा. [2] पिण्डारकः=महिषपालकः. लुब्धकः हिंस्रभयपरिहर्ता. [3] वेतनेनैव गोरक्षणविधाने हेतुमाह—क्षीरेत्यादि. [4] पष्ठौही= वृषगवेषणी. वत्सतरी=अतीतवत्सभावा. [5] पुच्छगणनया देयम्.

[भग्नोत्सृष्टकम्]

व्याधितान्यङ्गाऽनन्यदोहीदुर्दोहापुत्रघ्नीनां च समविभागं रूपशतं पालयन्तस्तज्जातिकं भागं दद्युरिति भग्नोत्सृष्टकम् ।

[भागानुप्रविष्टम्]

परचक्राटवीभयादनुप्रविष्टानां पशूनां पालनधर्मेण दशभागं दद्युरिति भागानुप्रविष्टकम् ।

[व्रजपर्यग्रम्]

वत्साः वत्सतराः दम्याः वहिनः वृषाः उक्षाणश्च पुङ्गवाः । युगवाहनशकटवहा वृषभाः [1]सूनामहिषाः पृष्ठस्कन्धवाहिनश्च महिषाः । वत्सिका वत्सतरी पष्ठौही गर्भिणी धेनुश्चाप्रजाता वन्ध्याश्च गावो महिष्यश्च । मासद्विमासजातास्तासामुपजाः वत्सा वत्सिकाश्च । मासद्विमासजातानङ्कयेत् । मासद्विमासपर्युषितमङ्कयेत् । अङ्कं चिह्नं वर्णं शृङ्गान्तरं च लक्षणम्, एवमुपजाः निबन्धयेदिति व्रजपर्यग्रम् ।

[नष्टम्]

चोरहृतं अन्ययूथप्रविष्टं [2]अवलीनं वा नष्टम् ।

[विनष्टम्]

पङ्कविषमव्याधिजरातोयाहा[धा]रावसन्नं वृक्षतटकाष्ठशिलाभिहतं ईशानव्यालसर्पग्राहदावाग्निविपन्नं विनष्टं प्रमादात् [3]अभ्यावहेयुः ।

एवं [4]रूपाग्रं विद्यात् ॥

[गवादिहन्तृणां अपहर्तृणां च दण्डः आहर्तृणां सम्मानं च]

स्वयं हन्ता घातयिता हर्ता हारयिता च वध्यः । परपशून् राजाङ्केन परिवर्तयिता [5]रूपस्य पूर्वं साहसदण्डं दद्यात् ।

---

[1] मांसमात्रोपयोगिनः महिषाः. [2] स्वयूथाद्भ्रष्टम्. [3] अभ्याभवेयुः–पा॰
[4] गवादिप्रमाणम्. [5] रूपसङ्ख्यानग्राह्यः दण्डः इह रूपपदार्थः.

स्वदेशीयानां चोरहृतं प्रत्यानीय पणिकं रूपं हरेत्। परदेशीयानां मोक्षयिताऽर्धं हरेत् ।

[गोपालककर्तव्यसंग्रहः, जीवद्भ्यो मृतेभ्यो
वा तेभ्यो लब्धवस्तूनां उपयोगादि
विधिः, कर्तव्यभ्रष्टानां दण्डश्च]

बालवृद्धव्याधितानां गोपालकाः प्रतिकुर्युः। लुब्धकश्वगणिभिः अपास्तस्तेनव्यालपरबाधभयं ऋतुविभक्तमरण्यं चारयेयुः। सर्पव्यालत्रासनार्थं गोचरानुपातज्ञानार्थं च [1] त्रस्नूनां घण्टातूर्यं च बध्नीयुः। [2] समव्यूढतीर्थं अकर्दमग्राहं उदकमवतारयेयुः पालयेयुश्च। स्तेनव्यालसर्पग्राहगृहीतं व्याधिजराऽवसन्नं च आवेदयेयुः, अन्यथा रूपमूल्यं भजेरन्। कारणमृतस्याङ्कचर्म गोमहिषस्य, कर्णलक्षणमजाविकानां, पुच्छमङ्कचर्म चाश्वखरोष्ट्राणां, वालचर्मवस्तिपित्तस्नायुदन्तखुरशृङ्गास्थीनि चाहरेयुः। मांसमाममार्द्रं शुष्कं वा विक्रीणीयुः। [3] उदश्वित् श्ववराहेभ्यो दद्युः। [4] किश्वत् कांस्येन भक्तार्थमाहरेयुः। [5] कीलाटो घाणपिण्याकक्लेदार्थः।

[पशूनां विक्रये अध्यक्षादिदेयोऽशः,
दोहनादिकालव्यवस्थाश्च]

पशुविक्रेता पादिकं रूपं दद्यात्। वर्षाशरद्धेमन्तान् उभयतः कालं दुह्युः। शिशिरवसन्तग्रीष्मान् एककालम्। द्वितीयकालदोग्धुः अङ्गुष्ठच्छेदो दण्डः। दोहकालमतिक्रामतस्तत्फलहानं दण्डः। एतेन [6] नस्यदम्ययुगपिङ्गनवर्तनकाला व्याख्याताः॥

[1] शब्दश्रवणेन त्रासिनाम्. [2] अविषमविस्तीर्णावतारम्. [3] तक्रम्. [4] कूर्चिकां सेनाभक्तार्थमाहरेयुः इति पा. [5] क्षीरविकृतिः. [6] पिङ्गनम्–अङ्गपिङ्गनम्, दान्तेन सह अदान्तस्य संयोजनम्. वर्तनम्–मेधिबन्धनादि इति व्याख्याः.

[पशुभेदेन क्षीरघृतप्रमाणादि]

क्षीरद्रोणे गवां घृतप्रस्थः। पञ्चभागाधिको महिषीणाम्। द्विभागाधिकोऽजावीनाम्। मन्थो वा सर्वेषां प्रमाणं, भूमितृणोदकविशेषाद्धि क्षीरघृतवृद्धिर्भवति।

[सेक्तॄणां ऋषभाणां दुरुपयोगनिषेधः]

यूथवृषं वृषेणावपातयतः पूर्वः साहसदण्डः, घातयत उत्तमः।

[गवादिरक्षणतदुपनिवेशदिक्तदूर्णाग्रहणानां व्यवस्थाः]

वर्णावरोधेन दशतीरक्षा[1]। उपनिवेशदिग्विभागो गोप्रचारात् बलान्वयतो वा गवां रक्षासामर्थ्याच्च। अजादीनां षाण्मासिकीमूर्णां ग्राहयेत्। तेनाश्वखरोष्ट्रवराहव्रजा व्याख्याताः।

[गवादीनां आहारव्यवस्थाः]

बलीवर्दानां [2]नस्याश्वभद्रगतिवाहिनां यवसस्यार्धभारः, तृणस्य द्विगुणं, तुला घाणपिण्याकस्य, दशाढकं कणकुण्डकस्य, पञ्चपलिकं मुखलवणं, तैलकुडुबो नस्यं, प्रस्थः पानम्। मांसतुला, दध्नश्चाढकं, यवद्रोणं, माषाणां वा पुलाकः, क्षीरद्रोणमर्धाढकं वा सुरायाः, स्नेहप्रस्थः, क्षारदशपलं, शृङ्गिबेरपलं च प्रतिपानम्।

पादोनमश्वतरगोखराणां, द्विगुणं महिषोष्ट्राणां कर्मकरबलीवर्दानाम्। पायना(र्थ)र्थानां च धेनूनाम्। कर्मकालतः फलतश्च विधादानम्। सर्वेषां तृणोदकप्राकाम्यम्। इति गोमण्डलं व्याख्यातम्।

[यूथकल्पनाः]

पञ्चर्षभं खराश्वानामजावीनां दशर्षभम्।
शत्यं गोमहिषोष्ट्राणां यूथं कुर्याच्चतुर्वृषम् ॥ ११० ॥

इत्यध्यक्षप्रचारे गोऽध्यक्षः एकोनत्रिंशोऽध्यायः

आदितः पञ्चाशः.

---

[1] दशतीरक्षा, दशवर्गाणां रक्षणं करणीयम्. [2] कृतनासावेधानां, अश्ववत् वेगयुक्ततया रथयोगार्हाणां चेत्यर्थः.

# सप्तचत्वारिंशं प्रकरणं—अश्वाध्यक्षः

## त्रिंशोऽध्यायः

[तत्तद्भेदनिर्देशविधानपूर्वकं अश्वरक्षणविधिः]

अश्वाध्यक्षः [1]पण्यागारिकं क्रयोपागतं आहवलब्धं [2]आजातं साहाय्यकागतकं [3]पणस्थितं यावत्कालिकं वाऽ[4]श्वपर्यग्रं कुलवयोवर्णचिह्नकर्म[5]वर्गागमैर्लेखयेत्। अप्रशस्त[6]न्यङ्गव्याधितांश्चावेदयेत्। कोशकोष्ठागाराभ्यां च गृहीत्वा [7]मासलाभं अश्ववाहश्चिन्तयेत्।

[अश्वस्वरूपसंख्याद्यानुगुण्येन अश्वशालापरिकल्पनविधिः]

[8]अश्वविभवेनायतां अश्वायामद्विगुणविस्तारां [9]चतुर्द्वारोपावर्तनमध्यां [10]सप्रग्रीवां प्रद्वारासनफलकयुक्तां [11]वानर मयूर पृषत नकुल चकोर शुक शारिकाभिराकीर्णां शालां निवेशयेत्।

अश्वायामचतुरश्रश्लक्ष्णफलकास्तारं सखादनकोष्ठकं [12]समूत्रपुरीषोत्सर्गं एकैकशः प्राङ्मुखमुदङ्मुखं वा स्थानं निवेशयेत्। शालावशेन वा दिग्विभागं कल्पयेत्। [13]वडवावृषकिशोराणां एकान्तेषु॥

[प्रजातजातयोरश्वयोः देशकालवयोऽनुगुणाहारव्यवस्था]

वडवायाः प्रजातायास्त्रिरात्रं [14]घृतप्रस्थपानम्; अत ऊर्ध्वं सक्तुप्रस्थः स्नेहभैषज्यप्रतिपानं दशरात्रम्; ततः पुलाको यवसमार्तवश्चाहारः। दशरात्रादूर्ध्वम् किशोरस्य घृतचतुर्भागः सक्तु-

---

[1] प्रदर्शनायागतम्, उपायनत्वेन लब्धमिति केचित्. [2] स्वगृहवर्तिन्या वडवया सूतम्. [3] आधीकृतम्. [4] पर्यग्र–प्रमाणम्. [5] वर्गः–वर्गीकरणम्, आगमः–प्राप्तिस्थानम्. [6] न्यङ्गः–अङ्गविकलः. [7] देयं वेतनं, अश्वभोज्यान् तृणकुलुत्थादींश्च. [8] अश्वसङ्ख्यानुगुण्येन. आयतां-दीर्घाम्. [9] चतुर्द्वारां उपावर्तनमध्यां च. उपावर्तनं प्रलुठनस्थानम्. [10] प्रग्रीवः–मुखशाला. [11] एते च वानरादयः विषप्रतीकारप्रयोजनाः इति ज्ञेयम्. [12] मूत्रपुरीषानवरोधसंविधानसहितम्. [13] वडवा–प्रसविनी, वृषः–सेक्ता. किशोरः–षण्मासादूर्ध्वं आत्रिवर्षात्. [14] घृतप्रस्थादयः शब्दाः तद्देयाहारप्रमाणकालादिसूचकाः.

कुडुबः, क्षीरप्रस्थश्चाहार आषण्मासादिति। ततः परं मासोत्तरमर्धवृद्धिर्यवप्रस्थ आत्रिवर्षात्; द्रोण आचतुर्वर्षादिति। अत ऊर्ध्वं चतुर्वर्षः पञ्चवर्षो वा कर्मण्यः पूर्णप्रमाणः।

[तत्तत्प्रमाणाद्यानुगुण्येनोत्तमत्वादिव्यवस्था]

द्वात्रिंशदङ्गुलं मुखमुत्तमाश्वस्य, पञ्चमुखान्यायामः विंशत्यङ्गुला जङ्घा, [1]चतुर्जङ्घः उत्सेधः। [2]त्र्यङ्गुलावरं मध्यमावरयोः, शताङ्गुलः परिणाहः पञ्चभागावरं मध्यमावरयोः।

[अश्वस्वरूपानुगुण्येन आहारव्यवस्थाः, तन्नियोजनव्यवस्थाश्च]

उत्तमाश्वस्य द्विद्रोणं शालिव्रीहियवप्रियङ्गूणामर्धशुष्कमर्धसिद्धं वा मुद्गमाषाणां वा पुलाकः; स्नेहप्रस्थश्च। पञ्चपलं लवणस्य। मांसं पञ्चाशत्पलिकम्। रसस्याढकं द्विगुणं वा दध्नः पिण्डक्लेदनार्थम्। क्षार(ः)पञ्चपलिकः सुरायाः प्रस्थः पयसो वा द्विगुणः प्रतिपानम्। दीर्घपथभारक्लान्तानां च खादनार्थं स्नेहप्रस्थो[3]ऽनुवासनम्। कुडुबो नस्यकर्मणः। यवसस्यार्धभारः, तृणस्य द्विगुणः, षडरत्निपरिक्षेपः [4]पुञ्जीलग्रहो वा। पादावरमेतन्मध्यमावरयोः। उत्तमसमो रथ्यो वृषश्च मध्यमः। मध्यमसमश्चावरः। पादहीनं बडबानां पाराशवा(मा)नां च; अतोऽर्धं किशोराणां च। इति [5]विधायोगः॥

विधापाचक सूत्रग्राहक चिकित्सकाः [6]प्रतिस्वादभाजः।
युद्धव्याधिजराकर्मक्षीणाः [7]पिण्डगोचरिकाः स्युः। असमरप्रयोग्याः पौरजानपदानामर्थेन वृषाः बडबास्वायोज्याः॥

[1] अशीत्यङ्गुलमौन्नत्यमित्यर्थः. [2] द्व्यङ्गुलावरम्. पा. [3] वस्तिचिकित्साविशेषः. [4] तृणस्तम्बानां ग्रहः, भुजद्वयालिङ्गनग्राह्यः तृणस्तम्बसङ्घातो वा. [5] विधा—अश्वाहारः. [6] प्रतिस्वादः=भोजनम्. तथा च अश्वानां आहारपरिकल्पनसमये उक्ततत्तत्परिमाणैस्सह तत्पाचकाद्युपयोगिनः अंशाः अपि सङ्कलनीया इति भावः. [7] कुक्षिपूरणमात्रप्रयोजकयत्किंचिदाहारयोग्याः.

[1]प्रयोग्यानामुत्तमाः काम्भोजक सैन्धवाऽऽरट्टज वानायुजाः। मध्यमाः बाह्लीक पापेयक सौवीरक तैतलाः। शेषाः प्रत्यवराः। तेषां [2]तीक्ष्णभद्रमन्दवशेन [3]साम्नाह्यमौपवाह्यकं वा कर्म प्रयोजयेत् ॥

[साम्नाह्यपदार्थः, औपवाह्याश्वमार्गस्य पञ्चधा
विभागः, प्रत्येकं तद्भेदाश्च]

[4]चतुरश्रं कर्माश्वस्य साम्नाह्यम्। वल्गनः नीचैर्गतः लङ्घनः धोरणः नारोष्ट्रश्च औपवाह्याः। तत्रौपवेणुकः वर्धमानकः यमकः आलीढप्लुतः [5]पृथगः त्रिकचाली च वल्गनः। स एव शिरःकर्णविशुद्धो नीचैर्गतः षोडशमार्गो वा। प्रकीर्णकः प्रकीर्णोत्तरः निषण्णः पार्श्वानुवृत्तः ऊर्मिमार्गः शरभक्रीडितः शरभप्लुतः त्रितालः बाह्यानुवृत्तः पञ्चपाणिः सिंहायतः स्वाधूतः क्लिष्टः श्लाघितः बृंहितः पुष्पाभिकीर्णश्चेति नीचैर्गतमार्गाः। कपिप्लुतः भेकप्लुतः एकप्लुतः एकपादप्लुतः कोकिलसंचारी उरस्यः बकचारी च लङ्घनः। काङ्कः वारिकाङ्कः मयूरः अर्धमयूरः नाकुलः अर्धनाकुलः वाराहः अर्धवाराहश्चेति धोरणः। संज्ञाप्रतिकारो नारोष्ट्र इति ॥

[रथवाहिभिः भारवाहिभिश्चाश्वैः एकदिनप्राप्याध्व-
परिमाणानां निर्देशः, गतिभेदाश्च]

षण्णव द्वादशेति योजनान्यध्वा रथ्यानाम्। पञ्च योजनान्यर्धाष्टमानि दशेति पृष्ठवाह्यानामश्वानामध्वा ॥

विक्रमो भद्राश्वासो भारवाह्य इति मार्गाः।
विक्रमो वल्गितमुपकण्ठमुपजवो जवश्च धाराः।

---

[1] अधिगतशिक्षाणां युद्धयोग्यानामश्वानां मध्ये. [2] तीक्ष्णः—अतिमात्रतेजस्सत्त्वः कशाघातलेशस्याप्यसोढा. भद्रः—तेजस्सत्त्वयुक्तोऽपि आघातानुरूपचेष्टायुक्तः. मन्दः—निस्तेजस्को निस्सत्त्वश्च महाघातोत्पादनीयाल्पकर्मप्रतिपत्तिः. [3] साम्नाह्यम्—साङ्ग्रामिकम्. औपवाह्यकं—अध्वयानादिकम्. [4] अश्वस्य चतुरश्रं—समीचीनं कर्म—साङ्ग्रामिकमित्यन्वयः. [5] पृथगः इत्यस्य स्थाने पूर्वगः इति पाठः युक्त इति, पूर्वगः—पूर्ववल्गनः, त्रिकचाली—पश्चार्धवल्गनः इति च व्याख्याः.

[मुखादियोजनीयबन्धनोपकरणालङ्कारा-
हाराणां व्यवस्थापकाः]

तेषां बन्धनोपकरणं योग्याचार्याः प्रतिदिशेयुः। साङ्ग्रामिकं रथाश्वालङ्कारं च सूताः। अश्वानां चिकित्सकाः शरीरह्रासवृद्धि-प्रतीकारमृतुविभक्तं चाहारम्।

[उपचारेण अश्वतोषणकर्तारः सप्त]

सूत्रग्राहकाश्वबन्धकयावसिकविधापाचकस्थानपालकेशकार-जाङ्गलीविदश्च स्वकर्मभिरश्वानाराधयेयुः।

[प्राप्तावश्यकर्मसु देशकालातिक्रमे दण्डाः]

कर्मातिक्रमे चैषां दिवसवेतनच्छेदनं कुर्यात्। नीराजनोपरुद्धं वाहयतश्चिकित्सकोपरुद्धं वा द्वादशपणो दण्डः। क्रियाभैषज्य-सङ्गेन व्याधिवृद्धौ प्रतीकारद्विगुणो दण्डः। [1]तदपराधेन वैलोम्ये पत्रमूल्यं दण्डः।

तेन गोमण्डलं खरोष्ट्रमहिषं अजाविकं च व्याख्यातम्॥

[प्रतिदिनं पर्वतिथिप्रभृतिषु च कर्त-
व्यान्यश्वाराधनानि]

द्विरह्नः स्नानमश्वानां गन्धमाल्यं च दापयेत्।
कृष्णसन्धिषु [2]भूतेज्याः शुक्लेषु स्वस्तिवाचनम्॥ १११॥
नीराजनामाश्वयुजे कारयेन्नवमेऽहनि।
[3]यात्रादाववसाने वा व्याधौ वा [4]शान्तिके रतः॥ ११२॥

इत्यध्यक्षप्रचारे अश्वाध्यक्षः त्रिंशोऽध्यायः
आदित एकपञ्चाशः.

[1] तदपराधेन--पा. [2] भूतबलीन्. [3] उद्योगारम्भसमाप्त्योरित्यर्थः
[4] शान्तिप्रयोजनके कर्मणि.

# अष्टचत्वारिंशं प्रकरणम्—हस्त्यध्यक्षो हस्तिप्रचारश्च

## तत्र हस्त्यध्यक्षः एकत्रिंशोऽध्यायः

[हस्त्यध्यक्षेणावेक्षणीयाः अंशाः]

हस्त्यध्यक्षो हस्तिवनरक्षां दम्यकर्मशान्तानां हस्तिहस्तिनीकलभानां शालास्थानशय्याकर्मविधायवसप्रमाणं कर्मस्वायोगं बन्धनोपकरणं साङ्ग्रामिकमलङ्कारं चिकित्सकानीकस्थौपस्थायुकवर्गं चानुतिष्ठेत् ।

[हस्तिशालायाः तत्र तद्वासस्सौकर्यस्य च कल्पनं हस्तिस्वभावभेदेन शालास्थानभेदश्च]

हस्त्यायामद्विगुणोत्सेधविष्कम्भायामां हस्तिनीस्थानाधिकां सप्रग्रीवां [1]कुमारीसङ्गृहां प्राङ्मुखीमुदङ्मुखीं वा शालां निवेशयेत् ।

हस्त्यायामचतुरश्रश्लक्ष्णालानस्तम्भफलकान्तरकं मूत्रपुरीषोत्सर्गस्थानं निवेशयेत् ।

स्थानसमशय्यां [2]अर्धापाश्रयां दुर्गे सान्नाह्यौपवाह्यानां, [3]बहिर्दम्यव्यालानाम् ।

[हस्तिनां दिनचर्याः]

प्रथमसप्तमावष्टमभागावह्नः स्नानकालौ, तदनन्तरं विधायाः, पूर्वाह्णे व्यायामकालः, पश्चाह्नः प्रतिपानकालः । रात्रिभागौ द्वौ स्वप्नकालौ, त्रिभागः संवेशनोत्थानिकः ।

[1] कुमारी=आलानस्तम्भोपरि निवेशिता तुला सुखबन्धनार्था. [2] अर्धपञ्चमहस्तोन्नतस्थानयुताम्. [3] दुर्गबहिर्देशे दमनीयानां, हिंस्रस्वभावानां च गजानाम्.

[गजग्रहणयोग्यः कालः, अवस्थाभेदेन
गजानां ग्राह्यत्वाग्राह्यत्वे च]

ग्रीष्मे ग्रहणकालः। विंशतिवर्षो ग्राह्यः। [1]बिक्को मूढो मत्कुणो व्याधितो गर्भिणी धेनुका हस्तिनी च अग्राह्याः।

[गजेषूत्तमादिविभागः तदानुगुण्ये-
नाहारव्यवस्थाश्च]

सप्तारत्निरुत्सेधो नवायामो दश परिणाहः। प्रमाणतश्चत्वारिंशद्वर्षो भवत्युत्तमः। त्रिंशद्वर्षो मध्यमः। पञ्चविंशतिवर्षोऽवरः। तयोः पादावरो विधाविधिः।

[उत्तमस्याहारप्रमाणानि, गजप्रमाणादिभेदेन
आहारभेदश्च]

अरत्नौ तण्डुलद्रोणः, अर्धाढकं तैलस्य, सर्पिषस्त्रयः प्रस्थाः, दशपलं लवणस्य, मांसं पञ्चाशत्पलिकं, रसस्याढकं द्विगुणं वा दध्नः पिण्डक्लेदनार्थं, क्षारं दशपलिकं, मद्यस्य आढकं द्विगुणं वा पयसः प्रतिपानम्। गात्रावसेकस्तैलप्रस्थः शिरसोऽष्टभागः प्रादीपिकश्च; यवसस्य द्वौ भारौ सपादौ शष्पस्य शुष्कस्यार्धतृतीयो भारः। कडङ्करस्यानियमः। सप्तारत्निना तुल्यभोजनोऽष्टारत्निरत्यरालः। यथाहस्तमवशेषः षडरत्निः पञ्चारत्निश्च। क्षीरयावसिको बिक्कः क्रीडार्थं ग्राह्यः।

[अवस्थासप्तकभेदेन गजस्य सप्तशोभाः, तासां
ऋतूनां चानुगुण्येन व्यायामविधिश्च]

[2]सञ्जातलोहिता प्रतिच्छन्ना संलिप्तपक्षा समकक्ष्या व्यतिकीर्णमांसा समतल्पतला जातद्रोणिकेति शोभाः।

[1]बिक्कः=स्तनन्धयः, मूढः—हस्तिनीसमानदन्तः, मत्कुणः—दन्तरहितः, धेनुका—स्तनपानदायिनी. [2]क्रमेण—त्वगस्थिमात्रयुक्ततया उपजातरुधिरावस्थायुक्ता, किंचिन्मांसच्छन्ना स्थिता, मांसलेपमसृणपार्श्वा, अन्यूनानतिरिक्तमांसावयवा, निम्नोन्नतमांसयुक्ता, पृष्ठवंशसमोत्पन्नमांसयुक्ता द्रोणीतुल्यपृष्ठभागयुक्ता चेति पदार्थाः.

शोभावशेन व्यायामं भद्रं मन्द्रं च कारयेत् ।
मृगसङ्कीर्णलिङ्गं च कर्मस्वृतुवशेन वा ॥ ११३ ॥

इत्याध्यक्षप्रचारे हस्त्यध्यक्षः एकत्रिंशोऽध्यायः
आदितो द्विपञ्चाशः

## हस्तिप्रचारः—द्वात्रिंशोऽध्यायः

[शिक्षणभेदेन चत्वारो गजभेदाः,
यथाक्रमं तेषां निरूपणं च]

कर्मस्कन्धाश्चत्वारः—दम्यस्सान्नाह्य औपवाह्यो व्यालश्च । तत्र दम्यः पञ्चविधः-स्कन्धगत स्तम्भगतो वारिगतो[1]ऽवपातगतो यूथगतश्चेति । [2]तस्योपविचारो बिक्ककर्म ।

सान्नाह्यस्सप्तक्रियापथः उपस्थानं संवर्तनं संयानं वधावधो हस्तियुद्धं नागरायणं सा ग्राङ्गामिकं च । तस्योपविचारः कक्ष्याकर्म ग्रैवेयकर्म यूथकर्म च ।

औपवाह्योऽष्टविधः-आचरणः, कुञ्जरौपवाह्यः, धोरणः, आधानगतिकः, यष्ट्युपवाह्यः, तोत्रोपवाह्यः, शुद्धोपवाह्यः, मार्गायुकश्चेति । तस्योपविचारः शारदकर्म हीनकर्म नारोष्ट्रकर्म च । व्याल एकक्रियापथः । तस्योपविचार आयम्यैकरक्षः कर्मशङ्कितोऽवरुद्धो विषमः प्रभिन्नः प्रभिन्नविनिश्चयो मदहेतुविनिश्चयश्च । क्रियाविपन्नो व्यालः । शुद्धस्सुव्रतो विषमः सर्वदोषप्रदुष्टश्च ।

[गजसंबन्धीनि बन्धनाद्युपकरणानि]

तेषां बन्धनोपकरणमनीकस्थप्रमाणम् । आलानग्रैवेयकक्ष्यापरायणपरिक्षेपोत्तरादिकं बन्धनम् । अङ्कुशवेणुयन्त्रादिकमुपकरणम् । वैजयन्तीक्षुरप्रमालास्तरणकुथादिकं भूषणम् । वर्मतोमरशरावापयन्त्रादिकस्साङ्ग्रामिकालङ्कारः ।

---

[1] गर्तगतः. [2] तस्योपचरणं स्तनन्धयस्येव क्षीरादिदानेनेत्यर्थः.

[हस्तिपरिचारकवर्गः, तल्लभ्याः आहारभागाः
चिकित्सककर्तव्यविशेषश्च]

[1]चिकित्सकानीकस्थाऽऽरोहकाऽऽधोरणहस्तिपकौपचारिकविधापाचकयावसिकपादपाशिककुटीरक्षकौपशायिकादिः [2]औपस्थायिकवर्गः।

चिकित्सककुटीरक्षविधापाचकाः प्रस्थौदनं स्नेहप्रसृतिं क्षारलवणयोश्च द्विपलिकं हरेयुः; दशपलं मांसस्यान्यत्र चिकित्सकेभ्यः।

पथिव्याधिकर्ममदजराऽभितप्तानां चिकित्सकाः प्रतिकुर्युः।

[हस्तिपरिचारकाणां दण्डहेतवः
क्रियाः, दण्डविधिश्च]

स्थानस्याशुद्धिः, यवसस्याग्रहणं, स्थले शायनं, अभागे घातः, परारोहणं, अकाले यानं अभूमौ, अतीर्थेऽवतारणं तरुषण्डे—इति अत्ययस्थानानि। तमेषां भक्तवेतनादाददीत॥

[शान्तिकर्मविधिः]

तिस्रो नीराजनाः कार्याश्चातुर्मास्यर्तुसन्धिषु।
भूतानां कृष्णसन्धीज्यास्सेनान्यः शुक्लसन्धिषु॥ ११४॥

[गजेभ्यो दन्तग्रहणविधिः]

दन्तमूलपरीणाहद्विगुणं प्रोज्झ्य कल्पयेत्।
अब्दे द्व्यर्धे नदीजानां पञ्चाब्दे पर्वतौकसाम्॥ ११५॥

इत्यध्यक्षप्रचारे हस्तिप्रचारे द्वात्रिंशोऽध्यायः
आदितः त्रिपञ्चाशः

[1] आधोरणः=कर्मकुशलः. औपशायिकः=शयनशालाधिकृत. [2] औपस्थायिकाः=कर्मकराः.

# एकोनपञ्चाशपञ्चाशैकपञ्चाशानि प्रकरणानि

# रथाध्यक्षःपत्त्यध्यक्षस्सेनापतिप्रचारश्च

## त्रयस्त्रिंशोऽध्यायः

[रथाध्यक्षकर्तव्यविशेषाः]

अश्वाध्यक्षेण रथाध्यक्षो व्याख्यातः ।

स रथकर्मान्तान् कारयेत् ।

[प्रमाणविनियोगादिभेदेन रथभेदाः]

दशपुरुषो द्वादशान्तरो रथः । तस्मादेकान्तरावराः आ षडन्तरादिति सप्त रथाः ।

देवरथपुष्यरथसाङ्ग्रामिक[1]पारियाणिकपरपुराभियानिकवैनयिकांश्च रथान् कारयेत् ।

[रथानुबन्धिकर्मकरप्रोत्साहनावश्यकता]

इष्वस्त्रप्रहरणावरणोपकरणकल्पनाः सारथिरथिकरथ्यानां च कर्मस्वायोगं विद्यात् । आ कर्मभ्यश्च भक्तवेतनं भृतानामभृतानां च योग्यारक्षानुष्ठानं अर्थमानकर्म च ।

[पदात्यध्यक्षकर्तव्यसङ्ग्रहः]

एतेन पत्त्यध्यक्षो व्याख्यातः । स मौलभृतश्रेणिमित्रामित्राटवीबलानां सारफल्गुतां विद्यात् । निम्नस्थलप्रकाशकूटखनकाकाशदिवारात्रियुद्धव्यायामं च विद्यात् । आयोगमयोगं च कर्मसु ।

[सेनापतिना अभ्यसनीयाः अंशाःकर्तव्याश्च]

तदेव सेनापतिस्सर्वयुद्धप्रहरणविद्याविनीतो हस्त्यश्वरथचर्यासङ्घुष्टश्चतुरङ्गस्य बलस्यानुष्ठानाधिष्ठानं विद्यात् । स्वभूमिं युद्धकालं प्रत्यनीकमभिन्नभेदनं भिन्नसन्धानं संहतभेदनं भिन्नवधं दुर्गवधं यात्राकालं च पश्येत् ।

तूर्यध्वजपताकाभिर्व्यूहसंज्ञाः प्रकल्पयेत् ।
स्थाने याने प्रहरणे सैन्यानां विनये रतः ॥ ११६ ॥

इत्यध्यक्षप्रचारे रथाध्यक्षः पत्त्यध्यक्षः सेनापतिप्रचारश्च
त्रयस्त्रिंशोऽध्यायः आदितः चतुष्पञ्चाशः

[1] पारियाणिकः अध्वसञ्चारोपयोगी रथः. वैनयिकः—चर्याशिक्षणोपयोगी रथः.

# द्विपञ्चाशत्रिपञ्चाशे प्रकरणे–मुद्राध्यक्षो विवीताध्यक्षश्च

## चतुस्त्रिंशोऽध्यायः

[मुद्राध्यक्षाधिकारः, तत्कृतनियमातिक्रमे दण्डश्च]

मुद्राध्यक्षो मुद्रां [1] माषकेण दद्यात्। समुद्रो जनपदं प्रवेष्टुं निष्क्रमितुं वा [2] लभेत। द्वादशपणममुद्रो जानपदो दद्यात्। कूटमुद्रायां पूर्वस्साहसदण्डः। [3] तिरोजनपदस्योत्तमः।

[गोप्रचारार्हभूभागाध्यक्षकर्तव्याः, तस्करादिनिवारणोपायाश्च]

विवीताध्यक्षो मुद्रां पश्येत्। [4] भयान्तरेषु च विवीतं स्थापयेत्। चोरव्यालभयान्निम्नारण्यानि शोधयेत्। अनुदके कूपसेतुबन्धोत्सान् स्थापयेत्, पुष्पफलवाटांश्च। लुब्धकश्वगणिनः परिव्रजेयुररण्यानि। तस्करामित्राभ्यागमे शङ्खदुन्दुभिशब्दं [5] अग्राह्याः कुर्युः शैलवृक्षविरूढा वा, शीघ्रवाहना वा।

अमित्राटवीसञ्चारं च राज्ञो गृहकपोतैर्मुद्रायुक्तैर्हारयेयुः, [6] धूमाग्निपरम्परया वा।

द्रव्यहस्तिवनाजीवं वर्तनीं चोररक्षणम्।
सार्थातिवाह्यं गोरक्ष्यं व्यवहारं च कारयेत्॥ ११७॥

इत्यध्यक्षप्रचारे मुद्राऽध्यक्षो विवीताध्यक्षश्च चतुस्त्रिंशोऽध्यायः
आदितः पञ्चपञ्चाशः

[1] माषकं राजवृद्ध्यर्थं गृहीत्वा प्रवेष्टृ निष्क्रमित्रे च मुद्रां दद्यादित्यर्थः. [2] अधिकारं प्राप्नुयात्. [3] जनपदान्तभरवस्य कूटमुद्राप्रदर्शयितुः. [4] भयहेतुषु भूभागेषु. [5] अग्राह्याः–तस्करादिग्रहणगोचरमगताः. [6] तत्र तत्र धूमाग्न्योः दीर्घदीर्घमुत्पादनेन वा सङ्केतितार्थं सूचयेयुरित्यर्थः.

# चतुःपञ्चाशपञ्चपञ्चाशे प्रकरणे—समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनप्रणिधयश्च

## पञ्चत्रिंशोऽध्यायः

[समाहर्त्रा विलिख्य स्थापनीयाः अंशाः]

समाहर्ता चतुर्धा जनपदं विभज्य, ज्येष्ठमध्यमकनिष्ठविभागेन ग्रामाग्रं परिहारकमायुधीयं धान्यपशुहिरण्यकुप्यविष्टि(कर) [1]प्रतिकरं इदमेतावदिति निबन्धयेत् ।

[गोपसंज्ञकाधिकारिचिन्तनीयाः अंशाः, चिन्तनक्रमश्च]

[2]तत्प्रदिष्टः पञ्चग्रामीं दशग्रामीं वा गोपश्चिन्तयेत् । सीमावरोधेन [3]ग्रामाग्रं, [4]कृष्टाकृष्टस्थलकेदारारामषण्डवाटवनवास्तुचैत्यदेवगृहसेतुबन्धश्मशानसत्रप्रपापुण्यस्थानविवीतपथिसङ्ख्यानेन क्षेत्राग्रं; तेन सीम्नां क्षेत्राणां च मर्यादारण्यपथिप्रमाणसम्प्रदानविक्रयानुग्रहपरिहारनिबन्धान् कारयेत्; गृहाणां च करदाकरदसङ्ख्यानेन; तेषु च-एतावच्चातुर्वर्ण्यम्, एतावन्तः कर्षकगोरक्षकवैदेहककारुकर्मकरदासाश्च, एतावच्च द्विपदचतुष्पदम्, इदं च हिरण्यविष्टिशुल्कदण्डं [5]समुत्तिष्ठतीति । कुलानां च स्त्रीपुरुषाणां बालवृद्धकर्मचरित्राजीवव्ययपरिमाणं विद्यात् ।

[1] प्रत्येकं नियतः राजदेयभागः करः प्रतिकरः. अस्य च धान्यादिषु प्रत्येकमन्वयः. [2] प्रदिष्टः—नियुक्तः. [3] ग्रामाग्रं—ग्रामपरिमाणम्. [4] क्रमेण—कृष्टपच्यव्रीह्यादिक्षेत्र अकृष्टपच्यनीवारादिक्षेत्र शून्यशुष्कप्रदेश शालेयादिक्षेत्र उपवन कदल्यादिक्षेत्र इक्ष्वादिक्षेत्र ग्रामवास्तुपजीविवृक्षवृन्दस्थान ग्रामभूमि उद्देशवृक्ष देवालय सेतुबन्धन श्मशान अन्नदानशाला पानीयशाला तीर्थादिपुण्यप्रदेश गोप्रचारभूमि रथशकटादिमार्गाः पदार्थाः. [5] उत्पद्यते.

[स्थानिकेन चिन्तनीयाः अंशाः, प्रजानां गोप-
स्थानिकविधेयीकरणावश्यकता च]

एवं च जनपदचतुर्भागं स्थानिकः चिन्तयेत्। गोपस्थानिक-स्थानेषु प्रदेष्टारः कार्यकरणं [1]बलिप्रग्रहं च कुर्युः।

[गृहपतिकव्यञ्जनैर्ज्ञेयाः अंशाः]

समाहर्तृप्रदिष्टाश्च गृहपतिकव्यञ्जनाः येषु ग्रामेषु प्रणिहिताः तेषां ग्रामाणां [2]क्षेत्रगृहकुलाग्रं विद्युः; [3]मानसञ्जाताभ्यां क्षेत्राणि, भोगपरिहाराभ्यां गृहाणि, वर्णकर्मभ्यां कुलानि च। [4]तेषां जङ्घाग्रमायव्ययौ च विद्युः। प्रस्थितागतानां च प्रवासावासकारणं, [5]अनर्थ्यानां च स्त्रीपुरुषाणां चारप्रचारं च विद्युः।

[वैदेहकव्यञ्जनैः ज्ञातव्याः अंशाः]

एवं [6]वैदेहकव्यञ्जनाः स्वभूमिजानां राजपण्यानां खनिसेतु-वनकर्मान्तक्षेत्रजानां परिमाणं [7]अर्घं च विद्युः, परभूमिजातानां वारिस्थलपथोपयातानां [8]सारफल्गुपण्यानां कर्मसु च। [9]शुल्कवर्तन्यातिवाहिकगुल्मतरदेयभागभक्तपण्यागारप्रमाणं विद्युः।

[तापसव्यञ्जनैः तच्छिष्यैश्च ज्ञातव्याः अंशाः]

एवं समाहर्तृप्रदिष्टास्तापसव्यञ्जनाः कर्षकगोरक्षकवैदेहकानामध्यक्षाणां च शौचाशौचं विद्युः। [10]पुराणचोरव्यञ्जनाश्चा-

---

[1] बलशालिनां राजद्रव्योत्पत्तिविघ्नकराणां जनानां दमनम्. [2]क्षेत्रगृहकुलानां सङ्ख्यां (इयत्ताम्). [3] भूपरिमाणतदुत्पन्नफलाभ्याम्. [4] जङ्घापदं पादचारिपरम्. तत्कुलसम्बन्धिनां पादचारिणामियत्तामित्यर्थः. [5] अप्रार्थनीयानां नर्तकीविटादीनाम्. [6] वाणिजको वृत्तिक्षीणः प्रज्ञाशौचयुक्तो वैदेहकव्यञ्जनः (७ प्र). [7] अर्घ=मूल्यम्. [8] रत्नादिशाकान्तसर्वविधक्रयविक्रयार्हवस्तूनामित्यर्थः. [9] शुल्कः–राज्ञे देयं द्रव्यम्. वर्तनी–अन्तपालादेयम्. अतिवाहः–दुर्गममार्गलङ्घनं, तदर्थं विवीताध्यक्षग्राह्यं आतिवाहिकम्. गुल्मः=आरक्षिसङ्घः, तरः जलाशयतरणम्. देयपदस्य गुल्मतरयोः अन्वयः. [10] वस्तुतः चोरकर्मण्यतिकुशलाः चोरवर्गेष्वात्मनः चिराभ्यस्तचौर्यान् ख्यापयन्तः पुरुषाः पुराणचोरव्यञ्जनाः.

न्तेवासिनः चैत्यचतुष्पथ[1]शून्यपदोदपाननदीनिपानतीर्थायतनाश्रमारण्यशैलवनगहनेषु स्तेनामित्रप्रवीरपुरुषाणां च प्रवेशनस्थानगमनप्रयोजनान्युपलभेरन् ।

[निगमनम्]

समाहर्ता जनपदं [2]चिन्तयेदेवमुत्थितः ।
चिन्तयेयुश्च संस्थास्ताः [3]संस्थाश्चान्याः स्वयोनयः ॥ ११८ ॥

इत्यध्यक्षप्रचारे समाहर्तृप्रचारः गृहपतिवैदेहकतापसव्यञ्जनप्रणिधयश्च पञ्चत्रिंशोऽध्यायः
आदितः षट्पञ्चाशः

## षट्पञ्चाशं प्रकरणम्—[4]नागरिकप्रणिधिः

### षट्त्रिंशोऽध्यायः

[नागरिकादिभिश्चिन्तनीया अंशाः]

समाहर्तृवन्नागरिको नगरं चिन्तयेत् । [5]दशकुलीं गोपो विंशतिकुलीं चत्वारिंशत्कुलीं वा । स तस्यां स्त्रीपुरुषाणां जातिगोत्रनामकर्मभिः [6]जङ्घाग्रं आयव्ययौ च विद्यात् । एवं दुर्गचतुर्भागं स्थानिकश्चिन्तयेत्[7] ।

---

[1] शून्यपदं—शून्यस्थानम्, उदपानः—प्रवाहजलावरोधेन कृतः जलाशयः. 'उदपानोऽस्त्री बद्धाम्बुस्रोतसो धृतम्' इति. 'आहावश्चनिपानञ्च कूपपार्श्वजलाश्रयः' इति च वैजयन्ती. तीर्थायतनं—पुण्यतीर्थप्रदेशः. [2]चिन्तयेत्—परीक्षयेत्. [3] स्वयोनयः—तत्तत्समानव्यञ्जनाः इत्यर्थः. अत्र संस्थाः इति द्वितीयान्तम्. [4]नगररक्षणे नियुक्तः नागरिकः, तस्य स्वकार्ये नियोजनमित्यर्थः. [5] दशकुल्यादयः २२शे प्रकरणे उक्ताः. [6]पादचारि जनसंख्याम्. [7]अनेन स्थानिकलक्षणमपि व्याख्यातम्.

[धर्मकर्तृप्रभृतिकर्तव्येषु कार्येषु नगररक्षकनिवेदनेन कर्तव्याः स्वप्रामाण्येन कर्तव्याश्चांशाः]

[1] धर्मावसथिनः [2] पाषण्डिपथिकानावेद्य वासयेयुः, [3] स्वप्रत्ययाश्च तपस्विनश्श्रोत्रियांश्च ; कारुशिल्पिनः स्वकर्मस्थानेषु [4]स्वजनं वासयेयुः, वैदेहकाश्चान्योन्यं स्वकर्मस्थानेषु पण्यानां अदेशकालविक्रेतारं [5]अस्वकरणं च निवेदयेयुः । [6] शौण्डकपाक्वमांसिकौदनिकरूपाजीवाः परिज्ञातमावासयेयुः । अतिव्ययकर्तारं [7]अत्याहितकर्माणं च निवेदयेयुः । [8] चिकित्सकः प्रच्छन्नव्रणप्रतीकारकारयितारं अपथ्यकारिणं च गृहस्वामी च निवेद्य गोपस्थानिकयोर्मुच्येत, अन्यथा तुल्यदोषस्स्यात् । प्रस्थितागतौ च निवेदयेत् [9]। अन्यथा [10]रात्रिदोषं भजेत । [11]क्षेमरात्रिषु त्रिपणं दद्यात् ।

[नगरे गूढचारिणां कर्तव्यानि]

[12] पथिकोत्पथिकाश्च बहिरन्तश्च नगरस्य देवगृहपुण्यस्थानवनश्मशानेषु सव्रणं अनिष्टोपकरणं [13]उद्भाण्डीकृतं आविग्नं अतिस्वप्नं अध्वक्लान्तं [14]अपूर्वं वा गृह्णीयुः । एवमभ्यन्तरे शून्यनिवेशावेशन[15]शौण्डिकौदनिकपाक्वमांसिकद्यूतपाषण्डावासेषु [16]विचयं कुर्युः।

---

[1] धर्मार्थं स्थापितासु शालासु अधिकृताः पुरुषाः. [2] पाशुपतादिपाषण्डिप्रभृतीन् पथिकान् गोपाय निवेद्य. [3] स्वयमेव विचार्य अधिगतविश्वासास्सन्तः. स्वप्रत्ययाः इति उत्तरवाक्यद्वयेऽप्यन्वेति, वासयेयुरिति सर्वत्र [4] आगन्तुकमपि. [5] परकीयवस्तुनः चौर्येण व्यवहरणं, व्यवह्रियमाणे वस्तुनि व्यवहर्त्रा आत्मीयत्वासमर्थनं, लवणेषु वालुकाप्रक्षेपवत् वस्तुनि तत्समानरूपातज्जातीयवस्तुसंमिश्रणं वा अस्वकरणम्. [6] मद्यविक्रयिणः, पक्वमांसविक्रयिणः, अन्नविक्रयिणः, वेश्याश्च क्रमेण बोध्याः. [7] अतिमात्रारब्धमद्यपानादिकर्माणम्. [8] चिकित्सकः गृहस्वामी च प्रच्छन्न ...कारिणं च निवेद्य मुच्येतेत्यन्वयः. [9] गृहस्वामी इति शेषः. [10] चौर्यादिकम्. [11] इदं च क्षेमरात्रिष्वपि दण्डविधानं निवेदनस्य कदाप्यव्यभिचारार्थम्. [12]उत्पथिकाः=अरथ्यासु विनीतमार्गेषु संचारिणः गोपालकादिव्यजनाः, पथिकाः वैदेहकादिव्यजनाः. [13] समधिकभारवहनेन विसंस्थुलदेहम्. [14] अज्ञातपूर्वम्. [15] आवेशनं शिल्पशाला. [16] अन्वेषणम्.

[अग्निभयप्रतीकारविधिः, अप्रतिकुर्वतां शिक्षाः च]

[1] अग्निप्रतीकारं च ग्रीष्मे मध्यमयोरह्नश्चतुर्भागयोः। अष्ट-भागोऽग्निदण्डः [2]। [3] बहिरधिश्रयणं वा कुर्युः। [4] पादः पञ्चघटीनां, [5] कुम्भद्रोणीनिःश्रेणीपरशुशूर्पाङ्कुशकचग्रहणीदृतीनां च अकरणे। [6] तृणकटच्छन्नान्यपनयेत्। [7] अग्निजीविनः एकस्थान् वासयेत्। स्वगृहप्रद्वारेषु गृहस्वामिनो वसेयुः [8] असंपातिनो रात्रौ। रथ्यासु [9] कुटव्रजास्सहस्रं तिष्ठेयुः, चतुष्पथद्वारे [10] राजपरिग्रहेषु च। [11] प्रदीप्तं अनभिधावतो गृहस्वामिनो द्वादशपणो दण्डः, [12] षट्-पणोऽवक्रयिणः, प्रमादाद्दीप्तेषु चतुष्पञ्चाशत्पणो दण्डः। [13] प्रादी-पिकोऽग्निना वध्यः।

[रथ्यादिकलुषीकरणे दण्डाः]

पांसुन्यासे रथ्यायामष्टभागो दण्डः, पङ्कोदक[14] सन्निरोधे पादः, राजमार्गे द्विगुणः। पुण्यस्थानोदकस्थानदेवगृहराजपरि-ग्रहेषु पणोत्तराः [15] विष्ठादण्डाः, मूत्रेष्वर्धदण्डाः, भैषज्यव्याधिभय-निमित्तमदण्ड्याः।

[1] महाज्वालोद्गतिहेतुभूताग्निकार्यप्रतिषेधं कुर्युरित्यर्थः. [2] प्रतिषिद्धकाले तादृशाग्निकार्यकरणे दण्डः. [3] अनावृतप्रदेशे. [4] पादः=पणचतुर्भागदण्डः. पञ्चघटीनां=अह्नः मध्यमासु पञ्चसु घटिकासु उक्ताग्निकार्यकर्तॄणाम्. [5] हठा-दुत्पन्नाग्निशामकानां कुम्भादीनां प्रतिगृहं अस्थापनेऽपि उक्त एव दण्डः इति भावः. द्रोणी=दारुमयः कुम्भादिः. निःश्रेणी–अधिरोहिणी. कचग्रहणी–तृणाद्याकर्षणसाधनम्. दृतिः–चर्ममयं उदकपात्रम्. [6] गृहाणीति शेषः. [7] स्वर्णकारादीन्. [8] शङ्कावहसञ्चारशून्याः. [9] जलभरितकुम्भपंक्तयः. 'निपो घटः कुटः कुम्भः' इति वैजयन्ती. [10] राजगृहसम्बन्धिकोशागाराश्वशालादिषु. [11] प्रदीप्तं गृहादिकं दृष्ट्वापीत्यर्थः. [12] मासिमासि भाटकं दत्त्वा परगृहे वसन् अवक्रयी. षट्पणो विक्रयिणः–पा. [13] अग्निना गृहादिसन्दीपकः. [14] सन्नि-रोधः–रथ्यासु गतागततिरोधः. [15] विष्ठा–पुरीषम्.

[शवविषये नियमोल्लङ्घने दण्डाः]

मार्जारश्वनकुलसर्पप्रेतानां नगरस्यान्तरुत्सर्गे त्रिपणो दण्डः, खरोष्ट्राश्वतराश्वपशुप्रेतानां षट्पणः, मनुष्यप्रेतानां पञ्चाशत्पणः। मार्गविपर्यासे शवद्वारादन्यतश्शवनिर्णयने[1] पूर्वस्साहसदण्डः। [2]द्वास्थानां द्विशतम्। श्मशानादन्यत्र [3]न्यासे दहने च द्वादशपणो दण्डः॥

[अपररात्रेषु अनिमित्तं सञ्चारनिषेधः]

[4]निषण्णालिकमुभयतोरात्रं यामतूर्यं; तूर्यशब्दे राज्ञो गृहाभ्याशे सपादपणमक्षणताडनं प्रथमपश्चिमयामिकम्, मध्यमयामिकं द्विगुणं [5]बहिश्चतुर्गुणम्। शङ्कनीये देशे लिङ्गे [6]पूर्वापदाने च गृहीतमनुयुञ्जीत। [7]राजपरिग्रहोपगमने नगररक्षारोहणे च मध्यमस्साहसदण्डः। [8]सूतिकाचिकित्सकप्रेतप्रदीपयाननागरिकतूर्यप्रेक्षाग्निनिमित्तं [9]मुद्राभिश्चाग्राह्याः। [10]चाररात्रिषु प्रच्छन्नविपरीतवेषाः प्रव्रजिता दण्डशस्त्रहस्ताश्च मनुष्या दोषतो दण्ड्याः॥

[अनुचितकर्मकर्तॄणां आरक्षिणां दण्डाः]

रक्षिणामवार्यं वारयतां वार्यं चावारयतामक्षणद्विगुणो दण्डः। स्त्रियं दासीं [11]अधिमेहयतां पूर्वस्साहसदण्डः, [12]अदासीं मध्यमः, [13]कृतावरोधामुत्तमः, कुलस्त्रियं वधः॥

---

[1] निर्णयनम्—निर्हरणम्. [2] द्वारान्तरनिर्हरणप्रतिषेधमकुर्वतां नगरद्वाररक्षिणामित्यर्थः. [3] न्यासः=त्यागः खननं वा. [4] अयं भावः—रात्रौ आदितः अन्ततश्च षड्घटिकाः वर्जयित्वा मध्यकालः जनानां सञ्चारानर्हः. तस्मिंश्च काले संचारनिरोधसूचकं यामतूर्यं-प्रतियामभवं वाद्यघोषणं कुर्यात्. श्रूयमाणेऽप्यस्मिन् शब्दे राजगृहसमीपसंचारिणां अक्षणताडनरूपा शिक्षा सपादपणमिति. अक्षणः=संचारे निषिद्धः कालः, तदा संचारनिमित्तं क्रियमाणा शिक्षा अक्षणताडनम्. कालभेदेन देशभेदेन उक्तशिक्षावैलक्षण्यमाह प्रथमेत्यादि. [5] नगरबहिर्भागेषु. [6] पूर्वकृतचौर्यादिना प्रसिद्धे च सति तादृशं गृहीत्वा पृच्छेदित्यर्थः. [7] राजकीयोद्यानादिप्रवेशने, प्राकाराद्यारोहणे चेत्यर्थः. [8] निमित्तपदस्य सूतिकादिषु प्रत्येकमन्वयः. तत्तन्निमित्तं अकालसंचारिणोऽप्यग्राह्याः इत्यर्थः. [9] राजकीयमुद्राभिः सहिताश्चेत्यर्थः. [10] अनुमतसर्वसंचारा-सूत्सवादिरात्रिषु. [11] बलात्कारेण सम्भोगं कुर्वताम्. [12] गणिकाम्. [13] केनचित् गृहिणीत्वेन परिगृहीताम्.

[नागरिककर्तव्यविशेषाः अकृतकृत्यानां दण्डश्च]

चेतनाचेतनिकं [1] रात्रिदोषं अशंसतो नागरिकस्य दोषानुरूपो दण्डः, [2] प्रमादस्थाने च। नित्यमुदकस्थानमार्गभूमिच्छन्नपथवप्रप्राकाररक्षावेक्षणं नष्टप्रस्मृतापसृतानां च रक्षणम् ॥

[कारागृहबद्धविषये बन्धितव्यविषये च देशकालाधिकारिभेदेन पालनीयाः नियमाः]

बन्धनागारे च बालवृद्धव्याधितानाथानां [3] जातनक्षत्रपौर्णमासीषु [4] विसर्गः, [5] पुण्यशीलाः [6] समयानुबद्धा वा दोषनिष्क्रयं दद्युः [7]॥

[8] दिवसे पञ्चरात्रे वा बन्धनस्थान् [9] विशोधयेत्।
[10] कर्मणा कायदण्डेन हिरण्यानुग्रहेण वा ॥ ११९ ॥
[11] अपूर्वदेशाधिगमे युवराजाभिषेचने।
पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते ॥ १२० ॥

इत्यध्यक्षप्रचारे द्वितीयेऽधिकरणे नागरिकप्रणिधिः
षट्त्रिंशोऽध्यायः, आदितस्सप्तपञ्चाशः.

एतावता कौटलीयस्यार्थशास्त्रस्य अध्यक्षप्रचारो नाम
द्वितीयमधिकरणं समाप्तम्.

[1] रात्रिषु जातं अशुभवृत्तान्तम्. [2] आरक्षिपुरुषैररक्षिते. [3] जातनक्षत्रे—राज्ञः जन्मर्क्षे. [4] बन्धान्मोक्षणम्. [5] स्वभावतो धार्मिका अपि प्रमादसञ्जातापराधाः. [6] कदापि न पुनरेवं करिष्यामः इति प्रातिभाव्यादिदानेन कृतसमयानुबन्धाः. [7] तथा च एतेषां न कारागृहबन्धनमिति भावः. [8] प्रतिदिनं प्रतिपञ्चरात्रं वेत्यर्थः. [9] शिक्षाविधानेन दोषनिष्क्रयं कारयेत्. [10] देशकालाधिकार्यपराधानुगुण्येन शिक्षाभेदाः. तत्र कर्म-भारवहनादिः, कायदण्डः-पारिशेष्यात् आहाराप्रदानकशाभिघातादिः. हिरण्यानुग्रहः=कायक्लेशाविधानेन अर्थदण्डमात्रविधानरूपोऽनुग्रहः, केचित्तु हिरण्यपदस्यैव उक्तार्थकत्वमङ्गीकृत्य अनुग्रहस्य अल्पापकारिविषयत्वं अभिप्रयन्ति.
[11] अधिगमः=स्वायत्तीकरणम्.

## अथ कौटलीये अर्थशास्त्रे

# धर्मस्थीयं नाम

## तृतीयमधिकरणम्

---

### अस्येयं प्रकरणानुक्रमणिका



आहत्य १९ प्रकरणानि, २० अध्यायाः, ३१ कारिकाः.

# एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं सङ्ग्रहः.

### 57 व्यव — पना (पु 159)

निषेध्याः अकार्यकराश्च व्यवहाराः तदपवादश्च

व्यवहारेष्वस्वतन्त्राणां परिगणनम्

क्वचित्तद्व्यवहारस्यापि ग्राह्यता

### 58 विवा — न्धः (पु. 161)

पुस्तकेषु निबन्धनीयाः अंशाः

व्यवहारेषु पराजयहेतवः

अपराधिभिः तद्ग्राहकैश्च पालनीया नियमाः

न्याय्यव्यवहारप्रवर्तनस्य सर्वविधश्रेयस्साधनता

### 59 विवा — क्रम् (पु. 163)

(१) अष्टौ विवाहभेदाः

कन्याशुल्कभागिनः

(२) भर्तरि मृते तद्धनोपयोगक्रमः

स्त्रियां मृतायां तद्धनभागिनः

(३) बहुपत्नीपरिग्रहे हेतवः

बहुपत्नीकेन पालनीयाः नियमाः

भर्तुरपि त्याज्यतायां हेतवः

(४) परिचरणार्हवयोव्यवस्था:

ग:

वाग्दण्डपारुष्ययोर्दण्डाः

दम्पत्योः परस्परं अप्रीतिसम्भवे कर्तव्याः व्यवस्थाः

प्रतिषिद्धाचरणे दण्डा:

प्रतिषिद्धोपकारव्यवहारयोर्दण्डाः

स्त्रियाः स्वाम्यप्रच्युतिहेतवः

(५-६) स्त्रियाः पतिकुलान्निर्गमप्रसङ्गे परिचिन्तनीयाः दण्डनीयाश्च अंशाः

(७-८) ह्रस्वदीर्घप्रवासिनोः पत्योः निरीक्षणकालाः ततः कर्तव्याः अंशाश्च

### 60 दायविभागः (पु. 171)

(१) विभागकालः विभाज्यं धनं तद्भागिनश्च.

प्रमीतसम्बन्धिधनऋणयोर्भागिनः, प्रमीतस्यापुत्रकत्वे विशेषः

निरंशानां कुटुम्बरक्षणक्रमः

(२) एकस्त्रीपुत्रेषु चतुष्पदां द्रव्यान्तराणां च विभागक्रमः

एकपुरुषोढानेकस्त्रीपुत्रेषु सवर्णासवर्णजातेषु ज्यैष्ठ्यादिव्यवस्था, विभागक्रमश्च

(३) बीजिक्षेत्रिणोः पितृत्वम्

सामान्यतः पुत्रभेदाः, सवर्णासवर्णानुलोमप्रतिलोमभेदाश्च

अन्तरालाः, तद्विषयविवाहविभागादिव्यवस्थाश्च

61 वास्तुकम् (पु. 177)

(१) गृहनिवेशनादिविषये परस्परविवादाक्रमणहिंसादिपरिहारोपायाः
चतुष्पदां गृहोपकरणानां च निवेशस्थानानि
वर्षवातादिबाधापरिहारक्रमः
संविदतिक्रमेण गृहवासिनां, सर्वानुभाव्यानुभवनिरोधिनां च दण्डाः
(२) गृहारामादिक्रयविक्रयार्हता क्रमश्च
सीमाक्षेत्रादिविवादपरिहारोपायाः
विवदमानयोर्बाधाबाधव्यवस्थाः

62 (विवी-सा) *सम-च (पु. 181)

(३) कर्मोदकादिमार्गरोद्धृणां सेतुकूपादिविषये नियमोल्लङ्घिनां च दण्डाः
क्षेत्रेषु क्रयविक्रयकृष्यादिव्यवस्थाः
ग्रामरक्षणोपयोगिप्राकारादिषु सर्वसहकारावश्यकता
पशुप्रचारदेशसंरक्षणक्रमः
*सम्भूयकल्प्यमानव्यवस्थायाः अनुल्लङ्घनीयता.

63 ऋणादानम् (पु. 184)

वृद्ध्यर्थप्रयुक्तधनधान्यादिविषये व्यवस्था; वृद्ध्यंशरिक्थयोः क्वचिदस्वीकार्यता च
प्रमीतकृतऋणभागिनः, पृथगनिवर्तनीयं ऋणं च.
साध्यासाध्यानि ऋणानि, ग्राह्याग्राह्याः ऋणिनश्च.
साक्षिभावार्हता, साक्ष्यनुयोगक्रमः, विसंवादे मिथ्यात्वनिश्चये च कर्तव्याः क्रियाः

64 औप – कम्. (पु. 187)

निक्षिप्तधनाप्रत्यर्पणोपाधयः
निक्षिप्तधनदुरुपयोगे, चरस्थिरपदार्थाऽऽधीकरणेन धनग्रहणे, आधीकृतदुरुपयोगे च दण्डाः.
आदेशान्वादेशयोर्विशेषः
स्वामिप्रतिनिधितया वस्तूनि विक्रीणानां नियमाः.
शिल्पिहस्तनिक्षिप्तसुवर्णादीनांरक्षणोपायाः शिल्पिनामार्जवपरीक्षाश्च.
प्रत्यर्पणात्पूर्वं शिल्पिमरणे कर्तव्योंऽशः

65 दास–ल्पः. (पु. 191)

आर्यवृत्तीनां दासीकरणनिषेधः
मिथ्याधानकरणे, विमोचनहेतौ सत्यप्याधीकृतस्याऽविमोचने च दण्डाः.
विक्रीतपुत्रादिविषये, दास्यानर्हदासीकरणविषये च व्यवस्थाः.
वेतनकर्मणोरियत्तानिर्णयः आपदि विशेषश्च.

66 (कर्म–ल्पः) संभू–च. (पु). 193)

कर्मणः प्रागेव भृतिग्रहणे भृत्यैस्स्वामिभिश्च पालनीयाः नियमाः.
सङ्घीभूय भृतिग्रहणेन स्वपरकर्मकारिणोः वेतनादिव्यवस्थाः, मध्ये हेत्वन्तरेण कर्मान्वयविच्छेदे व्यवस्थाश्च.
सङ्घशो वैदिककर्मकारिणां लब्धधनभागव्यवस्थाः, चोरसङ्घदमनं च.
सङ्घान्वयानर्हाणां परिगणनम्.

### 67 विक्री—शयः. (पु. 196)

विक्रीतक्रीतयोः वस्तुनोः सकाले स्वामिसकाशाप्रापणे दण्डाः.

विवाहात्परं कन्याप्रतिनिवर्तन (ऊढस्त्रीत्याग) कालावधयः.

स्वीकृतप्राणिनां प्रतिनिवर्तनकालाः

### 68-70 दत्त-र्म, अस्वा-यः, स्वस्वा-न्धः (पु. 198)

वाचा दत्तस्याप्रदाने, अस्वामिविक्रये च कर्तव्याः व्यवस्थाः.

स्वामिनोऽपि स्वत्वनिवृत्तिहेतवः

आश्रमिषु सहानुभूत्यावश्यकता

वानप्रस्थादिधनभागिनः

### 71 साहसम्. (पु. 200)

साहसस्तेययोर्भेदः

साहसस्य रत्नादिविषयकत्वे तदितरक्षुद्रस्थूलद्रव्यविषयकत्वे च कर्तॄणां कारयितॄणां च दण्डाः.

### 72 वाक्पारुष्यम्. (पु. 202)

शरीरप्रकृतिश्रुतवृत्तिजनपदविषयकवैकल्यवचने दण्डाः.

कुत्सने घातादिभयोपदर्शने च दण्डाः

### 73 दण्डपारुष्यम्. (पु. 203)

स्पर्शने उद्यमने ताडने च दण्डाः

अतीतकलहादिविषये दुःखनिवेदनागमनपौर्वापर्ये च व्यवस्थाक्रमः.

मनुष्यहिंसने हिंसकद्रव्यानुगुण्येन दण्डाः

पशुहिंसने वृक्षादिच्छेदने च दण्डाः

### 74-75 द्यूतसमाह्वयं प्रकीर्णकानि च. (पु. 206)

द्यूते समाह्वये च नियन्तव्यांशविशेषनियमपूर्वकं जेतृपराजितयोः विधेयाः दण्डाः.

अपराधविशेषेषु दण्डाः

तीर्थकरादीनां केषाञ्चिदनुग्राह्याणां परिगणनम्.

# अथ धर्मस्थीयं नाम
# तृतीयमधिकरणम्

## सप्तपञ्चाशाष्टपञ्चाशे प्रकरणे–[1]व्यवहारस्थापना विवादपदनिबन्धश्च

### प्रथमोऽध्यायः

[धार्मिकामात्यप्रवर्तनीयव्यावहारिककर्मस्थानानि]

धर्मस्थास्त्रयस्त्रयोऽमात्याः [2] जनपदसन्धिसङ्ग्रहणद्रोणमुखस्थानीयेषु व्यावहारिकानर्थान् कुर्युः ॥

[निषेध्याः व्यवहाराः, उल्लङ्घने दण्डश्च]

[3] तिरोहितान्तरगारनक्तारण्योपध्युपह्वरकृतांश्च व्यवहारान् प्रतिषेधयेयुः । कर्तुः कारयितुश्च पूर्वस्साहसदण्डः । श्रोतॄणामेकैकं प्रत्यर्धदण्डाः । [4] श्रद्धेयानां तु द्रव्यव्यपनयः ॥

[तेषामेव देशकालादिभेदेनोपादेयत्वादुष्टत्वे]

परोक्षेणा[5]ऽऽधिकर्णग्रहणं अवक्तव्यकरा वा तिरोहिता स्सिद्ध्येयुः ॥

[1] विवाहसंयुक्तादीनां वक्ष्यमाणद्वादशव्यवहाराणां ग्राह्यत्वादिनिरूपणं, वादिवचनानां पत्रलेखनक्रमनिरूपणं चेत्यर्थः. [2] जनपदसन्ध्यादयः चत्वारः स्थानविशेषाः. [3] उपधिः–छद्म. उपह्वरः=रहस्यम्. [4] शुद्धहृदयानां एतादृशव्यवहारकर्तृत्वे तु साध्यद्रव्यहानिः, न तु दण्डः इत्यर्थः. [5] गृहारामादी नामाधीकरणेन ऋणग्रहणं, लोकप्रसिद्धतया अन्यसकाशेऽनुक्त्वैव करणीयाः व्यवहारा वा इत्यर्थः.

[1]दायनिक्षेपोपनिधिविवाहसंयुक्ताः स्त्रीणां [2]अनिष्कासिनीनां व्याधितानां च [3]अमूढसंज्ञानां अन्तरगारकृताः सिद्ध्येयुः । [4]साहसानुप्रवेशकलहविवाहराजनियोगयुक्ताः पूर्वरात्रव्यवहारिणां च रात्रिकृताः सिद्ध्येयुः । [5]सार्थव्रजाश्रमव्याधचारणमध्येषु अरण्यचराणां अरण्यकृताः सिद्ध्येयुः । गूढाजीविषु चोपधिकृताः सिद्ध्येयुः । मिथः समवाये च उपह्वरकृताः सिद्ध्येयुः ॥

[उक्तातिरिक्तानां परतन्त्रकृतानां च
अकार्यकरत्वम्]

अतोऽन्यथा न सिद्ध्येयुः—[6]अपाश्रयवद्भिश्च कृताः, [7]पितृमता पुत्रेण, पित्रा पुत्रवता, निष्कुलेन भ्रात्रा, कनिष्ठेनाविभक्तांशेन; पतिमत्या पुत्रवत्या च स्त्रिया, [8]दासाहितकाभ्यां, अप्राप्तातीतव्यवहाराभ्यां, [9]अभिशस्तप्रव्रजितव्यङ्गव्यसनिभिश्च, अन्यत्र [10]निसृष्टव्यवहारेभ्यः । तत्रापि क्रुद्धेनार्तेन [11]मत्तेनोन्मत्तेनावगृहीतेन वा कृताः व्यवहाराः न सिद्ध्येयुः । कर्तृकारयितृश्रोतॄणां पृथग् यथोक्ताः दण्डाः ।

[सर्वेषां व्यवहाराणां उपादेयत्वे हेतवः,
लेखनेषु उत्तरोत्तरप्राबल्यं च]

स्वे स्वे तु [12]वर्गे देशे काले च स्वकरणकृताः [13]सम्पूर्णाचाराः शुद्धदेशाः दृष्टरूपलक्षणप्रमाणगुणाः सर्वव्यवहारास्सिद्ध्येयुः । [14]पश्चिमं त्वेषां करणमादेशाधिवर्जं श्रद्धेयम् ॥ इति व्यवहारस्थापना ॥

---

[1] निक्षेपोपनिधी न्यासभेदौ. ग्रन्थिगतद्रव्यसंख्याप्रदर्शनपूर्वकत्वे निक्षेपः, अन्यथा उपनिधिः. [2] गृहाद्बहिर्गमनस्वभावशून्यानाम्. [3] अविनष्टचैतन्यानाम्. [4] साहसं-प्रसभलुण्ठनम्. अनुप्रवेशः=परद्रव्यस्य स्वगृहप्रवेशनम्. [5] सार्थः=वणिक्सङ्घः. व्रजाः=गोरक्षकाः. [6] परतन्त्रैः. [7] एषामेव विवरणं पितृमतेत्यादिना. 'परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते । जीवतोर्न स्वतन्त्रः स्यात् जरयापि समन्वितः' इति माधवीयव्यवहारकाण्डे कात्यायनवचनम्. [8] आहितक=आधीकृतः. [9] अभिशस्ताः=महापातकिनः. व्यङ्गाः=मूकादयः. [10] तत्तद्यजमानार्पितव्यवहाराधिकारेभ्यः. [11] मत्तेन-संतुष्टेन, अवगृहीतेन=दण्डितेन. [12] वर्गः-जातिः. [13] संपूर्णचारा इति-ग. [14] उत्तरोत्तरकालकृतम्.

[पुस्तकेषु लेखनीयाः विवादसम्बन्धिनोंऽशाः]

**संवत्सरं ऋतुं मासं पक्षं दिवसं करणं अधिकरणं ऋणं वेदकावेदकयोः कृतसमर्थावस्थयोः देशग्रामजातिगोत्रनामकर्माणि चाभिलिख्य, वादिप्रतिवादिप्रश्नान् अर्थानुपूर्व्या [1]निवेशयेत्; निविष्टांश्चावेक्षेत ॥**

[साक्षिनिमित्तं पराजयहेतवो विपर्यस्तवृत्तयो नव, पराजितस्य दण्डश्च]

**[2]निबद्धं पादमुत्सृज्यान्यं पादं सङ्क्रामति; पूर्वोक्तं पश्चिमेनार्थेन नाभिसं[धत्ते]बध्यते; परवाक्यं [3]अनभिग्राह्यमभिग्राह्यावतिष्ठते; प्रतिज्ञाय देशं 'निर्दिश' इत्युक्ते न निर्दिशति, हीनदेशमदेशं वा निर्दिशति; निर्दिष्टाद्देशादन्यं देशमुपस्थापयति; उपस्थिते देशेऽर्थवचने 'नैवम्' इत्यपव्ययते [4]; साक्षिभिरवधृतं नेच्छति; असम्भाष्ये देशे साक्षिभिर्मिथस्सम्भाषते— इति परोक्तहेतवः ।**

**परोक्तदण्डः [5]पञ्चबन्धः । स्वयंवादिदण्डो दशबन्धः । पुरुषभृतिरष्टांशः । पथिभक्तम(र्घे)र्थविशेषतः । तदुभयं [6]नियम्यो दद्यात् ॥**

[अपराधिस्थाने निर्दिष्टेन निर्देशकेन च पालनीयाः नियमाः]

**अभियुक्तो न प्रत्यभियुञ्जीत अन्यत्र कलहसाहससार्थसमवायेभ्यः । [7]न चाभियुक्तेऽभियोगोऽस्ति । अभियोक्ता चेत् प्रत्युक्तस्तदहरेव न प्रतिब्रूयात्, परोक्तस्स्यात् । कृतकार्यविनिश्चयो ह्यभियोक्ता, नाभियुक्तः । तस्याप्रतिब्रुवतस्त्रिरात्रं सप्तरात्रमिति । अत ऊर्ध्वं त्रिपणावरार्ध्यं द्वादशपणपरं दण्डं कुर्यात् । त्रिपक्षादूर्ध्वमप्रतिब्रुवतः परोक्तदण्डं कृत्वा यान्यस्य द्रव्याणि स्युस्ततोऽभियोक्तारं प्रतिपादयेदन्यत्र वृत्त्युपकरणेभ्यः । तदेव निष्पततोऽभियुक्तस्य कुर्यात् । अभियोक्तुर्निष्पातसमकालः परोक्तभावः ।**

---

[1] पुस्तकेषु लिखेत्. [2] यथापूर्वं वाक्पारुष्यमिति विलिख्य पश्चाद्दण्डपारुष्यमिति वक्ति. [3] अभिग्रहः=दूषणम्. [4] अपसरति. [5] पराजितदेयार्थपञ्चमांशः. [6] पराजितः [7] "अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् । न चाभियुक्तमन्येन नोक्तं विप्रकृतिं नयेत्" इति योगीश्वरः.

प्रेतस्य व्यसनिनो वा साक्षिवचनाः सारम्। अभियोक्ता दण्डं दत्त्वा कर्म कारयेत्[1] आधिं वा स कामं प्रवेशयेत्। [2]रक्षोघ्नरक्षितं वा कर्मणा प्रतिपादयेत् अन्यत्र ब्राह्मणादिति ॥

[धर्मप्रवर्तनमेव राजधर्मः]

चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात्।
नश्यतां सर्वधर्माणां [3]राजा धर्मप्रवर्तकः ॥ १२१ ॥

[धर्मादिषु चतुर्षु राजाज्ञाया
एव प्राबल्यम्]

धर्मश्च व्यवहारश्च चरित्रं राजशासनम्।
[4]विवादार्थश्चतुष्पादः पश्चिमः पूर्वबाधकः ॥ १२२ ॥
अत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु।
चरित्रं सङ्ग्रहे पुंसां राज्ञामाज्ञा तु शासनम् ॥ १२३ ॥

[व्यवहारविशुद्धेः अदृष्टहेतुत्वम्]

राज्ञः स्वधर्मस्स्वर्गाय प्रजा धर्मेण रक्षितुः।
अरक्षितुर्वा [5]क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा ॥ १२४ ॥

[दण्डप्रशंसा]

दण्डो हि केवलो लोकं परं चेमं च रक्षति।
राज्ञा पुत्रे च शत्रौ च यथादोषं समं धृतः ॥ १२५ ॥

[सम्यग्व्यवहारप्रवर्तनस्य
ऐहिकफलहेतुत्वम्]

अनुशासद्धि धर्मेण व्यवहारेण [6]संस्थया।
न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत् ॥ १२६ ॥

---

[1] अभियुक्तबन्ध्वन्यतमं आधित्वेन कर्मकरणार्थं गृह्णीयात्. [2] अनिष्टपरिहारार्थः शिरसि सितसर्षपप्रक्षेपः रक्षोघ्नरक्षा. [3] राजधर्मः प्रवर्तकः–ग. [4] विवादविषयोऽर्थः उक्तपादचतुष्टयविशिष्टः इत्यर्थः. [5] मिथ्यादण्डस्य अयथार्हदण्डस्य वा प्रणेता क्षेप्ता. [6] संस्था=महाजनाचारः.

[ क्वचित् धर्मशास्त्रस्य क्वचिन्नया-
यस्य च प्राबल्यम् ]

संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम् ।
यस्मिन्नर्थे विरुध्येत धर्मेणार्थं विनिश्चयेत् (विनिर्णयेत्) ॥१२७॥
[1] शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित् ।
न्यायस्तत्र प्रमाणं स्यात्तत्र पाठो हि नश्यति ॥ १२८ ॥

[साक्ष्याद्यतिरिक्तानि पञ्च व्यव-
हारसाधनानि]

दृष्टदोषस्स्वयंवादः स्वपक्षपरपक्षयोः ।
अनुयोगार्जवं हेतुः शपथश्चार्थसाधकः ॥ १२९ ॥

[पराजयहेतुभूताः अंशाः]

पूर्वोत्तरार्थव्याघाते साक्षिवक्तव्यकारणे[2] ।
चारहस्ताच्च [3]निष्पाते प्रदेष्टव्यः पराजयः ॥ १३० ॥

इति धर्मस्थीये विवादपदनिबन्धः प्रथमोऽध्यायः.
आदितोऽष्टपञ्चाशः.

---

# एकोनषष्टितमं प्रकरणम्—विवाहसंयुक्तम्

## तत्र विवाहधर्मः स्त्रीधनकल्पः, आधिवेदनिकं च

## द्वितीयोऽध्यायः

[विवाहधर्मः—तत्र विवाहनिरूपणप्राथम्ये हेतुः]

विवाहपूर्वो व्यवहारः ।

[अष्टौ विवाहभेदाः, तेषु धर्म्याः
अधर्म्याश्च]

कन्यादानं कन्यामलङ्कृत्य ब्राह्मो विवाहः । सहधर्मचर्या प्राजापत्यः । [4]गोमिथुनादानात् आर्षः । [5]अन्तर्वेद्यामृत्विजे दानात्

---

[1] 'अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः' इति याज्ञवल्क्यः. [2] कारणं च बन्धुत्वोपकार्यत्वादिरूपं निमित्तम्. [3] प्रच्छन्नपलायने. [4]गोद्वय-स्वीकरणपूर्वकं कन्यादानात्. [5] यज्ञवेदिमध्यस्थिताय.

दैवः । [1]मिथस्समवायात् गान्धर्वः । शुल्कादानात् आसुरः। प्रसह्यादानात् राक्षसः। [2]सुप्तादानात् पैशाचः। पितृप्रमाणाश्चत्वारः पूर्वे धर्म्याः[3], मातापितृप्रमाणाश्शेषाः। तौ हि शुल्कहरौ दुहितुः। अन्यतराभावेऽन्यतरो वा।

[विवाहसमयलब्धेषु धनेषु कन्ययैव ग्राह्या अंशाः, तद्विभागतदुपयोगव्यवस्थादयश्च]

द्वितीयं शुल्कं स्त्री हरेत। सर्वेषां [4]प्रीत्यारोपणमप्रतिषिद्धम्।

वृत्तिराबन्ध्यं वा स्त्रीधनम्। परद्विसाहस्रा स्थाप्या वृत्तिः। आबन्ध्याऽनियमः।

तदात्मपुत्रस्नुषाभर्मणि [5]प्रवासाप्रतिविधाने च भार्याया भोक्तुमदोषः; प्रतिरोधकव्याधिदुर्भिक्षभयप्रतीकारे धर्मकार्ये च पत्युः। सम्भूय वा दम्पत्योर्मिथुनं प्रजातयोस्त्रिवर्षोपभुक्तं च धर्मिष्ठेषु विवाहेषु नानुयुञ्जीत। गान्धर्वासुरोपभुक्तं सवृद्धिकमुभयं दाप्येत। राक्षसपैशाचोपभुक्तं स्तेयं दद्यात्। इति विवाहधर्मः॥

[स्त्रीधनकल्पः—मृतपतिकस्त्रीधनस्य स्त्रीवृत्त्या-द्यानुगुण्येन विनियोगभेदाः]

मृते भर्तरि धर्मकामा तदानीमेवास्थाप्याभरणं शुल्कशेषं च लभेत। लब्ध्वा वा [6]विन्दमाना सवृद्धिकमुभयं दाप्येत। [7]कुटुम्बकामा तु श्वशुरपतिदत्तं निवेशकाले लभेत। निवेशकालं हि दीर्घप्रवासे व्याख्यास्यामः।

श्वशुरप्रातिलोम्येन वा [8]निविष्टा श्वशुरपतिदत्तं जीयेत। ज्ञातिहस्तादभिमृष्टायाः ज्ञातयो यथागृहीतं दद्युः। न्यायोपगतायाः प्रतिपत्ता स्त्रीधनं गोपायेत्। पतिदायं विन्दमाना [9]जीयेत। धर्मकामा भुञ्जीत। पुत्रवती विन्दमाना स्त्रीधनं जीयेत। तत्तु

---

[1] निजेच्छयेति शेषः. [2] सुप्तायाः हरणात्. [3] अन्तिमाश्चत्वारः अधर्म्याः इत्यार्थः इति ग. शास्त्रिणः. वस्तुतस्तु शेषाणां चतुर्णामपि मातापितृसम्मतत्वे धर्म्यत्वमेवेत्यभिप्राय इतिभाति. तेन रुक्मिणीहरणादेरधर्म्यत्वं च निवारितम्. [4] प्रीत्या कन्यादेहस्य भूषणैरलङ्करणम्. [5] प्रवासप्रति–पा. [6] भर्त्रन्तरं परिगृह्णती. [7] सन्तानकामनया देवरं भजमाना. [8] भर्त्रन्तरं गता. [9] दाप्येत.

स्त्रीधनं पुत्रा हरेयुः। पुत्रभरणार्थं वा विन्दमाना पुत्रार्थं [1]स्फातीकुर्यात्। बहुपुरुषप्रजानां पुत्राणां यथापितृदत्तं स्त्रीधनमवस्थापयेत्। कामकारणीयमपि स्त्रीधनं विन्दमाना पुत्रसंस्थं कुर्यात्। अपुत्रा पतिशयनं पालयन्ती गुरुसमीपे स्त्रीधनं आ आयुःक्षयाद्भुञ्जीत। आपदर्थं हि स्त्रीधनं। ऊर्ध्वं दायादं गच्छेत्।

[मृतस्त्रीधनभागिनः]

जीवति भर्तरि मृतायाः पुत्राः दुहितरश्च स्त्रीधनं विभजेरन्, अपुत्रायाः दुहितरः, तदभावे भर्ता। शुल्कं [2]अन्वाधेयमन्यद्वा बन्धुभिर्दत्तं बान्धवा हरेयुः। इति स्त्रीधनकल्पः॥

[आधिवेदनिकम्—पुत्रार्थिनो बहुभार्यापरिग्रहानुमतिः, कालादिनियमश्च]

वर्षाण्यष्टौ अप्रजायमानामपुत्रां वन्ध्यां चाकाङ्क्षेत[3]। दश [4]बिन्दुं, द्वादश कन्याप्रसविनीम्। ततः पुत्रार्थी द्वितीयां विन्देत। तस्यातिक्रमे शुल्कं स्त्रीधनमर्धं चाधिवेदनिकं[5] दद्यात्। चतुर्विंशतिपणपरं च दण्डम्।

शुल्कं स्त्रीधनमशुल्कस्त्रीधनायास्तत्प्रमाणमाधिवेदनिकं अनुरूपां च वृत्तिं दत्त्वा बह्वीरपि विन्देत। पुत्रार्था हि स्त्रियः।

[परिगृहीतपत्नीनां ऋतुयौगपद्ये तद्गमनविधिः]

तीर्थसमवाये चासां यथा विवाहं पूर्वोढां जीवत्पुत्रां वा पूर्वं गच्छेत्। [6]तीर्थगूहनाऽगमने षण्णवतिर्दण्डः।

[स्त्रीष्वगम्यानां निर्देशः, तादृशीनामेव पुरुषाणां कश्चिद्गम्यता च]

पुत्रवतीं धर्मकामां वन्ध्यां बिन्दुं नीरजस्कां वा नाकामामुपेयात्। न चाकामः पुरुषः। कुष्ठिनीमुन्मत्तां वा न गच्छेत्। स्त्री तु पुत्रार्थमेवंभूतं वोपगच्छेत्।

---

[1] वर्धयेत्. [2] पतिगृहादानीतम्. [3] पुत्रं प्रसूते न वेतिपरीक्षार्थं प्रतिपालयेत्. [4] नश्यत्प्रसूतिम्. तिन्दुं—पा. [5] परिणीताया उपरि अन्यस्याः परिणयनं अधिवेदनं, तन्निमित्तम्. [6] तीर्थस्याप्रकाशने भर्त्रनभिगमने चेत्यर्थः.

[भर्तुरपि कश्चित्त्याज्यता]

नीचत्वं परदेशं वा प्रस्थितो राजकिल्बिषी ।
प्राणाभिहन्ता पतितस्त्याज्यः क्लीबोऽपि वा पतिः ॥ १६१ ॥

इति धर्मस्थीये: विवाहसंयुक्ते विवाहधर्मः स्त्रीधनकल्प आधिवेदनिकं[1] च द्वितीयोऽध्यायः.
आदित एकोनषष्टितमः.

# शुश्रूषाभर्मपारुष्यद्वेषातिचारोपकारव्यवहार-प्रतिषेधाश्च तृतीयोऽध्यायः

[शुश्रूषार्हवयोव्यवस्था]

द्वादशवर्षा स्त्री प्राप्तव्यवहारा भवति । षोडशवर्षः पुमान् । अत ऊर्ध्वं [2] अशुश्रूषायां द्वादशपणः स्त्रिया दण्डः पुंसो द्विगुणः ॥

[गृहभरणनियुक्ताभ्यः स्त्रीभ्यः भरणोपकरणार्पण व्यवस्थाः]

[3]भर्मण्यायां अनिर्दिष्टकालायां वाऽधिकं ग्रासाच्छादनं [4]यथापुरुषपरिवापं सविशेषं दद्यात् । निर्दिष्टकालायां तदेव सङ्ख्याय बन्धं च दद्यात्; शुल्कस्त्रीध[5]नाधिवेदनिकानामनादाने च । श्वशुरकुलप्रविष्टायां [6]विभक्तायां वा [7]नाभियोज्यः पतिः—इति भर्म ।

[वाग्दण्डपारुष्ये]

"नग्ने! विनग्ने! न्यङ्गे! अपितृके! अमातृके!" [8]इत्यनिर्देशेन विनयग्राहणम् । वेणुदलरज्जुहस्तानामन्यतमेन वा पृष्ठे त्रिराघातः ।

---

[1] आध्यावहनिकं–पा. [2] अपरिचर्यायां राजशासनश्रवणतदनुष्ठानादीच्छायामसत्यां वा. [3] गृहभरणनियुक्तायाम्. [4] गृहभरणीयजनोपयोग्युपकरणानतिक्रमेण. [5] नाध्यावहनि–पा. [6] भर्तृकृतविभागायाम्. [7] ग्रासाच्छादनार्थे इत्यादिः. [8] अनिर्देशः–साक्रोशसम्बोधनम्.

तस्यातिक्रमे वाग्दण्डपारुष्यदण्डाभ्यामर्धदण्डाः। तदेव स्त्रिया भर्तरि प्रसिद्धमदोषाया ईर्ष्याया बाह्यविहारेषु द्वारेषु। अत्ययो यथानिर्दिष्टः—इति पारुष्यम् ॥

[द्वेषे दण्डाः]

भर्तारं द्विषती स्त्री सप्तार्तवान्यमण्डयमाना तदानीमेव स्थाप्याभरणं निधाय भर्तारं अन्यया सह शयानमनुशयीत। भिक्षुक्य[1]न्वाधिज्ञातिकुलानामन्यतमे वा भर्ता द्विषन् स्त्रियं [2]एकां [3]अनुशयीत। [4]दृष्टे लिङ्गे, मैथुनापहारे, सवर्णापसर्पोपगमे वा मिथ्यावादी द्वादशपणं दद्यात्। अमोक्ष्या भर्तुरकामस्य द्विषती भार्या, भार्यायाश्च भर्ता। परस्परं द्वेषान्मोक्षः। स्त्रीविप्रकाराद्वा पुरुषश्चेन्मोक्षमिच्छेत्, यथागृहीतमस्यै दद्यात्। पुरुषविप्रकाराद्वा स्त्री चेन्मोक्षमिच्छेत्, नास्यै यथागृहीतं दद्यात्। अमोक्षो धर्मविवाहानामिति—इति द्वेषः ॥

[अतिचारे (प्रतिषिद्धाचरणे) दण्डाः]

प्रतिषिद्धा स्त्री दर्पमद्यक्रीडायां त्रिपणं दण्डं दद्यात्। दिवा स्त्रीप्रेक्षाविहारगमने षट्पणो दण्डः, पुरुषप्रेक्षाविहारगमने द्वादशपणः, रात्रौ द्विगुणः। [5]सुप्तमत्तप्रव्रजने भर्तुरदाने च द्वारस्य द्वादशपणः। रात्रौ निष्कासने द्विगुणः ॥

स्त्रीपुंसयोर्मैथु[6]नाङ्गविचेष्टायां रहश्शीलसम्भाषायां वा चतुर्विंशतिपणः स्त्रिया दण्डः; पुंसो द्विगुणः। केशनीवीदन्तनखावलम्बनेषु पूर्वस्साहसदण्डः; पुंसो द्विगुणः। शङ्कितस्थाने संभाषायां च पणस्थाने शिफादण्डः। [7]स्त्रीणां ग्राममध्ये चण्डालः पक्षान्तरे पञ्चशिफा दद्यात्, पणिकं वा प्रहारं मोक्षयेत्—इत्यतिचारः ॥

---

[1] अन्वाधिः-स्त्रीधनाधिष्ठाता. [2] पुरुषान्तरसम्पर्कशून्यम्. [3] अनुतपन् स्वयमेवोपतिष्ठेत. [4] अन्यस्त्रीमैथुनचिन्हे उपलब्धे सति. [5] स्वभर्तरि सुप्ते मत्ते वा सति तदा गृहात् प्रव्रजने. [6] नार्थेऽनङ्गविचेष्टायां रहोऽश्लील–पा. [7] ग्राममध्यमभागे ताः स्त्रियः स्थापयित्वा तासां सर्वेषु पश्यत्स्वेव शरीरैक पार्श्वे चण्डाल आगत्य पञ्च कशाघातान् दद्यादित्यर्थः.

प्रतिषिद्धयोः स्त्रीपुंसयोरन्योन्योपकारे क्षुद्रकद्रव्याणां द्वादशपणो दण्डः; स्थूलकद्रव्याणां चतुर्विंशतिपणः; हिरण्यसुवर्णयोश्चतुष्पञ्चाशत्पणः स्त्रिया दण्डः, पुंसो द्विगुणः ॥

त एवागम्ययोरर्धदण्डाः; तथा प्रतिषिद्धपुरुषव्यवहारेषु च—इति प्रतिषेधः ॥

[स्त्रियाः स्वाम्यप्रच्युतिहेतवः]

राजद्विष्टातिचाराभ्यां आत्मापक्रमणेन च ।
स्त्रीधनानीतशुल्कानां अस्वाम्यं जायते स्त्रियः ॥ १३२ ॥

इति धर्मस्थीये विवाहसंयुक्ते शुश्रूषाभर्मपारुष्यद्वेषातिचाराः
उपकारव्यवहारप्रतिषेधाश्च तृतीयोऽध्यायः
आदितष्षष्टितमः.

## निष्पतनं पथ्यनुसरणं ह्रस्वप्रवासः दीर्घप्रवासश्च
## चतुर्थोऽध्यायः

[स्त्रियाः पतिकुलान्निर्गमने, तस्याः अन्यैः
वासावकाशदाने च दण्डाः]

पतिकुलान्निष्पतितायाः[1] स्त्रियाष्षट्पणो दण्डोऽ[2]न्यत्र विप्रकारात्; प्रतिषिद्धायां द्वादशपणः; प्रतिवेशगृहातिगतायाष्षट्पणः। प्रातिवेशिकभिक्षुकवैदेहकानामवकाशभिक्षापण्यादाने द्वादशपणो दण्डः; प्रतिषिद्धानां पूर्वः साहसदण्डः; परगृहातिगतायां चतुर्विंशतिपणः। परभार्यावकाशदाने शत्यो दण्डोऽन्यत्रापद्भ्यः; वारणाज्ञानयोर्निर्दोषः ॥

[पतिगृहान्निर्गमनेऽपि क्वचिददोषः
गन्तव्यस्थानव्यवस्था च]

'पतिविप्रकारात् पतिज्ञातिसुखावस्थग्रामिकान्वाधिभिक्षुकीज्ञातिकुलानामन्यतममपुरुषं गन्तुमदोषः' इत्याचार्याः। 'सपुरुषं

---

[1] निर्गतायाः. [2] पुरुषकृतापराधाभावे.

वा ज्ञातिकुलम्। कुतो हि साध्वीजनस्य [1]छलम्! सुखमेतदवबोद्धुम्' इति कौटल्यः। प्रेतव्याधिव्यसनगर्भनिमित्तमप्रतिषिद्धमेव ज्ञातिकुलगमनम्॥

तन्निमित्तं वारयतो द्वादशपणो दण्डः। तत्रापि गूहमाना स्त्रीधनं [2]जीयेत। ज्ञातयो वा छादयन्तः शुल्कशेषम्—इति निष्पतनम्॥

[पतिगृहान्निर्गम्य पथि पुरुषान्तरानुगमने दण्डाः तदपवादश्च]

पतिकुलान्निष्पत्य ग्रामान्तरगमने द्वादशपणो दण्डः, स्थाप्याभरणलोपश्च। गम्येन वा पुंसा सहप्रस्थाने चतुर्विंशतिपणः, सर्वधर्मलोपश्चान्यत्र भर्मदानतीर्थगमनाभ्याम्। पुंसः पूर्वः साहसदण्डः तुल्यश्रेयसः, पापीयसो मध्यमः। बन्धुरदण्ड्यः। प्रतिषेधेऽर्धदण्डः। पथि [3]व्यन्तरे गूढदेशाभिगमने मैथुनार्थेन शङ्कितप्रतिषिद्धाभ्यां वा पथ्यनुसारेण [4]सङ्ग्रहणं विद्यात्। [5]तालावचरचारणमत्स्यबन्धकलुब्धकगोपालकशौण्डिकानामन्येषां च प्रसृष्टस्त्रीकाणां पथ्यनुसरणमदोषः। प्रतिषिद्धे वा नयतः पुंसः स्त्रियो वा गच्छन्त्यास्त एवार्धदण्डाः—इति पथ्यनुसरणम्॥

[ह्रस्वप्रवासिपतिनिरीक्षणकालव्यवस्थाः]

ह्रस्वप्रवासिनां शूद्रवैश्यक्षत्रियब्राह्मणानां भार्याः संवत्सरोत्तरं कालमाकांक्षेरन्नप्रजाताः, संवत्सराधिकं प्रजाताः। [6]प्रतिविहिताः द्विगुणं कालम्; [7]अप्रतिविहितास्सुखावस्था बिभृयुः; परं चत्वारि वर्षाण्यष्टौ वा ज्ञातयः; [8]ततो यथादत्तमादाय [9]प्रमुञ्चेयुः॥

[1] व्यभिचरणम्. [2] (भर्त्रा)हाप्येत. [3] मार्गविदूरावकाशे. [4] स्त्रीसंग्रहणोक्तदण्डविधिम्. [5] तालावचरो नटः. चारणः कुशीलवः. लुब्धकः व्याधः. शौण्डिकः-सुरासन्धानजीवी. [6] भर्तृप्रणीतजीविकासौकर्यवत्यः. [7] अप्रतिविहिता इति द्वितीयान्तं, सुखावस्थाः इति प्रथमान्तम्. [8] तदूर्ध्वमपि पत्युरनागमने इत्यर्थः. [9] विसृजेयुः. स्वबन्धुगृहं प्रतीतिशेषः.

ब्राह्मणमधीयानं[1] दशवर्षाण्यप्रजाता, द्वादश प्रजाता, राजपुरुषं आ आयुःक्षयादाकाङ्क्षेत । सवर्णतश्च प्रजाता नापवादं लभेत । कुटुम्बर्द्धिलोपे वा सुखावस्थैर्विमुक्ता यथेष्टं विन्देत जीवितार्थमापद्गता वा। धर्मविवाहात् कुमारी परिग्रहीतारमनाख्याय प्रोषितमश्रूयमाणं [2]सप्ततीर्थान्याकाङ्क्षेत ; संवत्सरं श्रूयमाणम् । आख्याय प्रोषितमश्रूयमाणं पञ्च तीर्थान्याकाङ्क्षेत, दश श्रूयमाणम् । एकदेशदत्तशुल्कं त्रीणि तीर्थान्यश्रूयमाणं; श्रूयमाणं सप्त तीर्थान्याकाङ्क्षेत । दत्तशुल्कं पञ्चतीर्थान्यश्रूयमाणं ; दश श्रूयमाणम् । ततः (अन्ततः) परं धर्मस्थैर्विसृष्टा [3]यथेष्टं विन्देत । [4]तीर्थोपरोधो हि धर्मवध इति कौटल्यः ।

[दीर्घप्रवासिपतिनिरीक्षणकालव्यवस्थाः]

दीर्घप्रवासिनः प्रव्रजितस्य प्रेतस्य वा भार्या सप्त तीर्थान्याकाङ्क्षेत । संवत्सरं प्रजाता । ततः [5]पतिसोदर्यं गच्छेत् ; बहुषु प्रत्यासन्नं धार्मिकं भर्मसमर्थं कनिष्ठमभार्यं वा ; तदभावेऽप्यसोदर्यं सपिण्डं कुल्यं[6] वा ; आसन्नमेतेषाम् । एष एव क्रमः ।

[उक्तनियमातिक्रमे दण्डाः]

एतानुत्क्रम्य दायादान्[7] वेदने जारकर्मणि ।
जारस्त्रीदातृवेत्तारः [8]संप्राप्ताः सङ्ग्रहात्ययम् ॥ १३३ ॥

इति धर्मस्थीये विवाहसंयुक्ते निष्पतनं पथ्यनुसरणं
ह्रस्वप्रवासः दीर्घप्रवासश्च चतुर्थोऽध्यायः
विवाहसंयुक्तं समाप्तम्
आदितः एकषष्टितमः

[1] विद्याभ्यासाय देशान्तरं गतम्. [2] तीर्थ=आर्तवम्. [3] यथाकामितं पतिं परिगृह्णियात्. [4] पुरुषानभिगमनेन ऋतुकालस्य विफलीकरणम्. [5] स्वपत्युर्भ्रातरं. [6] तुल्यं. [7] पुरुषान्तरपरिणयने, [8] स्त्रीसङ्ग्रहणविहितेन दण्डेन दण्डनीया इत्यर्थः.

# षष्टितमं प्रकरणं—दायविभागः

## दायक्रमः—पञ्चमोऽध्यायः

[कुलधनविभागकालः, विभाज्यं धनं,
तद्भागिनः, पुनर्विभागश्च]

अनीश्वराः पितृमन्तः स्थितपितृमातृकाः पुत्राः। तेषा ऊर्ध्वं पितृतो दायविभागः पितृद्रव्याणाम्, स्वयमार्जितमविभाज्यं अन्यत्र पितृद्रव्यादुत्थितेभ्यः। पितृद्रव्यादविभक्तोपगतानां पुत्राः पौत्रा वा आचतुर्थादित्यंशभाजः। तावदविच्छिन्नः पिण्डो भवति। विच्छिन्नपिण्डाः सर्वे समं विभजेरन्। अपितृद्रव्याः विभक्तपितृद्रव्या वा सह जीवन्तः पुनर्विभजेरन्। [1]यतश्चोत्तिष्ठेत स त्र्द्व्यंशं (द्व्यंशं) लभेत॥

[प्रमीतधनभागिनः]

द्रव्यमपुत्रस्य सोदर्याः भ्रातरः सहजीविनो वा हरेयुः, कन्याश्च रिक्थम्; पुत्रवतः पुत्राः दुहितरो वा धर्मिष्ठेषु विवाहेषु जाताः; तदभावे पिता धरमाणः; पित्रभावे भ्रातरो भ्रातृपुत्राश्च। अपितृका बहवोऽपि च भ्रातरो भ्रातृपुत्राश्च पितुरेकमंशं हरेयुः। [2]सोदर्याणामनेकपितृकाणां पितृतो दायविभागः।

[प्रमीतकृतऋणभागिनः]

पितृभ्रातृपुत्राणां पूर्वे विद्यमाने नापरमवलम्बन्ते[3], ज्येष्ठे च कनिष्ठमर्थग्राहिणः॥

[पुत्राणां समभागिता, बाला-
नूढयोर्विशेषश्च]

जीवद्विभागे पिता नैकं विशेषयेत्[4]। न चैकमकारणान्निर्विभजेत। पितुरसत्यर्थे ज्येष्ठाः कनिष्ठाननुगृह्णीयुः अन्यत्र मिथ्या-

---

[1] यस्य परिश्रमात् धनं वर्धेत सः. [2] यदि भर्तुः षण्डत्वादिज्ञानेन नियोगविधिना लब्धपुत्रा सती ततः कदाचित् लब्धवीर्येण भर्त्रा पुत्रान् विन्देत तदैवं समानोदरेषु भ्रातृषु अनेकपितृकत्वं संभवेदिति भाति। इदं च धार्मिकीमेव वृत्तिमनुसृत्य. [3] ऋणदातार इतिशेषः. [4] विशेषणं—अधिकांशेन न्यूनांशेन वा नियोजनम्.

वृत्तेभ्यः। प्राप्तव्यवहाराणां विभागः। अप्राप्तव्यवहाराणां [1]देय-विशुद्धं मातृबन्धुषु ग्रामवृद्धेषु वा स्थापयेयुर्व्यवहारप्रापणात्। प्रोषितस्य वा। [2]सन्निविष्टसमं असन्निविष्टेभ्यो [3]नैवेशनिकं दद्युः, कन्याभ्यश्च [4]प्रादानिकम्॥

[5]ऋणरिक्थयोस्समो विभागः॥

[पात्रविभागविधिवैयर्थ्यम्]

'उदपात्राण्यपि निष्किञ्चनाः विभजेरन्' इत्याचार्याः। 'छलमेतदिति' कौटल्यः। [6]सतोऽर्थस्य विभागो नासतः॥

[अपुत्रधनस्य तद्दायादसत्त्वासत्त्वयोः
विनियोगक्रमः]

'एतावानर्थः सामान्यः, तस्यैतावान् [7]प्रत्यंशः' इत्यनुभाष्य ब्रुवन् साक्षिषु विभागं कारयेत्। दुर्विभक्तं अन्योन्यापहृतं अन्तर्हितं अविज्ञातोत्पन्नं वा पुनर्विभजेरन्। अदायादकं राजा हरेत् स्त्रीवृत्ति प्रेतकार्यवर्जमन्यत्र श्रोत्रियद्रव्यात्। तत् त्रैविद्येभ्यः प्रयच्छेत्॥

[निरंशाः, तत्कुटुम्बरक्षणक्रमश्च]

पतितः पतिताज्जातः क्लीबश्चानंशाः जडोन्मत्तान्धकुष्ठिनश्च। [8]सति भार्यार्थे तेषामपत्यमतद्विधं[9] भागं हरेत्, ग्रासाच्छादनमितरे पतितवर्जाः॥

तेषां च कृतदाराणां लुप्ते प्रजनने सति।
सृजेयुः बान्धवाः पुत्रांस्तेषामंशं प्रकल्पयेत्॥ १३४॥

इति धर्मस्थीये दायविभागे दायक्रमः पञ्चमोऽध्यायः
आदितो द्विषष्टितमः

[1] ऋणादिदेयव्ययपरिशिष्टं भागम्. [2] अनुरूपकन्यापरिणयव्ययपरिशिष्टं भागम्. [3] विवाहनिर्वर्तनावश्यकं द्रव्यम्. [4] विवाहाय पर्याप्तम्. [5] उत्तमर्णादात्मना गृहीतं सवृद्धि प्रत्यर्पणीयं धनं ऋणम्, कस्मैचित् अधमर्णाय वृद्ध्यर्थं दत्तं धनं रिक्थमिति भेदः. [6] निष्किञ्चनत्वसोदकपात्रत्वयोर्विरोधात् तथा शब्दप्रयोगोऽनुचित इति भावः. [7] प्रतिव्यक्ति संबध्यमानोऽशः. [8] विवाहे सति. [9] अतद्विधमपत्यमित्यन्वयः. जडोन्मत्तान्धादिभिन्नमपत्यमित्यर्थः.

## अंशविभागः—षष्ठोऽध्यायः

[एकस्त्रीपुत्रेषु ज्येष्ठादिक्रमेण चतुष्पदां द्रव्यान्तराणां विभागक्रमः]

एकस्त्रीपुत्राणां ज्येष्ठांशः ब्राह्मणानामजाः, क्षत्रियाणामश्वाः, वैश्यानां गावः, शूद्राणामवयः। [1]काणलिङ्गाः तेषां मध्यमांशः। [2]भिन्नवर्णाः कनिष्ठांशः। चतुष्पदाभावे रत्नवर्जानां दशानां भागं द्रव्याणामेकं ज्येष्ठो हरेत्; [3]प्रतिमुक्तस्वधापाशो हि भवति—इत्यौशनसो [4] विभागः॥

[तत्रैव प्रकारान्तरम्]

पितुः [5]परिवापात् यानमाभरणं च ज्येष्ठांशः, शयनासनं भुक्तकांस्यं च मध्यमांशः, [6]कृष्णधान्यायसं [7]गृहपरिवापो गोशकटं च कनिष्ठांशः। शेषद्रव्याणा(मेकद्र)मेतद्द्रव्यस्य वा समो विभागः॥

[भगिनीविषये विशेषः]

आदायादा भगिन्यः, मातुः परिवापाद्भुक्तकांस्याभरणभागिन्यः॥

[सन्मनुष्योचितचारित्रहीनविषये क्रमविशेषः]

[8]मानुषहीनो ज्येष्ठस्तृतीयमंशं ज्येष्ठांशाल्लभेत। चतुर्थमन्यायवृत्तिः निवृत्तधर्मकार्यो वा कामाचारस्सर्वं [9]जीयेत। तेन मध्यमकनिष्ठौ व्याख्यातौ तयोर्मानुषोपेतो ज्येष्ठांशादर्धं लभेत॥

[1] काणजातीयाः. काणः—एकदृक्. तज्जातीयाः पङ्ग्वादयः पशव इत्यर्थः. [2] विविधवर्णाः. [3] कण्ठबद्धपितृकर्मरूपपाशवान् हि ज्येष्ठो भवतीत्यर्थः. [4] उशनसा विहितः. [5] परिच्छदात्. [6] कृष्णधान्यं तिलादि, आयसं अयोविकारः. [7] मुसलादिः. [8] मनुष्यसामान्यापेक्षितपुरुषकारगुणविहीनः. [9] हाप्येत.

[एकपुरुषोढबहुस्त्रीपुत्रेषु यमळयोश्च
ज्यैष्ठ्यव्यवस्था]

नानास्त्रीपुत्राणां तु [1]संस्कृतासंस्कृतयोः कन्या कृतक्रिययोरभावे च, एकस्याः पुत्रयोर्यमयोर्वा पूर्वजन्मना ज्यैष्ठ्यभावः ॥

[तेषु सङ्करजातीयपुत्राणां चातुर्वर्ण्यपुत्राणां च विभागक्रमः]

[2]सूतमागधव्रात्यरथकाराणामैश्वर्यतो विभागः । शेषास्तमुपजीवेयुः । अनीश्वरास्समविभागा इति ॥

चातुर्वर्ण्यपुत्राणां ब्राह्मणीपुत्रश्चतुरोंऽशान् हरेत्, क्षत्रियापुत्रस्त्रीनंशान्, वैश्यापुत्रो द्वावंशौ, एकं शूद्रापुत्रः । तेन त्रिवर्णाद्विवर्णपुत्रविभागः क्षत्रियवैश्ययोर्व्याख्यातः । ब्राह्मणस्यानन्तरापुत्रः तुल्यांशः क्षत्रियवैश्ययोरर्धांशः, तुल्यांशो वा [3]मानुषोपेतः ॥

[सवर्णासवर्णस्त्र्यैकपुत्रविषये विशेषः
तदपवादश्च]

तुल्यातुल्ययोरेकपुत्रस्सर्वं हरेत्। बन्धूंश्च बिभृयात्, ब्राह्मणानां तु पारशवस्तृतीयमंशं लभेत। द्वावंशौ सपिण्डः कुल्यो वाऽऽसन्नः स्वधादानहेतोः। तदभावे पितुराचार्योऽन्तेवासी वा ॥

क्षेत्रे वा जनयेदस्य नियुक्तः क्षेत्रजं सुतम् ।
मातृबन्धुस्सगोत्रो वा तस्मै तत् प्रदिशेद्धनम् ॥ १३५ ॥

इति धर्मस्थीये दायविभागेंऽशविभागः षष्ठोऽध्यायः
आदितस्त्रिषष्टितमः

[1] ब्राह्मादिविधिना परिगृहीता संस्कृता, गान्धर्वादिविधिना परिगृहीता असंस्कृता. [2] ब्राह्मण्यां क्षत्रियादुत्पन्नः सूतः, क्षत्रियायां वैश्यादुत्पन्नः मागधः, अनुपनीतविवाहितात् ब्राह्मणात् सवर्णायां जातः व्रात्यः. [3] पुरुषगुणोपेतः.

## पुत्रविभागः–सप्तमोऽध्यायः

[परपुरुषाज्जातस्य किंनिरूपिता
पुत्रतेत्यंशे मतभेदः]

'परपरिग्रहे बीजमुत्सृष्टं [1]क्षेत्रिणः' इत्याचार्याः। 'माता भस्त्रा, यस्य रेतस्तस्यापत्यम्' इत्यपरे। '[2]विद्यमानमुभयम्' इति कौटल्यः॥

[सामान्यतः पुत्रभेदाः सवर्णा-
सवर्णयोर्विशेषश्च]

[3]स्वयंजातः कृतक्रियायामौरसः। तेन तुल्यः पुत्रिकापुत्रः। सगोत्रेणान्यगोत्रेण वा नियुक्तेन क्षेत्रजातः क्षेत्रजः पुत्रः। जनयितुरसत्यन्यस्मिन् पुत्रे स एव द्विपितृको द्विगोत्रो वा द्वयोरपि स्वधारिक्थभाग्भवति। तत्सधर्मा बन्धूनां गृहे गूढजातस्तु गूढजः। बन्धुनोत्सृष्टोऽपविद्धः पुत्रः। कन्यागर्भः कानीनः। सगर्भोढायास्सहोढः। [4]पुनर्भूतायाः पौनर्भवः। स्वयंजातः पितृबन्धूनां च दायादः। परजातस्संस्कर्तुरेव न बन्धूनाम्। तत्सधर्मा मातापितृभ्यामद्भिर्दत्तो दत्तः। स्वयं बन्धुभिर्वा पुत्रभावोपगत उपगतः। पुत्रत्वेऽधिकृतः कृतकः। परिक्रीतः क्रीत इति॥

औरसे तूत्पन्ने सवर्णास्तृतीयांशहराः। असवर्णा ग्रासाच्छादनभागिनः॥

ब्राह्मणक्षत्रिययोरनन्तरापुत्रास्सवर्णाः, एकान्तरा असवर्णाः॥

[अनुलोमाः]

ब्राह्मणस्य वैश्यायामम्बष्ठः। शूद्रायां निषादः पारशवो वा॥ क्षत्रियस्य शूद्रायामुग्रः। शूद्र एव वैश्यस्य। सवर्णासु चैषामचरितव्रतेभ्यो जाता व्रात्याः—इत्यनुलोमाः॥

[1] प्रसवित्र्याः भर्तुरेवेतियावत्. [2] उभयोरपि पुत्रः इति भावः. [3] परिणीतायां भर्त्रा उत्पादितः औरसः इत्यर्थः. [4] पुनर्विवाहिताया इत्यर्थः.

[प्रतिलोमाः]

[1]शूद्रादायोगवक्षत्तचण्डालाः । वैश्यान्मागधवैदेहकौ । क्षत्रियात्सूतः । पौराणिकस्त्वन्यस्सूतो मागधश्च ब्रह्मक्षत्राद्विशेषतः[2] । त एते प्रतिलोमाः स्वधर्मातिक्रमाद्राज्ञस्सम्भवन्ति ॥

[अन्तरालाः, तद्विषये विवाह
विभागादि व्यवस्थाश्च]

उग्रान्नैषाद्यां कुटकः (कुक्कुटकः) । विपर्यये पुल्कसः । वैदेहिकायामम्बष्ठाद्वैणः । विपर्यये कुशीलवः । क्षत्तायामुग्राच्छ्वपाकः-- इत्येतेऽन्ये चान्तरालाः । [3]कर्मणा वैण्यो रथकारः ॥

तेषां स्वयोनौ विवाहः । पूर्वापरगामित्वं वृत्तानुवृत्तं च स्वधर्मान् स्थापयेत् । शूद्रसधर्माणो वा अन्यत्र चण्डालेभ्यः । केवलमेवं वर्तमानः स्वर्गमाप्नोति राजा नरकमन्यथा । सर्वेषामन्तरालानां समो विभागः ॥

[दायविभागविषयनिगमनम्]

देशस्य जात्याः सङ्घस्य धर्मो ग्रामस्य वाऽपि यः ।
उचितस्तस्य तेनैव दायधर्मं प्रकल्पयेत् ॥ १३६ ॥

इति धर्मस्थीये दायविभागे पुत्रविभागः सप्तमोध्यायः
दायविभागस्समाप्तः । आदितश्चतुष्षष्टितमः

[1] शूद्रात् क्रमेण वैश्यायां क्षत्रियायां ब्राह्मण्यां चोत्पन्नाः आयोगवादयः.
[2] एतत्तत्त्वं तु विष्णुपुराणप्रथमांशतृतीयाध्यायेऽग्निपुराणप्रथमाध्याये कौर्मपुराणप्रथमाध्याये च द्रष्टव्यम्. [3] वैण्यः=वर्णजातीय एव, कर्मणा–वास्तुवृत्त्याश्रयणेन रथकार इत्युच्यते इत्यर्थः.

# एकषष्टितमं प्रकरणं—वास्तुकम्

## तत्र गृहवास्तुक अष्टमोऽध्यायः

[परकीयगृहभूम्याक्रमणपरिहारोपायाः वास्तुपदार्थश्च]

[1]सामन्तप्रत्यया वास्तुविवादाः । गृहं क्षेत्रं आरामः सेतुबन्धः तटाकं आधारो वा वास्तुः । [2]कर्णकीलायससम्बन्धोऽनुगृहं सेतुः । यथासेतुभोगं वेश्म कारयेत् । अभूतं वा परकीयकुड्यादपक्रम्य द्वावरत्नी त्रिपदीं वा [3]पादे बन्धं कारयेत् ॥

[तत्तद्गृहसम्बन्धिमलोदकप्रसरणव्यवस्थाः]

अवस्करं भ्रमं [4]उदपानं गृहोचितमन्यत्र अन्यत्र सूतिकाकूपादा निर्दशाहादिति । तस्यातिक्रमे पूर्वस्साहसदण्डः । तेन ब(इ)न्धनावघातनकृतं कल्याणकृत्येष्वाचामोदकमार्गाश्च व्याख्याताः ॥

त्रिपदीप्रतिक्रान्तमध्यर्धमरत्निं वा प्रवेश्य गाढप्रसृतमुदकमार्गं प्रस्रवणप्रपातं वा कारयेत् । तस्यातिक्रमे चतुष्पञ्चाशत्पणो दण्डः ॥

[चतुष्पदां गृहोपकरणानाञ्च निवेशस्थानानि]

एकपदीप्रतिक्रान्तमरत्निं वा चाक्रिचतुष्पदस्थानमग्निष्ठं [5]उदञ्जरस्थानं [6]रोचनीं [7]कुट्टनीं वा कारयेत् । तस्यातिक्रमे चतुर्विंशतिपणो दण्डः ॥

---

[1] गृहारामादिविषयकाः विवादाः स्वानन्तरविद्यमानवास्तुप्रामाण्येन निर्णेयाः इत्यर्थः. [2] तत्तद्गृहारामादिसीमसु निखाताः स्थूणाकाराः शिलाः कर्णकीलाः, तेषु आयससम्बन्धः इत्यर्थः. [3] कुड्यमूले. [4] उदपानं पानगृहोचितमन्यत्र सूति-इति, वा नागृहोचितमन्यत्र सूति—इति च पाठान्तरे. [5] महज्जलपात्रं उदञ्जरं. [6] रोचनकर्मयन्त्रम्. [7] उलूखलम्.

[गृहाणां परस्परं अन्तराल
भागपरिक्लृप्तिः]

सर्ववास्तुकयोः प्राक्षिप्तकयोर्वा शालयोः किष्कुरन्तरिका त्रिपदी वा। तयोश्चतुरङ्गुलं नीप्रान्तरं समारूढकं वा। किष्कुमात्रमाणिद्वारमन्तरिकायां [1]खण्डफुल्लार्थमसम्पातं कारयेत्। प्रकाशार्थमल्पमूर्ध्वं वातायनं कारयेत्। [2]सम्भूय वा गृहस्वामिनो यथेष्टं कारयेयुः, अनिष्टं वारयेयुः॥

[वर्षवातादिबाधापरिहारावश्यकता]

[3]वानलट्याश्चोर्ध्वं [4]आवार्यभागं कटप्रच्छन्नमवमर्शभित्तिं वा कारयेत् वर्षबाधभयात्। तस्यातिक्रमे पूर्वस्साहसदण्डः; प्रतिलो[5]मद्वारवातायनबाधायां च, अन्यत्र राजमार्गरथ्याभ्यः। [6]खातसोपानप्रणाळीनिश्रेण्यवस्करभागैर्बहिर्बाधायां भोगनिग्रहे च। परकुड्यमुदकेनोपघ्नतो द्वादशपणो दण्डः। मूत्रपुरीषोपघाते द्विगुणः। [7]प्रणालीमोक्षो वर्षति। अन्यथा द्वादशपणो दण्डः॥

[संविदमतिक्रम्य अधिककालं गृहवासे
कर्तव्याः व्यवस्थाः]

प्रतिषिद्धस्य च वसतो निरस्यतश्चावक्रयणं[8], अन्यत्र पारुष्यस्तेयसाहससङ्ग्रहणमिथ्याभोगेभ्यः। स्वयमभिप्रस्थितो वर्षावक्रयशेषं दद्यात्॥

[सर्वसाधारण्येनानुभाव्याः प्रदेशाः,
अनुभवनिरोधे दण्डश्च]

सामान्ये वेश्मनि साहाय्यमप्रयच्छतः सामान्यमुपरुन्धतो भोगं च गृहे द्वादशपणो दण्डः। विनाशयतस्तद्द्विगुणः॥

---

[1] स्फुटितसंस्कारार्थम्. [2] अत्र क्वचित् ‘तदवसिते वेश्मनि छादयेत्’ इत्यधिकं वाक्यम्. [3] गृहवरण्डकस्य. [4] आहार्यभोगकटप्रच्छन्न इति–पा [5] माद्द्वा–पा. [6] खातयोवान–पा. [7] पर्जन्ये वर्षति सति तज्जलस्य प्रणालीद्वारा मोक्षः कर्तव्य इत्यर्थः. [8] क्रयिणम्–पा.

कोष्ठकाङ्गणवर्जानामग्निकुट्टनशालयोः ॥
विवृतानां च सर्वेषां सामान्यो भोग इष्यते ॥ १३७ ॥

इति धर्मस्थीये वास्तुके गृहवास्तुकं अष्टमोऽध्यायः
आदितः पञ्चषष्टितमः

## वास्तुविक्रयः— नवमोऽध्यायः

[गृहारामादिक्रयविक्रयार्हता, क्रमश्च]

ज्ञाति[1]सामन्तधनिकाः क्रमेण भूमिपरिग्रहान् क्रेतुं [2]अभ्याभवेयुः। ततोऽन्ये बाह्याः। सामन्तचत्वारिंशत्कुल्या गृहप्रतिमुखे वेश्म श्रावयेयुः; सामन्तग्रामवृद्धेषु क्षेत्रमारामं सेतुबन्धं तटाकमाधारं वा मर्यादासु यथासेतुभोगम्। 'अनेनार्घेण कः क्रेता 'इति त्रिराघु[3]षितमव्याहतं क्रता क्रेतुं लभेत। स्पर्धाया वा मूल्यवर्धने मूल्यवृद्धिः सशुल्का कोशं गच्छेत्। [4]विक्रयप्रतिक्रोष्टा शुल्कं दद्यात्। अस्वामिप्रतिक्रोशे चतुर्विंशतिपणो दण्डः। सप्तरात्रादूर्ध्वमनभिसरतः प्रतिक्रुष्टो विक्रीणीत। प्रतिक्रुष्टातिक्रमे वास्तुनि द्विशतो दण्डः, अन्यत्र चतुर्विंशतिपणो दण्डः। इति वास्तुविक्रयः॥

[सीमाविवादपरिहारोपायाः]

सीमविवादं ग्रामयोरुभयोस्सामन्ता पञ्चग्रामी दशग्रामी वा सेतुभिः स्थावरैः कृत्रिमैर्वा कुर्यात्। कर्षकगोपालवृद्धकाः पूर्वभुक्तिका वा, [5]अबाह्यास्सेतूनामभिज्ञा बहवः एको वा निर्दिश्य सीमासेतून् विपरीतवेषाः सीमानं [6]नयेयुः। उद्दिष्टानां सेतूनामदर्शने सहस्रदण्डः। तदेव नीते सीमापहारिणां सेतुच्छिदां च कुर्यात्। [7]प्रणष्टसेतुभोगं वा सीमानं राजा यथोपकारं विभजेत्॥

---

[1] सामन्तः=निकटगृहवासी. [2] अर्हेयुः. [3] षितत्रीतमव्या–पा. [4] विक्रयसमये मूल्यवर्धयिता. [5] बाह्याः सेतूनामनभिज्ञाः–पा. [6] निर्दिश्य समर्थयेयुः. [7] सर्वथा अविज्ञातसेतुं, तादृशं भुक्तिं च.

[क्षेत्रविवादपरिहारोपायाः]

क्षेत्रविवादं सामन्तग्रामवृद्धाः कुर्युः। तेषां द्वैधीभावे यतो बहवश्शुचयोऽनुमता वा ततो नियच्छेयुः; मध्यं वा गृह्णीयुः। तदुभयं परोक्तं वास्तु राजा हरेत्; प्रनष्टस्वामिकं च; यथोपकारं वा विभजेत्। प्रसह्यादाने वास्तुनि स्तेयदण्डः। कारणादाने प्रयासमाजीवं च परिसङ्ख्याय बन्धं दद्यात्। मर्यादापहरणे पूर्वः साहसदण्डः। मर्यादाभेदे चतुर्विंशतिपणः॥

[उक्तक्रमस्य विवादान्तरेष्वप्यतिदेशेन मर्यादास्थापननिगमनम्]

तेन तपोवनविवीतमहापथश्मशानदेवकुलयजनपुण्यस्थानविवादा व्याख्याताः। इति मर्यादास्थापनम्॥

सर्व एव विवादास्सामन्तप्रत्ययाः। विवीतस्थलकेदारषण्डखलवेश्मवाहनकोष्ठानां [1] पूर्वं पूर्वमाबाधं सहेत॥

[विवदमानयोर्द्वयोरन्यतरस्यावश्यबाधनीयत्वे बाधाबाधव्यवस्थाः]

ब्रह्मसोमारण्यदेवयजनपुण्यस्थानवर्जाः स्थलप्रदेशाः। आधारपरिवाहकेदारोपभोगैः परक्षेत्रकृष्टबीजहिंसायां यथोपघातं मूल्यं दद्युः। केदारारामसेतुबन्धानां परस्परहिंसायां हिंसाद्विगुणो दण्डः। पश्चान्निविष्टमधरतटाकं नोपरितटाकस्य केदारमुदकेनाप्लावयेत्। उपरि निविष्टं नाधरतटाकस्य पूरास्रावं [2] वारयेत् अन्यत्र त्रिवर्षोपरतकर्मणः। तस्यातिक्रमे पूर्वस्साहसदण्डः [3] तटाकवामनं च। पञ्चवर्षोपरतकर्मणः सेतुबन्धस्य स्वाम्यं लुप्येतान्यत्रापद्भ्यः। तटाकसेतुबन्धानां नवप्रवर्तने पाञ्चवार्षिकः परिहारः। भग्नोत्सृष्टानां चातुर्वार्षिकः। समुपारूढानां त्रैवार्षिकः। स्थलस्य द्वैवार्षिकः। [4] स्वात्मा आधाने विक्रये च। खातप्रावृत्तिमनदीनिबन्धायतन-

---

[1] पूर्वं कर्तृ उत्तरोत्तरनिमित्तं आबाधं-पीडां सहेतेत्यर्थः. [2] कारयेत्-पा. [3] जलनिर्गमनेन तटाकस्य शून्यीकरणम्. [4] स्वात्मा-नवप्रवर्तक एव प्रभुरित्यर्थः. स्वाम्याधाने इति वा पाठः स्यात्.

तटाककेदारारामषण्डवापानां [1]सस्यवर्णभागोत्तरिकमन्येभ्यो वा यथोपकारं दद्युः । [2]प्रक्रयावक्रयाधिभागभोगनिसृष्टोपभोक्तारश्चैषां प्रतिकुर्युः। अप्रतीकारे हीनद्विगुणो दण्डः ॥

सेतुभ्यो मुञ्चतस्तोयमवारे षट्पणो दमः।
वारे वा तोयमन्येषां प्रमादेनोपरुन्धतः ॥ १३८॥

इति धर्मस्थीये वास्तुके वास्तुविक्रयः सीमाविवादः
मर्यादास्थापनं बाधाबाधिकं च नवमोऽध्यायः
आदितः षट्षष्टितमः

# एकषष्टितमद्विषष्टितमे प्रकरणे–
# विवीतक्षेत्रपथहिंसा समयस्यानपाकर्म च

## दशमोऽध्यायः

[तत्तन्मार्गरोधं कुर्वतां सेतुकूपादिविषये
अतिक्रमप्रवृत्तिमतां च दण्डाः]

कर्मोदकमार्गमुचितं रुन्धतः कुर्वतोऽनुचितं वा पूर्वस्साहसदण्डः। सेतुकूपपुण्यस्थानचैत्यदेवायतनानि च परभूमौ निवेशयतः पूर्वानुवृत्तं धर्मसेतुमाधानं विक्रयं वा नयतो नाययतो वा मध्यमस्साहसदण्डः; श्रोतॄणामुत्तमः अन्यत्र भग्नोत्सृष्टात्। स्वाम्यभावे ग्रामाः पुण्यशीला वा [3]प्रतिकुर्युः। पथिप्रमाणं दुर्गनिवेशे व्याख्यातम्। क्षुद्रपशुमनुष्यपथं रुन्धतो द्वादशपणो दण्डः। महापशुपथं चतुर्विंशतिपणः। हस्तिक्षेत्रपथं चतुष्पञ्चाशत्पणः। सेतुवनपथं षट्छतः। श्मशानग्रामपथं द्विशतः। द्रोणमुखपथं

---

[1] सस्यवर्णाधिक्ययुक्तं भागाधिक्ययुक्तं च यथा भवति तथा. [2] उपभोक्तार इत्यस्य प्रक्रयादिषु प्रत्येकमन्वयः. प्रक्रयः-क्रयः, अवक्रयः-(ಗುತ್ತಿಗೆ.)

3

पञ्चशतः। स्थानीयराष्ट्रविवीतपथं साहस्रः। अतिकर्षणे चैषां दण्डचतुर्था दण्डाः। कर्षणे पूर्वोक्ताः।

[क्षेत्रविषये क्रयविक्रयकृष्यादिव्यवस्थाः,
अक्रमव्यवहर्तॄणां दण्डाश्च]

क्षेत्रिकस्या[1]ऽक्षिपतः क्षेत्रं [2]उपवासस्य वा त्यजतो बीजकाले द्वादशपणो दण्डः अन्यत्र दोषोपनिपाताविषह्येभ्यः। करदाः करदेष्वाधानं विक्रयं वा कुर्युः, ब्रह्मदेयिका ब्रह्मदेयिकेषु। अन्यथा पूर्वस्साहसदण्डः, करदस्य वाऽकरदग्रामं प्रविशतः। करदं तु प्रविशतः सर्वद्रव्येषु प्राकाम्यं स्यात्, अन्यत्रागारात्। तदप्यस्मै दद्यात्। अनादेयमकृषतोऽन्यः पञ्चवर्षाण्युपभुज्य प्रयासनिष्क्रयेण दद्यात्। अकरदाः परत्र वसन्तो भोगमुपजीवेयुः॥

[ग्रामरक्षणविषये सर्वसहकारावश्यकता, चोरादि-
निरसनेन प्राकारादिकरणावश्यकता च]

ग्रामार्थेन [3]ग्रामिकं व्रजन्तं उपवासाः पर्यायेणानुगच्छेयुरननुगच्छन्तः पणार्धपणिकं योजनं दद्युः। ग्रामिकस्य ग्रामात् [4]अस्तेनपारदारिकं निरस्यतश्चतुर्विंशतिपणो दण्डः। ग्रामस्योत्तमः। निरस्तस्य प्रवेशो ह्यधिगमेन व्याख्यातः। स्तम्भैस्समन्ततो ग्रामाद्धनुश्शतापकृष्टमुपसालं कारयेत्॥

[पशुप्रचारदेशसंरक्षणव्यवस्था, नियमोल्लङ्घनेन
पशून् चारयतां दण्डश्च]

पशुप्रचारार्थं [5]विवीतमालवनेनोपजीवेयुः। विवीतं भक्षयित्वापसृतानामुष्ट्रमहिषाणां पादिकं रूपं गृह्णीयुः। गवाश्वखराणां चार्धपादिकं। क्षुद्रपशूनां षोडशभागिकम्। भक्षयित्वा निषण्णानामेत एव द्विगुणा दण्डाः। [6]परिवसतां चतुर्गुणाः। ग्रामदेववृषा

---

[1] कर्षकेभ्योऽनर्पयतः. [2] ग्राममुपजीव्य वसन्तः कर्षकाः उपवासाः. [3] ग्राममुख्यं. [4] स्तेयपरदाररतत्वादिदोषैरयुक्तम्. [5] मालं=उन्नतभूतलं (ಬೆಟ್ಟ). [6] रात्रिष्वपि तत्रैव वसताम्.

वा अनिर्देशाहा वा धेनुरुक्षाणो गोवृषाश्चादण्ड्याः। सस्यभक्षणे सस्योपघातं निष्पत्तितः परिसङ्ख्याय द्विगुणं दापयेत्। स्वामिनश्चानिवेद्य चारयतो द्वादशपणो दण्डः, प्रमुञ्चतश्चतुर्विंशतिपणः। [1]पालिनामर्धदण्डः। तदेव [2]षण्डभक्षणे कुर्यात्। वाटभेदे द्विगुणः। वेश्मखलवलयगतानां च धान्यानां भक्षणे हिंसाप्रतीकारं कुर्यात्। अभयवनमृगाः परिगृहीताः भक्षयन्तः स्वामिनो निवेद्य यथाऽवध्यास्तथा प्रतिषेद्धव्याः। पशवो [3]रश्मिप्रतोदाभ्यां वारयितव्याः। तेषामन्यथा हिंसायां दण्डपारुष्यदण्डाः। प्रार्थयमाना दृष्टापराधा वा सर्वोपायैर्नियन्तव्याः। इति क्षेत्रपथहिंसा॥

[सम्भूय कल्प्यमानव्यवस्थानां यथाङ्गीकारमनुवर्तनावश्यकता, अतिक्रमे दण्डाश्च]

कर्षकस्य [4]ग्रामं अभ्युपेत्याकुर्वतो ग्राम एवात्ययं हरेत्। कर्मकरणे कर्मवेतनाद्विगुणं, हिरण्यादाने प्रत्यंशाद्विगुणं, भक्ष्यपेयादाने च प्रहवणेषु द्विगुणमंशं दद्यात्। प्रेक्षायामनंशदः सस्वजनो न प्रेक्षेत। प्रच्छन्नश्रवणेक्षणे च सर्वहिते च कर्मणि निग्रहेण द्विगुणमंशं दद्यात्। सर्वहितमेकस्य ब्रुवतः कुर्युराज्ञाम्। अकरणे द्वादशपणो दण्डः। तं चेत् सम्भूय वा हन्युः, पृथगेषामपराधद्विगुणो दण्डः। उपहन्तृषु विशिष्टः॥

ब्राह्मणतश्चैषां ज्यैष्ठ्यं नियम्येत। प्रहवणेषु चैषां [5]ब्राह्मणे नाकामाः कुर्युः, । अंशं च लभेरन्॥

[निगमनम्]

तेन देशजातिकुलसङ्घानां समयस्यानपाकर्म व्याख्यातम्।
राजा देशहितान् सेतून् कुर्वतां पथि सङ्क्रमान्॥
ग्रामशोभाश्च रक्षाश्च तेषां प्रियहितं चरेत॥ १३९॥

इति धर्मस्थीये वास्तुके विवीतक्षेत्रपथहिंसा दशमोऽध्यायः वास्तुकं समाप्तं समयस्यानपाकर्म च. आदितस्सप्तषष्टितमः

[1] क्षेत्रपालकानाम्. [2] कदलीवार्ताकादिवनं षण्डः. [3] रज्जुतोत्राभ्याम्.
[4] ग्रामवासिजनसमुदायकार्यम्. [5] ब्राह्मणा नाकामाः–पा.

# त्रिषष्टितमं प्रकरणम्--ऋणादानम्

## एकादशोऽध्यायः

[वृद्ध्यर्थप्रयुक्तधनविषये वृद्ध्यंशव्यवस्था]

सपादपणा धर्म्या मासवृद्धिः पणशतस्य । पञ्चपणा व्यावहारिकी। [1]दशपणा [2]कान्तारकाणां। विंशतिपणा सामुद्राणाम् ॥

ततः परं कर्तुः कारयितुश्च पूर्वस्साहसदण्डः । श्रोतृणामेकैकं प्रत्यर्धदण्डः । [3]राजन्ययोगक्षेमवहे तु [4]धनिकधारणिकयोश्चरित्रमवेक्षेत ॥

[तादृशधान्यविषये वृद्ध्यंशव्यवस्थाः]

धान्यवृद्धिस्सस्यनिष्पत्तावुपार्धा, परं मूल्यकृता वर्धेत ; प्रक्षेपवृद्धिरुदयादर्धम्, सन्निधानसन्ना वार्षिकी देया । चिरप्रवासः संस्तम्भप्रविष्टो वा मूल्यद्विगुणं दद्यात् । अकृत्वा वृद्धिं साधयतो वर्धयतो वा, मूल्यं वा वृद्धिमारोप्य श्रावयतः बन्धचतुर्गुणो दण्डः । [5]तुच्छश्रावणायां अभूतचतुर्गुणः । तस्य त्रिभागमादाता दद्यात् । शेषं प्रदाता ॥

[धनिकैः क्वचिद्वृद्ध्यंशस्य क्वचिदृणस्यैव च
प्रतिग्रहनिषेधः]

दीर्घसत्रव्याधिगुरुकुलोपरुद्धं बालमसारं वा नर्णमनु वर्धेत । मुच्यमानमृणमप्रतिगृह्णतो द्वादशपणो दण्डः । कारणापदेशेन निवृत्तवृद्धिकमन्यत्र तिष्ठेत् ॥

दशवर्षोपेक्षितमृणमप्रतिग्राह्यमन्यत्र बालवृद्धव्याधितव्यसनिप्रोषितदेशत्यागराज्यविभ्रमेभ्यः ॥

---

[1] याज्ञवल्क्यः II 38. [2] दुर्गममार्गेषु पण्यवाहिनां वणिजाम्. [3] राजन्यदण्डक्षेम-पा. [4] उत्तमर्णः धनिकः, अधमर्णः धारणिकः. [5] तुच्छचतुरश्रावणा-पा.

[प्रमीतकृतऋणप्रतिनिवर्तकाः]

प्रेतस्य पुत्राः [1]कुसीदं दद्युः, दायादा वा रिक्थहरास्सह-ग्राहिणः, प्रतिभुवो वा; न प्रातिभाव्यमन्यत्। असारं बालप्रातिभाव्यम्। असङ्ख्यातदेशकालं तु पुत्राः पौत्रा दायादा वा रिक्थं हरमाणा दद्युः। जीवितविवाहभूमिप्रातिभाव्यमसङ्ख्यातदेशकालं तु पुत्राः पौत्रा वा वहेयुः॥

[बहुषु ऋणेषु निवर्तनप्राथम्यव्यवस्थाः]

नानर्णसमवाये तु नैकं द्वौ युगपदभिवदेयातां अन्यत्र प्रतिष्ठ-मानात्। तत्रापि गृहीतानुपूर्व्या राजश्रोत्रियद्रव्यं वा पूर्वं प्रति-पादयेत्।

[व्यवहारेण साधयितुमयोग्यानि ऋणानि,
अग्राह्याः ग्राह्याः ऋणिनश्च]

दम्पत्योः पितापुत्रयोः भ्रातॄणां चाविभक्तानां परस्परकृत-मृणमसाध्यम्। अग्राह्याः कर्मकालेषु कर्षका राजपुरुषाश्च; स्त्री वाऽप्रतिश्राविणी पतिकृतं ऋणं, अन्यत्र गोपालकार्धसीतिकेभ्यः[2]। पतिस्तु ग्राह्यः—स्त्रीकृतं ऋणमप्रतिविधाय प्रोषित इति॥

[ऋणसाधनप्रकाराः]

[3]सम्प्रतिपत्तावुत्तमः; असम्प्रतिपत्तौ तु साक्षिणः प्रमाणम्। प्रात्ययिकाश्शुचयोऽनुमता वा त्रयोऽवरार्ध्याः। पक्षानुमतौ वा द्वौ ऋणं प्रति, न त्वेवैकः॥

[साक्षिभावानर्हाः अर्हाश्च]

प्रतिषिद्धाः स्याल[4]सहायान्वर्थिधनिकधारणिकवैरिन्यङ्गधृतद-ण्डाः। पूर्वे चाव्यवहार्याः राजश्रोत्रियग्रामभृतककुष्ठिव्रणिनः पतित-चण्डालकुत्सितकर्माणोऽन्धबधिरमूकाहंवादिनः स्त्रीराजपुरुषा-

---

[1] ऋणम्. [2] अर्धसीतिकाः=कृषिकर्मसिद्धसीताफलार्धभागिनः. [3] अधमर्णेन उत्तमर्णनिवेद्यमानार्थग्रहणाभ्युपगमे उत्तमो निर्णयोपायः इत्यर्थः. [4] सहायबद्धधनिक–पा.

श्चान्यत्र [1]स्ववर्गेभ्यः। पारुष्यस्तेयसङ्ग्रहणेषु तु वैरिस्यालसहायवर्जाः[2]। रहस्यव्यवहारेष्वेका स्त्री पुरुष उपश्रोता उपद्रष्टा वा साक्षी स्यात् राजतापसवर्जम्।

स्वामिनो भृत्यानां, ऋत्विगाचार्याशिष्याणां, मातापितरौ पुत्राणां चानिग्रहेण साक्ष्यं कुर्युः, तेषामितरे वा। परस्पराभियोगे चैषामुत्तमाः परोक्ताः दशबन्धं दद्युः, अवराः पञ्चबन्धम्॥

इति साक्ष्यधिकारः॥

[साक्ष्यनुयोगविधिः]

ब्राह्मणोदकुम्भाग्निसकाशे साक्षिणः परिगृह्णीयात्। तत्र ब्राह्मणं ब्रूयात्—'सत्यं ब्रूहि' इति। राजन्यं वैश्यं वा—'मा तवेष्टापूर्तफलं, कपालहस्तः [3]शत्रुबलं भिक्षार्थी गच्छेः[4]' इति। शूद्रं—'जन्ममरणान्तरे यद्वः पुण्यफलं तद्राजानं गच्छेत्, राज्ञश्च किल्बिषं युष्मान् वा अन्यथावादे, दण्डश्चानुबन्धः। पश्चादपि ज्ञायेत यथादृष्टश्रुतम्। एकमन्त्रास्सत्यमवहरत' इति। अनवहरतां सप्तरात्रादूर्ध्वं द्वादशपणो दण्डः। त्रिपक्षादूर्ध्वमभियोगं दद्युः॥

[साक्षिवचनविसंवादे कर्तव्याः व्यवस्थाः]

साक्षिभेदे यतो बहवः शुचयोऽनुमता वा ततो नियच्छेयुः; मध्यं वा गृह्णीयुः; तद्वा द्रव्यं राजा हरेत्। साक्षिणश्चेदभियोगादूनं ब्रूयुरतिरिक्तस्याभियोक्ता बन्धं दद्यात्; अतिरिक्तं वा ब्रूयुस्तदतिरिक्तं राजा हरेत्। बालिश्यादभियोक्तुर्वा दुश्श्रुतं दुर्लिखितं प्रेताभिनिवेशं वा समीक्ष्य साक्षिप्रत्ययमेव स्यात्।

[मिथ्यावादिसाक्षिविधेयदण्डांशे मतभेदाः]

'साक्षिबालिश्येष्वेव पृथगनुयोगे देशकालकार्याणां पूर्वमध्यमोत्तमा दण्डाः' इत्यौशनसाः। [5]'कूटसाक्षिणो यमर्थमभूतं वा नाशयेयुस्तद्दशगुणं दण्डं दद्युः' इति मानवाः। [6]'बालिश्याद्

---

[1] वर्ग्येभ्यः-पा. [2] साक्षिणः स्युरितिशेषः. [3] शत्रुकुलं भिक्षार्थी-पा. [4] यद्यनृतं ब्रूया इति शेषः. [5] कपटसाक्षिणः. [6] मौर्ख्यात्.

विसंवादयतां चित्रो घातः' इति बार्हस्पत्याः। 'न' इति कौटल्यः। [1] ध्रुवं हि साक्षिभिश्श्रोतव्यम्। अशृण्वतां चतुर्विंशतिपणो दण्डः, ततोऽर्ध[2]मब्रुवाणाम ॥

[निगमनम्]

देशकालाविदूरस्थान् साक्षिणः प्रतिपादयेत्।
दूरस्थान् [3]अप्रसारान्वा स्वामिवाक्येन [4]साधयेत् ॥ १४० ॥

इति धर्मस्थीये ऋणादानं एकादशोऽध्यायः
आदितोऽष्टषष्टितमः.

# चतुष्षष्टितमं प्रकरणम्—औपनिधिकम्.

## द्वादशोऽध्यायः

[निक्षेपाप्रत्यर्पणोपाधयः]

[5] उपनिधिः ऋणेन व्याख्यातः। परचक्राटविकाभ्यां दुर्गराष्ट्रविलोपे वा, प्रतिरोधकैर्वा ग्रामसार्थव्रजाविलोपे, [6] चक्रयुक्ते नाशे वा ग्राममध्याग्न्युदकाबाधे वा, किञ्चिदमोक्षयमाणे कुप्यमनिर्हार्यवर्जमेकदेशमुक्तद्रव्ये वा, ज्वालावेगोपरुद्धे वा, नावि निमग्नायां मुषितायां वा स्वयमुपरूढो नोपनिधिमभ्याभवेत्[7] ॥

[स्वाम्यनुज्ञां विना निक्षिप्तस्य धनस्य
दुरुपयोगे व्यवस्थाः]

उपनिधिभोक्ता देशकालानुरूपं भोगवेतनं दद्यात्, द्वादशपणं च दण्डम्। उपभोगनिमित्तं नष्टं विनष्टं वाऽभ्याभवेत्, चतुर्विंशति-

---

[1] ध्रुवा हि साक्षिणः श्रोतव्याः–पा. [2] मब्रुवाणानां–पा. [3] समीपस्थानपि अनागतान्. [4] आनाययेत्. [5] न्यासः. [6] चक्रं कपटवियेषः, तत्प्रयुक्ते. [7] अभ्याभवेत् प्रत्यर्पयेत्.

पणश्च दण्डः ; [1] अन्यथा वा निष्पतने। प्रेतं व्यसनगतं वा नोपनिधिमभ्याभवेत्। [2]आधानविक्रयापव्ययनेषु चास्य चतुर्गुणपञ्चबन्धो दण्डः। परिवर्तने निष्पातने वा मूल्यसमः। तेन आधिप्रणाशोपभोगविक्रयाधानापहारा व्याख्याताः॥

[चरस्थिरपदार्थानाधीकृत्य धनग्रहणे प्रत्यर्पणव्यवस्थाः]

नाधिस्सोपकारः सीदेत्, न चास्य मूल्यं वर्धेत। निरुपकारस्सीदेन्मूल्यं चास्य वर्धेत अन्यत्र निसर्गात्॥

[3] उपस्थितस्याऽऽधिमप्रयच्छतो द्वादशपणो दण्डः। प्रयोजकासन्निधाने वा ग्रामवृद्धेषु स्थापयित्वा निष्क्रयमाधिं प्रतिपद्येत। निवृत्त[4]वृद्धिको वाऽऽधिस्तत्कालकृतमूल्यस्तत्रैवावतिष्ठेता, अनाशविनाशकरणाधिष्ठितो वा। धारणकसन्निधाने वा विनाशभयात् [5]उद्गतार्घं धर्मस्थानुज्ञातो विक्रीणीत ; आधिपालप्रत्ययो वा॥

स्थावरस्तु प्रयासभोग्यः फलभोग्यो वा। प्रक्षेपवृद्धिमूल्यशुद्धं [6]आजीवममूल्यक्षयेणोपनयेत्॥

[आधीकृतस्य दुरुपयोगे दण्डः, आदेशान्वाध्योर्विषयेविशेषश्च]

[7]अनिसृष्टोपभोक्ता मूल्यशुद्धमाजीवं बन्धं च दद्यात्। शेषमुपनिधिना व्याख्यातम्॥

एतेनादेशोऽन्वाधिश्च[8] व्याख्यातौ॥

सार्थेनान्वाधिहस्तो वा प्रदिष्टां भूमिमप्राप्तश्चोरैर्भग्नोत्सृष्टो वा नान्वाधिमभ्यावहेत्। अन्तरे वा मृतस्य दायादोऽपि नाभ्याभवेत्। शेषमुपनिधिना व्याख्यातम्॥

---

[1] उपभोगं विना अन्यत्र गमने. [2] अपव्ययनं—अपलापः. [3] याज्ञवल्क्यः II, 62—64—अत्रास्यार्थशास्त्रस्य याज्ञवल्क्यस्मृतेश्चेतरस्मृत्यसाधारणमानुपूर्वीसाम्यं परिदृश्यते एवमुत्तरत्रापि सूचितस्थलेष्ववगन्तव्यम्. [4] वृत्तिको—पा. [5] उद्रिक्तमूल्यम्. [6] उपभुज्यमानमाधिम्. [7] अननुज्ञताऽऽधिभोक्ता. [8] अन्यस्मै दीयतामित्युक्त्वा कस्यचिद्धस्ते दीयमानं द्रव्यमादेशः, अध्वसु किञ्चिद्दूरमानीय ततो देहीत्यर्पितं द्रव्यमन्वाधिः,

[याचितकादिविषये व्यवस्थाः]

याचितकमवक्रीतकं[1] वा यथाविधं गृह्णीयुस्तथाविधमेवार्पयेयुः । भ्रेषोपनिपाताभ्यां देशकालोपरोधि दत्तं नष्टं विनष्टं वा नाभ्याभवेयुः । शेषमुपनिधिना व्याख्यातम् ॥

[[2]स्वामिप्रतिनिधित्वेन वस्तूनि विक्रीणानानां नियमाः]

[3]वैयावृत्यविक्रयस्तु-वैयावृत्यकराः यथादेशकालं विक्रीणानाः पण्यं यथाजातमूल्यमुदयं च दद्युः । शेषमुपनिधिना व्याख्यातम् ॥

देशकालातिपातने वा परिहीणं सम्प्रदानकालिकेन अर्घेण मूल्यमुदयं च दद्युः । यथासंभाषितं वा विक्रीणानाः नोदयमधिगच्छेयुः, मूल्यमेव दद्युः । अर्घपतने वा परिहीणं यथापरिहीणं मूल्यमूनं दद्युः ॥

सांव्यवहारिकेषु वा प्रात्ययिकेष्वराजवाच्येषु[4] भ्रेषोपनिपाताभ्यां नष्टं विनष्टं वा मूल्यमपि न दद्युः । देशकालान्तरितानां तु पण्यानां क्षयव्ययशुद्धमूल्यमुदयं च दद्युः, पण्यसमवायानां च प्रत्यंशम् । शेषमुपनिधिना व्याख्यातम् । एतेन वैयावृत्यविक्रयो व्याख्यातः ॥

[भूषणाद्यर्थं शिल्पहस्तनिक्षिप्तानां सुवर्णादीनां रक्षणोपायः]

निक्षेपश्चोपनिधिना ॥

तमन्येन निक्षिप्तमन्यस्यार्पयतो हीयेत । निक्षेपापहारे पूर्वापदानं निक्षेप्तारश्च प्रमाणम् ॥

अशुचयो हि कारवः । नैषां करणपूर्वो निक्षेपधर्मः । कारणहीनं निक्षेपमव्ययमानं गूढभित्तिन्यस्तान् साक्षिणो निक्षिप्ता रहस्यप्रणिपातेन [5]प्रज्ञापयेत् । वनान्ते वा मद्यप्रहवणे विश्वासेन ॥

---

[1] अवक्रीतकं–भाटकगृहीतम्. [2] स्वामिप्रतिनिधिः=Agent. [3] वैयापृत्य. पा. [4] राजाप्रतिषिद्धेषु सत्सु. [5] प्रबोधयेत्.

[शिल्पिनामार्जवज्ञानाय प्रयोक्तव्याः परीक्षाः]

रहसि वृद्धो व्याधितो वैदेहकः कश्चित् कृतलक्षणं[1] द्रव्यमस्य हस्ते निक्षिप्यापगच्छेत्। तस्य प्रतिदेशेन पुत्रो भ्राता वाऽभिगम्य निक्षेपं याचेत। दाने शुद्धिरन्यथा निक्षेपं स्तेयदण्डं च दद्यात्॥

प्रव्रज्याभिमुखो वा श्रद्धेयः कश्चित्कृतलक्षणं द्रव्यमस्य हस्ते निक्षिप्य प्रतिष्ठेत। ततः कालान्तरागतो याचेत। दाने शुचिरन्यथा निक्षेपं स्तेयदण्डं च दद्यात्॥

कृतलक्षणेन वा द्रव्येण [2]प्रत्यानयेदेनम्। बालिशजातीयो वा रात्रौ [3]राजदायिकाङ्क्षणभीतः सारमस्य हस्ते निक्षिप्यापगच्छेत्। स एनं बन्धनागारगतो याचेत। दाने शुचिः, अन्यथा निक्षेपं स्तेयदण्डं च दद्यात्॥

[प्रत्यर्पणात्पूर्वं शिल्पिनो मरणे कर्तव्योंऽशः
निक्षेप्तृपरीक्षा च]

अभिज्ञानेन चास्य [4]गृहे जन[5]मुभयं याचेत। अन्यतरादानं यथोक्तं पुरस्तात्॥

द्रव्यभोगानामागमं चास्यानुयुञ्जीत। तस्य चार्थस्य [6]व्यवहारोपलिङ्गनं [7]अभियोक्तुश्चार्थसामर्थ्यम्॥

एतेन मिथस्समवायो व्याख्यातः॥

[निगमनम्]

तस्मात्साक्षिमदच्छन्नं कुर्यात्सम्यग्विभाषितम्।
स्वे परे वा जने कार्यं देशकालाग्रवर्णतः॥ १४१॥

इति धर्मस्थीये औपनिधिकं द्वादशोऽध्यायः
आदित एकोनसप्ततितमः

---

[1]लक्षं-पा. [2]प्रत्यानयने तं बालिश-पा. [3]राजदायिनः-राज्ञेऽर्पयितारः अमात्यादयः, तदभिलषणाद्भीतः इत्यर्थः. राजादायिकाक्षणभीतः इति पाठान्तरम्. [4]अस्य-कारोः. [5]उभयं-निक्षेपं सारं च. [6]व्यवहारैः सत्यत्वासत्यत्वानुमानं कर्तव्यमित्यर्थः. [7]एतादृशद्रव्यनिक्षेप्ताहमिति वदतः तथाविधद्रव्यनिक्षेपणयोग्यत्वं च आलोचनीयमित्यर्थः.

# पञ्चषष्टितमं प्रकरणम्--दासकर्मकरकल्पः

## त्रयोदशोऽध्यायः

[आर्याणां दासीकरणे दण्डाः, तदपवादाश्च]

उदरदासवर्जं [1]आर्यप्राणमप्राप्तव्यवहारं शूद्रं विक्रयाधानं नयतस्स्वजनस्य द्वादशपणो दण्डः, वैश्यं द्विगुणः, क्षत्रियं त्रिगुणः, ब्राह्मणं चतुर्गुणः। परजनस्य पूर्वमध्यमोत्तमवधा दण्डाः क्रेतृश्रोतॄणां च॥

म्लेच्छानामदोषः प्रजां विक्रेतुमाधातुं वा। न त्वेवार्यस्य दासभावः॥

अथवा आर्यमाधाय [2]कुलबन्धने आर्याणामापदि निष्क्रयं चाधिगम्य बालं साहाय्यदातारं वा पूर्वं [3]निष्क्रीणीरन्॥

[मिथ्याधानकरणे दण्डाः]

सकृदात्माधाता [4]निष्पतितः सीदेत्, द्विरन्येनाहितकः, सकृदुभौ [5]परविषयाभिमुखौ। वित्तापहारिणो वा दासस्यार्यभावमपहरतोऽर्धदण्डः। निष्पतितप्रेतव्यसनिनामाधाता मूल्यं भजेत॥

[आधीकरणार्थदत्तमूल्यनाशने आधीकृत-
विमोचनहेतवः, विशेषे दण्डश्च]

प्रेतविण्मूत्रोच्छिष्टग्राहणं आहितस्य नग्नस्नापनं दण्डप्रेषणमतिक्रमणं च स्त्रीणां मूल्यनाशकरम्। धात्रीपरिचारिकार्धसीतिकोपचारिकाणां च मोक्षकरम्। सिद्धमुपचारकस्याभिप्रजातस्य अपक्रमणम्॥

धात्रीमाहितिकां वा अकामां स्ववशामधिगच्छतः पूर्वस्साहसदण्डः, परवशां मध्यमः। कन्यामाहितिकां वा स्वयमन्येन वा दूषयतः मूल्यनाशः शुल्कं तद्द्विगुणश्च दण्डः॥

---

[1] आर्यजीवितम्. [2] कुलबन्धनतूर्याणा. पा. [3] धनं दत्वा प्रत्यानयेयुः. [4] अपसृतश्चेदित्यर्थः [5] परदेशगामिनौ.

[विक्रीतात्मतत्पुत्रयोर्विषये युद्धार्थ-
गृहीतविषये च व्यवस्थाः]

आत्मविक्रयिणः प्रजां [1]आर्यां विद्यात्। आत्माधिगतं स्वामिकर्माविरुद्धं लभेत, पित्र्यं च दायम्। मूल्येन चार्यत्वं गच्छेत्। तेनोदरदासाहितकौ व्याख्यातौ॥

[2]प्रक्षेपानुरूपश्चास्य निष्क्रयः। दण्डप्रणीतः कर्मणा दण्डमुपनयेत्[3]॥

आर्यप्राणो ध्वजाहृतः कर्मकालानुरूपेण मूल्यार्धेन वा विमुच्येत॥

[दास्यानर्हाणां केषांचिद्दासीकरणे दण्डाः]

गृहजातदायागतलब्धक्रीतानामन्यतमं दासं ऊनाष्टवर्षं विबन्धुमकामं नीचे कर्मणि विदेशे दासीं वा सगर्भामप्रतिविहितगर्भभर्मण्यां विक्रयाधानं नयतः पूर्वस्साहसदण्डः, क्रेतृश्रोतॄणां च। दासमनुरूपेण निष्क्रयेणार्यमकुर्वतो द्वादशपणो दण्डः, [4]संरोधश्चाऽऽकारणात्। दासद्रव्यस्य ज्ञातयो दायादाः, तेषां अभावे स्वामी॥

स्वामिनः [5]स्वस्यां दास्यां जातं समातृकं अदासं विद्यात्। गृह्या चेत् कुटुम्बार्थचिन्तनी माता भ्राता भगिनी चास्याः अदासास्युः। दासं दासीं वा निष्क्रीय पुनर्विक्रयाधानं नयतो द्वादशपणो दण्डः अन्यत्र स्वयंवादिभ्यः॥ इति दासकल्पः॥

[कर्मकरेभ्यो देयानां वेतनानां व्यवस्था]

कर्मकरस्य कर्मसम्बन्धमासन्ना[6] विद्युः। यथासंभाषितं वेतनं लभेत। कर्मकालानुरूपमसंभाषितवेतनम्। कर्षकस्सस्यानां गोपालकस्सर्पिषां वैदेहकः पण्यानामात्मना व्यवहृतानां, दशभागसंभाषितवेतनो लभेत। संभाषितवेतनस्तु यथासंभाषितम्॥

[1]अदासीं जानीयात्. [2]विक्रयकालकृतपरिभाषानुरोधी चेत्यर्थः. [3]निर्यातयेत्. [4] तादृशमाहूय संभूय रोधनेन उपालम्भादिकं च कार्यमित्यर्थः. [5]तस्यां –पा. [6] भूरवेतिशेषः

कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपरिचारकादिः[1]आशाकारिकवर्गस्तु यथाऽन्यस्तद्विधः कुर्यात्। यथा वा कुशलाः कल्पयेयुः, तथा वेतनं लभेत। साक्षिप्रत्ययमेव स्यात्। साक्षिणामभावे यतः कर्म ततोऽनुयुञ्जीत ॥

[वेतनदातृकर्मकरयोरनार्जवे दण्डाः;
आपत्कालदेयविशेषवेतनं च]

वेतनादाने दशबन्धो दण्डः, षट्पणो वा। अपव्ययमाने द्वादशपणो दण्डः, पञ्चबन्धो वा। नदीवेगज्वालास्तेनव्यालोपरुद्धः सर्वस्वपुत्रदारात्मदानेनार्तस्त्रातारमाहूय [2]निस्तीर्णः [3]कुशलप्रदिष्टं वेतनं दद्यात्। तेन सर्वत्राऽऽर्तदानानुशया व्याख्याताः ॥

[कुलटासंभोगवेतनव्यवस्था]

लभेत [4]पुंश्चली [5]भोगं सङ्गमस्योपलिङ्गनात्[6]।
अतियाच्ञा तु [7]जीयेत दौर्मत्याविनयेन वा ॥ १४२ ॥

इति धर्मस्थीये दासकर्मकरकल्पे दासकल्पः कर्मकरकल्पे स्वाम्यधिकारश्च त्रयोदशोऽध्यायः
आदितस्सप्ततितमः

———

# षट्षष्टितमं प्रकरणं—(कर्मकरकल्पः) संभूयसमुत्थानञ्च

## चतुर्दशोऽध्यायः

[कर्मकरणात्पूर्वमेव भृत्यादिग्रहणे कर्मकरैः
पालनीया नियमाः]

गृहीत्वा वेतनं कर्म अकुर्वतो भृतकस्य द्वादशपणो दण्डः, संरोधश्चाऽऽकारणात्। अशक्तः कुत्सिते कर्मणि व्याधौ व्यसने

---

[1]आशाविशेषेण कर्मकारिसमूहः. [2]रक्षितः. [3]निपुणैः निर्दिष्टम्. [4]कुलटा. [5] मैथुनभृतिम्. [6] उपलिङ्गनं—चिह्नैर्विभावनम्. [7] दण्ड्येत.

वा अनुशयं लभेत, परेण ना कारयितुम्। तस्य [1]व्ययं कर्मणा लभेत भर्ता वा कारयितुम्। 'नान्यस्त्वया कारयितव्यो मया वा नान्यस्य कर्तव्यम्' इत्यवरोधे भर्तुरकारयतो भृतकस्याकुर्वतो वा द्वादशपणो दण्डः। [2]कर्मनिष्ठापने भर्तुरन्यत्र गृहीतवेतनो नासकामः कुर्यात्॥

[संकाले उपस्थितस्य कर्मकरस्य कर्मकरण-
निरोधे मतभेदेन व्यवस्थाः]

'उपस्थितमकारयतः कृतमेव विद्यात्' इत्याचार्याः। 'न' इति कौटल्यः। कृतस्य वेतनं, नाकृतस्यास्ति। स चेदल्पमपि कारयित्वा न कारयेत्, कृतमेव अस्य विद्यात्। देशकालातिपातनेन कर्मणामन्यथाकरणे वा [3]नासकामः कृतमनुमन्येत। संभाषितादधिकक्रियायां प्रयासं न मोघं कुर्यात्॥

[सङ्घीभूय भृतिग्रहणेन परकीय-
कर्मकारिणां विशेषः]

तेन सङ्घभृता व्याख्याताः। तेषामाधिस्सप्तरात्रमासीत। ततोऽन्यमुपस्थापयेत्; कर्मनिष्पाकं च। न चानिवेद्य भर्तुस्सङ्घः किञ्चित्परिहरेत्, अपनयेद्वा। तस्यातिक्रमे चतुर्विंशतिपणो दण्डः। सङ्घेन परिहृतस्यार्धदण्डः। इति भृतकाधिकारः॥

[सम्भूयसमुत्थानं—तत्र सङ्घे वेतनविभागः, व्याधि-
दौष्ट्यादिना कर्मानन्वितव्यक्तिविषये
व्यवस्थाश्च]

[4]सङ्घभृताः संभूयसमुत्थातारो वा यथासंभाषितं वेतनं समं वा विभजेरन्। कर्षकवैदेहका वा सस्यपण्यारम्भपर्यवसानान्तरे [5]सन्नस्य यथाकृतस्य कर्मणः प्रत्यंशं दद्युः। पुरुषोपस्थाने समग्र-

---

[1] व्ययकर्मणा–पा. [2] कर्मणोऽपरिसमापने. [3] न सकामः–पा. [4] संहत्य भृतिग्रहणेन परकीयकर्मकारिणः भृतकाः सङ्घभृताः. त एव स्वकीयकर्मकारिणः सम्भूय समुत्थातारः. [5] व्याधितस्य.

मंशं दद्युः। [1]संसिद्धे तु भृतपण्ये सन्नस्य तदानीमेव प्रत्यंशं दद्युः। [2]सामान्या हि पथि सिद्धिश्चासिद्धिश्च ॥

प्रक्रान्ते तु कर्मणि स्वस्थस्यापक्रामतो द्वादशपणो दण्डः। न च प्राकाम्यमपक्रमणे ॥

[तादृशचोरसङ्घव्यवस्था]

[3]चोरं त्वभयपूर्वं कर्मणः प्रत्यंशेन ग्राहयेत्, दद्यात् प्रत्यंशमभयं च। पुनस्स्तेये प्रवासनमन्यत्र गमने च। महापराधे तु दूष्यवदाचरेत् ॥

[यज्ञादिवैदिककर्मणि सङ्घशोऽन्वितानां तल्लब्धांशभागव्यवस्थाः]

याजकाः स्वप्रचारद्रव्यवर्जं यथासंभाषितं वेतनं समं वा विभजेरन् ॥

अग्निष्टोमादिषु च क्रतुषु दीक्षणादूर्ध्वं याजकस्सन्नः पञ्चममंशं लभेत; सोमविक्रयादूर्ध्वं चतुर्थमंशम्; मध्यमोपसदः प्रवर्ग्योद्वासनादूर्ध्वं तृतीयमंशम्; मध्यादूर्ध्वमर्धमंशम्; सुत्ये प्रातस्सवनादूर्ध्वं पादोनमंशम्। माध्यन्दिनात् सवनादूर्ध्वं समग्रमंशं लभेत। नीता हि दक्षिणा भवन्ति। बृहस्पतिसवनवर्जं प्रतिसवनं हि दक्षिणा दीयन्ते। तेनाहर्गणदक्षिणा व्याख्याताः ॥

सन्नानां आ दशाहोरात्राच्छेषभृताः कर्म कुर्युः। अन्ये वा स्वप्रत्ययाः। कर्मण्यसमाप्ते तु यजमानस्सीदेत्, ऋत्विजः कर्म समापय्य दक्षिणां हरेयुः। असमाप्ते तु कर्मणि याज्यं याजकं वा त्यजतः पूर्वस्साहसदण्डः ॥

[यागादौ सङ्घीभूयसमुत्थान कर्मण्यन्वयानर्हाः]

[4]अनाहिताग्निश्शतगुः अयज्वा च सहस्रगुः।
सुरापो वृषलीभर्ता ब्रह्महा गुरुतल्पगः ॥ १४३ ॥

---

[1] तूद्धृतपण्ये—पा. [2] मार्गे पण्यानां रक्षा अपायश्चानियतावित्यर्थः. [3] चोरान्तरैः सह चौर्ये सम्भाषितप्रत्यंशं कंचन चोरं गृहीत्वा तस्मै पूर्वं अभयं सन्मानं च दत्वा तेन इतरान् चोरान् ग्राहयेत इत्यर्थः. [4] शतगवधनः सन्नपि अकृताग्न्याधानः इत्यर्थः.

असत्प्रतिग्रहे युक्तः स्तेनः कुत्सितयाजकः ।
[1] अदोषस्त्यक्तुमन्योन्यं कर्मसङ्करनिश्चयात् ॥ १४४ ॥

इति धर्मस्थीये दासकर्मकरकल्पे भृतकाधिकारः
संभूयसमुत्थानं चतुर्दशोऽध्यायः
आदित एकसप्ततितमः

## सप्तषष्टितमं प्रकरणम्–विक्रीतक्रीतानुशयः

### पञ्चदशोऽध्यायः

[क्रेत्रे विक्रीतवस्त्वनर्पणे दण्डाः,
तदपवादश्च]

[2]विक्रीय पण्यमप्रयच्छतो द्वादशपणो दण्डः अन्यत्र दोषोपनिपाताविषह्येभ्यः । पण्यदोषो दोषः । राजचोराग्न्युदकबाध उपनिपातः । बहुगुणहीनमार्तकृतं वाऽविषह्यम् । वैदेहकानामेकरात्रमनुशयः, कर्षकाणां त्रिरात्रम्, गोरक्षकाणां पञ्चरात्रम्, व्यामिश्राणां उत्तमानां च वर्णानां [3]वृत्तिविक्रये सप्तरात्रम् । [4]आतिपातिकानां पण्यानामन्यत्राविक्रेयमित्यविरोधेनानुशयो देयः । तस्यातिक्रमे चतुर्विंशतिपणो दण्डः, पण्यदशभागो वा ॥

[क्रीतपदार्थानां सकालेऽग्रहणे
दण्डाः, अपवादाश्च]

क्रीत्वा पण्यमप्रतिगृह्णतो द्वादशपणो दण्डः, अन्यत्र दोषोपनिपाताविषह्येभ्यः । समानश्चानुशयः विक्रेतुरनुशयेन ॥

---

[1] अन्योन्यं कर्मदोषनिश्चयात् एषां त्यागेऽप्यदोषः इत्यर्थः. [2] विक्रयपण्यम–पा. [3] निवृत्तिविक्रये इति विवृत्तिविक्रये इति च–पा. [4] कालातिपातासहानां सद्यो विक्रेयाणाम् .

[वर्णभेदेन कन्याप्रतिनिवर्तनकालाः
अवधयः, उपाधयश्च]

विवाहानां तु त्रयाणां पूर्वेषां वर्णानां [1] पाणिग्रहणासिद्धमुपावर्तनम्; शूद्राणां च [2] प्रकर्मणः। वृत्तपाणिग्रहणयोरपि दोषं औपशायिकं [3] दृष्ट्वा सिद्धमुपावर्तनम्। न त्वेवाभिप्रजातयोः। कन्यादोषमौपशायिकमनाख्याय प्रयच्छतः कन्यां षण्णवतिर्दण्डः, शुल्कस्त्रीधनप्रतिदानं च। वरयितुर्वा वरदोषमनाख्याय विन्दतो द्विगुणः। शुल्कस्त्रीधननाशश्च ॥

[सामान्यतः स्वीकृतानां प्राणिनां
प्रतिनिवर्तने कालाः]

द्विपदचतुष्पदानां तु कुष्ठव्याधितानामशुचीनां उत्साह—स्वास्थ्यशुचीनामाख्याने द्वादशपणो दण्डः[4]। आ त्रिपक्षादिति चतुष्पदानामुपावर्तनम्; आ संवत्सरादिति मनुष्याणाम्। तावता हि कालेन शक्यं शौचाशौचौ ज्ञातुमिति ॥

[निगमनम्]

दाता प्रतिग्रहीता च स्यातां नोपहतौ यथा।
दाने क्रये वाऽनुशयं तथा कुर्युस्सभासदः ॥ १४५ ॥

इति धर्मस्थीये विक्रीतक्रीतानुशयः पञ्चदशोऽध्यायः
आदितो द्विसप्ततितमः

[1] पाणिग्रहणावधिकं कन्याप्रत्याहरणम्. [2] योनिक्षतेः प्राक्. [3] सहशयनेन प्रज्ञातं योनिक्षतिक्लीबत्वादिरूपं दोषमित्यर्थः. [4] अयं विक्रेतृविषयः.

# अष्टषष्टितमैकोनसप्ततितमसप्ततितमानि प्रकरणानि-दत्तस्यानपाकर्म अस्वामिविक्रयः स्वस्वामिसंबन्धश्च

## षोडशोऽध्यायः

[धर्मादिदत्तत्वेन व्यवहृतस्य अप्रदाने व्यवस्थाः]

दत्तस्याप्रदानमृणादानेन व्याख्यातम्। दत्तमव्यवहार्यमेकत्रानुशये वर्तेत। सर्वस्वं पुत्रदारं आत्मानं प्रदायानुशयिनः प्रयच्छेत, धर्मदानमसाधुषु, कर्मसु चौपघातिकेषु वा; अर्थदानमनुपकारिषु अपकारिषु वा; [1]कामदानमनर्हेषु च। यथा च दाता प्रतिग्रहीता च नोपहतौ स्यातां तथानुशयं कुशलाः कल्पयेयुः। दण्डभयादाक्रोशभयादनर्थभयाद्वा भयदानं प्रतिगृह्णतः स्तेयदण्डः प्रयच्छतश्च, रोषदानं परहिंसायाम्; राज्ञामुपरि दर्पदानं च—तत्रोत्तमो दण्डः।

[2]प्रातिभाव्यदण्डः शुल्कशेषं [3]आक्षिकं सौरिकं कामदानं च नाकामः पुत्रो दायादो वा रिक्थहरो दद्यात्। इति दत्तस्यानपाकर्म॥

[अस्वामिविक्रये व्यवस्थाः]

अस्वामिविक्रयस्तु— [4]नष्टापहृतमासाद्य स्वामी धर्मस्थेन ग्राहयेत्। देशकालातिपत्तौ वा स्वयं गृहीत्वोपहरेत्। धर्मस्थश्च स्वामिनमनुयुञ्जीत—'कुतस्ते लब्धम्' इति। स चेदाचारक्रमं[5] दर्शयेत, न विक्रेतारं, तस्य द्रव्यस्यातिसर्गेण मुच्येत। विक्रेता चेद्दृश्येत, मूल्यं स्तेयदण्डं च। स चेदपसारमधिगच्छेदपसरेत् आ अपसारक्षयादिति। क्षये मूल्यं स्तेयदण्डं च दद्यात्।

---

[1] कामनिमित्तं दानम्. [2] प्रातिभाव्यं दण्डशुल्कशेषम्—पा. [3] आस्थिकम्.
[4] याज्ञवल्क्यः २-१६९. [5] द्रव्यागमपरिपाटीम्.

नाष्टिकं च [1]स्वकरणं कृत्वा नष्टप्रत्याहृतं लभेत। स्वकरणाभावे पञ्चबन्धो दण्डः। तच्च द्रव्यं राजधर्म्यं स्यात्। नष्टापहृतमनिवेद्योत्कर्षतः स्वामिनः पूर्वः साहसदण्डः॥

शुल्कस्थाने नष्टापहृतोत्पन्नं तिष्ठेत्। त्रिपक्षादूर्ध्वमनभिसारं राजा हरेत्, स्वामी वा स्वकरणेन [2]।

पञ्चपणिकं द्विपदरूपस्य निष्क्रयं दद्यात्। चतुष्पणिकमेकखुरस्य; द्विपणिकं गोमहिषस्य; पादिकं क्षुद्रपशूनां; रत्नसारफल्गुकुप्यानां पञ्चकं शतं दद्यात्। परचक्राटवी[3]भृतं तु प्रत्यानीय राजा यथास्वं प्रयच्छेत्। चोरहृतमविद्यमानं स्वद्रव्येभ्यः प्रयच्छेत्। प्रत्यानेतुमशक्तो वा; [4]स्वयंग्राहेणाहृतं प्रत्यानीय तन्निष्क्रयं वा प्रयच्छेत्। परविषयाद्वा विक्रमेणानीतं यथाप्रदिष्टं राज्ञा भुञ्जीतान्यत्रार्यप्राणेभ्यो देवब्राह्मणतपस्विद्रव्येभ्यश्च। इत्यस्वामिविक्रयः॥

[स्वामिनः स्वत्वनिवृत्तिहेतवः,
तदपवादाश्च]

स्वस्वामिसम्बन्धस्तु--भोगानुवृत्तिरुच्छिन्नदेशानां यथास्वं द्रव्याणाम्। यत् स्वं द्रव्यमन्यैर्भुज्यमानं दशवर्षाण्युपेक्षेत, हीयेतास्य--अन्यत्र बालवृद्धव्याधितव्यसनिप्रोषितदेशत्यागराज्यविभ्रमेभ्यः। विंशतिवर्षोपेक्षितं [5]अनुवसितं वास्तु नानुयुञ्जीत। ज्ञातयश्श्रोत्रियाः पाषण्डा वा राज्ञामसन्निधौ परवास्तुषु विवसन्तो न भोगेन हरेयुः, उपनिधिमाधिं निधिं निक्षेपं स्त्रियं सीमानं राजश्रोत्रियद्रव्याणि च॥

[आश्रमिप्रभृतिषु परस्पर सहानु-
भूतेरावश्यकता]

आश्रमिणः पाषण्डा वा महत्यवकाशे परस्परमबाधमाना वसेयुः। अल्पां बाधां सहेरन्। पूर्वागतो वा वासपर्यायं दद्यात्। अप्रदाता निरस्येत॥

---

[1] स्वत्वसाधकसाक्षिलेखनादिकं कृत्वा. [2] याज्ञवल्क्यः २-१७४.
[3] हृतं-पा. [4] स्वयंग्राहिणा भृतं-पा. [5] अविच्छिन्नाध्युषितम्. अनवसितं-पा.

[वानप्रस्थादिधनभागिनः, विवादे व्यवस्थाश्च]

वानप्रस्थयतिब्रह्मचारिणां आचार्यशिष्यधर्मभ्रातृसमानतीर्थ्याः रिक्थभाजः क्रमेण। विवादपदेषु चैषां यावन्तः पणाः दण्डाः तावतीः रात्रीः क्षपणाभिषेकाग्निकार्यमहाकृच्छ्रवर्धनानि राज्ञश्चरेयुः। अहिरण्यसुवर्णाः पाषण्डास्साधवः, ते यथास्वमुपवासव्रतैराराधयेयुः अन्यत्र पारुष्यस्तेयसाहससङ्ग्रहणेभ्यः। तेषु यथोक्ता दण्डाः कार्याः ॥

[मिथ्याचारनिषेधस्यावश्यकता]

प्रव्रज्यासु वृथाचारान् राजा दण्डेन वारयेत्।
धर्मो ह्यधर्मोपहतः शास्तारं हन्त्युपेक्षितः ॥ १४३ ॥

इति धर्मस्थीये दत्तस्यानपाकर्म अस्वामिविक्रयः
स्वस्वामिसंबन्धश्च षोडशोऽध्यायः.
आदितस्त्रिसप्ततितमः

# एकसप्ततितमं प्रकरणम्—साहसम्

## सप्तदशोऽध्यायः

[साहसस्तेययोर्भेदः]

[1] साहसमन्वयवत्प्रसभकर्म। [2] निरन्वये स्तेयं अपव्ययने च ॥

[साहसस्य रत्नादिविषयकत्वे दण्डः]

'रत्नसारफल्गुकुप्यानां साहसे मूल्यसमो दण्डः' इति मानवाः। 'मूल्यद्विगुणः' इत्यौशनसाः। 'यथापराधः' इति कौटल्यः ॥

[1] सर्वसाधारणानां वस्तूनां स्वयमेव बलादपहरणं साहसम्.
[2] स्वसम्बन्धशून्यस्य परकीयद्रव्यस्य गूढमपहरणं अपलापश्च स्तेयमित्यर्थः. निरन्वये स्थेयमपव्यथने च—पा.

[साहसस्य क्षुद्रद्रव्यविषयकत्वे स्थूलद्रव्य
विषयकत्वे च दण्डाः]

पुष्पफलशाकमूलकन्दपक्वान्नचर्मवेणुमृद्भाण्डादीनां क्षुद्रकद्रव्याणां द्वादशपणावरश्चतुर्विंशतिपणपरो दण्डः। कालायसकाष्ठरज्जुद्रव्यक्षुद्रपशुपटादीनां स्थूलकद्रव्याणां चतुर्विंशतिपणावरोऽष्टचत्वारिंशत्पणपरो दण्डः। ताम्रवृत्तकंसकाचदन्तभाण्डादीनां स्थूलकद्रव्याणां अष्टचत्वारिंशत्पणावरः षण्णवतिपरः पूर्वस्साहसदण्डः। महापशुमनुष्यक्षेत्रगृहहिरण्यसुवर्णसूक्ष्मवस्त्रादीनां स्थूलकद्रव्याणां द्विशतावरः पञ्चशतपरः मध्यमस्साहसदण्डः। 'स्त्रियं पुरुषं वाऽभिषह्य बध्नतो बन्धयतो बन्धं वा मोक्षयतः पञ्चशतावरः सहस्रपर उत्तमः साहसदण्डः' इत्याचार्याः॥

[साहसकर्मकारयितॄणां दण्डः]

यस्साहसं [1]प्रतिपत्तेति कारयति स द्विगुणं दद्यात्। 'यावद्धिरण्यमुपयोक्ष्यते तावद्दास्यामि' इति स चतुर्गुणं दण्डं दद्यात्।

"यः—'एतावद्धिरण्यं दास्यामि' इति प्रमाणमुद्दिश्य कारयति स यथोक्तं हिरण्यं दण्डं च दद्यात्" इति बार्हस्पत्याः॥

'स चेत्कोपं मदं मोहं वाऽपदिशेत्, यथोक्तवद्दण्डमेनं कुर्यात्' इति कौटल्यः॥

[निगमनम्]

दण्डकर्मसु सर्वेषु रूपमष्टपणं शतम्।
[2]शतावरेषु तु व्याजीं च विद्यात् पञ्चपणं शतम्॥ १४७॥
प्रजानां दोषबाहुल्यात् राज्ञां वा भावदोषतः।
रूपव्याज्यावधर्मिष्ठे [3]धर्म्यानुप्रकृतिः स्मृता॥ १४८॥

इति धर्मस्थीये साहसं सप्तदशोऽध्यायः
आदितश्चतुस्सप्ततितमः

[1]अहमभ्युपगन्तेत्युक्त्वा इत्यर्थः. [2]शतात्परेतु—पा. [3]धर्म्या तु प्रकृ—पा.

# द्विसप्ततितमं प्रकरणम्—वाक्पारुष्यम्

## अष्टादशोऽध्यायः

[वाक्पारुष्यस्य त्रेधा विभागः]

वाक्पारुष्यं—[1] उपवादः कुत्सनमभिभर्त्सनमिति ।

[तत्र शरीरोपवादे दण्डाः]

शरीर[2]प्रकृतिश्रुतवृत्तिजनपदानां शरीरोपवादेन काणखञ्जादिभिस्सत्ये त्रिपणो दण्डः, मिथ्योपवादे षट्पणो दण्डः ॥

[कुत्सने दण्डाः, तस्य सत्यादि
विषयकत्वे प्रमाणानि च]

शोभनाक्षिदन्त इति काणखञ्जादीनां स्तुतिनिन्दायां द्वादशपणो दण्डः ॥

कुष्ठोन्मादक्लैब्यादिभिः कुत्सायां च ॥

सत्यमिथ्यास्तुतिनिन्दासु द्वादशपणोत्तरा दण्डाः तुल्येषु, विशिष्टेषु द्विगुणः, हीनेष्वर्धदण्डः, परस्त्रीषु द्विगुणः, प्रमादमदमोहादिभिरर्धदण्डाः ॥

कुष्ठोन्मादयोश्चिकित्सकाः सन्निकृष्टाः पुमांसश्च प्रमाणम् । [3]क्लीबभावे स्त्रियः मूत्रफेनः अप्सु विष्ठानिमज्जनं च ॥

[प्रकृत्युपवादे दण्डाः]

प्रकृत्युपवादे ब्राह्मणक्षत्रियवैश्यशूद्रान्तावसायिनामपरेण पूर्वस्य त्रिपणोत्तराः दण्डाः, पूर्वेणापरस्य द्विपणाधराः, कुब्राह्मणादिभिश्च कुत्सायाम् ॥

[1] उपवादः—अङ्गवैकल्यादिवचनम्, कुत्सनं कुष्ठोन्मादादिवचनम्, अभिभर्त्सनं—घातादिभयोपदर्शनम्. [2] प्रकृतिः—स्त्रीपुरुषादिलक्षणा. [3] स्त्रीणां क्लीबत्वे प्रमाणं मूत्रफेनादीत्यर्थः.

[श्रुताद्युपवादेषु दण्डाः]

तेन श्रुतोपवादो वाग्जीवनानां, कारुकुशीलवानां वृत्त्युपवादः, [1]प्राग्घूणकगान्धारादीनां च जनपदोपवादाश्च व्याख्याताः ॥

[अभिभर्त्सने दण्डाः]

यः परं 'एवं त्वां करिष्यामि' इति करणेनाभिभर्त्सयेद्-करणे, यस्तस्य करणे दण्डः ततोऽर्धदण्डं दद्यात् ॥

अशक्तः कोपं मदं मोहं वाऽपदिशेत्, द्वादशपणं दद्यात्।

जातवैराशयः शक्तश्चापकर्तुं यावज्जीविकावस्थं [2]दद्यात् ॥

[सर्वेषामपि वाक्पारुष्याणां विषय-
भेदेन दण्डभेदाः]

स्वदेशग्रामयोः पूर्वं मध्यमं जातिसङ्घयोः ।
आक्रोशाद्देवचैत्यानां उत्तमं दण्डमर्हति ॥ १४९ ॥

इति धर्मस्थीये वाक्पारुष्यं अष्टादशोऽध्यायः
आदितः पञ्चसप्ततितमः

## त्रिसप्ततितमं प्रकरणम्—दण्डपारुष्यम्

### एकोनविंशोऽध्यायः

[दण्डपारुष्यभेदाः]

दण्डपारुष्यं—[3]स्पर्शनमवगूर्णं प्रहतमिति ।

---

[1] हूणका नाम जनपदविशेषः, तस्य पूर्वावयवः प्रग्घूणकाः. अप्राणक-इति, प्राज्झूणक इति च पाठान्तरे. [2]प्रतिभुवं धर्मस्थेभ्यः इति शेषः. [3]स्पर्शनं केवलमङ्गेषु परामर्शनम्, अवगूर्णं हस्तदण्डादीनां उद्यमनम्, प्रहतं ताडनम्. 'तस्योपदिष्टं त्रैविध्यं हीनमध्योत्तमक्रमात्। अपगूरणनिश्शङ्कपातनक्षतदर्शनैः' इति विज्ञानेश्वरीये नारदः.

[स्पर्शने दण्डाः]

नाभेरधःकायं हस्तपङ्कभस्मपांसुभिरिति स्पृशतस्त्रिपणो दण्डः। तैरेवामेध्यैः पाद[1]ष्ठीवनिकाभ्यां च षट्पणः, छर्दिमूत्रपुरीषादिभिर्द्वादशपणः। नाभेरुपरि द्विगुणाः, शिरसि चतुर्गुणाः समेषु। विशिष्टेषु द्विगुणाः, हीनेषु अर्धदण्डाः, परस्त्रीषु द्विगुणाः, प्रमादमदमोहादिभिरर्धदण्डाः। पादवस्त्रहस्तकेशावलम्बनेषु षट्पणोत्तरा दण्डाः[2]। पीडनावेष्टनाञ्जनप्रकर्षणाध्यासनेषु पूर्वस्साहसदण्डः। पातयित्वा[3]ऽपक्रामतोऽर्धदण्डाः ॥

शूद्रो येनाङ्गेन ब्राह्मणमभिहन्यात् तदस्य छेदयेत् ॥

[हस्तादिना प्रहर्तुमुद्यमने दण्डाः]

अवगूर्णे निष्क्रयः, स्पर्शेऽर्धदण्डः। तेन चण्डालाशुचयो व्याख्याताः ॥

हस्तेनावगूर्णे त्रिपणावरो द्वादशपणपरो दण्डः। पादेन द्विगुणः। दुःखोत्पादनेन द्रव्येण पूर्वस्साहसदण्डः। प्राणाबाधिकेन मध्यमः ॥

[प्रहरणदण्डाः]

[4]काष्ठलोष्टपाषाणलोहदण्डरज्जुद्रव्याणामन्यतमेन दुःखमशोणित[5]मुपादधतश्चतुर्विंशतिपणो दण्डः। शोणितोत्पादने द्विगुणः अन्यत्र दुष्टशोणितात्। [6]मृतकल्पमशोणितं घ्नतो हस्तपाद[7]पराञ्चिकं वा कुर्वतः पूर्वस्साहसदण्डः। पाणिपाददन्तभङ्गे कर्णनासाच्छेदने व्रणविदारणे च अन्यत्र दुष्टव्रणेभ्यः। सक्थिग्रीवाभञ्जने नेत्रभेदने वा वाक्यचेष्टा[8]भोजनोपरोधेषु च मध्यमस्साहसदण्डः, [9]समुत्थानव्ययश्च, [10]विपत्तौ कण्टकशोधनाय नीयेत।

---

[1] ष्ठीवनिका=मुखात् कफादीनां थूत्कारेण निरसनम्. ष्ठीविकाभ्यां–पा. [2] याज्ञ. II, 216–220. [3] अपक्रमत इति पाठश्चिन्त्यः 'क्रमः परस्मैपदेषु' इति दीर्घस्यानिवार्यत्वात्. [4] याज्ञ. II, 221; 223; 224. [5] मुत्पादयत पा. [6] करपाददतो भङ्गे छेदने कर्णनासयोः। मध्यो दण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥" इति दण्डपारुष्ये याज्ञवल्क्यः. [7] पराञ्चिका=सन्धिविघटनम्. पारञ्चिकं–पा. [8] भोजनोपकारोपरोधेषु–पा. [9] 'दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम्। दाप्यो दण्डं च' इति याज्ञवल्क्यः. [10] देशकालातिपत्तौ–पा.

महाजनस्यैकं घ्नतः प्रत्येकं द्विगुणो दण्डः ।

[अतीतकलहादिविषये दुःखनिवेदनागमन-
पौर्वापर्यविषये च मतभेदाः]

'पर्युषितः कलहोऽनुप्रवेशो वा नाभियोज्यः' इत्याचार्याः । 'नास्त्यपकारिणो मोक्षः' इति कौटल्यः ॥

'कलहे पूर्वागतो जयति, अक्षममाणो हि प्रधावति' इत्याचार्याः । 'न' इति कौटल्यः । पूर्वं पश्चाद्वा [1]आगतस्य साक्षिणः प्रमाणम् । असाक्षिके घातः [2]कलहोपलिङ्गनं वा । घाताभियोगमप्रतिब्रुवतस्तदहरेव पश्चात्कारः ॥

[मनुष्यहिंसने हिंसकद्रव्यभेदेन
दण्डभेदाः]

कलहे द्रव्यमपहरतो दशपणो दण्डः । क्षुद्रकद्रव्यहिंसायां तच्च तावच्च दण्डः । स्थूलकद्रव्यहिंसायां तच्च द्विगुणश्च दण्डः । वस्त्राभरणहिरण्यसुवर्णभाण्डहिंसायां तच्च पूर्वश्च साहसदण्डः । [3]परकुड्यमभिघातेन क्षोभयतस्त्रिपणो दण्डः । छेदनभेदने षट्पणः[4] पातनभञ्जने द्वादशपणः प्रतीकारश्च । [4]दुःखोत्पादनं द्रव्यमन्यवेश्मनि प्रक्षिपतो द्वादशपणो दण्डः, प्राणाबाधिकं पूर्वस्साहसदण्डः ॥

[पशुहिंसायां दण्डभेदाः]

क्षुद्रपशूनां काष्ठादिभिर्दुःखोत्पादने पणो द्विपणो वा दण्डः । शोणितोत्पादने द्विगुणः । महापशूनामेतेष्वेव स्थानेषु द्विगुणो दण्डः, [5]समुत्थानव्ययश्च ॥

[वृक्षादिच्छेदने दण्डभेदाः]

पुरोपवनवनस्पतीनां पुष्पफलच्छायावतां प्ररोहच्छेदने षट्पणः । क्षुद्रशाखाच्छेदने द्वादशपणः । पीनशाखाच्छेदने चतु-

[1] अभिगतस्य-पा. [2] लिङ्गैः कलहस्याभ्यूहनमित्यर्थः. [3] याज्ञ. II, 226—229. [4]याज्ञ. II 229-232. [5]समुत्थानम्=तेषां स्वस्थीकरणम्.

विंशतिपणः। स्कन्धवधे पूर्वस्साहसदण्डः। समुच्छित्तौ मध्यमः।

पुष्पफलच्छायावद्गुल्मलतास्वर्धदण्डः। पुण्यस्थानतपोवनश्मशानद्रुमेषु च॥

सीमवृक्षेषु चैत्येषु द्रुमेष्वालक्षितेषु च।
त एव द्विगुणा दण्डाः कार्या राजवनेषु च॥ १५०॥

इति धर्मस्थीये दण्डपारुष्यं एकोनविंशोऽध्यायः
आदितष्षट्सप्ततितमः

---

# चतुःसप्ततिपञ्चसप्ततितमे प्रकरणे—
# [1]द्यूतसमाह्वयं प्रकीर्णकानि च

## विंशोऽध्यायः

[सदेशकालव्यवस्थं द्यूतप्रवर्तनावश्यकता]

द्यूताध्यक्षो द्यूतमेकमुखं कारयेत्। अन्यत्र दीव्यतो द्वादशपणो दण्डः; गूढाजीविज्ञापनार्थम्[2]॥

[जेतृपराजितयोः दण्डविशेषाः]

'द्यूताभियोगे जेतुः पूर्वस्साहसदण्डः। पराजितस्य मध्यमः। बालिशजातीयो ह्येष जेतुकामः पराजयं न क्षमते' इत्याचार्याः। 'न' इति कौटिल्यः। पराजितश्चेत् द्विगुणदण्डः क्रियेत, न कश्चन राजानमभिसरिष्यति। प्रायशो हि कितवाः कूटदेविनः॥

[तदध्यक्षैर्नियन्तव्या अंशाः]

तेषामध्यक्षाश्शुद्धाः [3]काकणीः अक्षांश्च स्थापयेयुः। काकण्यक्षाणामन्योपधाने द्वादशपणो दण्डः। कूटकर्मणि पूर्वस्साहसदण्डः,

---

[1] द्यूतः अक्षाद्यप्राणिक्रीडा, समाह्वयः मल्लमेषकुक्कुटवृषभादिप्राणिदेवनमिति भेदः [2] 'द्यूतमेकमुखं कार्यं तस्करज्ञानकारणात्' इति याज्ञवल्क्यः. [3] कपर्दान् पाशकांश्च.

जितप्रत्यादानम्, उपधौ स्तेयदण्डश्च। जितद्रव्यादध्यक्षः पञ्चकं शतमाददीत [1] काकण्यक्षारलाशलाकावक्रयमुदकभूमिकर्मक्रयं च। द्रव्याणामाधानं विक्रयं च कुर्यात्। अक्षभूमिहस्तदोषाणां चाप्रतिषेधने द्विगुणो दण्डः॥

[समाह्वये विशेषः]

तेन समाह्वयो व्याख्यातः, अन्यत्र विद्याशिल्पसमाह्वयादिति॥

[केचन दण्डोपाधयः]

प्रकीर्णकं तु—याचितकावक्रीतकाहितकनिक्षेपकाणां यथादेशकालमदाने, यामच्छायासमुपवेशसंस्थितीनां वा देशकालातिपातने, गुल्मतरदेयं ब्राह्मणं साधयतः, प्रतिवेशानुवेशयोरुपरि निमन्त्रणे च द्वादशपणो दण्डः॥

[2] सन्दिष्टमर्थमप्रयच्छतः, भ्रातृभार्यां हस्तेन लङ्घयतः, रूपाजीवामन्योपरुद्धां गच्छतः, परवक्तव्यं पण्यं क्रीणानस्य, समुद्रं गृहमुद्भिन्दतः, सामन्तचत्वारिंशत्कुल्याः बाधा[3]माचरतश्च अष्टाचत्वारिंशत्पणो दण्डः॥

कुलनीवीग्राहकस्यापव्ययने, विधवां छन्दवासिनीं प्रसह्याधिचरत, चण्डालस्यार्यां स्पृशतः, प्रत्यासन्नमापद्यनभिधावतः, निष्कारणमभिधावनं कुर्वतः, शाक्यजीवकादीन् वृषलप्रव्रजितान् देवपितृकार्येषु भोजयतः शत्यो दण्डः॥

शपथवाक्यानुयोगमनिसृष्टं कुर्वतः, युक्तकर्म चायुक्तस्य[4], क्षुद्रपशुवृषाणां पुंस्त्वोपघातिनः, दास्या गर्भमौषधेन पातयतश्च पूर्वस्साहसदण्डः॥

पितापुत्रयोर्दम्पत्योर्भ्रातृभगिन्योर्मातुलभागिनेययोश्शिष्याचार्ययोर्वा परस्परमपतितं त्यजतः, सार्थाभिप्रयातं ग्राममध्ये वा

[1] अरलाः चर्मपट्टिकाजातीयाः साधनभेदाः. शलाकाः दन्तादिमय्यः दीर्घचतुरश्राः देवनोपयोगिन्यः. [2] याज्ञ. II, 235-6. [3] मातरतश्च. पा. [4] कुर्वत इत्यन्वेति.

त्यजतः पूर्वस्साहसदण्डः, कान्तारे मध्यमः; तन्निमित्तं प्रेषयत उत्तमः, सहप्रस्थायिष्वन्येष्वर्धदण्डः ॥

पुरुषमबन्धनीयं बध्नतो बन्धयतो बन्धं वा मोक्षयतः, बालमप्राप्तव्यवहारं बध्नतो बन्धयतो वा सहस्रदण्डाः । पुरुषापराधविशेषेण दण्डः कार्यः ॥

[अनुग्राह्युपाधयः]

[1]तीर्थकरः तपस्वी व्याधितः क्षुत्पिपासाऽध्वक्रान्तः [2]तिरोजनपदः [3]दण्डखेदी निष्किञ्चनश्चानुग्राह्याः ॥

देवब्राह्मणतपस्विस्त्रीबालवृद्धव्याधितानां अनाथानां [4]अनभिसरतां धर्मस्थाः कार्याणि कुर्युः । न च देशकालभोगच्छलेनातिहरेयुः[5] । पूज्याः विद्याबुद्धिपौरुषाभिजनकर्मातिशयतश्च [6]पुरुषाः ॥

एवं कार्याणि धर्मस्थाः कुर्युरच्छलदर्शिनः ।
समास्सर्वेषु भावेषु विश्वास्याः लोकसंप्रियाः ॥ १५१ ॥

इति धर्मस्थीये द्यूतसमाह्वयं प्रकीर्णकानि च विंशोऽध्यायः
आदितस्सप्तसप्ततितमः

एतावता कौटिल्यस्यार्थशास्त्रस्य धर्मस्थीयं
तृतीयमधिकरणं समाप्तम् .

[1] सदा दानार्थं हस्ते तीर्थं धृतवान्. दानशील इति यावत्. [2] जनपदान्तरादागतः. [3] बहुवारं अनुभूतदण्डः. [4] स्वदुःखनिवेदनाय धर्मस्थाननभिगच्छताम्. [5] अनाथद्रव्यमितिशेषः. [6] साक्ष्यादिभावेन स्वसमीपमागच्छन्तः पुरुषाः इत्यर्थः.

# अथ कौटलीये अर्थशास्त्रे

# कण्टकशोधनं नाम

## चतुर्थमधिकरणम्

---

अस्येयं प्रकरणानुक्रमणिका.



आहत्य १३ प्रकरणानि १३ अध्यायाः

२३ कारिकाः.

## एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं सङ्ग्रहः

76. **कारुकरक्षणम्** (पु. 212)

शिल्पियोग्यताः, जनदत्तसंस्कार्यद्रव्यप्रत्यर्पणकालाः.

वस्त्रादिवानवेतनयोर्विधिः.

वस्त्रशोधकानुसार्याः नियमाः.

अनृजूनां सुवर्णकाराणां दण्डाः, संस्कारसमये न्यूनीभवनयोग्याः लोहभागाश्च.

पणदर्शकानां रत्नादिखनिदर्शकानां च परिशोधनम्.

वैद्यनटनर्तकादीनां नियमनम्.

77. **वैदेहकरक्षणम्** (पु. 216)

क्रयविक्रययोः परिमाणपरिशोधनविधिः.

केषाञ्चित् वञ्चनव्यवहाराणां दण्डाः.

विक्रेत्रुपजीव्य–निसृष्टभागव्यवस्थाः.

सम्भूयक्रये पण्यबहुत्वे देशकालव्यवहितविषयकत्वे च व्यवस्थाः.

78. **उपनिपातप्रतीकारः** (पु. 219)

अष्टौ दैव्यो विपदः.

क्रमेण अग्न्युदकव्याधिदुर्भिक्षमूषकव्यालसर्परक्षोजन्यानां तासां निवारणोपायाः.

79. **गूढाजीविनां रक्षा** (पु. 221)

उपदाग्राहकोत्कोचककूटसाक्षिणां परिशोधनम्.

वशीकरणाभिचारविषादिप्रयोक्तॄणां परिशोधनम्.

कूटरूपकारकपरिशोधनम्.

80. **सिद्धव्यञ्जनैर्माणवप्रकाशनम्** (पु. 223)

चोरजारवशीकरणं ग्रहणं च.

अनन्तरं प्रकटनीयाः रीतयः.

आरण्यकचोरग्रहणोपायाः.

81 **शङ्कारूपकर्माभिग्रहः** (पु. 225)

आशङ्कयैव बन्धनीयाश्चोराः.

नष्टलब्धस्वायत्तीकरणेन चोरपरिशोधनक्रमः.

आभ्यन्तरादित्रिविधचौर्यपरिज्ञानोपायाः, परीक्षाक्रमः, परीक्षकाश्च.

82. **आशुमृतकपरीक्षा** (पु. 228)

शवपरीक्षाः, चिह्नैरनुमेयाः मृतिहेतवश्च.

विषहतविषप्रदात्रोः परिज्ञानोपायाः.

सामान्यतो मारणनिमित्तानि.

मारकान्वेषणप्रकाराः.

आत्मघातिशरीरस्य शास्त्रीयसंस्कारनिषेधः, संस्कर्तुः बहिष्कारश्च.

83. **वाक्यकर्मानुयोगः** (पु. 230)

पूर्वोक्तरीत्या शङ्कागृहीतेषु पुरुषेषु सापराधत्वतदभावयोर्निर्णयक्रमः.

चोरत्वाङ्गीकारमात्रेण तस्मिन् चोरत्वासिद्धेरुपपादनम्.

दण्डनकर्मस्वयोग्या अपराधिनः.

चोरत्वज्ञानहेतवो चोरवञ्चनप्रकाराः.

अपराधनिश्चयेऽपि अधिकार्यानुगुण्येन दण्डविधिः.

दण्डनकर्मणां स्वरूपाणि.

क्षत्रियब्राह्मणयोर्दण्डनक्रमाः.

## 84. सर्वाधिकरणरक्षणम् (पु. 233)

राजकीयप्रदेशेषु जानपदप्रदेशेषु च द्रव्यापहर्तृणां द्रव्यानुगुण्येन दण्डभेदाः.

तेषामेव आरक्षिजनसुरक्षितद्रव्यापहर्तृणां दण्डाः.

धर्मस्थसम्भाव्यमाना अपराधाः, दुर्लेखकदण्डाश्च.

अदण्ड्यदण्डकानां नियमोल्लङ्घिबन्धनाध्यक्षाणां च दण्डाः.

## 85. एकाङ्गवधनिष्क्रयः (पु. 236)

तीर्थघातादौ कुक्कुटादिस्तेयाऽविधिबन्धनयोश्च दण्डाः.

शिल्प्यादिसम्बन्धिद्रव्यहरणे अक्रमप्रवेशे नौपश्वादिहरणे च दण्डाः.

काकण्यादिवैषम्यकरणे चौर्यसाहाय्याचरणे गवाद्यपहारे च दण्डाः.

उत्तमावमानने अपलापादौ च दण्डाः.

अपराधविशेषेषु दण्डाः.

## 86. शुद्धश्चित्रश्च दण्डकल्पः (पु. 238)

मरणपर्यसायिप्रहारे गर्भघाते प्रसह्य हिंसने चौर्यतत्साहाय्ययोश्च दण्डाः.

राज्यकामनया भेदने मातापितृहिंसायां सेतुभेदने विषप्रयोगे च दण्डाः.

अग्निप्रयोगे जिह्वालौल्ये रतिसामर्थ्यनाशने च दण्डाः.

## 87. कन्याप्रकर्म (पु. 240)

पुरुषवरणात् प्राक् परकीयकन्यागमने दण्डाः.

पश्चात् वृतपुरुषानागमने तदनुज्ञा.

प्रतिश्रुतयोर्वरकन्ययोर्विपर्यासकरणे क्षताक्षतयोन्योरक्षतक्षतयोनीकरणे च दण्डाः.

पतिप्रवाससमये व्यभिचरन्त्याः स्त्रियाः जारस्य तत्सहायानां च दण्डाः.

स्त्रीसङ्ग्रहणचिह्नानि.

दण्डानर्हाः परस्त्रीसङ्ग्रहणप्रकाराः.

## 88. अतिचारदण्डः (पु. 243)

अभक्ष्यभक्षणे अकाले परगृहप्रवेशे प्राकारकुड्याद्यारोहणभेदनयोश्च दण्डाः.

मुषितद्रव्यप्रत्यानयनविधयः.

जीर्णगृहाद्यसमीकरणेन शाखादिच्छेदनेन च रथ्याजनबाधने दण्डाः.

हस्त्यादिना घातने दण्डः, मुमूर्षौ विशेषश्च.

पशूनां दुरुपयोगे दण्डः.

शकटादिचालनसपये सञ्चारिजनहिंसायां दण्डाः.

वशीकरणविशेषाभ्यनुज्ञा.

अगम्यागमने अयोनौ तिर्यग्योनौ वा गमने दण्डाः.

उक्तानां दण्डानां अविमर्शनेनादण्ड्ये प्रयोगे राज्ञः प्रायश्चित्तविधानम्.

# अथ कण्टकशोधनं नाम चतुर्थमधिकरणम्

## षट्सप्ततितमं प्रकरणम्—कारुकरक्षणम्

### प्रथमोऽध्यायः

[दुष्टशिल्प्यादि निग्रहविधिः, शिक्षकसंख्या च]

[1] प्रदेष्टारस्त्रयस्त्रयो [2] वा अमात्याः कण्टकशोधनं कुर्युः॥

[जनदत्तसंस्कार्यद्रव्यग्रहणयोग्यताः, प्रत्यर्पणकालादिनियमश्च]

[3] अर्ध्यप्रकाराः कारुशासितारः [4] सन्निक्षेप्तारः [5] स्ववित्तकारवः [6] श्रेणीप्रमाणाः [7] निक्षेपं गृह्णीयुः। विपत्तौ श्रेणी निक्षेपं [8] भजेत। निर्दिष्टदेशकालकार्यं च कर्म कुर्युः, [9] अनिर्दिष्टदेशकालकार्यापदेशं च। कालातिपातने पादहीनं वेतनं, तद्द्विगुणश्च दण्डः। अन्यत्र [10] भ्रेषोपनिपाताभ्यां नष्टं विनष्टं [11] वा अभ्याभवेयुः। कार्यस्यान्यथाकरणे वेतननाशः, तद्द्विगुणश्च दण्डः।

[वस्त्रद्विपटीकम्बलादिनिर्माणतद्वेतने, विरूपकरणे दण्डश्च]

तन्तुवायाः [12] दशैकादशिकं सूत्रं वर्धयेयुः। वृद्धिच्छेदे छेदद्विगुणो दण्डः। सूत्रमूल्यं वानवेतनं क्षौमकौशेयानामध्यर्धगुणम्,

---

[1] शासनेऽधिकृताः. [2] वा इति ग पुस्तके नास्ति. [3] अभ्यर्थनीय ऋजुस्वभावाः. अर्ध्यप्रतीकाराः—क. अप्रतीकाराः—ख. [4] ससाक्षिकमेव सर्वव्यवहारकर्तारः. [5] स्वचित्तकारवः—पा. [6] परस्परं सङ्घीभूयकर्मकर्तार इति भावः. [7] शिल्पिहस्ते संस्कारार्थं द्रव्यादेः अर्पणं निक्षेपः. अत्र तु अर्पितं तादृशं द्रव्यं विवक्षितम्. [8] भागशः प्रत्यर्पयेत्. [9] अपदेशः—स्वरूपम्. तथा च यस्य कार्यस्य स्वरूपं देशकालनियमनिर्देशानर्हं तादृशविचित्रमपि कार्यजालं कुर्युरित्यर्थः. [10] भूतदैवादिजनितोपद्रवाभ्याम्. [11] स्वयमेव निर्यातयेयुः. अभ्यावहेयुः—ग. [12] वस्त्रार्थिभिः दशपलपरिमाणसूत्रदाने तस्मिन् काञ्जक (गंजि)मिश्रणेन तत्सूत्रं एकादशपलपरिमाणतया कुर्यादिति वाक्यार्थः.

पत्रोर्णाकम्बलदुकूलानां द्विगुणम् । [1] मानहीने [2] हीनावहीनं वेतनं, तद्द्विगुणश्च दण्डः । तुलाहीने हीनचतुर्गुणो दण्डः । सूत्रपरिवर्तने मूल्यद्विगुणः । तेन द्विपटवानं व्याख्यातम् । ऊर्णातुलायाः पञ्चपलिको [3] विहननच्छेदश्च ।

[वस्त्रशोधकोपयोज्यफलकादिः, तद्धार्यवस्त्रम्,
संस्कारार्थदत्तवस्त्रविक्रयादौ दण्डश्च]

रजकाः काष्ठफलक[4]श्लक्ष्णशिलासु वस्त्राणि [5]नेनिज्युः । अन्यत्र नेनिजन्तो वस्त्रोपघातं षट्पणं च दण्डं दद्युः ॥

[6] मुद्गराङ्कादन्यद्वासः परिदधानाः त्रिपणं दण्डं दद्युः । परवस्त्रविक्रयावक्रयाधानेषु च द्वादशपणो दण्डः ; परिवर्तने मूल्यद्विगुणो वस्त्रदानं च ।

[शोधनरञ्जनाद्यर्थदत्तवस्त्रप्रत्य-
र्पणकालनियमः]

[7] मुकुलावदातं शिलापट्टशुद्धं धौतसूत्रवर्णं प्रमृष्टश्वेतं चैकरात्रोत्तरं [8] दद्युः ; पञ्चरात्रिकं तनुरागं ; षड्रात्रिकं नीलं ; पुष्पलाक्षामञ्जिष्ठारक्तं [9] गुरुपरिकर्मयत्नोपचार्यं [10] जात्यं वासः सप्तरात्रिकम् । ततः परं वेतनहानिं प्राप्नुयुः ; [11] श्रद्धेयाः रागविवादेषु वेतनं कुशलाः कल्पयेयुः । [12] परार्ध्यानां पणो वेतनं ; मध्यमानामर्धपणः ; प्रत्यवराणां पादः । स्थूलकानां माषद्विमाषकम् , द्विगुणं रक्तकानाम् । प्रथमनेजने चतुर्भागः क्षयः, द्वितीये पञ्चभागः । तेनोत्तरं व्याख्यातम् । रजकैः [13] तुन्नवाया व्याख्याताः ॥

---

[1] निर्दिष्टाऽऽयामविस्तारान्न्यूनायामविस्तारतया वस्त्रनिर्माणे. [2] निर्दिष्टमाने कियान् भागः न्यूनीकृतः तावान् भागः देयधनेऽपि न्यूनीकरणीयः इत्यर्थः । [3] वाननिमित्तं शोधने न्यूनीभवनयोग्यो भागः. [4] श्लक्ष्णं=मसृणम्. इदं च वस्त्रोपहतिभयात्. [5] शोधयेयुः. [6] मुद्गरायुधचिह्नचिह्नितात्. [7] चत्वारः इमे धावल्यभेदानुगुणा वस्त्रभेदाः. तत्राद्यस्य प्रत्यर्पणकालः एकरात्रं, द्वितीयस्य द्विरात्रं । एवं तृतीयचतुर्थयोरपि. तत्तदतिक्रमे दण्डं दद्युः. [8] दण्डं दद्युः—ख. [9] बहुभिः यत्नैः रञ्जनीयम्. [10] प्रशस्तम्. [11] आप्ताः. अत्र कुशला इत्यन्वेति, [12] उत्तमानां रागाणाम्. [13] तुन्नवायः=सौचिकः.

[अशुद्धवृत्तानां सुवर्णकाराणां तत्त-
दपराधानुगुण्येन दण्डः]

सुवर्णकाराणां [1]अशुचिहस्ताद्रूप्यं सुवर्णं [2]अनाख्याय [3]सरूपं क्रीणतां द्वादशपणो दण्डः; विरूपं चतुर्विंशतिपणः; चोरहस्ताद्दष्टचत्वारिंशत्पणः; [4]प्रच्छन्नविरूपमूल्यहीनक्रयेषु स्तेयदण्डः, [5]कृतभाण्डोपधौ च। [6]सुवर्णान्माषकमपहरतो द्विशतो दण्डः, रूप्यधरणान्माषकमपहरतो द्वादशपणः। तेनोत्तरं व्याख्यातम्।

वर्णोत्कर्षमपसाराणां योगं वा साधयतः पञ्चशतो दण्डः। तयो[7]रपचरणे रागस्यापहारं विद्यात्।

[तेषां वेतनव्यवस्था, वस्तुनिर्माणसमये
न्यूनीभवनयोग्यतत्तल्लोहपरिमाण
नियमश्च]

माषको वेतनं रूप्यधरणस्य, सुवर्णस्याष्टभागः। [8]शिक्षाविशेषेण द्विगुणा वेतनवृद्धिः। तेनोत्तरं व्याख्यातम्।

ताम्रवृत्तकंसवैकृन्तकारकूटकानां पञ्चकं शतं वेतनम्। ताम्रपिण्डो दशभागक्षयः। पलहीने हीनद्विगुणो दण्डः। तेनोत्तरं व्याख्यातम्।

सीसत्रपुपिण्डो विंशतिभागक्षयः। काकणी चास्य पलवेतनम्। कालायसपिण्डः पञ्चभागक्षयः। काकणीद्वयं चास्य पलवेतनम्। तेनोत्तरं व्याख्यातम्।

[अमार्गप्रवृत्तानां पणदर्शकानां दण्डः
रत्नविषये अवधेयाः अंशाश्च]

[9]रूपदर्शकस्य स्थितां [10]पणयात्रां [11]अकोप्यां कोपयतः कोप्यामकोपयतो द्वादशपणो दण्डः। [12]व्याजीपरिशुद्धा पणयात्रा।

---

[1] अशुचयः दासकर्मकरादयः. [2] वस्तुस्वामिने नामादिकमनिवेद्य. [3] धारणार्हहारकुण्डलादिरूपयुक्तम्. [4] तदेव विनाशितनिजरूपं हीनमूल्येन गूढं क्रीणानस्येत्यर्थः. [5] उपधिः–परिवर्तनम्. [6] माषकः=षोडशो भागः. [7] अपचरणं–अग्निप्रक्षेपः. [8] शिल्पवैचित्र्येण. [9] पणपरीक्षकस्य. [10] यात्रा=व्यवहारः. [11] अदूषणीयाम्. [12] राजदेयांशदानेन परिशुद्धा.

पणान्माषकं [1]उपजीवतो द्वादशपणो दण्डः। तेनोत्तरं व्याख्यातम्।

[2] कूटरूपं कारयतः प्रतिगृह्णतो निर्यापयतो वा सहस्रं दण्डः। कोशे प्रक्षिपतो वधः। [3]सरकपांसुधावकाः सारत्रिभागं लभेरन्, द्वौ राजा रत्नं च। रत्नापहारे उत्तमो दण्डः।

[अनर्हाधीनखनिरत्नादिनिवेदकदेयांशः
आनुवंशिकनिधिस्वायत्तीकरण

खनिरत्ननिधिनिवेदनेषु षष्ठमंशं [4] निवेत्ता लभेत ; द्वादशमंशं भृतकः। शतसहस्रादूर्ध्वं राजगामी निधिः। ऊने षष्ठमंशं दद्यात्। पौर्वपौरुषिकं निधिं जानपदः शुचिः स्वकरणेन समग्रं लभेत। स्वकरणाभावे पञ्चशतो दण्डः, प्रच्छन्नादाने सहस्रम्।

[अमार्गप्रवृत्तवैद्यशिक्षा]

भिषजः प्राणाबाधिकमनाख्यायोपक्रममाणस्य विपत्तौ पूर्वस्साहसदण्डः, [5] कर्मापराधेन विपत्तौ मध्यमः, मर्मवेधवैगुण्यकरणे दण्डपारुष्यं विद्यात्।

[नटनर्तकादीनां स्थितिगतिक्रियादि
व्यवस्था अतिक्रमे दण्डश्च]

कुशीलवाः [6] वर्षारात्रिं [7] एकस्था वसेयुः। [8] कामदानमतिमात्रं एकस्यातिवादं च वर्जयेयुः। तस्यातिक्रमे द्वादशपणो दण्डः। कामं [9] देशजातिगोत्रचरणमैथुनापहाने [10]नर्मयेयुः।

---

[1] हरतः. [2] कपटनाण्यम्. [3] रत्नसम्बन्धिधूलीशोधकाः. सरकशब्दस्थाने झरक, रधरका, सधरक इति पाठाः उपलभ्यन्ते. [4] निवेदयिता. [5] कर्मोपरोधेन–ख. [6] वर्षऋतुसम्बन्धिनीः रात्रीः. [7] एकस्मिन्नेव स्थाने. [8] केनचित् कृतं अधिकदानं अतिस्तोत्रं च नाङ्गीकुर्युरित्यर्थः. अतिवादमित्यस्य स्थाने अतिवातमिति–ख. [9] अपहानं=उक्तदेशादिविषयकपरिहासानुकरणादिरूपग्राम्यक्रियाप्रकाशनाभावः, चरणः–शाखाध्येता. देश....नानपहाने इति–क. [10] विनोदयेयुः.

[चारणभिक्षुकयोः सधनत्वे उक्ततुल्यता
निर्धनत्वे दण्डविशेषश्च]

कुशीलवैश्चारणाः भिक्षुकाश्च व्याख्याताः। तेषां [1]अयश्शूलेन यावतः पणान् [2]अभिवदेयुः तावन्तः शिफाप्रहारा दण्डाः।

[शिल्पानुगुण्येन वेतनव्यवस्थोक्तिः
निगमनं च]

शेषाणां कर्मणां निष्पत्तिवेतनं शिल्पिनां[3]कल्पयेत्।
एवं चोरानचोराख्यान् वणिक्कारुकुशीलवान्।
भिक्षुकान् कुहकांश्चान्यान् वारयेद्देशपीडनात्॥ १४२॥

इति कण्टकशोधने कारुकरक्षणं प्रथमोऽध्यायः
आदितोऽष्टसप्ततितमः

# सप्तसप्ततितमं प्रकरणम्

## वैदेहकरक्षणम्

### द्वितीयोऽध्यायः

[वणिक्सङ्घाध्यक्षकर्तव्यविशेषाः]

[5]संस्थाध्यक्षः पण्यसंस्थायां [6]पुराणभाण्डानां [7]स्वकरणविशुद्धानां आधानं विक्रयं वा स्थापयेत्। तुलामानभाण्डानि चावेक्षेत, [8]पौतवापचारात्।

[मिथ्यापरिमाणप्रदर्शननिषेधः]

परिमाणीद्रोणयोरर्धपलहीनातिरिक्तमदोषः, पलहीनातिरिक्ते द्वादशपणो दण्डः। तेन पलोत्तरा दण्डवृद्धिर्व्याख्याता।

---

[1] चारणभिक्षुकादिकृत्यानां अयश्शूलवत् खेदकराणां निमित्तेनेत्यर्थः. [2] दण्डतया न्यायाधीशा विदध्युः. [3] क्रियानुगुणमित्यादिः. [4] वैदेहकः=वणिक्. [5] वणिक्सङ्घाध्यक्षः. [6] चिरात् स्थापितानां विक्रेयवस्तूनाम्. [7] न्यायतः स्वस्वसंपादनं स्वकरणम्. [8] 'पौतवं तुलया मानं' इति वैजयन्ती.

तुलायाः कर्षहीनातिरिक्तमदोषः, द्विकर्षहीनातिरिक्ते षट्पणो दण्डः। तेन कर्षोत्तरा दण्डवृद्धिर्व्याख्याता। आढकस्यार्धकर्षहीनातिरिक्तमदोषः; कर्षहीनातिरिक्ते त्रिपणो दण्डः। तेन कर्षोत्तरा दण्डवृद्धिर्व्याख्याता। तुलामानविशेषाणामतोऽन्येषामनुमानं कुर्यात्। तुलामानाभ्यामतिरिक्ताभ्यां क्रीत्वा हीनाभ्यां विक्रीणानस्य त एव द्विगुणा दण्डाः॥

[केषांचित् वञ्चनव्यवहाराणां दण्डाः]

[1] गण्यपण्येष्वष्टभागं पण्यमूल्येष्वपहरतः षण्णवतिर्दण्डः॥

काष्ठलोहमणिमयं रज्जुचर्ममृण्मयं सूत्रवल्करोममयं वा [2] जा-त्यमिति अजात्यं विक्रयाधानं नयतः मूल्याष्टगुणो दण्डः॥

सारभाण्डमित्यसारभाण्डं, तज्जातमित्यतज्जातं [3] राढायुक्तं [4] उपधियुक्तं [5] समुद्गपरिवर्तिमं वा विक्रयाधानं नयतो हीनमूल्यं चतुष्पञ्चाशत्पणो दण्डः, पणमूल्यं द्विगुणः, द्विपणमूल्यं द्विशतः। तेनार्घवृद्धौ दण्डवृद्धिर्व्याख्याता॥

कारुशिल्पिनां [6] कर्मगुणापकर्षं [7] आजीवं विक्रयं क्रयोपघातं वा संभूय समुत्थापयतां सहस्रं दण्डः॥

वैदेहकानां वा संभूय पण्यमवरुन्धतां अनर्घेण विक्रीणतां क्रीणतां वा सहस्रं दण्डः॥

तुलामानान्तरमर्घवर्णान्तरं वा, धरकस्य मापकस्य वा, पणमूल्यादष्टभागं हस्तदोषेणाचरतो द्विशतो दण्डः। तेन द्विशतोत्तरा दण्डवृद्धिर्व्याख्याता॥

धान्यस्नेहक्षारलवणगन्धभैषज्यद्रव्याणां [8] समवर्णोपधाने द्वादशपणो दण्डः॥

---

[1] गण्यपण्यानां मूल्येषु अष्टभागमपहरत इत्यर्थः. [2] निकृष्टमेव श्रेष्ठत्वेन व्यपदिश्येत्यर्थः. [3] राढा=कृत्रिमशोभा. [4] अतज्जातीयमिश्रितम्. [5] पूर्वप्रदर्शितपेटिकापेक्षया भिन्नपेटिकाया उद्धृत्य प्रदर्शितमित्यर्थः. [6] अपकर्षः=हानिः. [7] आजीवः=लाभः. [8] समानवर्णैः हीनमूल्यैर्मिश्रणे.

[विक्रेतृविषये संस्थाध्यक्षप्रकल्पनीया नियमाः]

[1] यन्निसृष्टमुपजीवेयुः, तदेषां दिवससञ्जातं सङ्ख्याय वणिक् स्थापयेत्। क्रेतृविक्रेत्रोरन्तरपतितं [2] अदायादन्यं भवति। तेन धान्यपण्यनिचयांश्चानुज्ञाताः कुर्युः। अन्यथा निचितमेषां पण्याध्यक्षो गृह्णीयात्। तेन धान्यपण्यविक्रये व्यवहरेत अनुग्रहेण प्रजानाम् [3] ॥

[विक्रेत्रुपजीव्यो निसृष्टभागः,
आधिक्ये दण्डः]

अनुज्ञातक्रयादुपरि चैषां स्वदेशीयानां पण्यानां पञ्चकं शतमाजीवं स्थापयेत्, परदेशीयानां दशकम्। ततः परमर्घं वर्धयतां क्रये विक्रये वा भावयतां पणशते पञ्चपणाद्विशतो दण्डः। तेनार्घवृद्धौ दण्डवृद्धिर्व्याख्याता ॥

[सम्भूयक्रये पण्यबहुत्वे देशकालव्य-
वहितत्वे च व्यवस्था:]

संभूयक्रये चैषां अविक्रीते नान्यं संभूयक्रयं दद्यात्। पण्योपघाते चैषामनुग्रहं कुर्यात् ॥

पण्यबाहुल्यात्पण्याध्यक्षः सर्वपण्यान्येकमुखानि विक्रीणीत। तेष्वविक्रीतेषु नान्ये विक्रीणीरन्। तानि दिवसवेतनेन विक्रीणीरन् अनुग्रहेण प्रजानाम् ॥

देशकालान्तरितानां तु पण्यानां ;—

[4] प्रक्षेपं [5] पण्यनिष्पत्तिं शुल्कं वृद्धिमवक्रयम् [6]।
व्ययानन्यांश्च सङ्ख्याय स्थापयेदर्घमर्घवित् ॥ १५३ ॥

इति कण्टकशोधने वैदेहकरक्षणं द्वितीयोऽध्यायः

आदित एकोनाशीतिः

[1] निसृष्टं=स्वोपजीवनार्थं कल्पितं भागम्. [2] आदायादन्यं इति—ख. [3] प्रजानां विषय इत्यर्थः. [4] वस्तुमूल्यम्. [5] वस्तुनिष्पत्तिकालादिनिर्देशम् [6] भाटकम.

# अष्टसप्ततितमं प्रकरणम्

## उपनिपातप्रतीकारः

### तृतीयोऽध्यायः

[दैव्यो विपदः]

दैवान्यष्टौ महाभयानि—अग्निः उदकं व्याधिः दुर्भिक्षं मूषिकाः व्यालाः सर्पाः रक्षांसीति। तेभ्यो जनपदं रक्षेत्॥

[तत्र अग्निभयाद्रक्षणप्रकारः]

ग्रीष्मे [1] बहिरधिश्रयणं ग्रामाः कुर्युः, दशकुलीसङ्ग्रहेणाधिष्ठिताः वा। नागरिकप्रणिधावग्निप्रतिषेधो व्याख्यातः; निशान्तप्रणिधौ राजपरिग्रहे च। बलिहोमस्वस्तिवाचनैः पर्वसु चाग्निपूजाः कारयेत्॥

[उदकभयाद्रक्षणम्]

वर्षारात्रमनूपग्रामाः [2] पूरवेलामुत्सृज्य वसेयुः। काष्ठवेणुनावश्चावगृह्णीयुः। उह्यमानं [3] अलाबूदृतिप्लवगण्डिकावेणिकाभिस्तारयेयुः। अनभिसरतां द्वादशपणो दण्डः—अन्यत्र प्लवहीनेभ्यः॥

पर्वसु च नदीपूजाः कारयेत्। मायायोगविदो वेदविदो वा वर्षमभिचरेयुः। वर्षावग्रहे शचीनाथगङ्गापर्वत[4]महाकच्छपूजाः कारयेत्॥

[व्याधिभयप्रतीकारविधिः]

व्याधिभयमौपनिषदिकैः प्रतीकारैः प्रतिकुर्युः, औषधैश्चिकित्सकाः, शान्तिप्रायश्चित्तैर्वा सिद्धतापसाः। तेन [5] मरको

---

[1] गृहाद्बहिर्भाग एव चुल्ल्यादिरचनां ग्रामवासिनः कुर्युरित्यर्थः. [2] जलप्रवाहसमीपभागम्. [3] अलाबूः–तुम्बीफलम्. गण्डिका–तरुप्रकाण्डकम्. [4] महाकच्छः=समुद्रः. [5] मारीनाम्ना प्रसिद्धः व्याधिः.

व्याख्यातः। तीर्थाभिषेचनं महाकच्छ[1]वर्धनं गवां श्मशानावदोहनं कबन्धदहनं [2]देवरात्रिं च कारयेत्। पशुव्याधिमरके [3]स्थानानि अर्धनीराजनं स्वदैवतपूजनं च कारयेत्॥

[दुर्भिक्षभयप्रतीकारः]

दुर्भिक्षे राजा [4]बीजभक्तोपग्रहं कृत्वाऽनुग्रहं कुर्यात्; दुर्गसेतुकर्म वा भक्तानुग्रहेण, भक्तसंविभागं वा, देशनिक्षेपं वा। मित्राणि वा व्यपाश्रयेत। [5]कर्शनं वमनं वा कुर्यात्। निष्पन्नसस्यमन्यविषयं वा सजनपदो यायात्। समुद्रसरस्तटाकानि वा संश्रयेत। धान्यशाकमूलफलावापान् सेतुषु कुर्वीत। मृगपशुपक्षिव्यालमत्स्यारम्भान् वा॥

[मूषिकोपद्रवनिवारणम्]

मूषिकभये मार्जारनकुलोत्सर्गः। तेषां ग्रहणहिंसायां द्वादशपणो दण्डः, शुनामनिग्रहे चान्यत्रारण्यचरेभ्यः। स्नुहिक्षीरलिप्तानि धान्यानि विसृजेत्, उपनिषद्योगयुक्तानि वा मूषिककरं वा प्रयुञ्जीत। शान्तिं वा सिद्धतापसाः कुर्युः। पर्वसु च मूषिकपूजाः कारयेत्। तेन शलभपक्षिक्रिमिभयप्रतीकारा व्याख्याताः॥

[व्यालभयनिवारणम्]

व्यालभये मदनरसयुक्तानि पशुशवानि प्रसृजेत्; मदनकोद्रवपूर्णान्यौदर्याणि वा। लुब्धकाः श्वगणिनो वा [6]कूटपञ्जरावपातैश्चरेयुः। आवरणिनः शस्त्रपाणयो व्यालानभिहन्युः। अनभिसर्तुर्द्वादशपणो दण्डः। स एव लाभो व्यालघातिनः। पर्वसु च पर्वतपूजाः कारयेत्। तेन मृगपक्षिसङ्घग्राहप्रतीकारा व्याख्याताः॥

---

[1] वर्धनं=पूजनम्. [2] देवरात्रिः=दैवपूजनेन रात्रिजागरणम्. [3] भिन्नस्थानस्थितीः. [4] उपग्रहः—अनुकूलाचरणम्. [5] जनानां तात्कालिकविदेशप्रेषणं कर्शनम्. दीर्घकालं सुभिक्षदेशप्रेषणं वमनम्. [6] कपटकुलायैः तृणादिच्छन्नैः पातनगर्तैश्च.

[सर्पभयप्रतीकारः]

सर्पभये मन्त्रैरोषधिभिश्च जाङ्गलीविदश्चरेयुः । संभूय वोपसर्पान् हन्युः । अथर्ववेदविदो वाऽभिचरेयुः । पर्वसु नागपूजाः कारयेत् । तेनोदकप्राणिभयप्रतीकारा व्याख्याताः ॥

[रक्षोभयान्निवारणविधिः]

रक्षोभये रक्षोघ्नान्यथर्ववेदविदो मायायोगविदो वा कर्माणि कुर्युः । पर्वसु च[1] वितर्दिच्छत्रोल्लोपिकाहस्तपताकाच्छागोपहारैः चैत्यपूजाः कारयेत् ॥

[सिद्धादिसहकारेण सर्वविधभय-
निवारणावश्यकता]

'[2]चरुं वश्चरामः' इत्येवं सर्वभयेष्वहोरात्रं चरेयुः । सर्वत्र चोपहतान् पितेवानुगृह्णीयात् ॥

मायायोगविदस्तस्मात् विषये सिद्धतापसाः ।
वसेयुः पूजिता राज्ञा दैवापत्प्रतिकारिणः ॥ १५४ ॥

इति कण्टकशोधने उपनिपातप्रतीकारः तृतीयोऽध्यायः
आदितोऽशीतितमः

---

# एकोनाशीतितमं प्रकरणं
# गूढाजीविनां रक्षा.
## चतुर्थोऽध्यायः

[गूढचारनियोजनेन उपदाग्राहकपरिशोधनम्]

समाहर्तृप्रणिधौ जनपदरक्षणमुक्तम् । तस्य कण्टकशोधनं वक्ष्यामः—

समाहर्ता जनपदे सिद्धतापसप्रव्रजितचक्रचरचारणकुहक-[3]प्रच्छन्दककार्तान्तिकनैमित्तिकमौहूर्तिकचिकित्सकोन्मत्तमूकबधि -

---

[1] वितर्दिः=वेदिका, उल्लोपिका=भक्ष्यविशेषः. [2] वश्चरामः-क.
[3] प्रच्छन्दकः=

रजडान्धवैदेहककारुशिल्पिकुशीलव[1]वेशशौण्डिकापूपिकपाक्वमांसिकौदनिकव्यञ्जनान् प्रणिदध्यात् । ते ग्रामाणामध्यक्षाणां च शौचाशौचं विद्युः । यं चात्र गूढजीविनं शङ्केत, तं सत्रिसवर्णेनापसर्पयेत् । धर्मस्थं प्रदेष्टारं वा विश्वासोपगतं सत्री ब्रूयात्— 'असौ मे बन्धुरभियुक्तः ; तस्यायमनर्थः प्रतिक्रियतां, अयं चार्थः प्रतिगृह्यताम्' इति । स चेत्तथा कुर्यात्, 'उपदाग्राहकः' इति प्रवास्येत । तेन प्रदेष्टारो व्याख्याताः ॥

[ उत्कोचकपरिशोधनम् ]

ग्रामकूटमध्यक्षं वा सत्री ब्रूयात् 'असौ जाल्मः प्रभूतद्रव्यः, तस्यायमनर्थः, तेनैनमाहारयस्व' इति । स चेत्तथा कुर्यात् 'उत्कोचकः' इति प्रवास्येत ॥

[ कूटसाक्षिपरिशोधनम् ]

कृतकाभियुक्तो[2] वा कूटसाक्षिणोऽभिज्ञातान् अर्थवैपुल्येन [3]आरभेत । ते चेत्तथा कुर्युः, 'कूटसाक्षिणः' इति प्रवास्येरन् । तेन कूटश्रावणकारका व्याख्याताः ॥

[वशीकरणाभिचारादिप्रवृत्तानां परिशोधनम् ]

यं वा मन्त्रयोगमूलकर्मभिः श्माशानिकैर्वा संवननकारकं मन्येत, तं सत्री ब्रूयात्— 'अमुष्य भार्यां स्नुषां दुहितरं वा कामये, सा मां प्रतिकामयतां, अयं चार्थः प्रतिगृह्यताम्' इति । स चेत्तथा कुर्यात् 'संवननकारकः' इति प्रवास्येत । तेन कृत्याभिचारशीलौ व्याख्यातौ ॥

[ विषादिप्रयोक्तृपरिशोधनम् ]

यं वा [4]रसस्य [5]वक्तारं क्रेतारं विक्रेतारं भैषज्याहारव्यवहारिणं वा रसदं मन्येत तं सत्री ब्रूयात्—'असौ मे शत्रुः, तस्यो-

---

[1] वेशः=वेश्यावाटसञ्चारी. [2] सत्रीविशेषः. [3] प्रलोभयेत्. [4] रसः—विषम्. [5] कर्तारम्—पा.

पघातः क्रियताम्, अयं चार्थः प्रतिगृह्यताम्' इति। स चेत्तथा कुर्यात्, 'रसदः' इति प्रवास्येत। तेन मदनयोगव्यवहारी व्याख्यातः॥

[कूटरूपकारकपरिशोधनक्रमः]

यं वा नानालोहक्षाराणामङ्गारभस्त्रासन्दंशमुष्टिकाधिकरणीबिम्बटङ्कमूषाणामभीक्ष्णं क्रेतारं मषीभस्मधूमदिग्धहस्तवस्त्रलिङ्गं कर्मारोपकरणसंवर्गं कूटरूपकारकं मन्येत, तं सत्री शिष्यत्वेन संव्यवहारेण चानुप्रविश्य प्रज्ञापयेत्। [1] प्रज्ञातः 'कूटरूपकारकः' इति प्रवास्येत। तेन रागस्यापहर्ता कूटसुवर्णव्यवहारी च व्याख्यातः॥

[निगमनम्]

आरब्धारस्तु हिंसायां गूढाजीवास्त्रयोदश।
प्रवास्याः [2] निष्क्रयार्थं वा दद्युर्दोषविशेषतः॥ १५५॥

इति कण्टकशोधने गूढाजीविनां रक्षा चतुर्थोऽध्यायः
आदित एकाशीतिः

---

# अशीतितमं प्रकरणम्

# सिद्धव्यञ्जनैर्माणवप्रकाशनम्.

## पञ्चमोऽध्यायः

[चोरजारवशीकरणानुकूलाः
प्रलोभनप्रकाराः]

सत्रिप्रयोगादूर्ध्वं सिद्धव्यञ्जनाः माणवाः [3] माणवविद्याभिः प्रलोभयेयुः; प्रस्वापनान्तर्धानद्वारापोहमन्त्रेण [4] प्रतिरोधकान्, संवननमन्त्रेण पारतल्पिकान्॥

---

[1] राज्ञे निवेदयेत्. [2] दण्डरूपेण विहितमर्थम्. [3] प्रस्वापनान्तर्धानादिकारिभिर्मन्त्रैः. [4] चोरान्.

तेषां कृतोत्साहानां महान्तं सङ्घमादाय रात्रावन्यं ग्राममुद्दिश्यान्यं ग्रामं कृतकस्त्रीपुरुषं गत्वा ब्रूयुः—'इहैव विद्याप्रभावो दृश्यताम्, कृच्छ्रः परग्रामो गन्तुम्' इति। ततो द्वारापोहमन्त्रेण द्वाराण्यपोह्य 'प्रविश्यताम्' इति ब्रूयुः। अन्तर्धानमन्त्रेण जाग्रतामारक्षिणां मध्येन माणवानतिक्रामयेयुः। प्रस्वापयित्वा रक्षिणश्शय्याभिर्माणवैस्सञ्चारयेयुः। संवननमन्त्रेण भार्याव्यञ्जनाः परेषां माणवैस्संमोदयेयुः। उपलब्धविद्याप्रभावाणां पुरश्चरणाद्यादिशेयुरभिज्ञानार्थम्॥

[चोरजारयोः ग्रहणप्रकाराः]

[1]कृतलक्षणद्रव्येषु वा वेश्मसु कर्म कारयेयुः, अनुप्रविष्टान् वा एकत्र ग्राहयेयुः। कृतलक्षणद्रव्यक्रयविक्रयाधानेषु योगसुरामत्तान् वा ग्राहयेयुः। गृहीतान् पूर्वापदानसहायाननुयुञ्जीत। [2]पुराणचोरव्यञ्जना वा चोराननुप्रविष्टास्तथैव कर्म कारयेयुः ग्राहयेयुश्च॥

[ग्रहणानन्तरं प्रकटीकरणीयाः रीतयः]

गृहीतान् समाहर्ता पौरजानपदानां दर्शयेत्—'चोरग्रहणीं विद्यामधीते राजा; तस्योपदेशादिमे चोरा गृहीताः; भूयश्च ग्रहीष्यामि; वारयितव्यो वः स्वजनः पापाचारः' इति। यं चात्रापसर्पोपदेशेन शम्याप्रतोदादीनामपहर्तारं जानीयात्, तमेषां प्रत्यादिशेत्, 'एष राज्ञः प्रभाव' इति॥

[आरण्यकचोरग्रहणोपायाः]

पुराणचोरगोपालकव्याधश्वगणिनश्च वनचोराटविकाननुप्रविष्टाः प्रभूतकूटहिरण्यकुप्यभाण्डेषु सार्थव्रजग्रामेष्वेनानभियोजयेयुः; अभियोगे गूढबलैर्घातयेयुः, मदनरसयुक्तेन वा पथ्यादनेन। अनुगृहीतलोप्त्रभारान् आयतगतपरिश्रान्तान् प्रस्वपतः प्रहवणेषु योगसुरामत्तान् वा ग्राहयेयुः॥

---

[1] कृतस्वामिचिह्नद्रव्योपेतेषु. [2] पुरातनतस्करवेषधारिणः.

[बहिः प्रकाशविषये पूर्वातिदेशः]

पूर्ववच्च गृहीत्वैनान् समाहर्ता प्ररूपयेत् ।
सर्वज्ञख्यापनं राज्ञः कारयन् राष्ट्रवासिषु ॥ १५६ ॥

इति कण्टकशोधने सिद्धव्यञ्जनैर्माणवप्रकाशनं

पञ्चमोऽध्यायः आदितो त्र्यशीतिः

# एकाशीतितमं प्रकरणं-
# शङ्कारूपकर्माभिग्रहः

## षष्ठोऽध्यायः

[आशङ्कयैव बन्धनीयाश्चोराः]

सिद्धप्रयोगादूर्ध्वं शङ्कारूपकर्माभिग्रहः ॥

क्षीणदायकुटुम्बं, [1]अल्पनिर्वेशं, [2]विपरीतदेशजातिगोत्रनामकर्मापदेशं, प्रच्छन्नवृत्तिकर्माणं, मांससुराभक्ष्यभोजनगन्धमाल्यवस्त्रविभूषणेषु प्रसक्तं, अतिव्ययकर्तारं, पुंश्चलीद्यूतशौण्डिकेषु प्रसक्तं, अभीक्ष्णप्रवासिनं, अविज्ञातस्थानगमनपण्यं, एकान्तारण्यनिष्कुटविकालचारिणं, प्रच्छन्ने [3]सामिषे वा देशे [4]बहुमन्त्रसन्निपातं, सद्यःक्षतव्रणानां गूढप्रतीकारयितारं, [5]अन्तर्गृहनित्यं, अभ्यधिगन्तारं, कान्तापरं, परपरिग्रहाणां परस्त्रीद्रव्यवेश्मनामभीक्ष्णप्रष्टारं, कुत्सितकर्मशास्त्रोपकरणसंसर्गं, विरात्रे छन्नकुड्यच्छायासञ्चारिणं,

[1] निर्वेशः=भृतिः. [2] विपरीतः=अन्यथाकल्पितः. [3] द्रव्यसहायसम्पन्ने.
[4] बहुधा मन्त्रकर्म कुर्वन्तं, बहुकृत्वो गच्छन्तं च. [5] अन्तर्गृहं नित्यमभ्य-ग.

विरूपद्रव्याणामदेशकालविक्रेतारं, जातवैराशयं, हीनकर्मजातिं, विगूह्यमानरूपं, लिङ्गेनालिङ्गिनं, लिङ्गिनं वा भिन्नाचारं, पूर्वकृतापदानं, स्वकर्मभिरपदिष्टं, नागरिकमहामात्रदर्शने गूहमानमपसरन्तं, अनुच्छ्वासोपवेशिनं, आविग्नं, शुष्कभिन्नस्वरमुखवर्णं, शस्त्रहस्तमनुष्यसंपातत्रासिनं, हिंस्रस्तेननिधिनिक्षेपापहारप्रयोगगूढाजीविनामन्यतमं शङ्केत—इति शङ्काभिग्रहः ॥

[नष्टलब्धद्रव्यस्वायत्तीकरणेन चोरपरिशोधनक्रमः]

रूपाभिग्रहस्तु—नष्टापहृतमविद्यमानं तज्जातव्यवहारिषु निवेदयेत्। तच्चेन्निवेदितमासाद्य प्रच्छादयेयुः, [1] साचिव्यकरदोषमाप्नुयुः। अजानन्तोऽस्य द्रव्यस्यातिसर्गेण[2] मुच्येरन्। न चानिवेद्य संस्थाध्यक्षस्य पुराणभाण्डानामाधानं विक्रयं वा कुर्युः ॥

तच्चेन्निवेदितमासाद्येत, रूपाभिगृहीतमागमं पृच्छेत् 'कुतस्ते लब्धम्' इति। स चेद् ब्रूयात्—'दायाद्यादवाप्तं, अमुष्माल्लब्धं, क्रीतं, कारितं, [3] अधिप्रच्छन्नं, अयमस्य देशः कालश्चोपसंप्राप्तः, अयमस्यार्घः प्रमाणं लक्षणं मूल्यं च' इति तस्यागमसमाधौ[4] मुच्येत ॥

नाष्टिकश्चेत्तदेव प्रतिसंदध्यात्, य(त)स्य पूर्वो दीर्घश्च परिभोगश्शुचिर्वा देशस्तस्य द्रव्यमिति विद्यात्। [6] चतुष्पदानामपि हि रूपलिङ्गसामान्यं भवति, किमङ्ग! पुनरेकयोनिद्रव्यकर्तृप्रसूतानां कुप्याभरणभाण्डानाम् इति ॥

स चेद् ब्रूयात्—'याचितकमवक्रीतकमाहितकं निक्षेपमुपनिधिं [7] वैयापृत्यभर्म वाऽमुष्य' इति, तस्यावसर(पसार)प्रतिसंधानेन मुच्येत। 'नैवम्' इत्यपसारो वा ब्रूयात्। रूपाभिगृहीतः

[1] चोरसहायभूतेन प्राप्यं दण्डम्. [2] अतिसर्गः–अर्पणम्. [3] आधीकरणाद्धेतोः एतावत्पर्यन्तं प्राकाश्यमनीतम्. [4] समाधिः–समर्थनम्. [5] अनुभवः. [6] चतुष्पदद्विपदानामपि–पा. [7] कर्मकरणार्थदत्तभृतिम्. वैयावृत्यकर्म–पा.

परस्य दानकारणं आत्मनः प्रतिग्रहकारणं उपलिङ्गनं वा दायकदापकनिबन्धकप्रतिग्राहकोपदेष्टृभिरुपश्रोतृभिर्वा [1]प्रतिसमानयेत् ॥

उज्झितप्रणष्टनिष्पतितोपलब्धस्य देशकाललाभोपलिङ्गनेन शुद्धिः । अशुद्धस्तच्च तावच्च दण्डं दद्यात् । अन्यथा स्तेयदण्डं भजेत । इति रूपाभिग्रहः ॥

[आभ्यन्तरादित्रिविधचौर्यपरिज्ञानोपायाः]

कर्माभिग्रहस्तु—मुषितवेश्मनः प्रवेशनिष्कसनमद्वारेण, द्वारस्य सन्धिना बीजेन वा वेधम्, उत्तमागारस्य जालवातायननीव्रवेधम्, आरोहणावतरणे च कुड्यस्य वेधम्, उपखननं वा गूढद्रव्यनिक्षेपग्रहणोपायमुपदेशोपलभ्यम्, अभ्यन्तरच्छेदोत्करपरिमर्दोपकरणं अभ्यन्तरकृतं विद्यात्; विपर्यये बाह्यकृतं; उभयतः उभयकृतम् ॥

[आभ्यन्तरकृतत्वसंशये परीक्षाक्रमः]

अभ्यन्तरकृते—पुरुषमासन्नं व्यसनिनं, क्रूरसहायं, तस्करोपकरणसंसर्गं, स्त्रियं वा दरिद्रकुलामन्यप्रसक्तां वा, परिचारकजनं वा तद्विधाचारं, अतिस्वप्नं, निद्राक्लान्तं, आधिक्लान्तं, आविग्नं, शुष्कभिन्नस्वरमुखवर्णं, अनवस्थितं, अतिप्रलापिनं, उच्चारोहणसंरब्धगात्रं, विलूननिघृष्टभिन्नपाटितशरीरवस्त्रं, जातकिणसंरब्धहस्तपादं, पांसुपूर्णकेशनखं, विलूनभुग्नकेशनखं वा, सम्यक्स्नातानुलिप्तं तैलप्रमृष्टगात्रं सद्योधौतहस्तपादं वा, पांसुपिच्छिलेषु तुल्यपादपदनिक्षेपं, प्रवेशनिष्कसनयोर्वा तुल्यमाल्यमद्यगन्धवस्त्रच्छेदविलेपनस्वेदं परीक्षेत । चोरं पारदारिकं वा विद्यात् ॥

[बाह्याभ्यन्तरचोरान्वेषणकर्तारः]

सगोपस्थानिको बाह्यं प्रदेष्टा चोरमार्गणम् ।
कुर्यान्नागरिकश्चान्तर्दुर्गे निर्दिष्टहेतुभिः ॥ १५७ ॥

इति कण्टकशोधने शङ्कारूपकर्माभिग्रहः षष्ठोऽध्यायः

आदितस्त्र्यशीतिः

---

[1] निरूपयेत्.

# द्व्यशीतितमं प्रकरणं
# आशुमृतकपरीक्षा

## सप्तमोऽध्यायः

[शवपरीक्षाः, तैस्तैश्चिन्हैरनुमेयाः मृतिहेतवश्च]

तैलाभ्यक्तमाशुमृतकं परीक्षेत ॥

निष्कीर्णमूत्रपुरीषं वातपूर्णकोष्ठत्वक्कं [1]शूनपादपाणिमुन्मीलिताक्षं [2]सव्यञ्जनकण्ठं पीडननिरुद्धोच्छ्वासहतं विद्यात्।

तमेव सङ्कुचितबाहुसक्थिं उद्बन्धहतं विद्यात्।

शूनपाणिपादोदरं अपगताक्षं उद्वृत्तनाभिं [3]अवरोपितं विद्यात्।

निस्तब्धगुदाक्षं सन्दष्टजिह्वं आध्मातोदरं उदकहतं विद्यात्।

शोणितानुसिक्तं भग्नभिन्नगात्रं काष्ठै रश्मिभिर्वा हतं विद्यात्।

संभग्नस्फुटितगात्रं [4]अवक्षिप्तं विद्यात्।

[5]श्यावपाणिपाददन्तनखं शिथिलमांसरोमचर्माणं फेनोपदिग्धमुखं विषहतं विद्यात् ॥

तमेव सशोणितदंशं सर्पकीटहतं विद्यात् ॥

विक्षिप्तवस्त्रगात्रं अतिवान्तविरिक्तं [6]मदनयोगहतं विद्यात् ॥

अतोऽन्यतमेन कारणेन हतं हत्वा वा दण्डभयादुद्बन्धनिकृत्तकण्ठं विद्यात् ॥

[विषहतचिह्नानि, विषप्रदातृपरिज्ञानोपायः, उद्बन्धने विशेषश्च]

विषहतस्य भोजनशेषं पयोभिः परीक्षेत। हृदयादुद्धृत्याग्नौ प्रक्षिप्तं चिटचिटायत् इन्द्रधनुर्वर्णं वा विषयुक्तं विद्यात्; दग्धस्य हृदयमदग्धं दृष्ट्वा वा ॥

तस्य परिचारकजनं वाग्दण्डपारुष्यातिलब्धं मार्गेत; दुःखोपहतमन्यप्रसक्तं वा स्त्रीजनं, दायनिवृत्तिस्त्रीजनाभिमन्तारं वा बन्धुम्। तदेव हतोद्बद्धस्य परीक्षेत ॥

---

[1] शूनं=प्रवृद्धम्. [2] व्यञ्जनं=चिह्नम्. [3] शूलारोपितम्. [4] प्रासादादिभ्यः पतितम् विक्षिप्तं. पा. [5] श्यावः-कपिशवर्णः. [6] मादकयोगहतम्.

स्वयमुद्बद्धस्य वा [1]विप्रकारमयुक्तं मार्गेत ॥

[सामान्यतो मारणनिमित्तानि]

सर्वेषां वा [2]स्त्रीदायाद्यदोषः, कर्मस्पर्धा, प्रतिपक्षद्वेषः, पण्यसंस्था, समवायो वा विवादपदानामन्यतमं वा रोषस्थानम्; रोषनिमित्तो घातः ॥

[अनाथशवदर्शने मारकपरिशोधनक्रमविशेषः]

स्वयं, आदिष्टपुरुषैर्वा चोरैः, अर्थनिमित्तं, सादृश्यादन्यवैरिभिर्वा हतस्य घातमासन्नेभ्यः परीक्षेत। येनाहूतस्सहस्थितः प्रस्थितो हतभूमिमानीतो वा, तमनुयुञ्जीत। ये चास्य हतभूमावासन्नचरास्तानेकैकशः पृच्छेत् 'केनायमिहानीतो हतो वा कस्सशस्त्रः सङ्गूहमान उद्विग्नो वा युष्माभिर्दृष्टः' इति। ते यथा ब्रूयुस्तथाऽनुयुञ्जीत ॥

[घातकान्वेषणविधिः]

अनाथस्य शरीरस्थं [3]उपभोगं [4]परिच्छदम्।
वस्त्रं वेषं विभूषां वा दृष्ट्वा तद्व्यवहारिणः ॥ १५८ ॥
अनुयुञ्जीत संयोगं निवासं वासकारणम्।
कर्म च व्यवहारं च ततो मार्गणमाचरेत् ॥ १५९ ॥

[आत्मघातिनां शरीरस्य शास्त्रीयसंस्कारनिषेधः संस्कर्तृबहिष्कारश्च]

रज्जुशस्त्रविषैर्वाऽपि कामक्रोधवशेन यः।
घातयेत् स्वयमात्मानं स्त्री वा पापेन मोहिता ॥ १६० ॥
[5]रज्जुना राजमार्गे तां चण्डालेनापकर्षयेत्।
न श्मशानविधिस्तेषां न [6]संबन्धिक्रियास्तथा ॥ १६१ ॥

---

[1] अतिमात्रपीडनम् अयुक्तविप्रकारः. [2] स्त्रीनिमित्तः दायादित्वनिमित्तश्च दोषः इत्यर्थः. [3] माल्यचन्दनादिकम्. [4] छत्रोपानहादिकम् [5] पुंस्त्वमार्षम्. रज्ज्वा. [6] ज्ञातिकार्याणि निवपनादीनि.

बन्धुस्तेषां तु यः कुर्यात् प्रेतकार्यक्रियाविधिम् ।
[1] तद्गतिं स [2] चरेत् [3] पश्चात् स्वजनाद्वा प्रमुच्यते ॥ १६२ ॥
संवत्सरेण पतति पतितेन समाचरन् ।
याजनाध्यापनाद् [4] यौनात् तैश्चान्योऽपि समाचरन् ॥ १६३ ॥

इति कण्टकशोधने आशुमृतकपरीक्षा सप्तमोऽध्यायः
आदितश्चतुरशीतिः.

---

## त्र्यशीतितमं प्रकरणम्
## वाक्यकर्मानुयोगः
### अष्टमोऽध्यायः

[शङ्कागृहीतेषु कृतापराधत्वतदभावयोः
निर्णयक्रमः, चोरत्वाङ्गीकारस्य
चोरत्वाव्याप्यता च]

[5] मुषितसन्निधौ बाह्यानामभ्यन्तराणां च साक्षिणं [6] अभिशस्तस्य देशजातिगोत्रनामकर्मसारसहायनिवासाननुयुञ्जीत । तांश्चापदेशैः प्रतिसमानयेत् । ततः पूर्वस्याह्नः प्रचारं रात्रौ निवासं च आ ग्रहणादित्यनुयुञ्जीत । तस्यापसारप्रतिसन्धाने शुद्धः स्यात् । अन्यथा कर्मप्राप्तः ॥

त्रिरात्रादूर्ध्वमग्राह्यः शङ्कितकः, पृच्छाभावादन्यत्रोपकरणदर्शनात् ॥

अचोरं 'चोर' इत्यभिव्याहरतश्चोरसमो दण्डः, चोरं प्रच्छादयतश्च । चोरेणाभिशस्तो वैरद्वेषाभ्यामपदिष्टकः शुद्धस्स्यात् । शुद्धं परिवासयतः पूर्वस्साहसदण्डः ॥

---

[1] आत्मघातिगतिम्. [2] प्राप्नुयात्. [3] देहान्ते. [4] यौनात्=विवाहसम्बन्धात्. [5] याज्ञ. 2, 271-272. [6] शङ्काभिगृहीतस्य.

शङ्कानिष्पन्नमुपकरणमन्त्रिसहायरूपवैयावृत्यकरान्निष्पादयेत्। कर्मणश्च प्रवेशद्रव्यादानांशविभागैः प्रतिसमानयेत्। एतेषां कारणानां अनभिसन्धाने [1]विप्रलपन्तमचोरं विद्यात्। दृश्यते ह्यचोरोऽपि चोरमार्गे यदृच्छया सन्निपाते चोरवेषशस्त्रभाण्डसामान्येन गृह्यमाणो दृष्टः चोरभाण्डस्योपवासेन वा; यथा हि माण्डव्यः कर्मक्लेशभयादचोरः 'चोरोऽस्मि' इति ब्रुवाणः। तस्मात्समाप्तकरणं नियमयेत्॥

[दण्डनकर्मस्वनुद्योजनीयाः अपराधिनः
चोरत्वपरिज्ञानहेतवः वञ्चनाश्च]

मन्दापराधं बालं वृद्धं व्याधितं मत्तमुन्मत्तं क्षुत्पिपासाध्वक्लान्तं अत्याशितं आमकाशितं दुर्बलं वा न कर्म कारयेत्। तुल्यशीलपुंश्चलीप्रावादिककथावकाशभोजनदातृभिरपसर्पयेत्। एवमतिसन्दध्यात्, यथा वा निक्षेपापहारे व्याख्यातम्॥

[निश्चितापराधेष्वपि व्यक्त्यानुगुण्येन
दण्डभेदाः]

[2]आप्तदोषं कर्म कारयेत्; न त्वेव स्त्रियं गर्भिणीं सूतिकां वा मासावरप्रजाताम्। स्त्रियास्त्वर्धकर्म, वाक्यानुयोगो वा। ब्राह्मणस्य सत्रिपरिग्रहः श्रुतव्रतस्तपस्विनश्च। तस्यातिक्रमे उत्तमो दण्डः कर्तुः कारयितुश्च, कर्मणा [3]व्यापादनेन च॥

[साधारणानां विशिष्टानां च दण्डन-
कर्मणां परिगणनं क्रमश्च]

[4]व्यावहारिकं कर्मचतुष्कं षड् दण्डाः, सप्त कशाः, द्वावुपरिनिबन्धौ, उदकनालिका च॥

परं पापकर्मणां—नववेत्रलताद्वादशकं, द्वावूरुवेष्टौ, विंशतिर्नक्तमाललताः द्वात्रिंशत्तलाः[5], द्वौ वृश्चिकबन्धौ, उल्लम्बने च द्वे, सूची हस्तस्य, [6]यवागूपीतस्य, एकपर्वदहनमङ्गुल्याः, स्नेहपीतस्य

---

[1] भयादिना विरुद्धभाषणेन स्वस्मिन् चोरत्वं ख्यापयन्तमपि. [2] निश्चितापराधम्. [3] द्रोहचिन्तनेन. [4] लोकव्यवहारप्रसिद्धं चतुष्प्रकारं दण्डकर्मेत्यर्थः. [5] तलाः–चपेटाघाताः. [6] कारणा इति शेषः.

प्रतापनमेकमहः, शिशिररात्रौ बल्बजाग्रशय्या चेत्यष्टादशकं कर्म। तस्योपकरणं प्रमाणं प्रहरणं प्रधारणमवधारणं च [1] खरपट्टादागमयेत्॥

दिवसान्तरमेकैकं च कर्म कारयेत्॥

[क्षत्रियादीनां दण्ड्यत्वे हेतवः]

पूर्वकृतापदानं, प्रतिज्ञायापहरन्तम्, एकदेशदृष्टद्रव्यं, कर्मणा रूपेण वा गृहीतं, राजकोशमवस्तृणन्तं, कर्मवध्यं वा राजवचनात् समस्तं व्यस्तमभ्यस्तं वा कर्म कारयेत्॥

[ब्राह्मणदण्डनक्रमः]

सर्वापराधेष्वपीडनीयो ब्राह्मणः। [2] तस्याभिशस्ताङ्को ललाटे स्याद्व्यवहारपतनाय [3]; —स्तेये श्वा, मनुष्यवधे कबन्धः, गुरुतल्पे भगम्, सुरापाने मद्यध्वजः॥

ब्राह्मणं पापकर्माणं
उद्घुष्याङ्ककृतव्रणम्।
[4]कुर्यान्निर्विषयं राजा
वासयेदाकरेषु वा॥ १६४॥

इति कण्टकशोधने वाक्यकर्मानुयोगः अष्टमोऽध्यायः
आदितः पञ्चाशीतिः.

---

[1] खरपट्ट इति नाम्ना प्रसिद्धात् चौर्यशास्त्रात्. [2] याज्ञ. II, 249.
[3] तेन सह सर्वविधव्यवहारवर्जनाय. [4] स्वदेशान्निष्कासयेत्.

# चतुरशीतितमं प्रकरणम्
# सर्वाधिकरणरक्षणम्
## नवमोऽध्यायः

[राजकीयप्रदेशेषु चौर्यं कुर्वतां द्रव्यानु-
गुण्येन दण्डविधानानि]

समाहर्तृप्रदेष्टारः पूर्वमध्यक्षाणामध्यक्षपुरुषाणां च नियमनं कुर्युः ॥

खनिसारकर्मान्तेभ्यस्सारं रत्नं वाऽपहरतश्शुद्धवधः ; फल्गुद्रव्यकर्मान्तेभ्यः फल्गुद्रव्यमुपस्करं वा पूर्वस्साहसदण्डः ॥

पण्यभूमिभ्यो वा राजपण्यं माषमूल्यादूर्ध्वमा पादमूल्यादित्यपहरतो द्वादशपणो दण्डः, आ द्विपादमूल्यादिति चतुर्विंशतिपणः, आ त्रिपादमूल्यादिति षट्त्रिंशत्पणः, आ पणमूल्यादित्यष्टचत्वारिंशत्पणः, आ द्विपणमूल्यादिति पूर्वस्साहसदण्डः, आ चतुष्पणमूल्यादिति मध्यमः, आ अष्टपणमूल्यादित्युत्तमः, आ दशपणमूल्यादिति वधः। कोष्ठपण्यकुप्यायुधागारेभ्यः कुप्यभाण्डोपस्करापहारेष्वर्धमूल्येष्वेत एव दण्डाः। कोशभाण्डागाराक्षशालाभ्यश्चतुर्भागमूल्येष्वेत एव द्विगुणा दण्डाः॥

[1]चोराणामभिप्रधर्षणे चित्रो घातः । इति [2]राजपरिग्रहेषु व्याख्यातम् ॥

[राजकीयातिरिक्तपौरजानपदक्षेत्रादिषु द्रव्या-
पहर्तॄणां द्रव्यानुगुणाः दण्डाः]

बाह्येषु तु प्रच्छन्नमहनि क्षेत्रखलवेश्मापणेभ्यः कुप्यभाण्डमुपस्करं वा माषमूल्यादूर्ध्वमा पादमूल्यादित्यपहरतस्त्रिपणो दण्डः, गोमयप्रदेहेन वा प्रलिप्यावघोषणम्। आ द्विपादमूल्यादिति षट्पणः, गोमयभस्मना वा प्रलिप्यावघोषणम्। आ त्रिपादमूल्यादिति नवपणः, गोमयभस्मना वा प्रलिप्यावघोषणम्, शरावमेखलया वा। आ पणमूल्यादिति द्वादशपणः, मुण्डनं प्रव्राजनं

---

[1] स्वयमेवापहृत्य चोरहृतत्वारोपणे. [2] राजकीयप्रदेशेषु.

वा। (आ द्विपणमूल्यात्त्रिपादमूल्यादिति नवपणः ; गोमयभस्मना वा प्रलिप्यावघोषणं शरावमेखलया वा। आ पणमूल्यादिति द्वादशपणः ; मुण्डनं प्रव्राजनं वा।) आ द्विपणमूल्यादिति चतुर्विंशतिपणः, मुण्डनमिष्टकाशकलेन प्रव्राजनं वा। आ त्रिपणमूल्यादिति चत्वारिंशत्पणः मुण्डनमिष्टकाशकलेन प्रव्राजनं च। आ चतुष्पणमूल्यादिति षट्त्रिंशत्पणः। आ पञ्चपणमूल्यादिति अष्टचत्वारिंशत्पणः। आ दशपणमूल्यादिति पूर्वस्साहसदण्डः। आ विंशतिपणमूल्यादिति द्विशतः। आ त्रिंशत्पणमूल्यादिति पञ्चशतः। आ चत्वारिंशत्पणमूल्यादिति साहस्रः। आ पञ्चाशत्पणमूल्यादिति वधः।

[आरक्षिपुरुषरक्षाव्यापृतद्रव्यापहारे
कपटलेख्यादौ च दण्डाः]

प्रसह्य दिवा रात्रौ [1]वान्तर्याममेव हरतोऽर्धमूल्येष्वेत एव द्विगुणा दण्डाः। प्रसह्य दिवा रात्रौ वा सशस्त्रस्यापहरतश्चतुर्भागमूल्येष्वेत एव दण्डाः॥

कुटुम्बिकाध्यक्षमुख्यस्वामिनां कूटशासनमुद्राकर्मसु पूर्वमध्योत्तमवधा दण्डाः, यथाऽपराधं वा॥

[सम्भाविताः धर्मस्थापराधाः दण्डाश्च]

धर्मस्थश्चेद्विवदमानं पुरुषं तर्जयति, भर्त्सयत्यपसारयति, अभिग्रसते वा, पूर्वमस्मै साहसदण्डं कुर्यात्। वाक्पारुष्ये द्विगुणम्॥

पृच्छ्यं न पृच्छति, अपृच्छ्यं पृच्छति, पृष्ट्वा वा विसृजति शिक्षयति स्मारयति, पूर्वं ददाति वेति मध्यममस्मै साहसदण्डं कुर्यात्। देयं देशं न पृच्छति, अदेयं देशं पृच्छति, कार्यमदेशेनातिवाहयति, छलेनातिहरति, कालहरणेन श्रान्तमपवाहयति, मार्गापन्नं वाक्यमुत्क्रमयति ; मतिसाहाय्यं साक्षिभ्यो ददाति ; कारितानुशिष्टं कार्यं पुनरपि गृह्णाति ; उत्तममस्मै साहसदण्डं कुर्यात्॥

पुनरपराधे द्विगुणं ; स्थानाद्व्यवरोहणं च॥

---

[1] वान्तर्यामिकमहरतो ; वान्तर्याममेवापहरतो–पा.

[दुर्लेखकानां दण्डाः]

लेखकश्चेदुक्तं न लिखति अनुक्तं लिखति, दुरुक्तमुपलिखति, सूक्तमुल्लिखति, [1]अर्थोत्पत्तिं वा विकल्पयतीति, पूर्वमस्मै साहसदण्डं कुर्यात्; यथाऽपराधं वा ॥

[अदण्ड्यदण्डने दण्डाः]

धर्मस्थः प्रदेष्टा वा हैरण्यमदण्ड्यं क्षिपति, क्षेपद्विगुणमस्मै दण्डं कुर्यात्, हीनातिरिक्ताष्टगुणं वा । शारीरदण्डं क्षिपति, शारीरमेव दण्डं भजेत, निष्क्रयद्विगुणं वा । यं वा भूतमर्थं नाशयत्यभूतमर्थं करोति, तदष्टगुणं दण्डं दद्यात् ॥

[बन्धनाध्यक्षपरिशोधनं, नियमोल्लङ्घने दण्डश्च]

धर्मस्थीया[2]च्चारकान्निसारयतो बन्धनागाराच्छय्यासनभोजनोच्चारसञ्चारं रोधबन्धनेषु, त्रिपणोत्तरा दण्डाः कर्तुः कारयितुश्च ॥

चारकादभियुक्तं मुञ्चतो निष्पातयतो वा मध्यमः साहसदण्डः, अभियोगदानं च। बन्धनागारात्सर्वस्वं वधश्च । बन्धनागाराध्यक्षस्य संरुद्धकमनाख्याय चारयतश्चतुर्विंशतिपणो दण्डः, कर्म कारयतो द्विगुणः । स्थानान्यत्वं गमयतोऽन्नपानं वा रुन्धतष्षण्णवतिर्दण्डः । परिक्लेशयत उत्कोचयतो वा मध्यमस्साहसदण्डः । घ्नतस्साहस्रः ॥

परिगृहीतां दासीमाहितिकां वा [3]संरुद्धिकामधिचरतः पूर्वस्साहसदण्डः । चोरडामरिकभार्यां मध्यमः । संरुद्धिकामार्यामुत्तमः । संरुद्धस्य वा तत्रैव घातः । तदेवाध्यक्षेण गृहीतायामार्यायां विद्यात् । दास्यां पूर्वस्साहसदण्डः ॥

चारकमभित्वा निष्पातयतो मध्यमः । भित्वा वधः । बन्धनागारात्सर्वस्वं वधश्च ॥

---

[1] अर्थोनाविकल्प—पा. [2] चारकात्—संरोधागारात्. [3] बन्धनागार-संरुद्धाम्.

[निगमनम्]

एवमर्थचरान् पूर्वं राजा दण्डेन शोधयेत् ।
शोधयेयुश्च शुद्धास्ते पौरजानपदान् [1]दमैः ॥ ६६५ ॥

इति कण्टकशोधने सर्वाधिकरणरक्षणं नवमोऽध्यायः
आदितष्षडशीतिः

---

# पञ्चाशीतितमं प्रकरणम्

## एकाङ्गवधनिष्क्रयः

### दशमोऽध्यायः

[तीर्थघातादिदण्डाः]

[2]तीर्थघातग्रन्थि[3]भेदोर्ध्वकराणां प्रथमेऽपराधे [4]सन्दंशच्छेदनं चतुष्पञ्चाशत्पणो वा दण्डः । द्वितीये—छेदनं पणस्य शत्यो वा दण्डः । तृतीये- दक्षिणहस्तवधश्चतुश्शतो वा दण्डः । चतुर्थे— यथाकामी वधः ॥

[कुक्कुटादिस्तेये, तेषां विध्युल्लङ्घनेन
बन्धने च दण्डाः]

पञ्चविंशतिपणावरेषु कुक्कुटनकुलमार्जारश्वसूकरस्तेयेषु हिंसायां वा चतुष्पञ्चाशत्पणो दण्डः, नासाग्रच्छेदनं वा । चण्डालारण्यचराणामर्धदण्डाः ॥

पाशजालकूटावपातेषु[5] बद्धानां मृगपशुपक्षिव्यालमत्स्यानामादाने तच्च तावच्च दण्डः ॥

---

[1] जनैः--पा. [2] याज्ञ. 2, 274. [3] भेदेऽर्थवराणां—पा. [4] कनिष्ठिकाङ्गुष्ठयोश्छेदनम्. [5] टावपातनेषु-पा.

मृगद्रव्यवनान्मृगद्रव्यापहारे शत्यो दण्डः। बिम्बविहार-मृगपक्षिस्तेये हिंसायां वा द्विगुणो दण्डः॥

[शिल्प्यादिद्रव्यहरणे अक्रमप्रवेशादौ नौपश्वाद्यपहारे च दण्डाः]

कारुशिल्पिकुशीलवतपस्विनां क्षुद्रकद्रव्यापहारे शत्यो दण्डः, स्थूलकद्रव्यापहारे द्विशतः; कृषिद्रव्यापहारे च॥

दुर्गमकृतप्रवेशस्य प्रविशतः प्राकारच्छिद्राद्वा निक्षेपं गृहीत्वाऽपसरतः कन्धरावधो द्विशतो वा दण्डः॥

[1] चक्रयुक्तां नावं क्षुद्रपशुं वाऽपहरत एकपादवधः त्रिशतो वा दण्डः॥

[काकण्यादिवैषम्यकरणे चौर्यसहायकरणे गवाद्यपहरणे च दण्डाः]

कूटकाकण्यक्षारलाशलाकाहस्तविषमकारिणः एकहस्तवधश्चतुश्शतो वा दण्डः॥

स्तेनपारदारिकयोस्साचिव्यकर्मणि स्त्रियास्सङ्गृहीतायाश्च कर्णनासाच्छेदनं पञ्चशतो वा दण्डः; पुंसो द्विगुणः॥

[2] महापशुमेकं दासं दासीं वाऽपहरतः प्रेतभाण्डं वा विक्रीणानस्य द्विपादवधः षट्छतो वा दण्डः॥

[उत्तमावमानने अपलापादौ च दण्डाः]

[3] वर्णोत्तमानां गुरूणां च हस्तपादलङ्घने [4] राजयानवाहनाद्यारोहणे चैकहस्तपादवधः सप्तशतो वा दण्डः॥

शूद्रस्य [5] ब्राह्मणवादिनो देवद्रव्यमवस्तृणतो [6] राजद्विष्टमादिशतो [7] द्विनेत्रभेदिनश्च योगाञ्जनेनान्धत्वमष्टशतो वा दण्डः॥

[अपराधविशेषेषु दण्डाः]

[8] चोरं पारदारिकं वा मोक्षयतो [9] राजशासनमूनमतिरिक्तं वा लिखतः कन्यां दासीं वा सहिरण्यमपहरतः [10] कूटव्यवहारिणो [11] विमांसविक्रयिणश्च वामहस्तद्विपादवधो नवशतो वा दण्डः।

---

[1] धनशास्त्रादियुक्तामित्यर्थः. [2]–[7] याज्ञ. 2, 302-304. [8]–[9] याज्ञ. 2, 295 [10]–[11] याज्ञ. 2, 297.

मानुषमांसविक्रये वधः। देवपशुप्रतिमामनुष्यक्षेत्रगृहहिरण्यसुवर्णरत्नसस्यापहारिण उत्तमो दण्डः शुद्धवधो वा ॥

[ निगमनम् ]

पुरुषं चापराधं च कारणं गुरुलाघवम् ।
अनुबन्धं तदात्वं च देशकालौ समीक्ष्य च ॥ १६६ ॥
उत्तमावरमध्यत्वं प्रदेष्टा दण्डकर्मणि ।
राज्ञश्च प्रकृतीनां च कल्पयेदन्तरास्थितः[1] ॥ १६७ ॥

इति कण्टकशोधने एकाङ्गवधनिष्क्रयो दशमोऽध्यायः
आदितः सप्ताशीतिः.

---

# षडशीतितमं प्रकरणम्—शुद्धश्चित्रश्च दण्डकल्पः

## एकादशोऽध्यायः

[मरणपर्यवसायिप्रहारे दण्डाः]

कलहे घ्नतः पुरुषं चित्रो घातः। सप्तरात्रस्यान्तः मृते शुद्धवधः, पक्षस्यान्तरुत्तमः; मासस्यान्तः पञ्चशतः, समुत्थानव्ययश्च। शस्त्रेण प्रहरत उत्तमो दण्डः, मदेन हस्तवधः, मोहेन द्विशतः, वधे वधः ॥

[गर्भघातिनां प्रसह्यहिंसकानां चोराणां तत्सहायानां च दण्डाः]

[2]प्रहारेण गर्भं पातयत उत्तमो दण्डः, भैषज्येन मध्यमः, [3]परिक्लेशेन पूर्वस्साहसदण्डः ॥

---

[1] दन्तरान्वितः-पा. [2] याज्ञ. II 277. [3] दुःखकरकर्मानुष्ठापनेन.

प्रसभस्त्रीपुरुषघातकाभिसारकनिग्राहका[1]वघोषकावस्कन्दकोपवेधकान् पथिवेश्मप्रतिरोधकान् राजहस्त्यश्वरथानां हिंसकान् स्तेनान्वा शूलानारोहयेयुः ॥

यश्चैनान् दहेदपनयेद्वा स तमेव दण्डं लभेत, साहसमुत्तमं वा ॥

[2]हिंस्रस्तेनानां भक्तवासोपकरणाग्निमन्त्रदानवैयापृत्यकर्मसूत्तमो दण्डः । परिभाषणमविज्ञाने । हिंस्रस्तेनानां पुत्रदारं [3]असमन्त्रं विसृजेत्, समन्त्रमाददीत ॥

[राज्यकामनया भेदकानां दण्डाः]

राज्यकामुकमन्तःपुरप्रधर्षकमटव्यमित्रोत्साहकं दुर्गराष्ट्रदण्डकोपकं वा [4]शिरोहस्तप्रादीपिकं घातयेत् । ब्राह्मणं तमपः[5] प्रवेशयेत् ॥

[मातापितृहिंसायां दण्डाः]

मातृपितृपुत्रभ्रात्राचार्यतपस्विघातकं वाऽत्वक्छिरःप्रादीपिकं घातयेत् । तेषामाक्रोशे जिह्वाच्छेदः [6]अङ्गाभिरदने तदङ्गान्मोच्यः । यदृच्छाघाते पुंसः, पशुयूथस्तेये[7] च शुद्धवधः । दशावरं च यूथं विद्यात् ॥

[सेतुं भिन्दतां विषदातॄणां च दण्डाः]

उदकधारणं सेतुं भिन्दतस्तत्रैवाप्सु निमज्जनम् । अनुदकमुत्तमः साहसदण्डः । [8]भग्नोत्सृष्टकं मध्यमः ॥

विषदायकं पुरुषं, [9]स्त्रियं च पुरुषघ्नीं अपः प्रवेशयेद् गर्भिणीम् । गर्भिणीं [10]मासावरप्रजाताम् ॥

---

[1] अवघोषकः—हरिष्यामि हनिष्यामीत्यवघोषणकर्ता अवस्कन्दकः—द्रव्यापहारकः उपवेधकः—भित्तिरन्ध्रकरणेन चौर्यकर्ता. [2] याज्ञ. II, 276. [3] सहमन्त्रणरहितम्. [4] शिरोहस्तयोः दीपं दीपयित्येत्यर्थः. [5] तमपः. [6] नखादिना अङ्गेषु विलेखने. [7] यूथाश्वस्तेये. [8] पूर्वमेव भग्नं केनाप्यसंस्कृतम्. [9] याज्ञ. I, 278. [10] प्रसवानन्तरमेकमासेऽतीते अप्सु प्रवेशयेत् इत्यर्थः.

[1]पतिगुरुप्रजाघातिकां अग्निविषदां सन्धिच्छेदिकां वा गोभिः [2]पादयेत् ॥

[अग्निप्रयोगे जिह्वालौल्ये स्तैन्ये रति-
सामर्थ्यनाशने च दण्डाः]

विवीतक्षेत्रखलवेश्मद्रव्यहस्तिवनादीपिकमग्निना दाहयेत् ॥

राजा कोशकमन्त्रभेदकयोरनिष्टप्रवृत्तिकस्य ब्राह्मणमहानसावलेहिनश्च जिह्वामुत्पाटयेत् ॥

[3]प्रहरणावरणस्तेनं [4]अनायुधीयं इषुभिर्घातयेत् । आयुधीयस्योत्तमः ॥

[5]मेढ्रफलोपघातिनस्तदेव छेदयेत् ॥

जिह्वानासोपघाते सन्दंशवधः ॥

[निगमनम्]

एते शास्त्रेष्वनुगताः क्लेशदण्डा [6]महात्मनाम् ।
अक्लिष्टानां तु पापानां धर्म्यः [7]शुद्धवधः स्मृतः ॥ १६८ ॥

इति कण्टकशोधने शुद्धश्चित्रश्च दण्डकल्पः एकादशोऽध्यायः आदितोऽष्टाशीतिः.

---

# सप्ताशीतितमं प्रकरणम्—कन्याप्रकर्म

## द्वादशोऽध्यायः

[पुरुषविशेषवरणात्प्राक्कन्यादूषणे दण्डाः]

[8]सवर्णामप्राप्तफलां [9]कन्यां [10]प्रकुर्वतो हस्तवधश्चतुश्शतो वा दण्डः, मृतायां वधः । प्राप्तफलां प्रकुर्वतो [11] मध्यमाप्रदेशिनी-

---

[1] याज्ञ II, 279. [2] पादाघातेन मारयेत्. [3] आयुधावरणयोरपहर्तारम्. [4] अनायुधजीविनम्. [5] मेढ्रफलं च रतिसामर्थ्यमेव. [6] महात्मनां शास्त्रेष्वित्यन्वयः. [7] अक्लेशदण्डः. [8] याज्ञ. II, 288. [9] अनुद्भिन्नपुष्पाम्. [10] योनिक्षतेन दूषणं कुर्वतः. [11] ज्येष्ठातर्जन्योरङ्गुल्योः.

वधो द्विशतो वा दण्डः, पितुश्चापहीनं दद्यात् । न च [1] प्राकाम्यमकामायां लभेत । सकामायां चतुष्पञ्चाशत्पणो दण्डः, स्त्रियास्त्वर्धदण्डः ।

परशुल्कावरुद्धायां हस्तवधश्चतुश्शतो वा दण्डः, शुल्कदानं च ॥

[वरणादूर्ध्वं वृतपुरुषानागमने भोगानुज्ञा]

सप्तार्तवप्रजातां वरणादूर्ध्वमलभमानां [2] प्रकृत्य [3] प्राकामी स्यात्, न च पितुरपहीनं दद्यात् । ऋतुप्रतिरोधिभिः स्वाम्यादपक्रामति । त्रिवर्षप्रजातार्तवायास्तुल्यो गन्तुमदोषः, ततः परं अतुल्योऽप्यनलङ्कृतायाः । पितृद्रव्याऽऽदाने स्तेयं भजेत ॥

[प्रतिश्रुतयोर्वरकन्ययोर्विपर्यासकरणे दण्डाः]

परमुद्दिश्यान्यस्य विन्दतो द्विशतो दण्डः । न च प्राकाम्यमकामायां लभेत । कन्यामन्यां दर्शयित्वाऽन्यां प्रयच्छतश्शत्यो दण्डस्तुल्यायां ; हीनायां द्विगुणः ॥

[क्षताक्षतयोन्योरक्षतक्षतयोनीकरणे दण्डाः]

प्रकर्मणि अकुमार्याश्चतुष्पञ्चाशत्पणो दण्डः, शुल्कव्ययकर्मणी च प्रतिदद्यात् [4] अवस्थाय । तज्जातं पश्चात्कृता द्विगुणं दद्यात् ।

अन्यशोणितोपधाने द्विशतो दण्डः, [5] मिथ्याभिशंसिनश्च पुंसः । शुल्कव्ययकर्मणी च जीयेत । न च प्राकाम्यमकामायां लभेत । स्त्री [6] प्रकृता सकामा [7] समाना द्वादशपणं दण्डं दद्यात्, प्रकर्त्री द्विगुणं । अकामायाश्शत्यो दण्डः आत्मरागार्थम्, शुल्कदानं च । स्वयं प्रकृता राजदास्यं गच्छेत् । बहिर्ग्रामस्य प्रकृतायां मिथ्याभिशंसिने च द्विगुणो दण्डः । प्रसह्य कन्यामपहरतो द्विशतः ; ससुवर्णमुत्तमः । बहूनां कन्यापहारिणां पृथग् यथोक्ता दण्डाः ॥

गणिकादुहितरं प्रकुर्वतश्चतुष्पञ्चाशत्पणो दण्डः ; शुल्कं मातुर्भोगष्षोडशगुणः ॥

---

[1] इच्छापूर्तिम्. [2] स्वपतिमिति शेषः. [3] यथेष्टमुपभोक्ता. [4] विवाहप्रतिभुवे. [5] अक्षतयोनिमेव क्षतयोनिरिति मिथ्यावदतः. [6] क्षतयोनितां नीता. [7] तुल्यजातीया.

दासस्य दास्या वा दुहितरमदासीं प्रकुर्वतश्चतुर्विंशतिपणो दण्डः [1]शुल्काबन्ध्यदानं च। निष्क्रयानुरूपां दासीं प्रकुर्वतो द्वादशपणो दण्डः वस्त्राबन्ध्यदानं च।

[2]साचिव्यावकाशदाने कर्तृसमो दण्डः॥

[पतिप्रवाससमये व्यभिचरन्त्याः स्त्रियाः
जारस्य तत्सहायानां च दण्डाः]

प्रोषितपतिकां [3]अपचरन्तीं पतिबन्धुः [4]तत्पुरुषो वा सङ्गृह्णीयात्। सङ्गृहीता पतिमाकाङ्क्षेत[5]। पतिश्चेत् क्षमेत, विसृज्येतोभयम्[6]। अक्षमायां स्त्रियः कर्णनासाच्छेदनं, वधं जारश्च प्राप्नुयात्॥

जारं 'चोर' इत्यभिहरतः[7] पञ्चशतो दण्डः, हिरण्येन मुञ्चतः तदष्टगुणः।

[स्त्रीसङ्ग्रहणचिह्नानि]

[8]केशाकेशिकं सङ्ग्रहणं; उपलिङ्गनाद्वा शरीरोपभोगानां तज्जातेभ्यः, स्त्रीवचनाद्वा॥

[दण्डानर्हाः परस्त्रीग्रहणप्रकाराः]

परचक्राटवीहृतां [9]ओघप्रव्यूढां अरण्येषु दुर्भिक्षे वा त्यक्तां [10]प्रेतभावोत्सृष्टां वा परस्त्रियं निस्तारयित्वा यथासंभाषितं समुपभुञ्जीत। जातिविशिष्टामकामामपत्यवतीं [11]निष्क्रयेण दद्यात्॥

[तन्निगमनम्]

चोरहस्तान्नदीवेगात् दुर्भिक्षाद्देशविभ्रमात्।
निस्तारयित्वा कान्तारात् नष्टां त्यक्तां मृतेति वा॥ १६९॥

---

[1] आबन्ध्यः—आभरणम्. [2] साचिव्यम्—साहाय्यम्. अवकाशः—तदनुकूलप्रदेशः. [3] व्यभिचरन्तीम्. [4] कश्चन पतिभृत्यो वा नियम्य रक्षेत्. [5] यावदागमनं प्रतीक्षेत. [6] जारं जारिणीं च. [7] व्यभिचारगोपनार्थमिति शेषः. [8] याज्ञ. 2, 283. परस्परकेशग्रहणपूर्वकमारब्धा कामकेलिः तस्याः स्त्रियाः सङ्ग्रहणं सूचयति. [9] नदीप्रवाहनीताम्. [10] मृतत्वधिया त्यक्ताम्. [11] निस्तरणश्रमवेतनग्रहणेन तत्स्वामिने अर्पयेत्.

भुञ्जीत स्त्रियमन्येषां यथासंभाषितं नरः ।
न तु राजप्रतापेन प्रमुक्तां स्वजनेन वा ॥ १७० ॥
न चोत्तमां न चाकामां पूर्वापत्यवतीं न च ।
ईदृशीं चानुरूपेण [1]निष्क्रयेणोपवाहयेत्[2] ॥ १७१ ॥

इति कण्टकशोधने कन्याप्रकर्म द्वादशोऽध्यायः
आदित एकोननवतिः

---

# अष्टाशीतितमं प्रकरणं

## अतिचरणदण्डः

### त्रयोदशोऽध्यायः

[अभक्ष्यभक्षणे दण्डाः]

ब्राह्मणं अपेयमभक्ष्यं वा सङ्ग्रासयत उत्तमो दण्डः, क्षत्रियं मध्यमः, वैश्यं पूर्वस्साहसदण्डः, शूद्रं चतुष्पञ्चाशत्पणो दण्डः । स्वयं ग्रसितारो [3]निर्विषयाः कार्याः ।

[अप्राप्तकालेषु परगृहप्रवेशे प्राकारकुड्या
रोहणभेदनयोश्च दण्डाः]

परगृहाभिगमने दिवा पूर्वस्साहसदण्डः, रात्रौ मध्यमः । दिवा रात्रौ वा सशस्त्रस्य प्रविशत उत्तमो दण्डः । भिक्षुकवैदेहकौ [4]मत्तोन्मत्तौ बलादापदि चातिसन्निकृष्टाः प्रवृत्तप्रवेशाश्चादण्ड्याः, अन्यत्र प्रतिषेधात् ॥

स्ववेश्मनोपि चिरात्रादूर्ध्वं [5]परिवार्यमारोहतः पूर्वस्साहसदण्डः ; परवेश्मनो मध्यमः, ग्रामारामवाटभेदिनश्च ।

---

[1] येणाप-पा. [2] याज्ञ. II, 296. [3] देशभ्रष्टाः. [4] सुरासेवनेन विकृतबुद्धिः मत्तः, स्वतो भ्रान्तः उन्मत्तः इति भेदः. [5] प्राकारकुड्यादिकम्.

[मुषितानामन्यत्र नीतानां च वणिग्द्रव्याणां प्रत्यानयनव्यवस्था:]

[1] ग्रामेष्वन्तः [2] सार्थिका [3] ज्ञातसारा वसेयुः। मुषितं [4] प्रवासितं चैषां [5] अनिर्गतं रात्रौ ग्रामस्वामी दद्यात्। ग्रामान्तेषु वा मुषितं प्रवासितं विवीताध्यक्षो दद्यात्, अविवीतानां चोररज्जुकः। तथाप्यगुप्तानां सीमावरोधेन विचयं दद्युः, असीमावरोधे पञ्चग्रामी दशग्रामी वा।

[जीर्णगृहाद्यसमीकरणेन हठाद्वृक्षशाखादिच्छेदनेन च परहिंसायां दण्डा:]

दुर्बलं वेश्म, शकट[6]मनुत्तब्धमूर्धस्तम्भं, शस्त्रमनपाश्रयं अप्रतिच्छन्नं श्वभ्रं कूपं कूटावपातं वा कृत्वा हिंसायां दण्डपारुष्यं विद्यात्। वृक्षच्छेदने दम्य[7]रश्मिहरणे चतुष्पदानामदान्तसेवने वाहने [8]काष्ठलोष्टपाषाणदण्डबाणबाहुविक्षेपणेषु याने हस्तिना सङ्घट्टने च 'अपेहि' इति प्रक्रोशन् अदण्ड्यः।

[हस्त्यादिना घातने दण्डा: मुमूर्षुविषये विशेषश्च]

हस्तिना रोषितेन हतो द्रोणान्नं मद्यकुम्भं माल्यानुलेपनं दन्तप्रमार्जनं च पटं दद्यात्। अश्वमेधावभृथस्नानेन तुल्यो हस्तिना वध इति [9]पादप्रक्षालनम्। उदासीनवधे यातुरुत्तमो दण्डः॥

[10]शृङ्गिणा दंष्ट्रिणा वा हिंस्यमानममोक्षयतः स्वामिनः पूर्वः साहसदण्डः, प्रतिक्रुष्टस्य द्विगुणः॥

---

[1] ग्रामेन्यतः-पा. [2] वणिजः. [3] ग्राममुख्यसमीपनिवेदितस्वकीयद्रव्यजाताः. [4] अन्यत्र नीतम्. [5] ग्रामादबहिर्गतं चेत्. [6] अनुत्तब्धं-अनुद्धृतम्. [7] रश्मिः-नासारज्जुः. [8] याज्ञ. 2. 298. [9] हस्तिनः अवश्यकर्तव्यः पूजाविशेषोऽयमित्यर्थः. [10] याज्ञ. 2. 300.

[पशूनां दुरुपयोगे, शकटादिभिः प्राणिहिंसा-
संभवे मारणादौ च दण्डाः]

शृङ्गिदंष्ट्रिभ्यामन्योन्यं घातयतस्तच्च तावच्च दण्डः।

देवपशुमृषभमुक्षाणं[1] गोकुमारीं वा वाहयतः पञ्चशतो दण्डः, प्रवासयत उत्तमः॥ लोमदोहवाहनप्रजननोपकारिणां क्षुद्रपशूनामादाने तच्च तावच्च दण्डः, प्रवासने च; अन्यत्र देवपितृकार्येभ्यः।

[2] छिन्ननस्यं भग्नयुगं तिर्यक्प्रतिमुखागतं [3] प्रत्यासरद्वा चक्रयुक्तं यानपशुमनुष्यसंबाधे वा हिंसायामदण्ड्यः। अन्यथा यथोक्तं मानुषप्राणिहिंसायां दण्डमभ्यावहेत् [4] अमानुषप्राणिवधे प्राणिदानं च। बाले यातरि यानस्थः स्वामी दण्ड्यः; अस्वामिनि यानस्थः प्राप्तव्यवहारो वा याता। बालाधिष्ठितमपुरुषं वा यानं राजा हरेत्॥

[वशीकरणविशेषाभ्यनुज्ञा, (विस्तरेण)
अगम्यागमने दण्डविशेषाश्च]

कृत्याभिचाराभ्यां यत् परमापादयेत्, तदापादयितव्यः[4]।

[5] कामं भार्यायामनिच्छन्त्यां, कन्यायां वा दारार्थिनां, भर्तरि भार्याया वा [6] संवननकरणम्। अन्यथा हिंसायां मध्यमस्साहसदण्डः।

मातापित्रोर्भगिनीं [7] मातुलानीमाचार्याणीं स्नुषां दुहितरं भगिनीं वाऽधि(भि)चरतः त्रिलिङ्गच्छेदनं वधश्च। सकामा तदेव लभेत, दासपरिचारकाहितकभुक्ता च।

ब्राह्मण्यामगुप्तायां क्षत्रियस्योत्तमः, सर्वस्वं वैश्यस्य; शूद्रः कटाग्निना दह्येत। सर्वत्र राजभार्यागमने [8]कुम्भीपाकः॥

---

[1] देवगोबृन्दसेक्ता पुङ्गवः उक्षा, तदितरसेक्ता वृषभ इति भेदः. [2] याज्ञ. 2, 299. [3] सहसा पश्चादपसरत्. [4] मारणे मारणम्, स्तम्भने स्तम्भनमित्यादि. [5] कामं सम्मतमित्यर्थः. [6] संवननं—वशीकरणं. [7] मातुलभार्याम्. [8] तप्तभ्राष्ट्रभर्जनम.

श्वपाकीगमने कृतकबन्धाङ्कः परविषयं गच्छेत्, श्वपाकत्वं वा शूद्रः श्वपाकस्याऽऽर्यागमने वधः, स्त्रियाः कर्णनासाच्छेदनम् ॥

प्रव्रजितागमने चतुर्विंशतिपणो दण्डः । सकामा तदेव लभेत ॥

रूपजीवायाः प्रसह्योपभोगे द्वादशपणो दण्डः ।

बहूनामेकामधिचरतां पृथक् चतुर्विंशतिपणो दण्डः ॥

[अयोनौ तिर्यग्योनौ च गन्तॄणां दण्डाः]

स्त्रियमयोनौ गच्छतः पूर्वः साहसदण्डः, पुरुषमधिमेहतश्च ॥

मैथुने द्वादशपणः तिर्यग्योनिष्वनात्मनः ।
दैवतप्रतिमानां च गमने द्विगुणः स्मृतः ॥ १७२ ॥

[दण्डानर्हदण्डने राज्ञः प्रायश्चित्त-
विधानम्]

अदण्ड्यदण्डने राज्ञो दण्डस्त्रिंशद्गुणोऽम्भसि ।
वरुणाय प्रदातव्यो ब्राह्मणेभ्यस्ततः परम् ॥ १७३ ॥
तेन तत् पूयते[1] पापं राज्ञो दण्डापचारजम् ।
शास्ता हि वरुणो राजा मिथ्याव्याचरतां नृषु ॥ १७४ ॥

इति कण्टकशोधने अतिचरणदण्डः त्रयोदशोऽध्यायः
आदितः नवतिः

एतावता कौटलीयस्यार्थशास्त्रस्य कण्टकशोधनं
चतुर्थमधिकरणं समाप्तम्.

---

[1] शोध्यते इत्यर्थः. क्वचित् 'तेन तल्लूयते' इति पाठः.

अथ कौटलीये अर्थशास्त्रे

# योगवृत्तं नाम

## पञ्चममधिकरणम्

---

अस्येयं प्रकरणानुक्रमणिका



आहत्य ७ प्रकरणानि, ६ अध्यायाः, १६ कारिकाः.

## एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं सङ्ग्रहः

---

### 89. दाण्डकर्मिकम् (पु. 250)

राज्यभेदकेषूपजापापसर्पयोरावश्यकता.

राज्यघातिषूपांशुदण्डप्रयोगाः दश.

अभिचारशीलदूष्यजननिग्रहक्रमाः.

एकेनैवयत्नेन दूष्यपक्षद्वयस्यापि निग्रहप्रकाराः षट्.

हतदूष्यसंबन्धिनां पुत्राणां वृत्तिकल्पनविधिः.

### 90. कोशाभिसंहरणम् (पु. 254)

धनधान्यसङ्ग्रहार्थं याच्या अंशाः अधिकारिणश्च.

अयाच्या अंशाः अनुग्राह्या अधिकारिणश्च.

कर्षकेभ्यः क्रयविक्रयादिव्यवहारिभ्यः पशुपक्ष्यादिपोषकेभ्यश्च तत्तद्वस्तूनां सङ्ग्रहक्रमः.

याचनापक्षे तदभावपक्षे च धनधान्यसङ्ग्रहप्रकाराः.

दूष्यजनानां निग्रहार्थं तद्ग्रहणोपायाः.

सर्वेषामेषां प्रयोगाणां विषयनियमः.

### 91 भृत्यभरणीयम् (पु. 258)

धर्मार्थाविरुद्धेन धनेन भृत्यवर्गस्थापनावश्यकता.

स्थापनीयभृत्यवर्गसङ्ख्याः, तदर्थं विनियोज्या धनभागाश्च.

अध्यक्षादिनियोजनेन भृत्यदेयभक्तवेतनव्यवस्थाकरणविधिः.

अनुग्राह्याः भृत्यसम्बन्धिनः इतरे च.

राजपण्यविक्रय–दत्तवेतनप्रत्यापत्त्योरनुकूलाः कर्तव्यव्यवस्थाः.

आयुधयोधिषुसदसद्भावपरीक्षाक्रमः.

### 92. अनुजीविवृत्तम् (पु. 260)

भृत्यैराश्रयणदशायां राज्ञि परिशीलनीया गुणाः.

आश्रयणानुपदमेव अवश्यकर्तव्याः वाग्व्यवहाराः.

अत्यन्तवर्जनीयाः दुर्व्यवहाराः.

राजसेविभिः परिपालनीया नियमाः.

उग्रात् राजसेवनात् स्वरक्षणविधिः.

### 93. समयाचारिकम् (पु. 262)

धनाधिकारिभिः राजसेविभिः परिपालनीया नियमाः, आश्रयणीया वृत्तयः ज्ञेया अंशाश्च.

राज्ञः सन्तोषासन्तोषचिह्नानि.

तत्तन्मानवतिर्यक्सम्बन्धिनां च वृत्तिव्यवहारादीनां पर्यालोचनावश्यकता.

स्वस्वामिनोरपराधपरिशीलनेन सम्भावितापराधमार्जनादिविधिः.

### 94-95. राज्यप्रतिसन्धानं एकैश्वर्यं च (पु. 264)

राज्ञः अस्वस्थतादशायां अमात्यैः स्वराष्ट्रे परराष्ट्रे च परिकल्पनीयाः व्यवस्थाः.

राज्ञि मृते, युवराजे चाविद्यमाने विद्यमाने वा, स्वराष्ट्रे परराष्ट्रे च कर्तव्याः व्यवस्थाः.

राज्ञः परभूमौ मरणे राज्यप्रतिसन्धानक्रमः.

आत्मगुणसम्पन्नराजकुमारसत्त्वे तस्यैव राज्यार्हता, अत्र भारद्वाजमतनिरासश्च.

राज्यार्हात्मगुणसम्पन्नराजकुमाराभावे कर्तव्या अंशाः.

अभिषिक्तेन स्वयौवनावस्थायां स्वनिवृत्त्यनुवृत्तिपरिशीलनावश्यकता, कर्तव्योऽशश्च.

# अथ योगवृत्तं नाम पञ्चममधिकरणम्

---

## एकोननवतितमं प्रकरणम्
## दाण्डकर्मिकम्

### प्रथमोऽध्यायः.

[राज्यभेदकेषूपजापापसर्पयोरावश्यकता]

दुर्गराष्ट्रयोः कण्टकशोधनमुक्तम् ; राजराज्ययोर्वक्ष्यामः ।

राजान[1]मवगृह्योपजीविनः शत्रुसाधारणा वा ये मुख्यास्तेषु गूढपुरुषप्रणिधिः कृत्यपक्षोपग्रहो वा सिद्धिः—यथोक्तं पुरस्तादुपजापोऽपसर्पो वा, यथा च पारग्रामिके वक्ष्यामः ॥

[राज्यघातिषूपांशुदण्डप्रयोगाः दशविधाः]

राज्योपघातिनस्तु वल्लभास्संहता वा ये मुख्याः प्रकाशमशक्याः प्रतिषेद्धुं दूष्याः, तेषु धर्मरुचिरुपांशुदण्डं प्रयुञ्जीत ।

(१) दूष्य[2]महामात्रभ्रातरं सत्कृतं सत्री प्रोत्साह्य राजानं दर्शयेत् । तं राजा [3]दूष्यद्रव्योपभोगातिसर्गेण दूष्ये विक्रमयेत् । शस्त्रेण रसेन वा विक्रान्तं तत्रैव घातयेत्, 'भ्रातृघातकोऽयम्' इति । तेन पारशवः परिचारिकापुत्रश्च व्याख्यातौ ।

(२) [4]दूष्यमहामात्रं वा सत्रिप्रोत्साहितो भ्राता दायं याचेत । तं दूष्यगृहप्रतिद्वारि रात्रावुपशयानं अन्यत्र वा वसन्तं [5]तीक्ष्णो हत्वा ब्रूयात्—'हतोऽयं दायकामुकः' इति । ततो हतपक्षं परिगृह्येतरं निगृह्णीयात् ॥

(३) दूष्यसमीपस्था वा सत्रिणो भ्रातरं दायं याचमानं घातेन परिभर्त्सयेयुः । तं रात्राविति--समानम् ॥

---

[1] अवगृह्य=अधःकृत्य. [2] महामात्रः-हस्त्यारोहाध्यक्षः. [3] दूष्यनिग्रहानुकूलशस्त्रादिदानेन. [4] दूष्यं महा—पा. [5] हिंसाशीलो गूढचारः तीक्ष्णः.

(४) दूष्यमहामात्रयोर्वा यः पुत्रः पितुः, पिता वा पुत्रस्य दारानधिचरति, भ्राता वा भ्रातुः, तयोः कापटिकमुखः कलहः पूर्वेण व्याख्यातः ॥

(५) दूष्यमहामात्रपुत्रमात्मसंभावितं वा सत्री—'राजपुत्रस्त्वं शत्रुभयादिह न्यस्तोऽसि' [1]इत्युपजपेत्। प्रतिपन्नं राजा रहसि पूजयेत्—'प्राप्तयौवराज्यकालं त्वां महामात्रभयान्नाभिषिञ्चामि' इति। तं सत्री महामात्रवधे योजयेत्। विक्रान्तं तत्रैव घातयेत्—'पितृघातकोऽयं' इति ॥

(६) भिक्षुकी वा दूष्यभार्यां सांवननिकीभिरोषधीभिः [2]संवास्य रसेनातिसंदध्यात्[3]। [4]इत्याप्यप्रयोगः ॥

(७) दूष्यमहामात्रमटवीं परग्रामं वा हन्तुं, कान्तारव्यवहिते वा देशे राष्ट्रपालमन्तपालं वा स्थापयितुं, नागरस्थानं वा कुपितमवग्रहीतुं, [5]सार्थातिवाह्यं प्रत्यन्ते वा [6]सप्रत्यादेयमादातुं फल्गु बलं तीक्ष्णयुक्तं प्रेषयेत्। रात्रौ दिवा वा युद्धे प्रवृत्ते तीक्ष्णाः प्रतिरोधकव्यञ्जना वा हन्युः—'अभियोगे हतः' इति ॥

(८) यात्राविहारगतो वा दूष्यमहामात्रान् दर्शनायाह्वयेत्। ते गूढशस्त्रैस्तीक्ष्णैस्सह प्रविष्टा मध्यमकक्ष्यामात्मविचयमन्तःप्रवेशनार्थं दद्युः। ततो दौवारिकाभिगृहीतास्तीक्ष्णाः '[7]दूष्यप्रयुक्ताः स्मः' इति ब्रूयुः। ते तदभिविख्याप्य दूष्यान् हन्युः। तीक्ष्णस्थाने चान्ये वध्याः ॥

(९) बहिर्विहारगतो वा दूष्यान् आसन्नावासान् पूजयेत्। तेषां देवीव्यञ्जना वा दुःस्त्री रात्रावावासेषु गृह्येतेति—समानं पूर्वेण ॥

(१०) दूष्यमहामात्रं वा 'सूदो भक्षकरो वा ते शोभनः' इति स्तवेन भक्षभोज्यं याचेत, बहिर्वा क्वचिदध्वगतः पानीयम्।

---

[1] इत्युपचरेत्–ग. [2] आत्मपरिचयं कारयित्वा. [3] वञ्चयेत्. [4] एवं क्रियमाणं अतिसन्धानं आप्यप्रयोग इत्युच्यते इत्यर्थः. [5] सार्थातिवाहनयोग्यं स्थलम्. [6] परेण पूर्वं गृहीतं पुनरात्मना प्रतिग्रहीतव्यं स्थलं प्रत्यादेयम्, तत्सहितम्. [7] नृपतिवधाय महामात्रेण प्रेरिता वयं स्मः इति दौवारिकप्रश्नस्योत्तरं दद्युरित्यर्थः.

तदुभयं रसेन योजयित्वा प्रतिस्वादने तावेवोपयोजयेत्। तदभिविख्याप्य 'रसदौ' इति घातयेत् ॥

[अभिचारशीलानां दूष्याणां
निग्रहक्रमः त्रिविधः]

(१) अभिचारशीलं वा सिद्धव्यञ्जनो 'गोधाकूर्मकर्कटकूटानां लक्षण्यानामन्यतमप्राशनेन[1] मनोरथानवाप्स्यसि' इति ग्राहयेत्। प्रतिपन्नं कर्मणि रसेन लोहमुसलैर्वा घातयेत्-'[2] कर्मव्यापदा हतः' इति ॥

(२) चिकित्सकव्यञ्जनो वा दौरात्मिकमसाध्यं वा व्याधिं दूष्यस्य स्थापयित्वा भैषज्याहारयोगेषु रसेनातिसन्दध्यात् ॥

(३) सूदारालिकव्यञ्जना वा प्रणिहिता दूष्यं रसेनातिसन्दध्युः —[3] इत्युपनिषत्प्रतिषेधः ॥

[एकेनैव यत्नेन दूष्यपक्षद्वय-
निग्रहप्रकाराः षट्]

उभयदूष्यप्रतिषेधस्तु—

(१) यत्र दूष्यः प्रतिषेद्धव्यस्तत्र [4]दूष्यमेव [5]फल्गुबलतीक्ष्णयुक्तं प्रेषयेत्—'गच्छामुष्मिन् दुर्गे राष्ट्रे वा सैन्यमुत्थापय हिरण्यं वा, वल्लभाद्वा हिरण्यमाहारय, वल्लभकन्यां वा प्रसह्यानय, दुर्गसेतुवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मणामन्यतमं वा कारय, राष्ट्रपाल्यमन्तपाल्यं वा। यश्च त्वा प्रतिषेधयेत् न वा ते साहाय्यं दद्यात्, स बन्धव्यः स्यात्' इति। तथैव इतरेषां प्रेषयेत् 'अमुष्याविनयः प्रतिषेद्धव्यः' इति। तमेतेषु कलहस्थानेषु कर्मप्रतिघातेषु वा विवदमानं तीक्ष्णाश्शस्त्रं पातयित्वा प्रच्छन्नं हन्युः। तेन दोषेणेतरे नियन्तव्याः ॥

(२) पुराणां ग्रामाणां कुलानां वा दूष्याणां सीमाक्षेत्रखलवेश्ममर्यादासु द्रव्योपकरणसस्यवाहनहिंसासु प्रेक्षाकृत्योत्सवेषु

---

[1] प्राशनं—श्मशानाग्निहुतावशिष्टभक्षणम्. प्रकाशनेन—क. [2] कर्मवैगुण्येन. [3] एवंरूपः उपनिषदुक्तः दूष्यवधोपायः इत्यर्थः. [4] अन्यं दूष्यमेवेत्यर्थः. [5] फल्गुबलं—अल्पं सैन्यम्.

वा समुत्पन्ने कलहे तीक्ष्णैरुत्पादिते वा तीक्ष्णाश्शस्त्रं पातयित्वा ब्रूयुः 'एवं क्रियन्ते येऽमुना कलहायन्ते' इति। तेन दोषेणेतरे नियन्तव्याः ॥

(३) येषां वा दूष्याणां जातमूलाः कलहाः तेषां क्षेत्रखलवेश्मान्यादीपयित्वा, बन्धुसम्बन्धिषु वाहनेषु वा तीक्ष्णाः शस्त्रं पातयित्वा तथैव ब्रूयुः—'अमुना प्रयुक्ताः स्मः' इति। तेन दोषेणेतरे नियन्तव्याः ॥

(४) दुर्गराष्ट्रदूष्यान् वा सत्रिणः परस्परस्यावेशनिकान् कारयेयुः; तत्र रसदा रसं दद्युः। तेन दोषेणेतरे नियन्तव्याः ॥

(५) भिक्षुकी वा 'दूष्यराष्ट्रमुख्यं [1] दूष्यराष्ट्रमुख्यस्य भार्या स्नुषा दुहिता वा कामयते' इत्युपजपेत्। प्रतिपन्नस्याभरणमादाय स्वामिने दर्शयेत्—'असौ ते मुख्यो यौवानोत्सिक्तो भार्यां स्नुषां दुहितरं वाऽभिमन्यते' इति। तयोः कलहो रात्रौ—इति समानम् ॥

(६) दूष्यदण्डोपनतेषु तु युवराजः सेनापतिर्वा किञ्चिदपकृत्यापक्रान्तो विक्रमेत। ततो राजदूष्यदण्डोपनतानेव प्रेषयेत् फल्गुबलतीक्ष्णयुक्तान्—इति समानास्सर्व एव योगाः ॥

[हतदूष्यसम्बन्धिनां पुत्राणां
वृत्तिकल्पनविधिः]

तेषां च पुत्रेषु [2]अनुक्षिपत्सु यो निर्विकारः स पितृदायं लभेत। एवमस्य पुत्रपौत्रान् अनुवर्तते राज्यं अपास्तपुरुषदोषमिति ॥

[निगमनम्]

स्वपक्षे परपक्षे वा तूष्णींदण्डं प्रयोजयेत्।
आयत्यां च तदात्वे च क्षमावानविशङ्कितः ॥ १७५ ॥

इति योगवृत्ते दण्डकर्मिकं प्रथमोऽध्यायः
आदित एकनवतिः.

———

[1] अन्यस्येति शेषः. [2] निन्दत्सु.

# नवतितमं प्रकरणम्—कोशाभिसंहरणम्.

## द्वितीयोऽध्यायः

[धनधान्यसङ्ग्रहावश्यकता, तदर्थं-
याच्याः अयच्याश्चांशाः]

कोशमकोशः [1]प्रत्युत्पन्नार्थकृच्छ्रः सङ्गृह्णीयात्। जनपदं महान्तमल्पप्रमाणं वा देवमातृकं प्रभूतधान्यं धान्यस्यांशं तृतीयं चतुर्थं वा याचेत यथासारं मध्यमवरं वा। दुर्गसेतुकर्मवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्मोपकारिणं प्रत्यन्तमल्पप्रमाणं वा न याचेत।

[कर्षकश्रोत्रियाणामनुग्रहः चोराणां दण्डश्च]

धान्यपशुहिरण्यादि [2]निविशमानाय दद्यात्। चतुर्थमंशं धान्यानां [3]बीजभक्तशुद्धं च हिरण्येन क्रीणीयात्।

अरण्यजातं श्रोत्रियस्वं च परिहरेत्। तदप्यनुग्रहेण [4]क्रीणीयात्। तस्याकरणे[5] वा समाहर्तृपुरुषाः ग्रीष्मे कर्षकाणामुद्वापं कारयेयुः। प्रमादावस्कन्नस्यात्ययं द्विगुणमुदाहरन्तो बीजकाले [6]बीजलेख्यं कुर्युः। निष्पन्ने हरितपक्वादानं वारयेयुः—अन्यत्र [7]शाककटभङ्गमुष्टिभ्यां देवपितृपूजादानार्थं गवार्थं वा। भिक्षुकग्रामभृतकार्थं च [8]राशिमूलं [9]परिहरेयुः॥

स्वसस्यापहारिणः प्रतिपातोऽष्टगुणः, परसस्यापहारिणः पञ्चाशद्गुणः सीतात्ययः स्ववर्गस्य, बाह्यस्य तु वधः॥

[कर्षकेभ्यो धान्यादिसङ्ग्रहक्रमः]

चतुर्थमंशं धान्यानां षष्ठं वन्यानां, तूललाक्षाक्षौमवल्ककार्पासरौमकौशेयकौषधगन्धपुष्पफलशाकपण्यानां काष्ठवेणुमांसवल्लू-

---

[1] अतर्कितोपनतेन अर्थसहायमात्रपरिहार्येण क्लेशेन युक्तः. [2] नवं कुलं स्थापयते [3] बीजार्थं भोजनार्थं चापेक्षितमंशं परित्यज्यावशिष्टभागम्. [4] अनुग्रहः=बीजभक्तापेक्षितांशत्यागः. [5] श्रोत्रियेण तेन कृष्यकरणे. [6] बीजसम्बद्धं लेख्यम्. [7] शाकमुष्टिः=हरितमुष्टिः, कटभङ्गमुष्टिः=हस्तच्छिन्नधान्यमुष्टिः. [8] राशितलभागगतं धूलिमिश्रं धान्यं. [9] प्रकल्पयेयुः.

राणां च गृह्णीयुः, दन्ताजिनस्यार्धम्। अनिसृष्टं विक्रीणानस्य पूर्वस्साहसदण्डः। इति कर्षकेषु [1]प्रणयः॥

[क्रयविक्रयादिव्यवहारिभ्यः सुवर्णादिसङ्ग्रहक्रमः]

सुवर्णरजतवज्रमणिमुक्ताप्रवाळाश्वहस्तिपण्याः पञ्चाशत्कराः, सूत्रवस्त्रताम्रवृत्तकंसगन्धभैषज्यसीधुपण्याश्चत्वारिंशत्कराः, धान्यरसलोहपण्याः शकटव्यवहारिणश्च त्रिंशत्कराः, काचव्यवहारिणो महाकारवश्च विंशतिकराः, क्षुद्रकारवो [2]बन्धकीपोषकाश्च दशकराः, काष्ठवेणुपाषाणमृद्भाण्डपक्वान्नहरितपण्याः पञ्चकराः। कुशीलवा रूपाजीवाश्च वेतनार्धं दद्युः। हिरण्यकरं अकर्मण्यानाहारयेयुः[3]। न चैषां कञ्चिदपराधं परिहरेयुः। ते ह्यपरिगृहीतमभिनीय विक्रिणीरन्। इति व्यवहारिषु प्रणयः॥

[तिर्यग्जातिपोषकेभ्यः प्राणिसङ्ग्रहक्रमः]

[4]कुक्कुटसूकरमर्धं दद्यात्, क्षुद्रपशवष्षड्भागम्, गोमहिषाश्वतरखरोष्ट्राश्च दशभागम्। बन्धकीपोषका राजप्रेष्याभिः परमरूपयौवनाभिः कोशं संहरेयुः। इति योनिपोषकेषु प्रणयः॥

[एवं याचनया सङ्ग्रहपक्षे नियमः]

[5]सकृदेव, न द्विः प्रयोज्यः।

[याचनाऽकरणपक्षे धनधान्यसङ्ग्रहप्रकाराः नव]

(१) तस्याकरणे वा समाहर्ता कार्यमपदिश्य पौरजानपदान् भिक्षेत। योगपुरुषाश्चात्र पूर्वमतिमात्रं दद्युः। एतेन प्रदेशेन राजा पौरजानपदान् भिक्षेत। कापटिकाश्चैनानल्पं प्रयच्छतः कुत्सयेयुः। सारतो वा हिरण्यमाढ्यान् याचेत। यथोपकारं वा स्ववशा वा यदुपहरेयुः स्थानच्छत्रवेष्टनविभूषाश्चैषां हिरण्येन प्रयच्छेत्।

---

[1] प्रणयः=अनुनयमूलकः धान्यादि प्रार्थनाक्रमः. एवमग्रेऽपि. [2] वर्धकिपोषकाश्च–पा. [3] दापयेयुः. [4] कुक्कुटानां सूकराणां च पोषका इत्यर्थः. एवमुत्तरत्रापि. [5] एवमुक्तः करप्रणय इति शेषः.

पाषण्डसङ्घद्रव्यश्रोत्रियभोग्यं देवद्रव्यं वा कृत्यकराः प्रेतस्य दग्धगृहस्य वा हस्ते न्यस्तमित्युपहरेयुः[1] ॥

(२) देवताध्यक्षो दुर्गराष्ट्रदेवतानां यथास्वमेकस्थं कोशं कुर्यात्, तथैव चाहरेत्[2]। दैवतचैत्यं सिद्धपुण्यस्थानमौपपादिकं वा रात्रावुत्थाप्य यात्रासमाजाभ्यामाजीवेत्। चैत्योपवनवृक्षेण वा देवताभिगमनमनार्तवपुष्पफलयुक्तेन ख्यापयेत्। मनुष्यकरं वा वृक्षे रक्षोभयं प्ररूपयित्वा सिद्धव्यञ्जनाः पौरजानपदानां हिरण्येन प्रतिकुर्युः। सुरङ्गायुक्ते वा कूपे नागमनियतशिरस्कं हिरण्योपहारेण दर्शयेत्। नागप्रतिमायामन्तश्छिद्रायां चैत्यच्छिद्रे वल्मीकच्छिद्रे वा सर्पदर्शनमाहारेण प्रतिबद्धसंज्ञं कृत्वा श्रद्दधानाना[3]-दर्शयेत्। अश्रद्दधानानामाचमनप्रोक्षणेषु रसमुपचार्य देवताभिशापं ब्रूयात्, अभित्यक्तं वा दंशयित्वा योगदर्शनप्रतीकारेण वा कोशाभिसंहरणं कुर्यात् ॥

(३) वैदेहकव्यञ्जनो वा प्रभूतपण्यान्तेवासी व्यवहरेत। स यदा पण्यमूल्ये निक्षेपप्रयोगैरुपचितस्स्यात्तदैनं रात्रौ [4]मोषयेत्॥ एतेन रूपदर्शकः सुवर्णकारश्च व्याख्यातौ ॥

(४) वैदेहकव्यञ्जनो वा प्रख्यातव्यवहारः प्रवहणनिमित्तं याचितकमवक्रीतकं वा रूप्यसुवर्णभाण्डमनेकं गृह्णीयात्। समाजे वा सर्वपण्यसन्दोहेन प्रभूतं हिरण्यसुवर्णमृणं गृह्णीयात्, प्रतिभाण्डमूल्यं च। तदुभयं रात्रौ मोषयेत् ॥

(५) साध्वीव्यञ्जनाभिः स्त्रीभिर्दूष्यानुन्मादयित्वा तासामेव वेश्मस्वभिगृह्य सर्वस्वान्याहरेयुः ॥

(६) दूष्यकुल्यानां वा विवादे प्रत्युत्पन्ने रसदाः प्रणिहिताः रसं दद्युः। तेन दोषेणेतरे [5]पर्यादातव्याः ॥

(७) दूष्यमभित्यक्तो वा श्रद्धेयापदेशं पण्यं हिरण्यनिक्षेपमृणप्रयोगं दायं वा याचेत। दासशब्देन वा दूष्यमालम्बेत,

---

[1] महता प्रयासेनोपलभ्य राज्ञे अर्पयेयुः. [2] चावहरेत्–पा. [3] नानां दर्श–पा. [4] तदीयं धनमपहरेत्. [5] सर्वस्वं हारयितव्याः.

भार्यामस्य स्नुषां दुहितरं वा दासीशब्देन भार्याशब्देन वा। तं दूष्यगृहप्रतिद्वारि रात्रावुपशयानमन्यत्र वा वसन्तं तीक्ष्णो हत्वा ब्रूयात्—'हतोऽयमित्थं कामुकः' इति। तेन दोषेणेतरे पर्यादातव्याः॥

(८) सिद्धव्यञ्जनो वा दूष्यं [1]जम्भकविद्याभिः प्रलोभयित्वा ब्रूयात्—'अक्षयं हिरण्यं राजद्वारिकं स्त्रीहृदयमरिव्याधिकमायुष्यं पुत्रीयं वा कर्म जानामि' इति। प्रतिपन्नं चैत्यस्थाने रात्रौ प्रभूतसुरामांसगन्धमुपहारं कारयेत्, एकरूपं चात्र हिरण्यं पूर्वं निखातम्। प्रेताङ्गं प्रेतशिशुर्वा यत्र निहितस्स्यात् ततो हिरण्यमस्य दर्शयेत्, अत्यल्पमिति च ब्रूयात्। 'प्रभूतहिरण्यहेतोः पुनरुपहारः कर्तव्यः इति स्वयमेवैतेन हिरण्येन श्वोभूते प्रभूतमौपहारिकं क्रीणीहि' इति। तेन हिरण्येनौपहारिकक्रये गृह्येत॥

(९) मातृव्यञ्जनया वा 'पुत्रो मे त्वया हत' इत्यवरूपितः स्यात्। सांसिद्धमेवास्य रात्रियागे वनयागे वनक्रीडायां वा प्रवृत्तायां तीक्ष्णा विशस्याभित्यक्तमतिनयेयुः॥

[दूष्यनिग्रहार्थं तद्ग्रहणोपायाः चत्वारः]

(१) दूष्यस्य वा भृतकव्यञ्जनो वेतनहिरण्ये कूटरूपं प्रक्षिप्य प्ररूपयेत्॥

(२-३) कर्मकारव्यञ्जनो वा गृहे कर्म कुर्वाणः स्तेनकूटरूपकारकोपकरणम(मु)पनिदध्यात्; चिकित्सकव्यञ्जनो वा [2]गदमगदापदेशेन॥

(४) प्रत्यासन्नो वा दूष्यस्य सत्री प्रणिहितमभिषेकभाण्डममित्रशासनं च कापटिकमुखेन आचक्षीत, कारणं च ब्रूयात्॥

[एषां प्रयोगाणां विषयनियमः निगमनं च]

एवं दूष्येष्वधार्मिकेषु च वर्तेत, नेतरेषु।
पक्वं पक्वमिवारामात् फलं राज्यादवाप्नुयात्।
आत्मच्छेदभयादामं वर्जयेत् कोपकारकम्॥ १७६॥

इति योगवृत्ते कोशाभिसंहरणं द्वितीयोऽध्यायः आदितो द्विनवतिः.

---

[1] इन्द्रजालविद्याभिः. [2] गरमगराप-पा.

# एकनवतितमं प्रकरणम्

## भृत्यभरणीयम्.

### तृतीयोऽध्यायः

[धर्मार्थाविरुद्धेन धनेन भृत्यवर्ग-
स्थापनावश्यकता]

दुर्गजनपदशक्त्या भृत्यकर्म [1]समुदयपादेन स्थापयेत् । कार्यसाधनसहेन वा भृत्यलाभेन शरीरमवेक्षेत । न धर्मार्थौ पीडयेत् ॥

[स्थापनीयानां भृत्यवर्गाणां सङ्ख्याः तदर्थ-
विनियोज्याः धनभागाश्च]

ऋत्विगाचार्यमन्त्रिपुरोहितसेनापतियुवराजराजमातृराजमहिष्यः अष्टचत्वारिंशत्साहस्राः । एतावता भरणे नानास्वाद्यत्वमकोपकं चैषां भवति ॥

दौवारिकान्तर्वंशिकप्रशास्तृसमाहर्तृसन्निधातारः चतुर्विंशतिसाहस्राः । एतावता कर्मण्या भवन्ति ॥

कुमारकुमारमातृनायकपौरव्यावहारिककार्मान्तिकमन्त्रिपरिषद्राष्ट्रान्तपालाश्च द्वादशसाहस्राः । स्वामिपरिबन्धबलसहाया ह्येतावता भवन्ति ॥

श्रेणीमुख्या हस्त्यश्वरथमुख्याः प्रदेष्टारश्च अष्टसाहस्राः । स्ववर्गानुकर्षिणो ह्येतावता भवन्ति ॥

पत्त्यश्वरथहस्त्यध्यक्षाः द्रव्यहस्तिवनपालाश्च चतुस्साहस्राः ।

रथिकानीकस्थचिकित्सकाश्वदमकवर्धकयो योनिपोषकाश्च द्विसाहस्राः ॥

कार्तान्तिकनैमित्तिकमौहूर्तिकपौराणिकसूतमागधाः पुरोहितपुरुषास्सर्वाध्यक्षाश्च साहस्राः ॥

---

[1] समुदयः=दुर्गजनपदाद्युत्थितः धनसमुदायः, तस्य पादेन=तुरीयांशेन.

शिल्पवन्तः पादाताः सङ्ख्यायकलेखकादिवर्गः पञ्चशताः। कुशीलवास्त्वर्धतृतीयशताः। द्विगुणवेतनाश्चैषां तूर्यकराः। कारुशिल्पिनो विंशतिशतिकाः॥

चतुष्पदद्विपदपरिचारकौपारिकर्मिकौपस्थायिकपालकविष्टिबन्धकाः षष्टिवेतनाः॥

आर्ययुक्तारोहकमाणवकशैलखनकाः सर्वोपस्थायिन आचार्या विद्यावन्तश्च पूजावेतनानि यथार्हं लभेरन्-पञ्चशतावरं सहस्रपरम्॥

दशपणिको योजने दूतो मध्यमः; दशोत्तरे द्विगुणवेतन आ योजनशतादिति॥

समानविद्येभ्यस्त्रिगुणवेतनो राजा राजसूयादिषु क्रतुषु, राज्ञस्सारथिः साहस्रः॥

कापटिकोदास्थितगृहपतिकवैदेहकतापसव्यञ्जनास्साहस्राः।
ग्रामभृतकसत्त्रितीक्ष्णरसदभिक्षुक्यः पञ्चशताः।
चारसञ्चारिणः अर्धतृतीयशताः, प्रयासवृद्धवेतना वा॥

[एषां भक्तवेतनदानाद्यर्थं अध्यक्षादि-
नियोजनविधिः]

शतवर्गसहस्रवर्गाणामध्यक्षाः भक्तवेतनलाभमादेशं विक्षेपं च कुर्युः। अविक्षेपे राजपरिग्रहदुर्गराष्ट्ररक्षावेक्षणेषु च, नित्यमुख्यास्स्युरनेकमुख्याश्च॥

[अनुग्राह्याः भृत्यसम्बन्धिनः इतरे च]

कर्मसु मृतानां पुत्रदाराः भक्तवेतनं लभेरन्। बालवृद्धव्याधिताश्चैषामनुग्राह्याः। प्रेतव्याधितसूतिकाकृत्येषु चैषामर्थमानकर्म कुर्यात्॥

अल्पकोशः कुप्यपशुक्षेत्राणि दद्यात्; अल्पं च हिरण्यम्। शून्यं वा निवेशयितुमभ्युत्थितो हिरण्यमेव दद्यात्; न ग्रामं ग्रामसञ्जातव्यवहारस्थापनार्थम्। एतेन भृतानामभृतानां च विद्याकर्मभ्यां भक्तवेतनविशेषं च कुर्यात्। षष्टिवेतनस्याढकं कृत्वा हिरण्यानुरूपं भक्तं कुर्यात्॥

[राजपण्यविक्रयदत्तवेतनप्रत्यापरयो-
रनुकूलाः कर्तव्यव्यवस्थाः]

पत्त्यश्वरथद्विपाः सूर्योदये बहिः सन्धिदिवसवर्जं शिल्पयोग्याः कुर्युः। तेषु राजा नित्ययुक्तः स्यात्, अभीक्ष्णं चैषां शिल्पदर्शनं कुर्यात्। कृतनरेन्द्राङ्कं शस्त्रावरणमायुधागारं प्रवेशयेत्। अशस्त्राश्चरेयुरन्यत्र मुद्रानुज्ञानात्। नष्टं विनष्टं वा द्विगुणं दद्यात्। विध्वस्तगणनां च कुर्यात्॥

सार्थिकानां शस्त्रावरणमन्तपाला गृह्णीयुः समुद्रमवचारयेयुर्वा। यात्रामभ्युत्थितो वा सेनामुद्योजयेत्। ततो वैदेहकव्यञ्जनास्सर्वपण्यान्यायुधीयेभ्यो यात्राकाले द्विगुणप्रत्यादेयानि दद्युः। एवं राजपण्यविक्रयो वेतनप्रत्यादानं च भवति। एवमवेक्षितायव्ययः कोशदण्डव्यसनं नावाप्नोति। इति भक्तवेतनविकल्पः॥

[आयुधयोधिशौचाशौचपरीक्षाक्रमः]

सत्रिणश्चायुधीयानां वेश्याः कारुकुशीलवाः।
दण्डवृद्धाश्च जानीयुश्शौचाशौचमतन्द्रिताः॥ १७७॥

इति योगवृत्ते भृत्यभरणीयं तृतीयोऽध्यायः
आदितस्त्रिनवतिः

---

# द्विनवतितमं प्रकरणम्
# अनुजीविवृत्तम्

## चतुर्थोऽध्यायः

[भृत्यैराश्रयणदशायां राज्ञि परि-
शीलनीयाः गुणाः]

लोकयात्रावित् राजानमात्मद्रव्यप्रकृतिसम्पन्नं प्रियहितद्वारेणाश्रयेत। यं वा मन्येत—'यथा अहमाश्रयेप्सुः एवमसौ विनये-

व्सुराभिगामिकगुणयुक्तः' इति, द्रव्यप्रकृतिहीनमप्येनमाश्रयेत, न त्वेवानात्मसम्पन्नम् । अनात्मवान् हि नीतिशास्त्रद्वेषादनर्थ्य-संयोगाद्वा प्राप्यापि महदैश्वर्यं न भवति[1] ॥

[आश्रयणानुपदमेव अवश्यकर्तव्याः वाग्व्यवहाराः]

आत्मवति लब्धावकाशः शास्त्रानुयोगं दद्यात् । अविसंवा-दाद्धि स्थानस्थैर्यमवाप्नोति । मतिकर्मसु पृष्टः तदात्वे च आयत्यां च धर्मार्थसंयुक्तं समर्थं प्रवीणवत् अपरिषद्भीरुः कथयेत् । ईप्सितः पणेत—'धर्मार्थानुयोगं अविशिष्टेषु, बलवत्संयुक्तेषु दण्डधारणम्, [2]बलवत्संयोगे तदात्वे च दण्डधारणम्, इति न कुर्याः । पक्षं वृत्तिं गुह्यं च मे नोपहन्याः । संज्ञया च त्वां कामक्रोधदण्डनेषु वारये-यम्' इति ॥

[अत्यन्तवर्जनीयाः दुर्व्यवहाराः]

[3]आयुक्तप्रदिष्टायां भूमावनुज्ञातः प्रविशेत्; उपविशेच्च पार्श्व-तस्सन्निकृष्टविप्रकृष्टः । प(व)रासनं, विगृह्य कथनं, असभ्यं अप्रत्यक्षं उश्रद्धेयमनृतं च वाक्यं, उच्चैरनर्मणि हासं, वातष्ठीवने च शब्दवती न कुर्यात्; मिथः कथनमन्येन, जनवादे द्वन्द्वकथनं, राज्ञो वेषं उद्धतकुहकानां च, रत्नातिशयप्रकाशाभ्यर्थनं, एकाक्ष्योष्ठनिर्भोगं, भ्रुकुटीकर्म, वाक्यावक्षेपणं च ब्रुवति । बलवत्संयुक्तविरोधं, स्त्रीभिः स्त्रीदर्शिभिस्सामन्तदूतैर्द्वेष्यापक्षावक्षिप्तानर्थ्यैश्च प्रतिसंसर्गम्, एकार्थचर्यां, सङ्घातं च वर्जयेत् ॥

[राजसेविभिः परिपालनीया नियमाः]

अहीनकालं राजार्थं स्वार्थं प्रियहितैस्सह ।
परार्थं देशकाले च ब्रूयाद्धर्मार्थसंहितम् ॥ १७८ ॥
पृष्टः प्रियहितं ब्रूयान्न ब्रूयादहितं प्रियम् ।
अप्रियं वा हितं ब्रूयात् शृण्वतोऽनुमतो मिथः ॥ २७९ ॥

---

[1] किन्तु नश्यत्येवेति भावः. [2] मत्संयोगे-पा. [3] आदिष्टप्रदि-पा.

तूष्णीं वा प्रतिवाक्ये स्यात् द्वेष्यादींश्च न वर्णयेत् ।
अप्रिया अपि दक्षास्स्युः तद्भावाद् ये बहिष्कृताः ॥ १८० ॥
अनर्थ्याश्च प्रिया दृष्टाः चित्तज्ञानानुवर्तिनः ।
अभिहास्येष्वभिहसेत् घोरहासांश्च वर्जयेत्[1] ॥ १८१ ॥
परात्सङ्क्रामयेद्घोरं न च घोरं (स्वयं) परे वदेत् ।
तितिक्षेतात्मनश्चैव क्षमावान् पृथिवीसमः ॥ १८२ ॥

[सारतः अग्निसेवनादप्युग्रात् राजसेवनात्
स्वरक्षणविधिः]

आत्मरक्षा हि सततं पूर्वं कार्या विजानता ।
अग्नाविव हि संप्रोक्ता वृत्ती राजोपजीविनाम् ॥ १८३ ॥
एकदेशं दहेदग्निः शरीरं वा परं गतः ।
सपुत्रदारं राजा तु घातयेद्वर्धयेत वा ॥ १८४ ॥

इति योगवृत्ते अनुजीविवृत्तं चतुर्थोऽध्यायः
आदितश्चतुर्नवतिः.

---

# त्रिनवतितमं प्रकरणम्

# समयाचारिकम्.

## पञ्चमोऽध्यायः.

[अर्थाधिकारिभिः राजसेविभिः परिपालनीया
नियमाः, वर्तनक्रमः, ज्ञेया अंशाश्च]

नियुक्तः कर्मसु व्ययविशुद्धमुदयं दर्शयेत् ॥

आभ्यन्तरं बाह्यं गुह्यं प्रकाश्यं आत्ययिकं उपेक्षितव्यं वा कार्यं 'इदमेवम्' इति विशेषयेच्च ॥

---

[1] उच्चैः प्रहसनं खासं ष्ठीवनं कुत्सनं तथा ।
जृम्भणं गात्रभङ्गं च पर्वास्फोटं च वर्जयेत् ॥ इति कामन्दकनीतिसारे ५ सर्गे उक्तम्.

मृगयाद्यूतमद्यस्त्रीषु प्रसक्तं चानुवर्तेत। प्रशंसाभिरासन्नश्चास्य व्यसनोपघाते प्रयतेत। परोपजापातिसन्धानोपधिभ्यश्च रक्षेत्।

इङ्गिताकारौ चास्य लक्षयेत्। कामद्वेषहर्षदैन्यव्यवसायभयद्वन्द्वविपर्यासं इङ्गिताकाराभ्यां हि मन्त्रसंवरणार्थमाचरन्ति प्राज्ञाः॥

[राज्ञस्सन्तोषचिह्नानि]

दर्शने प्रसीदति, वाक्यं प्रतिगृह्णाति, आसनं ददाति, [1]विविक्तो दर्शयते, शङ्कास्थाने नातिशङ्कते, कथायां रमते, [2]परिज्ञाप्येष्ववेक्षते, पथ्यमुक्तं सहते, स्मयमानो नियुङ्क्ते, हस्तेन स्पृशति, श्लाघ्येनोपहसति, परोक्षे गुणं ब्रवीति, भक्ष्येषु स्मरति, सह विहारं याति, व्यसनेऽभ्यवपद्यते, तद्भक्तीन् पूजयति, गुह्यमाचष्टे, मानं वर्धयति, अर्थं करोति, अनर्थं प्रतिहन्ति—इति तुष्टज्ञानम्॥

[असन्तोषचिह्नानि]

एतदेव विपरीतमतुष्टस्य। भूयश्च वक्ष्यामः—सन्दर्शने कोपः, वाक्यस्याश्रवणप्रतिषेधौ, आसनचक्षुषोरदानं, वर्णस्वरभेदः, एकाक्षिभ्रुकुट्योष्ठ[3]निर्भेदः, स्वेदश्वासस्मितानामस्थानोत्पत्तिः, परिमन्त्रणं, अकस्माद्व्रजनं, वर्धनं अन्यस्य, भूमिगात्रविलेखनं[4], अन्यस्योपतोदनं[5], विद्यावर्णदेशकुत्सा, [6]समनिन्दा, प्रतिदोषनिन्दा, प्रतिलोमस्तवः, सुकृतानवेक्षणं, दुष्कृतानुकीर्तनं, पृष्ठा[7]वधानम्, अतित्यागः, मिथ्याभिभाषणं, राजदर्शिनां च तद्वृत्तान्यत्वम्॥

[मानुषामानुषवृत्तिभेदपर्यालोचनस्याप्यावश्यकता उदाहरणानि च]

वृत्तिविकारं चावेक्षेताप्यमानुषाणाम्॥

'अयमुच्चैः सिञ्चति' इति कात्यायनः प्रवव्राज; 'क्रौञ्चोऽपसव्यम्' इति कणिङ्को भारद्वाजः; 'तृणम्' इति दीर्घश्चारायणः;

[1] विविक्ते—पा. [2] परज्ञा. पा. [3] निर्भोगः, स्वेदश्च, श्वास—पा. [4] विलेपनम्—पा. [5] उपतोदनं—ताडनम्. [6] समदोषनिन्दा—पा. [7] प्रविष्टाव(पृष्ठाव) धानम्—पा.

'शीता शाटी' इति घोटमुखः; 'हस्ती प्रत्यौक्षीत्' इति किञ्जल्कः; 'रथाश्वं प्राशंसीत्' इति पिशुनः; 'प्रतिरवणे शुनः' पिशुनपुत्रः इति[1] ॥

[स्वस्वामिनोरपराधपरिशीलनेन सम्भाविता-
पराधमार्जनादिविधिः]

अर्थमानावक्षेपे च परित्यागः। स्वामिशीलमात्मनश्च किल्बिषमुपलभ्य वा प्रतिकुर्वीत। मित्रमपकृष्टं वाऽस्य गच्छेत्॥

तत्रस्थो दोषनिर्घातं मित्रैर्भर्तरि चाचरेत्।
ततो भर्तरि जीवेद् वा मृते वा पुनराव्रजेत्॥ १८५॥

इति योगवृत्ते समयाचारिकं पञ्चमोऽध्यायः
आदितः पञ्चनवतिः

---

# चतुर्नवतिपञ्चनवतितमे प्रकरणे
# राज्यप्रतिसन्धानमेकैश्वर्यं च

## षष्ठोऽध्यायः

[राज्ञोऽस्वस्थतादशायाममात्यैस्स्वराष्ट्रे
परिकल्पनीयाः व्यवस्थाः]

राजव्यसनमेवममात्यः प्रतिकुर्वीत; प्रागेव मरणबाधभयाद्राज्ञः। [2]प्रियहितोपग्रहेण मासद्विमासान्तरं [3]दर्शनं स्थापयेत्—'देशपीडापहममित्रापहमायुष्यं पुत्रीयं वा कर्म राजा साधयति' इत्यपदेशेन। [4]राजव्यञ्जनमनुरूपवेलायां प्रकृतीनां दर्शयेत्, मित्रा-

---

[1] अत्र ज्ञेयाः सर्वेऽपि कथाभागाः अनुबन्धे द्रष्टव्याः. [2] प्रियहितजनसङ्ग्रहेण प्रियहितवचनेन वा. [3] दिदृक्षुजनदर्शनावसरदानम्. [4] राजचिह्नयुक्तं कमप्यन्यजनम्.

मित्रदूतानां च। तैश्च यथोचितां संभाषां अमात्यमुखो गच्छेत्[1]। दौवारिकान्तर्वंशिकमुखश्च यथोक्तं राजप्रणिधिमनुवर्तयेत्। अपकारिषु च [2]हेडं प्रसादं वा प्रकृतिकान्तं[3] दर्शयेत्, प्रसादमेवोपकारिषु॥

आप्तपुरुषाधिष्ठितौ दुर्गप्रत्यन्तस्थौ वा कोशदण्डावेकस्थौ कारयेत्, [4]कुल्यकुमारमुख्यांश्चान्यापदेशेन॥

यश्च मुख्यः पक्षवान् दुर्गाटवीस्थो वा वैगुण्यं भजेत तमुपग्राहयेत्। बह्वाबाधां वा यात्रां प्रेषयेत् मित्रकुलं वा॥

[तदैव तैः परराष्ट्रविषये कल्पनीयाः व्यवस्थाः]

यस्माच्च सामन्तादाबाधं पश्येत् तमुत्सवविवाहहस्तिबन्धनाश्वपण्यभूमिप्रदानापदेशेन अवग्राहयेत्, स्वमित्रेण वा। ततः सन्धिमदूष्यं कारयेत्॥

आटविकामित्रैर्वा वैरं ग्राहयेत्।

तत्कुलीनमवरुद्धं वा भूम्येकदेशेनोपग्राहयेत्॥

[राज्ञि तु मृते युवराजे चाविद्यमाने स्वराष्ट्रे कर्तव्याः अंशाः]

कुल्यकुमारमुख्योपग्रहं कृत्वा वा कुमारमभिषिक्तमेव दर्शयेत्। दाण्डकर्मिकवद्वा राज्यकण्टकानुद्धृत्य राज्यं कारयेत्।

[तदैव परराष्ट्रे कर्तव्याः अंशाः]

यदि वा कश्चिन्मुख्यः सामन्तादीनामन्यतमः कोपं भजेत, तं 'एहि, राजानं त्वा करिष्यामि' इत्यावाहयित्वा घातयेत्। आपत्प्रतीकारेण वा साधयेत्।

[तदैव युवराजे विद्यमाने विशेषः]

युवराजे वा क्रमेण राज्यभारमारोप्य राजव्यसनं ख्यापयेत्।

---

[1] -पा. [2] अनादरम्. [3] प्रतिकान्तम्-पा. [4] तुल्य-पा.

[राज्ञः परभूमौ मरणे राज्य-
प्रतिसन्धानक्रमः]

परभूमौ राजव्यसने मित्रेणामित्रव्यञ्जनेन शत्रोस्सन्धिमव-स्थाप्यापगच्छेत्। सामन्तादीनामन्यतमं वाऽस्य दुर्गे स्थाप-यित्वापगच्छेत्। कुमारमभिषिच्य वा [1]प्रतिव्यूहेत। परेणाभियुक्तो वा [2]यथोक्तमापत्प्रतीकारं कुर्यात्।

[आत्मगुणसम्पन्नराजकुमारसत्त्वे तस्यैव राज्यार्हता,
भारद्वाजमतनिरासः, तादृशकुमारा-
भावे कर्तव्योंऽशश्च]

'एवमेकैश्वर्यममात्यः कारयेत्' इति कौटल्यः॥

'नैवम्' इति भारद्वाजः—'प्रम्रियमाणे राजनि अमात्यः कुल्यकुमारमुख्यान् परस्परं मुख्येषु वा विक्रामयेत्। विक्रान्तं प्रकृतिकोपेन घातयेत्। कुल्यकुमारमुख्यानुपांशुदण्डेन वा साधयित्वा स्वयं राज्यं गृह्णीयात्। राज्यकारणाद्धि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति, किमङ्ग! पुनरमात्यप्रकृतिर्ह्येकप्रग्रहो राज्यस्य। तत् स्वयमुपस्थितं नावमन्येत। स्वयमारूढा हि स्त्री त्यज्यमानाऽभिशपतीति लोकप्रवादः।

कालश्च सकृदभ्येति यं नरं कालकाङ्क्षिणम्।
दुर्लभस्स पुनस्तस्य कालः कर्म चिकीर्षतः'॥ १८६॥

'प्रकृतिकोपकमधर्मिष्ठमनैकान्तिकं चैतत्' इति कौटल्यः। राजपुत्रमात्मसम्पन्नं राज्ये स्थापयेत्।

सम्पन्नाभावे—व्यसनिनं कुमारं राजकन्यां गर्भिणीं देवीं वा पुरस्कृत्य महामात्रान् ब्रूयात्—'अयं वो निक्षेपः, पितरमस्यावेक्षध्वं सत्त्वाभिजनमात्मनश्च; ध्वजमात्रोऽयं, भवन्त एव स्वामिनः; कथं वा क्रियताम्' इति।

---

[1] शत्रुं प्रति युध्येत. [2] आपत्प्रतीकारोक्तप्रकारेण.

तथा ब्रुवाणं योगपुरुषा ब्रूयुः—'कोऽन्यो भवत्पुरोगादस्माद्राज्ञश्चातुर्वर्ण्यमर्हति पालयितुम्' इति। 'तथा' इत्यमात्यः कुमारं राजकन्यां गर्भिणीं देवीं वाऽधिकुर्वीत[1]। बन्धुसम्बन्धिनां मित्रामित्रदूतानां च दर्शयेत्।

भक्तवेतनविशेषममात्यानामायुधीयानां च कारयेत्। '[2]भूयश्चाऽयं वृद्धः करिष्यति' इति ब्रूयात्। एवं दुर्गराष्ट्रमुख्यानाभाषेत, यथार्हं च मित्रामित्रपक्षम्। [3]विनयकर्मणि च कुमारस्य प्रयतेत। कन्यायां समानजातीयादपत्यमुत्पाद्य वाऽभिषिञ्चेत्। [4]मातुश्चित्तक्षोभभयात् कुल्यमल्पसत्वं छात्रं च लक्षण्यमुपनिदध्यात्। ऋतौ चैनां रक्षेत्। न चात्मार्थं कञ्चिदुत्कृष्टमुपभोगं कारयेत्। राजार्थं तु यानवाहनाभरणवस्त्रस्त्रीवेश्मपरिवापान् कारयेत्॥

[अभिषिक्तस्य यौवनावस्थायां स्वनिवृत्त्यनुवृत्तिपरिशीलनावश्यकता कर्तव्योंऽशश्च]

यौवनस्थं च याचेत विश्रमं चित्तकारणात्।
परित्यजेदतुष्यन्तं तुष्यन्तं चानुपालयेत्॥ १८७॥
निवेद्य पुत्ररक्षार्थं गूढसारपरिग्रहान्।
अरण्यं दीर्घसत्रं वा सेवेतारुच्यतां गतः॥ १८८॥
मुख्यैरवगृहीतं वा राजानं तत्प्रियाश्रितः।
इतिवृत्तपुराणाभ्यां बोधयेदर्थशास्त्रवित्॥ १८९॥
सिद्धव्यञ्जनरूपो वा योगमास्थाय पार्थिवम्।
लभेत लब्ध्वा दूष्येषु दाण्डकर्मिकमाचरेत्॥ १९०॥

इति योगवृत्ते राज्यप्रतिसन्धानं एकैश्वर्यं च षष्ठोऽध्यायः
आदितष्षण्णवतिः

एतावता कौटलीयस्यार्थशास्त्रस्य योगवृत्तं पञ्चममधिकरणं समाप्तम्

---

[1] अभिषिञ्चेत्. [2] अयं कुमारः प्राप्तवयस्को भूत्वा इतोऽपि बहुतरमानुकूल्यं करिष्यतीति प्रोत्साहनार्थं ब्रूयादित्यर्थः. [3] विद्याशिक्षादिकर्मणि. [4] कुमारमातुश्चित्तक्षोभपरिहाराय तस्याः समीपे देवतार्चनपुराणश्रावणाद्यर्थं एतादृशं कञ्चन कुलीनं स्थापयेदित्यर्थः.

॥ श्रीः ॥

# अथ कौटलीये अर्थशास्त्रे

## अष्टाधिकरणीरूपः आवापाभिधानः

## द्वितीयो भागः.

# तत्र मण्डलयोनिर्नाम

## षष्ठमधिकरणम्

---

### अस्येयं प्रकरणानुक्रमणिका



आहत्य २ प्रकरणे, २ अध्यायौ, ६ कारिकाः.

---

# अनयोः प्रकरणयोः प्रतिपादितानामर्थानामयं सङ्ग्रहः

---



---

# अथ मण्डलयोनिर्नाम षष्ठमधिकरणम्

---

## षण्णवतितमं प्रकरणं—प्रकृतिसम्पदः

### प्रथमोऽध्यायः

[प्रकृतीनां विभागः]

**स्वाम्यमात्यजनपददुर्गकोशदण्डमित्राणि प्रकृतयः ॥**

[तत्र स्वामिसम्पत् (स्वामित्वोपयोगिनो गुणाः)]

तत्र स्वामिसम्पत्—महाकुलीनः [1]दैवबुद्धिसत्त्वसम्पन्नः वृद्धदर्शी धार्मिकः सत्यवाक् अविसंवादकः कृतज्ञः स्थूललक्षः महोत्साहः अदीर्घसूत्रः शक्यसामन्तः दृढबुद्धिः अक्षुद्रपरिषत्कः विनयकामः इत्याभिगामिका गुणाः। [2]शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणाः। शौर्यं अमर्षः शीघ्रता दाक्ष्यं चोत्साहगुणाः ॥

वाग्मी [3]प्रगल्भः स्मृतिमतिबलवान् [4]उदग्रः [5]स्ववग्रहः कृतशिल्पः व्यसने दण्डनायी उपकारापकारयोर्दृष्टप्रतीकारी ह्रीमान् आपत्प्रकृत्योर्विनियोक्ता[6] दीर्घदूरदर्शी देशकालपुरुषकारकार्यप्रधानः सन्धिविक्रमत्यागसंयमपणपरच्छिद्रविभागी[7] संवृतः अदीनाभिहास्यजिह्मभ्रुकुटीक्षणः कामक्रोधलोभस्तम्भचापलोपतापपैशुन्यहीनः [8]शुक्लः स्मितोदग्राभिभाषी वृद्धोपदेशाचारः—इत्यात्मसम्पत् ॥

---

[1] दैवं—जन्मान्तरीयशुभकर्म. सत्त्वं—धैर्यं. सम्पन्नपदार्थस्य प्रत्येकमन्वयः. [2] दैवबुद्धिसत्त्वसम्पन्न इत्यत्रोक्तायाः बुद्धिसम्पत्तेर्विवरणं शुश्रूषेत्यादिना. [3] सभाकम्पं विना वक्ता. [4] चित्तोन्नतिमान्. [5] दुष्कार्यात् सुखंनिवर्तनीयः. [6] धनधान्यादिविनियोगकर्ता. [7] विभागः—विविच्य ज्ञानम्. अस्य सन्ध्यादिषु प्रत्येकमन्वयः. [8] प्रियंवदः. शुक्लस्मि—पा.

[अमात्यसम्पत्]

अमात्यसम्पदुक्ता पुरस्तात् ।

[जनपदसम्पत्]

मध्ये चान्ते च [2] स्थानवान्, आत्मधारणः परधारणश्च, आपदि स्वारक्षः, स्वाजीवः शत्रुद्वेषी शक्यसामन्तः पङ्कपाषाणोषरविषमकण्टकश्रेणीव्यालमृगाटवीहीनः कान्तः सीताखनिद्रव्यहस्तिवनवान् गव्यः पौरुषेयो गुप्तगोचरः पशुमान् अदेवमातृकः वारिस्थलपथाभ्यामुपेतः सारचित्रबहुपण्यो दण्डकरसहः कर्मशीलकर्षकः अबालिशस्वामी अवरवर्णप्रायः [1] भक्तशुचिमनुष्यः—इति जनपदसम्पत् ॥

[दुर्गसम्पत्]

दुर्गसम्पदुक्ता पुरस्तात् ॥

[कोशसम्पत्]

धर्माधिगतः पूर्वैस्स्वयं वा, हेमरूप्यप्रायः चित्रस्थूलरत्नहिरण्यः दीर्घामप्यापदमनायतिं सहेत—इति कोशसम्पत् ॥

[दण्डसम्पत्]

पितृपैतामहो नित्यो वश्यः तुष्टभृतपुत्रदारः [3] प्रवासेष्ववपि संपादितः सर्वत्राप्रतिहतो दुःखसहो बहुयुद्धः सर्वयुद्धप्रहरणविद्याविशारदः सहवृद्धिक्षयिकत्वादद्वैध्यः[4] क्षत्रप्रायः—इति दण्डसम्पत् ॥

[मित्रसम्पत्]

पितृपैतामहं नित्यं वश्यमद्वैध्यं महत् लघुसमुत्थं इति—मित्रसम्पत् ।

---

[1] प्रियंवदः. [2] राष्ट्रमध्ये सीमायां च दुर्गादिस्थान विशेषवान्. [3] अनुरक्तशुद्धप्रजावर्गसहितः. [4] अद्वैध्यः—अभेद्यः.

[सुखसमुच्छेद्या शत्रुसम्पत्]

अराजबीजी लुब्धः क्षुद्रपरिषत्कः विरक्तप्रकृतिः अन्यायवृत्तिः [1] अयुक्तो व्यसनी निरुत्साहो दैवप्रमाणो यत्किञ्चनकारी अगतिः [2] अननुबन्धः क्लीबो नित्यापकारी च—इत्यमित्रसम्पत् । एवंभूतो हि शत्रुस्सुखः समुच्छेत्तुं भवति ॥

[आसां प्रकृतिसम्पदामवश्य-
सम्पादनीयता]

अरिवर्जाः प्रकृतयः सप्तैताः स्वगुणोदयाः ।
उक्ताः [3] प्रत्यङ्गभूतास्ताः प्रकृता राजसम्पदः ॥ १९१ ॥
सम्पादयत्यसम्पन्नाः प्रकृतीरात्मवान्नृपः ।
विवृद्धाश्चानुरक्ताश्च प्रकृतीर्हन्त्यनात्मवान् ॥ १९२ ॥
ततस्स दुष्टप्रकृतिः चातुरन्तोऽप्यनात्मवान् ।
हन्यते वा प्रकृतिभिर्याति वा द्विषतां वशम् ॥ १९३ ॥
आत्मवांस्त्वल्पदेशोऽपि युक्तः प्रकृतिसम्पदा ।
नयज्ञः पृथवीं कृत्स्नां जयत्येव न हीयते ॥ १९४ ॥

इति मण्डलयोनौ षष्ठेऽधिकरणे प्रकृतिसम्पदः
प्रथमोऽध्यायः. आदितस्सप्तनवतितमः.

---

# सप्तनवतितमं प्रकरणम्

# शमव्यायामिकम्.

## द्वितीयोऽध्यायः

[शमव्यायामयोः फलं स्वरूपं हेतुश्च]

शमव्यायामौ योगक्षेमयोर्योनिः । कर्मारम्भाणां [4] योगाराधनो व्यायामः । कर्मफलोपभोगानां [5] क्षेमाराधनश्शमः । शमव्यायामयोर्योनिष्षाड्गुण्यम् ॥

---

[1] उत्थानशून्यः. [2] असहायः. [3] परस्परमङ्गभूताः. [4] कर्मकराणां तदुपकरणानां च सम्बन्धसाधको व्यायाम इत्यर्थः. [5] क्षेमसाधकः.

[षाड्गुण्यफलानि तत्प्रापकाणि
कर्माणि च]

क्षयः स्थानं वृद्धिरित्युदयाः [1] तस्य । मानुषं नयापनयौ, दैवं अयानयौ । दैवमानुषं हि कर्म [2] लोकं यापयति । अदृष्टकारितं दैवं; तस्मिन्निष्टेन फलेन योगः अयः, अनिष्टेनानयः । दृष्टकारितं मानुषं; तस्मिन् योगक्षेमनिष्पत्तिर्नयः, विपत्तिरपनयः । [3] तच्चिन्त्यम्; अचिन्त्यं दैवमिति ।

[विजिगीषुः तच्छत्रुमित्रे च]

राजा आत्मद्रव्यप्रकृतिसम्पन्नो नयस्याधिष्ठानं विजिगीषुः । तस्य समन्ततो मण्डलीभूता [4] भूम्यनन्तरा अरिप्रकृतिः, तथैव [5] भूम्येकान्तरा मित्रप्रकृतिः ।

[शत्रुभेदाः तदानुगुण्येनाक्रमण-
भेदाः रीतयश्च]

अरिसम्पद्युक्तः सामन्तः शत्रुः । व्यसनी यातव्यः । अनपाश्रयो दुर्बलाश्रयो वोच्छेदनीयः । विपर्यये पीडनीयः कर्शनीयो वा । इत्यरिविशेषाः ॥

[राजमित्रमण्डलानि]

तस्मान्मित्रमरिमित्रं मित्रमित्रं अरिमित्रमित्रं चानन्तर्येण भूमीनां प्रसज्यते पुरस्तात् । पश्चात् पार्ष्णिग्राह आक्रन्दः पार्ष्णिग्राहासार आक्रन्दासार इति ॥

[शत्रुमित्रयोरवान्तरभेदाः]

भूम्यनन्तरः प्रकृत्यमित्रः तुल्याभिजनस्सहजः । विरुद्धो विरोधयिता वा कृत्रिमः । भूम्येकान्तरं प्रकृतिमित्रं मातापितृसम्बन्धं सहजं; धनजीवितहेतोराश्रितं कृत्रिममिति ॥

[1] षाड्गुण्यस्य. [2] लोकयात्रां वर्तयति. लोकमवति-पा. [3] तच्च मानुषं कर्म विमृश्यानुष्ठानयोग्यम्, दैवं तु तथा नेत्यर्थः. [4] स्वभूम्यव्यवहिता भूमिः. [5] एकेन देशेन व्यवहिता भूमिः.

[मध्यमोदासीनौ]

अरिविजिगीष्वोर्भूम्यनन्तरः संहतासंहतयोरनुग्रहसमर्थः निग्रहे चासंहतयोः—मध्यमः।

अरिविजिगीषुमध्यानां बहिः प्रकृतिभ्यो बलवत्तरः संहतासंहतानामरिविजिगीषुमध्यमानामनुग्रहे समर्थः, निग्रहे चासंहतानाम्—उदासीनः। इति प्रकृतयः॥

[चतुर्मण्डलसंक्षेपः]

विजिगीषुर्मित्रं मित्रमित्रं वाऽस्य प्रकृतयस्तिस्रः। ताः पञ्चभिरमात्यजनपददुर्गकोशदण्डप्रकृतिभिरेकैकशः संयुक्ताः मण्डलमष्टादशकं भवति। अनेन मण्डलपृथक्त्वं व्याख्यातं अरिमध्यमोदासीनानाम्। [1] एवं चतुर्मण्डलसङ्क्षेपः—द्वादश राजप्रकृतयः; षष्टिर्द्रव्यप्रकृतयः;—संक्षेपेण द्विसप्ततिः। तासां यथास्वं सम्पदः॥

[शक्तिसिद्ध्योः स्वरूपविभागौ]

शक्तिः सिद्धिश्च। बलं शक्तिः; सुखं सिद्धिः। शक्तिस्त्रिविधा—ज्ञानबलं मन्त्रशक्तिः; कोशदण्डबलं प्रभुशक्तिः; विक्रमबलमुत्साहशक्तिः। एवं सिद्धिस्त्रिविधैव—मन्त्रशक्तिसाध्या मन्त्रसिद्धिः; प्रभुशक्तिसाध्या प्रभुसिद्धिः; उत्साहशक्तिसाध्या उत्साहसिद्धिरिति।

[स्वस्मिन् तदभिवर्धनस्य शत्रुषु
तन्न्यूनीकरणस्य चावश्यकता]

ताभिरभ्युच्छ्रितो ज्यायान् भवति, अपचितो हीनः, तुल्यशक्तिस्समः। तस्माच्छक्तिं सिद्धिं च घटेतात्मन्यावेशयितुम् [2]। साधारणो वा द्रव्यप्रकृतिष्वानन्तर्येण शौचवशेन वा। दूष्यामित्राभ्यां वाऽपक्रष्टुं [3] यतेत।

---

[1] एतावता उक्तं पिण्डीकृत्याह--एवमित्यादिना. [2] वर्धयितुम्. [3] न्यूनयितुम्.

[शत्रावपि शक्त्याद्यभिवर्धनाशंसने निमित्तानि]

यदि वा पश्येत्—"अमित्रो मे शक्तियुक्तो वाग्दण्डपारुष्यार्थदूषणैः प्रकृतीरुपहनिष्यति ; सिद्धियुक्तो वा मृगयाद्यूतमद्यस्त्रीभिः प्रमादं गमिष्यति ; स विरक्तप्रकृतिरुपक्षीणः प्रमत्तो वा साध्यो मे भविष्यति ; विग्रहाभियुक्तो वा सर्वसन्दोहेनैकस्थो दुर्गस्थो वा स्थास्यति ; स संहतसैन्यो मित्रदुर्गवियुक्तस्साध्यो मे भविष्यति ; बलवान् वा राजा परतः शत्रुमुच्छेत्तुकामस्त[1]मुच्छिद्य न मामुच्छिन्द्यात् इति बलवता प्रार्थितस्य मे विपन्नकर्मारम्भस्य वा साहाय्यं दास्यति, मध्यमलिप्सायां च" इति, एवमादिषु कारणेष्वमित्रस्यापि शक्तिं सिद्धिं चेच्छेत्।

[शत्रुजये उपायविशेषः]

नेमिमेकान्तरान् राज्ञः कृत्वा चानन्तरानरान्[2]।
नाभिमात्मानमायच्छेत् नेता प्रकृतिमण्डले ॥ १९५ ॥
[3]मध्येह्युपहितः शत्रुः नेतुर्मित्रस्य चोभयोः।
उच्छेद्यः पीडनीयो वा बलवानपि जायते ॥ १९६ ॥

इति मण्डलयोनौ षष्ठेऽधिकरणे शमव्यायामिकं
द्वितीयोऽध्यायः. आदितोऽष्टनवतितमः.
एतावता कौटलीयस्यार्थशास्त्रस्य मण्डलयोनिः
षष्ठमधिकरणं समाप्तम्

———

[1] मुच्छिद्यमानमुच्छिन्द्यादिति–पा. [2] अरान् कृत्वा–अरस्थाने कल्पयित्वा.
[3] मध्येऽभ्युप–पा.

## अथ कौटलीये अर्थशास्त्रे

# षाड्गुण्यं नाम

## सप्तममधिकरणम्

---

### अस्येयं प्रकरणानुक्रमणिका



आहत्य २९ प्रकरणानि १८ अध्यायाः ८८ कारिकाः

## एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं सङ्ग्रहः.

---

### 98. षाड्गुण्यसमुद्देशः
(पु. 283)

गुणयत्तानिर्धारणेन षाड्गुण्यस्वरूप-हेत्वादिविवरणम्.

षण्णां गुणानां प्रयोगकालाः.

### 99. क्षयस्थानवृद्धिनिश्चयः
(पु. 284 पं. 3)

आचार्यमतरीत्या स्वाभिवृद्धिक्षयसाम्यावस्थितीनामवधारणकालाः, कर्तव्या अंशाश्च.

कौटल्यमतरीत्या सन्ध्यादिभिरेकैकोपायैरेव स्वाभिवृद्धिसम्पादनप्रकाराः.

### 100. संश्रयवृत्तिः (पु. 286)

संध्याद्योर्द्वयोर्द्वयोर्गुणयोर्वृद्धिसाम्ये अनुष्ठेयगुणनिर्णयः.

बलवदेकशत्र्वभियोगे शत्रुद्वयाभियोगे च कर्तव्याः व्यापाराः.

उभाभ्यामपि ताभ्यामुच्छेद एव प्राप्ते कर्तव्याः अंशाः.

स्वप्रियाऽऽश्रयणस्यैव प्रशस्तत्वम्.

### 101. समहीनज्यायसां गुणाभिनिवेशः (पु. 288)

षाड्गुण्यप्रयोगस्य शक्त्यानुगुण्यव्यवस्थापनम्.

तत्र सन्धिविग्रहप्रयोगोपाधयः.

आसनादिगुणपञ्चकप्रयोगोपाधयः.

### 102. हीनसन्धयः
(पु. 289 पं. 18)

आत्मामिषादयस्त्रयः दण्डोपनतसन्धयः.

परिक्रयादयश्चत्वारः कोशोपनतसन्धयः.

आदिष्टादयश्चत्वारः देशोपनतसन्धयः.

निगमनम्.

### 103. विगृह्यासनम् (पु. 291)

आसनभेदाः, आसनसामान्ये निमित्तं च

तत्र विगृह्यासने निमित्तत्रयम्.

आचार्यमतं, स्वमतं, प्रयोजनान्तरं च.

### 104. सन्धायासनम्
(पु. 292 पं. 11)

सन्धायासने निमित्तानि.

### 105. विगृह्ययानम्
(पु. 292 पं. 13)

विगृह्ययाने निमित्तचतुष्टयम्.

### 106. सन्धाययानम्
(पु. 292 पं. 26)

संधाययाने हेतुः.

### 107. सम्भूयप्रयाणम् (पु. 293 पं. 2)

सम्भूयप्रयाणे हेतुः.
सम्भूययानलब्धधनविभागक्रमः.

### 108. यातव्यामित्रयोरभिग्रहचिन्ता (पु. 293)

यातव्यामित्रयोर्व्यसनसाम्ये वैषम्ये च यानप्रकारः.
त्रयाणां यातव्यानां यौगपद्ये यानप्रकारः.
द्वयोर्यौगपद्ये तत्प्रकृत्यानुगुण्येन यानप्रकारः.
सबलदुर्बलयोर्यातव्ययोर्यौगपद्ये व्यवस्था.

### 109. क्षयलोभविरागहेतवः प्रकृतीनाम् (पु. 295.)

प्रकृतिषु क्षयलोभप्रद्वेषकारणानि त्रिंशत्.
तत्परिहारावश्यकता.
प्रकृतिषु क्षयादीनां परिज्ञानचिह्नानि.
तेषां शक्यत्वाशक्यत्वविवरणम्.

### 110. सामवायिकविपरिमर्शः (पु. 296 पं. 15)

विजिगीषुणा सह सहायार्थं नेतव्यानां गुरुलघुभावोपपादनम्.
कार्यसिद्ध्यनन्तरं विजिगीषुकर्तव्याः अंशाः.
विजिगीषोः स्वतन्त्रयाने विशेषः.

### 111. संहितप्रयाणिकम् (पु. 297)

कृतसन्धिविजिगीषुसामन्तातिसंधानप्रकारः

### 112. परिपणितादिसन्धयः (पु. 297 पं. 22)

देशकालाद्यनुरोधेन परिपणितसन्धित्रयम्
एषां प्रयोगे निमित्तानि.
परिपणितस्यान्ये चत्वारः प्रकाराः.
अपरिपणितसन्धिः तदनन्तरकर्तव्यं च.
सन्धिधर्माश्चत्वारः.
निग्रहधर्मास्त्रयः.
सन्धिधर्माणां निरूपणम्.
चत्वारो गतागतप्रकाराः तन्निरूपणं च.
गतागतविषये वक्तव्याः विशेषाः.
अरिपक्षीयगतागतविषये व्यवस्थापनीयाः अंशाः.

### 113. द्वैधीभाविकाः सन्धिविक्रमाः (पु. 301)

त्रिविधयुद्धस्वरूपनिरूपणम्.
विजिगीषुसामन्तोपसङ्ग्रहणहेतवः.
तद्धेतवः सन्धिभेदाः.
हीनस्य ज्यायसा सह स्वबल (सैन्य) समलाभानुगुणा सन्धिः.
तादृशबलसमाधिकलाभसन्धिः.
तादृशबलसमहीनलाभसन्धिः.
समस्य समेन सह बलसमलाभसन्धिः.
बलसमाधिकलाभसन्धिः.
अतिसन्धिः.
ज्यायसो हीनेन सह बलसमाधिकलाभसन्धिः.
तादृशबलसमलाभसन्धिः.
तादृशबलसमहीनलाभसन्धिः.

### 114. यातव्यवृत्तिः (पु. 304)

यातव्यस्य सामवायिकेषु वृत्तिः.

सामवायिकानां यातव्येन साकं व्यवहारक्रमाश्चत्वारः.

### 115 अनुग्राह्यमित्रविशेषाः (पु. 305 पं. 2)

अनुग्राह्याः मित्रभेदाः पञ्च.

तैर्लभ्याः अंशाः.

मध्यमोदासीनयोरनुग्रहफलानि.

तत्सहायत्वेन मूलबलस्याप्रेषणीयता तदपवादश्च.

शङ्कनीयवृत्तयोर्मध्यमोदासीनयोर्विषये व्यवस्था.

सामान्यतः सन्धिविग्रहयोर्निमित्तानि.

### 116 मित्रहिरण्यभूमिकर्मसन्धयः (पु. 306)

मित्रादिलाभेषु तरतमभावनिरूपणम्.

समविषमसन्धी, समसन्धौ विशेषश्च.

सम्भावितमित्रभेदेषु तरतमभावनिर्णयः.

पुरुषहिरण्यभोगेषु तदीयभोगान्तराद्वैशिष्ट्यम्.

गुणभेदेन भिन्नाः षण्मित्रभेदाः.

त्याज्यं मित्रम्.

ग्राह्यो लाभः.

सम्पद्युक्तभूमेर्बलवत्सकाशाल्लाभावश्यकता

बलवतश्चलामित्राच्च भूमिलाभेऽपि लाभविशेषहेतुप्रकाराः.

सविचारं लब्धव्यभूस्वरूपतद्यजमानस्वरूपयोरुपपादनम्.

तत्तन्निवेशस्थापनयोग्य-शून्यभूमिलाभस्यात्यावश्यकता.

तत्र देवमातृकनदीमातृकयोर्वैशिष्ट्यम्.

साधनीयविशेषोपयोगिगुणविशिष्टप्रदेशस्य लब्धव्यत्वम्.

महाक्षयव्ययसाधनीयजनपदादिनिवेशवत्प्रदेशविक्रये पणनप्रकारः.

तथा पणितानां दुर्बलादीनामवमवसादनप्रकारः.

तत्र यत्किञ्चनकारिविषये मतभेदः.

उक्तदुर्बलादिरूपकेवलाभे लब्धक्रेत्रानुगुण्येन कर्तव्याः व्यवस्थाः.

अतिशयितलाभसम्पादनहेतवः दुर्गसन्ध्यादिविषयकाः कर्मविशेषाः.

कर्मफलभूतानां क्षयवृद्धिस्थानानां लक्षणानि.

### 117 पार्ष्णिग्राहचिन्ता (पु. 317)

लाभविशेषप्रयोजकपार्ष्णिग्रहणभेदा एकादश.

त्रयः पार्ष्णिग्राहभेदाः.

अन्तर्धिलक्षणस्य पार्ष्णिग्राहावस्थाऽनर्हता.

व्यायामयुद्धापेक्षया मन्त्रयुद्धस्यैव प्रशस्तत्वम्.

व्यायामयुद्धेऽपि विशेषः.

विजिगीषोः पार्ष्णिग्राहाद्यवस्थासु कर्तव्यान्यनुष्ठानानि.

राज्ञः आत्मसहायभूतराजमण्डलस्थापनेन संवृतवृत्त्याश्रयणावश्यकता.

### 118 हीनशक्तिपूरणम् (पु. 320)

सामवायिकैर्बहुभिरभियोगे तत्प्रधानं प्रति सान्त्वभेदप्रयोगाभ्यां शक्तिवर्धनोपदेशः.
प्रधानाभावे जनविशेषवशीकरणेन हीनशक्तिपूरणम्.
तथावशीकार्यजनपरिगणनं, वशीकरणप्रकाराश्च.
हीनशक्तिपूरकं प्रकारान्तरम्.
सहायसम्पादनमन्त्रशक्तिपूरणयोरुपदेशः.
दुर्गादिप्रयोजनोपपादनेन तत्साध्यप्रभुशक्त्युत्साहशक्त्योः पूरणोपदेशः.
एवं शक्तिपूरणाशक्तौ कर्तव्योंऽशः.

### 119 बलवता विगृह्योपरोधहेतवः (पु. 323)

प्रबलेन रिपुणा विग्रहप्राप्तौ तन्निग्रहोपायानां विवरणम्.
तथाकरणे सहायानां अलाभे दुर्गाश्रयणविधिः, तदनुकूलान्यनुसन्धेयानि कारणानि च.
उक्तकारणादर्शने कर्तव्याःअंशाः.

### 120 दण्डोपनतवृत्तम् (पु. 325 पं. 10)

सर्वथा परेण स्वनिग्रह एव प्राप्ते आश्रयणीयदास्यवृत्त्युपदेशः.

### 121 दण्डोपनायिवृत्तम् (पु. 326)

दण्डादयः शत्रुवशीकरणोपायाः, वशीकृतानां नियोजनानि च.
अर्थप्राप्त्युपकारिणां अनर्थनिवारकाणां च मित्राणां भेदाः.
तत्र दानोपायप्रयोगप्रसङ्गे देयभूमिस्वरूपतत्पात्रयोः व्यवस्था.
एवं वशीकृतेषु एषां अचरणप्रकाराः, वैपरीत्ये दोषश्च.

### 122 सन्धिकर्म (पु. 328)

सन्धिपदार्थः, सत्यादिषु चतुर्षु चलस्थिरसन्धिहेतुत्वव्यवस्था.
सत्यादिस्वरूपाणि, पूर्वपूर्वातिक्रमस्यैवोत्तरोत्तरहेतुत्वं, अपत्यप्रतिग्रहे विशेषश्च.
सन्ध्यर्थं परस्परपुत्राधानप्रसङ्गे जात्यादिपुत्रापेक्षया अजात्याद्याधानस्यैव श्रेयस्त्वम्.
जात्यादिषु परस्परवैलक्षण्योपपादनम्.
उभयोरेकपुत्रकत्वे विशेषः.

### 123 सन्धिमोक्षः (पु. 330)

सन्ध्यर्थमाहितानां पुत्रादीनां मोक्षोचितः कालः, मोक्षोपायाश्चाष्टादश विधाः.
तदन्वेषकानुपातभयपरिहारविधिः.
अन्वेष्टृभिर्गृहीतस्य, ग्रहणभयान्निलीनस्य चापसरणोपायाः.
उक्तसर्वविधमोक्षोपायानुष्ठानस्याप्यशक्यत्वे कर्तव्योंऽशः.

### 124 मध्यमचरितम् (पु. 332)

मध्यमसम्बन्धिन्यः प्रकृतिविकृतयः.

तत्र मित्राभियोक्तरि मध्यमे विजिगीषोर्वर्तनक्रमः.

मित्रभाविमित्रस्य मध्यमाद्रक्षणक्रमः.

कर्शनीयोच्छेदनीयमित्रयोः मध्यमाद्रक्षणक्रमः.

उक्तरक्षणयत्नवैफल्ये कर्तव्योंऽशः.

अमित्राभियोक्तरि मध्यमे वर्तनक्रमः.

तन्मित्राभियोक्तरि तदनभियोक्तरि च मध्यमे वर्तनक्रमः.

उदासीनं मध्यमे लिप्समाने तस्मिन् वर्तनक्रमः.

## 125 उदासीनचरितम्

(पु. 334 पं. 2)

उदासीनविषये विजिगीषोर्वर्तनक्रमः.

## 126 मण्डलचरितम्

(पु. 334 पं. 7)

अरिमित्रात्मकमण्डलविषये विजिगीषोर्वर्तनक्रमः.

तत्र अरिमित्रभृत्यभाविनां सामन्तानां परिगणनम्.

मित्रेषु अवस्थाविशेषानुगुणाः वृत्तिक्रमाः.

निगमनम्.

# अथ षाड्गुण्यं नाम सप्तममधिकरणम्

---

## अष्टनवतितमनवनवतितमे प्रकरणे षाड्गुण्यसमुद्देशः, क्षयस्थानवृद्धिनिश्चयश्च.

### प्रथमोऽध्यायः

[षाड्गुण्यस्वरूपहेतूनां विवरणम्]

[1]षाड्गुण्यस्य [2]प्रकृतिमण्डलं योनिः ।

'सन्धिविग्रहासनयानसंश्रयद्वैधीभावाः षाड्गुण्यम्' इत्याचार्याः ॥

'द्वैगुण्यम्' इति वातव्याधिः; सन्धिविग्रहाभ्यां हि षाड्गुण्यं सम्पद्यत इति ॥

'षाड्गुण्यमेवैतदवस्थाभेदात्' कौटल्यः ॥

तत्र—पणबन्धः सन्धिः, अपकारो विग्रहः, उपेक्षणं आसनम्, अभ्युच्चयो यानम्, परार्पणं संश्रयः, सन्धिविग्रहोपादानं द्वैधीभावः—इति षड्गुणाः ॥

[तेषां षड्गुणानां निमित्तानुगुणप्रयोगकालाः]

परस्माद्धीयमानः सन्दधीत । अभ्युच्चीयमानो विगृह्णीयात् । 'न मां परो नाहं परमुपहन्तुं शक्तः' इत्यासीत । गुणातिशययुक्तो यायात् । शक्तिहीनस्संश्रयेत । सहाय[3]साध्यकार्ये द्वैधीभावं गच्छेत्—इति गुणावस्थापनम् ॥

---

[1] षड्गुणा एव षाड्गुण्यम्. षण्णां गुणानामित्यर्थः. [2] स्वाम्यमात्यादिप्रकृतिसप्तकं द्वादशराजमण्डलं चेत्यर्थः. [3] साध्ये कार्ये-पा.

[आचार्यमतरीत्या स्वामिवृद्धि-
सम्पादनप्रकारः]

[1] तेषां यस्मिन् वा गुणे स्थितः पश्येत् 'इहस्थः शक्ष्यामि दुर्गसेतुकर्मवणिक्पथशून्यनिवेशखनिद्रव्यहस्तिवनकर्माण्यात्मनः प्रवर्तयितुं, परस्य चैतानि कर्माण्युपहन्तुम्' इति, तमातिष्ठेत्—सा वृद्धिः। 'आशुतरा मे वृद्धिर्भूयस्तरा वृद्ध्युदयतरा वा भविष्यति, विपरीता परस्य' इति ज्ञात्वा परवृद्धिमुपेक्षेत। तुल्यकालफलोदयायां वृद्धौ सन्धिमुपेयात्॥

[स्वक्षयस्वरूपावधारणम्]

यस्मिन् वा गुणे स्थितः स्वकर्मणामुपघातं पश्येत् नेतरस्य, तस्मिन् न तिष्ठेत्—एष क्षयः। 'चिरतरेणाल्पतरं वृद्ध्युदयतरं वा क्षेष्ये; विपरीतं परः' इति ज्ञात्वा क्षयमुपेक्षेत। तुल्यकालफलोदये वा क्षये सन्धिमुपेयात्॥

[साम्यावस्थितिस्वरूपावधारणम्]

यस्मिन् वा गुणे स्थितः स्वकर्मवृद्धिं क्षयं वा नाभिपश्येत्—एतत् स्थानम्। 'ह्रस्वतरं वृद्ध्युदयतरं वा स्थास्यामि विपरीतं परः' इति ज्ञात्वा स्थानमुपेक्षेत। 'तुल्यकालफलोदये वा स्थाने सन्धिमुपेयात्' इत्याचार्याः॥

[स्वमतानुसारेण सन्धिकरणनिमित्त-
मभिवृद्धिसम्पादनरीतयः]

[2] 'नैतद्विभाषितम्' इति कौटल्यः॥

यदि वा पश्येत्—'सन्धौ स्थितो महाफलैः स्वकर्मभिः परकर्माण्युपहनिष्यामि; महाफलानि वा स्वकर्माण्युपभोक्ष्ये, परकर्माणि वा; सन्धिविश्वासेन वा योगोपनिषत्प्रणिधिभिः पर-

---

[1] उक्तानां षड्गुणानां मध्ये यं गुणं आश्रित्य कर्माणि प्रवर्तयितुं स्वस्मिन् प्रत्ययो भवेत् तद्गुणाश्रयणेन कर्मप्रवर्तने कोशदण्डयोः वृद्धिर्भवेदित्यर्थः

[2] अस्मिन् आचार्यभाषणे कोऽप्यर्थविशेषो नास्तीति कौटल्योऽभिप्रैतीत्यर्थः.

कर्माण्युपहनिष्यामि; सुखं वा सानुग्रहपरिहारसौकर्यं फललाभभूयस्त्वेन [1]स्वकर्मणां परकर्मयोगावहं जनमास्रावयिष्यामि; बलिनाऽतिमात्रेण वा संहितः परः स्वकर्मोपघातं प्राप्स्यति; येन वा विगृहीतो मया सन्धत्ते तेन अस्य विग्रहं दीर्घं करिष्यामि; मया वा संहितस्य मद्द्वेषिणो जनपदं पीडयिष्यति; परोपहतो वाऽस्य जनपदो मामागमिष्यति ततः कर्मसु वृद्धिं प्राप्स्यामि; विपन्नकर्मारम्भो वा विषमस्थः परः कर्मसु न मे विक्रमेत; परतः प्रवृत्तकर्मारम्भो वा ताभ्यां संहितः कर्मसु वृद्धिं प्राप्स्यामि; शत्रुप्रतिबद्धं वा शत्रुणा सन्धिं कृत्वा मण्डलं भेत्स्यामि; भिन्नमवाप्स्यामि; दण्डानुग्रहेण वा शत्रुमुपगृह्य मण्डललिप्सायां विद्वेषं ग्राहयिष्यामि; विद्विष्टं तेनैव घातयिष्यामि' इति, सन्धिना वृद्धिमातिष्ठेत् [2] ॥

[विग्रहमूलकाभिवृद्धिसम्पादनक्रमः]

यदि वा पश्येत्—'आयुधीयप्रायः [3]श्रेणीप्रायो वा मे जनपदः शैलवननदीदुर्गैकद्वारारक्षो वा शक्ष्यति पराभियोगं प्रतिहन्तुम्' इति; '[4]विषयान्ते दुर्गमविषह्यं [5]अपाश्रितो वा शक्ष्यामि परकर्माण्युपहन्तुम्' इति; 'व्यसनपीडोपहतोत्साहो वा परः संप्राप्तकर्मोपघातकालः, इति;' 'विगृहीतस्यान्यतो वा शक्ष्यामि जानपदमपवाहयितुम्' इति, विग्रहे स्थितो वृद्धिमातिष्ठेत् ॥

[आसनयानाभ्यां अभिवृद्धिसम्पादनक्रमः]

यदि वा मन्येत—'न मे शक्तः परः कर्माण्युपहन्तुं; नाहं तस्य कर्मोपघाती वा, व्यसनमस्य, श्ववराहयोरिव कलहे वा स्वकर्मानुष्ठानपरो वा वर्धिष्ये' इति, आसनेन वृद्धिमातिष्ठेत् ॥

यदि वा मन्येत—'यानसाध्यः कर्मोपघातः शत्रोः, प्रतिविहितस्वकर्मारक्षश्चास्मि' इति, यानेन वृद्धिमातिष्ठेत् ॥

---

[1] स्वकर्मणा—पा. [2] सम्पादयेत. [3] कृषिकर्तृकारयितृबहुलः. [4] राष्ट्रसीमायाम्. [5] अपाकृतो वा—पा.

[संश्रयद्वैधीभावाभ्यां अभिवृद्धि-
सम्पादनप्रकारः]

यदि वा मन्येत—'नास्मि शक्तः परकर्माण्युपहन्तुं, स्वकर्मोपघातं वा त्रातुम्' इति, बलवन्तमाश्रितः स्वकर्मानुष्ठानेन क्षयात् स्थानं स्थानाद्वृद्धिं चाकाङ्क्षेत ॥

यदि वा मन्येत—'सन्धिनैकतः स्वकर्माणि प्रवर्तयिष्यामि, विग्रहेणैकतः परकर्माण्युपहनिष्यामि' इति, द्वैधीभावेन वृद्धिमातिष्ठेत् ॥

[निगमनम्]

एवं षड्भिर्गुणैरेतैः स्थितः प्रकृतिमण्डले ।
[1] पर्येषेत क्षयात् स्थानं स्थानाद्वृद्धिं च कर्मसु ॥१९७ ॥

इति षाड्गुण्ये षाड्गुण्यसमुद्देशः क्षयस्थानवृद्धिनिश्चयश्च
प्रथमोऽध्यायः. आदितो नवनवतितमः.

---

# शततमं प्रकरणं संश्रयवृत्तिः

## द्वितीयोऽध्यायः

[द्वयोर्गुणयोर्वृद्धिसाम्ये अनुष्ठेयगुणनिर्णयः]

सन्धिविग्रहयोस्तुल्यायां वृद्धौ सन्धिमुपेयात् । विग्रहे हि [2]क्षयव्ययप्रवासप्रत्यवाया भवन्ति । तेनासनयानयोरासनं व्याख्यातम् ॥

द्वैधीभावसंश्रययोर्द्वैधीभावं गच्छेत् । द्वैधीभूतो हि स्वकर्मप्रधानः आत्मन एवोपकरोति । संश्रितस्तु परस्योपकरोति, नात्मनः ॥

[बलवदेकशत्रुभियोगे कर्तव्याः अंशाः]

[3] यद्बलस्सामन्तः तद्विशिष्टबलमाश्रयेत । तद्विशिष्टबलाभावे तमेवाश्रितः कोशदण्डभूमीनामन्यतमेनास्योपकर्तुमदृष्टः प्रयतेत ।

---

[1] अन्विच्छेत् . [2] प्राणिक्षयः अर्थव्ययः विदेशगमनं उपद्रवनिमित्तः प्रत्यवायश्च क्रमेण पदार्थाः. [3] यद्बलस्सामन्त इत्यारभ्य संश्रयवृत्तिः, तावत् पूर्वप्रकरणशेषः.

महादोषो हि विशिष्टबलसमागमो राज्ञाम्—अन्यत्रारिगृहीतात्[1]। अशक्ये दण्डोपनतवद्वर्तेत ॥

यदा चास्य प्राणहरं व्याधिं अन्तःकोपं शत्रुवृद्धिं मित्रव्यसनं उपस्थितं वा तन्निमित्तमात्मनश्च वृद्धिं पश्येत्, तदा सम्भाव्य-व्याधिधर्मकार्यापदेशेनापयायात्। स्वविषयस्थो वा नोपगच्छेत्। आसन्नो वाऽस्य छिद्रेषु प्रहरेत् ॥

[बलवच्छत्रुद्वयाभियोगे कर्तव्याः व्यापाराः]

बलीयसोर्वा मध्यगतः त्राणसमर्थमाश्रयेत्; यस्य वा [2]अनन्तर्द्धिः स्यात्। उभौ वा [3]कपालसंश्रयस्तिष्ठेत्। मूलहरमित-रस्येतरमपदिशन् भेदमुभयोर्वा परस्परापदेशं प्रयुञ्जीत, भिन्नयो-रुपांशुदण्डम् ॥

पार्श्वस्थो वा बलस्थयोरासन्नभयात् प्रतिकुर्वीत। [4]दुर्गापाश्रयो वा द्वैधीभूतस्तिष्ठेत्। सन्धिविग्रहक्रमहेतुभिर्वा चेष्टेत। दूष्या-मित्राटविकानुभयोरुपगृह्णीयात्। एतयोरन्यतरं गच्छंस्तैरेवान्यत-रस्य व्यसने प्रहरेत्। द्वाभ्यामुपहितो वा मण्डलापाश्रयस्तिष्ठेत्, मध्यममुदासीनं वा संश्रयेत। तेन सहैक[5]मुपगृह्यतरमुच्छिन्द्यादुभौ वा ॥

[उभाभ्यामुच्छेदे कर्तव्याः अंशाः]

द्वाभ्यामुच्छिन्नो वा मध्यमोदासीनयोस्तत्पक्षीयाणां वा राज्ञां न्यायवृत्तिमाश्रयेत। तुल्यानां वा यस्य प्रकृतयः सुखयेयुरेनं, यत्रस्थः वा शक्नुयादात्मानमुद्धर्तुं, यत्र वा पूर्वपुरुषोचिता गतिः आसन्नस्सम्बन्धो वा मित्राणि भूयांसीति शक्तिमन्ति वा भवेयुः ॥

---

[1] रिविगृहीतात्—पा. [2] अव्यवधानम्. [3] कपालसन्धिकरणेन आश्रितः तिष्ठेत् इत्यर्थः. कपालसन्धिश्च—'त्वमेव मे रक्षकः, त्वदरक्षितं मां पर उच्छेत्तु-मिच्छति' इत्येकैकश उक्त्वा द्वावप्याश्रित्यावस्थानम्. [4] दुर्गपालाश्रयो—पा. [5] उपगृह्य-दानादिना वशीकृत्य.

[प्रशस्ता आश्रयणरीतिः]

प्रियो यस्य भवेद्यो वाऽप्रियोऽस्य कतरस्तयोः ।
प्रियो यस्य स तं गच्छेत् इत्याश्रयगतिः [1]परा ॥ १९८ ॥

इति षाड्गुण्ये संश्रयवृत्तिः द्वितीयोऽध्यायः
आदितः शततमः.

---

# एकशततमद्विशततमे प्रकरणे—समहीन ज्याय-सां गुणाभिनिवेशः हीनसन्धयश्च.

## तृतीयोऽध्यायः

[शक्त्यनुगुणाः षाड्गुण्यप्रयोगाः—तत्र सन्धिविग्रहप्रयोगोपाधयः]

विजिगीषुः शक्त्यपेक्षः षाड्गुण्यमुपयुञ्जीत ॥

समज्यायोभ्यां सन्धीयेत । हीनेन विगृह्णीयात् । विगृहीतो हि ज्यायसा – हस्तिना पादयुद्धमिव अभ्युपैति । समेन च – आमं पात्रमामेनाहतमिव उभयतः क्षयं करोति । कुम्भेनेवाश्मा हीनेनैकान्तसिद्धिमवाप्नोति ॥

ज्यायांश्चेन्न सन्धिमिच्छेत्—[2]दण्डोपनतवृत्तं आबलीयसं वा योगमातिष्ठेत् ॥

समश्चेन्न सन्धिमिच्छेत्—यावन्मात्रमपकुर्यात् तावन्मात्रमस्य प्रत्यपकुर्यात् । तेजो हि सन्धानकारणं; नातप्तं लोहं लोहेन सन्धत्त इति ॥

हीनश्चेत् सर्वत्रानुप्रणतस्तिष्ठेत्—सन्धिमुपेयात् । आरण्योऽग्निरिव हि दुःखामर्षजं तेजो विक्रमयति, मण्डलस्य चानुग्राह्यो भवति ॥

---

[1] प्रशस्ता. [2] दण्डोपनतप्रकरणे आबलीयसाधिकरणे योगातिसन्धानप्रकरणे चोक्तमित्यर्थः.

संहितश्चेत् 'परप्रकृतयो लुब्धक्षीणापचरिताः प्रत्यादानभयाद्वा नोपगच्छन्ति' इति पश्येत्-हीनोऽपि विगृह्णीयात्।

विगृहीतश्चेत् 'परप्रकृतयो लुब्धक्षीणापचरिता विग्रहोद्विग्ना वा मां नापगच्छन्ति' इति पश्येत्—ज्यायानपि सन्धीयेत, विग्रहोद्वेगं वा शमयेत्।

व्यसनयौग[1]पद्ये 'गुरुव्यसनोऽस्मि, लघुव्यसनः परः, सुखेन प्रतिकृत्य व्यसनमात्मनोऽभियुञ्ज्यात्' इति पश्येत्—ज्यायानपि सन्धीयेत॥

[आसनादिगुणपञ्चकप्रयोगोपाधयः]

सन्धिविग्रहयोश्चेत् परकर्शनमात्मोपचयं वा नाभिपश्येत्—ज्यायानप्यासीत।

परव्यसनमप्रतिकार्यं चेत् पश्येत्—हीनोऽप्यभियायात्। अप्रतिकार्यासन्नव्यसनो वा ज्यायानपि संश्रयेत।

सन्धिनैकतो विग्रहेणैकतश्चेत् कार्यसिद्धिं पश्येत्—ज्यायानपि द्वैधीभूतस्तिष्ठेत् इति। एवं [2]समस्य षाड्गुण्योपयोगः॥

[अथ हीनसन्धयः–तत्र आत्मामिषादयस्त्रयो
दण्डोपनतसन्धयः]

तत्र तु प्रतिविशेषः—

प्रवृत्तचक्रेणाक्रान्तो राज्ञा बलवताऽबलः।
सन्धिनोपनमेत् तूर्णं कोशदण्डात्मभूमिभिः॥ १९९॥
स्वयं सङ्ख्यातदण्डेन दण्डस्य विभवेन वा।
उपस्थातव्यमित्येष सन्धिरात्मामिषो मतः[3]॥ २००॥
सेनापतिकुमाराभ्यां उपस्थातव्यमित्ययम्।
पुरुषान्तरसन्धिस्स्यान्नात्मनेत्यात्मरक्षणः॥ २०१॥
एकेनान्यत्र यातव्यं स्वयं दण्डेन वेत्ययम्।
अदृष्टपुरुषस्सन्धिर्दण्डमुख्यात्मरक्षणः॥ २०२॥

---

[1] पद्येऽपि गुरु–पा. [2] समहीनज्यायोरूपस्य सर्वस्य जनस्येत्यर्थः. 'अथ समं सर्वं' इत्यमरः. [3] 'स्वसैन्येन तु सन्धानमात्मामिष इति स्मृतः' इति–का.

मुख्यस्त्रीबन्धनं कुर्यात् पूर्वयोः पश्चिमे त्वरिम् ।
साधयेद् गूढमित्येते दण्डोपनतसन्धयः ॥ २०३ ॥

[परिक्रयादयश्चत्वारः कोशोपनतसन्धयः]

कोशदानेन शेषाणां प्रकृतीनां विमोक्षणम् ।
परिक्रयो भवेत् सन्धिः स एव च यथासुखम् ॥ २०४ ॥
स्कन्धोपनेयो बहुधा ज्ञेयस्सन्धिरुपग्रहः ।
निरुद्धो देशकालाभ्यां अत्ययस्स्यादुपग्रहः ॥ २०५ ॥
विषह्यदानादायत्यां क्षमः स्त्रीबन्धनादपि ।
सुवर्णसन्धिर्विश्वासादेकीभावगतो भवेत् ॥ २०६ ॥
विपरीतः कपालस्स्यात् अत्यादानाभि(द)भाषितः ।
पूर्वयोः प्रणयेत् कुप्यं हस्त्यश्वं [1]वा गरान्वितम् ॥ २०७ ॥
तृतीये प्रणये[2]दर्थं कथयन् कर्मणां क्षयम् ।
तिष्ठेच्चतुर्थ इत्येते कोशोपनतसन्धयः ॥ २०८ ॥

[आदिष्टादयश्चत्वारः देशोपनतसन्धयः]

भूम्येकदेशत्यागेन देशप्रकृतिरक्षणम् ।
आदिष्टसन्धिस्तत्रेष्टो गूढस्तेनोपघातिनः ॥ २०९ ॥
भूमीनामात्तसाराणां मूलवर्जं प्रणामनम् ।
उच्छिन्नसन्धिस्तत्रैष[3] परव्यसनकाङ्क्षिणः ॥ २१० ॥
फलदानेन भूमीनां मोक्षणं स्यादवक्रयः ।
फलातिभुक्तो भूमिभ्यः सन्धिस्स परदूषणः ॥ २११ ॥
कुर्यादवेक्षणं पूर्वौ पश्चिमौ त्वाबलीयसम् ।
आदाय फलमित्येते देशोपनतसन्धयः ॥ २१२ ॥

[निगमनम्]

स्वकार्याणां वशेनैते देशे काले च भाषिताः ।
आबलीयसिकाः कार्यास्त्रिविधा हीनसन्धयः ॥ २१३ ॥

इति षाड्गुण्ये समहीनज्यायसां गुणाभिनिवेशो हीनसन्धयश्च
तृतीयोऽध्यायः, आदित एकशततमः

---

[1] वागुरा–पा. [2] दर्धम् पा. [3] स्तत्रेष्टः–पा.

# त्रिशततमादिसप्तशततमान्तानि प्रकरणानि विगृह्यासनं, सन्धायासनं, विगृह्ययानं, सन्धाययानं, सम्भूयप्रयाणं च

## चतुर्थोऽध्यायः

[आसनभेदाः आसनसामान्ये निमित्तं च]

सन्धिविग्रहयोरासनं यानं च व्याख्यातम्[1] । स्थानमासनमुपेक्षणं चेत्यासनपर्यायाः । विशेषस्तु—गुणैकदेशे स्थानम्, स्ववृद्धिप्राप्त्यर्थमासनम्, उपायानामप्रयोग उपेक्षणमिति ॥

सन्धानकामयोररिविजिगीष्वोः [2]उपहन्तुमशक्तयोः विगृह्यासनं सन्धाय वा[3] ॥

[तत्र विगृह्यासने निमित्तभेदास्त्रयः]

(१) यदा वा पश्येत्—'स्वदण्डैर्मित्राटवीदण्डैर्वा समं ज्यायांसं वा कर्शयितुमुत्सहे' इति, तदा कृतबाह्याभ्यन्तरकृत्यो विगृह्यासीत ॥

(२) यदा वा पश्येत्—'उत्साहयुक्ता मे प्रकृतयस्संहताः विवृद्धाः स्वकर्माण्यव्याहताश्चरिष्यन्ति, परस्य वा कर्माण्युपहनिष्यन्ति' इति, तदा विगृह्यासीत ॥

(३) यदा वा पश्येत्—'परस्यापचरिताः क्षीणा लुब्धाः स्वचक्रस्तेनाटवीव्यथिता वा प्रकृतयः स्वयं उपजापेन वा मामेष्यन्ति' इति; 'सम्पन्ना मे वार्ता, विपन्ना परस्य, तस्य प्रकृतयो दुर्भिक्षोपहता मामेष्यन्ति; विपन्ना मे वार्ता, सम्पन्ना परस्य, तं मे प्रकृतयो न गमिष्यन्ति; विगृह्य चास्य धान्यपशुहिरण्यान्याहरिष्यामि, स्वपण्योपघातीनि वा परपण्यानि निवर्तयिष्यामि, परवणिक्पथाद्वा सारवन्ति मामेष्यन्ति विगृहीते नेतरं, दूष्यामित्राटवीनिग्रहं वा विगृहीतो न करिष्यति, तैरेव वा विग्रहं प्राप्स्यति; मित्रं मे मित्रभावि अभिप्रयातो बह्वल्पकालं तनुक्षयव्ययमर्थं प्राप्स्यति,

[1] पूर्वाचार्यैरिति शेषः. [2] परस्परमपकर्तुमशक्तयोः [3] आसनं कर्तव्यमिति शेषः.

गुणवतीमादेयां वा भूमिं सर्वसन्दोहेन वा मामनादृत्य प्रयातु-कामः कथं न यायात्' इति, परवृद्धिप्रतिघातार्थं प्रतापार्थं च विगृह्यासीत ॥

[अत्राचार्यमतं स्वमतं प्रयोजनान्तरं च]

'तमेव हि प्रत्यावृत्तो ग्रसते' इत्याचार्याः। 'न' इति कौटल्यः—कर्शनमात्रमस्य कुर्यादव्यसनिनः; [1]परिवृद्धया तु वृद्धस्समुच्छेदनम् ॥

एवं परस्य यातव्यः अस्मै साहाय्यमविनष्टः प्रयच्छेत्। तस्मात् सर्वसन्दोहप्रकृतं विगृह्यासीत ॥

[सन्धायासने निमित्तम्]

विगृह्यासनहेतुप्रातिलोम्ये सन्धायासीत ॥

[विगृह्ययाने निमित्तभेदाः]

विगृह्यासनहेतुभिरभ्युच्चितः सर्वसन्दोहवर्जं विगृह्य यायात् ॥

यदा वा पश्येत्—'व्यसनी परः, प्रकृतिव्यसनं वाऽस्य शेषप्रकृतिभिरप्रतिकार्यं, स्वचक्रपीडिता विरक्ता वाऽस्य प्रकृतयः कर्शिता निरुत्साहाः परस्परात् भिन्नाः शक्या लोभयितुम्, अग्न्युदकव्याधिमर[2]कदुर्भिक्षनिमित्तक्षीणपुण्यपुरुषनिचयरक्षावि—धानः परः' इति, तदा विगृह्य यायात् ॥

यदा वा पश्येत्—'मित्रमाक्रन्दश्च मे शूरवृद्धानुरक्तप्रकृति-र्विपरीतप्रकृतिः परः पार्ष्णिग्राहश्चासारश्च, शक्ष्यामि मित्रेणासारं आक्रन्देन पार्ष्णिग्राहं वा विगृह्य यातुम्' इति, तदा विगृह्य यायात् ॥

यदा वा फलमेकहार्यमल्पकालं पश्येत् तदा पार्ष्णिग्राहासा-राभ्यां विगृह्य यायात् ॥

[सन्धाय याने हेतुः]

विपर्यये सन्धाय यायात् ॥

---

[1] परवृद्धया-पा. [2] दुर्भिक्षनिमग्नः क्षी-पा.

[सम्भूयप्रयाणे हेतुः]

यदा वा पश्येत्—'न शक्यमेकेन यातुं, अवश्यं च यातव्यम्' इति, तदा समहीनज्यायोभिस्सामवायिकैस्सम्भूय यायात्; एकत्र निर्दिष्टेनांशेन, अनेकत्रानिर्दिष्टेनांशेन। तेषामसमवाये दण्डमन्यतमस्मिन्निविष्टांशेन याचेत। सम्भूयाभिगमनेन वा निर्विश्येत। ध्रुवे लाभे निर्दिष्टेनांशेन अध्रुवे लाभांशेन॥

[सम्भूययानलब्धधनविभागक्रमः]

अंशो दण्डसमः पूर्वः प्रयाससम उत्तमः।
विलोपे वा यथालाभं प्रक्षेपसम एव वा॥ २१४॥

इति षाड्गुण्ये विगृह्यासनं सन्धायासनं विगृह्ययानं सन्धाययानं संभूयप्रयाणं च चतुर्थोऽध्यायः, आदितो द्विशततमः.

———

# अष्टशततमादिदशशततमान्तानि प्रकरणानि

## [1] यातव्यामित्रयोरभिग्रहचिन्ता, क्षयलोभविरागहेतवः प्रकृतीनां, सामवायिकविपरिमर्शश्च

## पञ्चमोऽध्यायः

[यातव्यामित्रयोर्व्यसनसाम्ये यानप्रकारः]

तुल्यसामन्तव्यसने यातव्यममित्रं वा[2]? इति—

अमित्रमभियायात्, तत्सिद्धौ यातव्यम्। अमित्रसिद्धौ हि यातव्यस्साहाय्यं दद्यान्नामित्रो यातव्यसिद्धौ॥

---

[1] अरिसम्पद्युक्तो व्यसनी यातव्यः. नित्यापकारी सामन्तः अमित्रः. अभिग्रहः—पीडनादिप्रयोजकं यानम्. चिन्ता—सम्प्रधारणम्. [2] पूर्वमभियायात् इति शेषः, एवमग्रेऽपि.

[तयोरेव व्यसनवैषम्ये यानप्रकारः]

गुरुव्यसनं यातव्यं, लघुव्यसनममित्रं वा? इति—

'गुरुव्यसनं सौकर्यतो यायात्' इत्याचार्याः। 'न' इति कौटल्यः—लघुव्यसनममित्रं यायात्। लघ्वपि हि व्यसनमभि-[1]युक्तस्य कृच्छ्रं भवति। सत्यं गुर्वपि गुरुतरं भवति। अनभियुक्तस्तु लघुव्यसनः सुखेन व्यसनं प्रतिकृत्यामित्रो यातव्यमभिसरेत्; पार्ष्णिं गृह्णीयात्॥

[त्रयाणां यातव्यानां यौगपद्ये यानप्रकारः]

यातव्ययौगपद्ये गुरुव्यसनं न्याय्यवृत्तिं, लघुव्यसनमन्याय्य-वृत्तिं, विरक्तप्रकृतिं वा? इति—

विरक्तप्रकृतिं यायात्। गुरुव्यसनं न्यायवृत्तिमभियुक्तं प्रकृतयोऽनुगृह्णन्ति। लघुव्यसनमन्यायवृत्तिमुपेक्षन्ते। विरक्ता बलवन्तमप्युच्छिन्दन्ति। तस्माद्विरक्तप्रकृतिमेव यायात्॥

[द्वयोर्यौगपद्ये तत्प्रकृत्यानुगुण्येन यानप्रकारः]

क्षीणलुब्धप्रकृतिं अपचरितप्रकृतिं वा? इति—

'क्षीणलुब्धप्रकृतिं यायात्। क्षीणलुब्धा हि प्रकृतयस्सुखे-नोपजापं पीडां वोपगच्छन्ति, नापचरिताः प्रधानावग्रहसाध्याः' इत्याचार्याः। 'न' इति कौटल्यः—क्षीणलुब्धा हि प्रकृतयो भर्तरि स्निग्धा भर्तृहिते तिष्ठन्ति। उपजापं वा विसंवादयन्ति, अनुरागे सार्वगुण्यमिति। तस्मादपचरितप्रकृतिमेव यायात्॥

[सबलदुर्बलयोर्यातव्ययोर्यौगपद्ये व्यवस्था]

बलवन्तमन्यायवृत्तिं दुर्बलं वा न्यायवृत्तिम्? इति—

बलवन्तमन्यायवृत्तिं यायात्। बलवन्तमन्यायवृत्तिं अभियुक्तं प्रकृतयो नानुगृह्णन्ति, निष्पातयन्ति, अमित्रं वाऽस्य भजन्ते। दुर्बलं तु न्यायवृत्तिमभियुक्तं प्रकृतयः परिगृह्णन्ति, अनुनिष्पतन्ति वा॥

---

[1] युक्तस्य तु ध्रुवं भवति–पा.

[२. प्रकृतिषु क्षयलोभप्रद्वेषकारणानि त्रिंशत्, तत्परिहारावश्यकता च]

[1]अवक्षेपेण हि सतां असतां [2]प्रग्रहेण च ।
[3]अभूतानां च हिंसानां अधर्म्याणां प्रवर्तनैः ॥ २१५॥

उचितानां चरित्राणां धर्मिष्ठानां निवर्तनैः ।
अधर्मस्य [4]प्रसङ्गेन धर्मस्यावग्रहेण[5] च ॥ २१६ ॥

अकार्याणां च करणैः कार्याणां च प्रणाशनैः ।
अप्रदानैश्च देयानां अदेयानां च [6]साधनैः ॥ २१७ ॥

अदण्डनैश्च दण्ड्यानां दण्ड्यानां [7]चण्डदण्डनैः ।
अग्राह्याणामुपग्राहैः[8] ग्राह्याणां चानभिग्रहैः[9] ॥ २१८ ॥

अनर्थ्यानां च करणैः अर्थ्यानां च विघातनैः ।
अरक्षणैश्च चोरेभ्यः [10]स्वयं च [11]परिमोषणैः ॥ २१९ ॥

[12]पातैः पुरुषकाराणां कर्मणां गुणदूषणैः ।
उपघातैः प्रधानानां मान्यानां चावमाननैः ॥ २२० ॥

[13]विरोधनैश्च वृद्धानां वैषम्येणानृतेन च ।
कृतस्याप्रतिकारेण [14]स्थितस्याकरणेन च ॥ २२१ ॥

राज्ञः प्रमादालस्याभ्यां योगक्षेमवधेन च ।
प्रकृतीनां क्षयो लोभो वैराग्यं चोपजायते ॥ २२२ ॥

क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम् ।
विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम् ॥ २२३ ॥

तस्मात्प्रकृतीनां क्षयलोभविरागकारणानि नोत्पादयेत् । उत्पन्नानि वा सद्यः प्रतिकुर्वीत ॥

---

[1] अवज्ञाकरणेन. अपक्षेपेण–पा. [2] अर्चनेन. [3] अनुचितानाम्. [4] आसक्त्या. [5] प्रत्याख्यानेन. [6] बलात्कारेण हरणैः. [7] अदण्ड्यानां च दण्डनैः–पा. [8] सङ्ग्रहणैः. [9] असङ्ग्रहणैः. [10] स्वानां च–पा. [11] चौर्यकरणैः. [12] त्यागैः. [13] विरोधाचरणैः [14] चिरात् तत्तत्कालेषु कर्तव्यतया व्यवस्थितस्य उत्सवादेः.

[प्रकृतिषु क्षयादिपरिज्ञानचिन्हानि, तत्परि-
हारस्य शक्यत्वाशक्यत्वविवरणं च]

क्षीणा लुब्धा विरक्ता वा प्रकृतयः? इति—

क्षीणाः पीडनोच्छेदनभयात् सद्यस्सन्धिं युद्धं निष्पतनं वा रोचयन्ते। लुब्धाः लोभेनासन्तुष्टाः परोपजापं लिप्सन्ते। विरक्ताः पराभियोगमभ्युत्तिष्ठन्ते।

तासां हिरण्यधान्यक्षयः सर्वोपघाती कृच्छ्रप्रतीकारश्च। युग्म(ग्य)पुरुषक्षयो हिरण्यधान्यसाध्यः। लोभ ऐकदेशिको मुख्यायत्तः परार्थेषु शक्यः प्रतिहन्तुमादातुं वा। विरागः [1]प्रधानावग्रहसाध्यः। निष्प्रधाना हि प्रकृतयो भोग्या भवन्त्यनुपजाप्याश्चान्येषामनापत्सहास्तु। प्रकृतिमुख्यप्रग्रहैस्तु बहुधा भिन्ना गुप्ता भवन्त्यापत्सहाश्च॥

[विजिगीषुणा सह साह्यार्थं नेतव्यानां गुरुलघु-
भावोपपादनम्]

सामवायिकानामपि सन्धिविग्रहकारणान्यवेक्ष्य शक्तिशौचयुक्तौ सम्भूय यायात्। शक्तिमान् हि पार्ष्णिग्रहणे [3]यात्रासाहाय्यदाने वा शक्तः; शुचिस्सिद्धौ चासिद्धौ च यथास्थितकारीति॥

तेषां ज्यायसैकेन द्वाभ्यां समाभ्यां वा सम्भूय यातव्यम्? इति—

द्वाभ्यां समाभ्यां श्रेयः, ज्यायसा ह्यवगृहीतश्चरति समाभ्यामतिसन्धानाधिक्ये वा तौ हि सुखौ भेदयितुम्।

दुष्टश्चैको द्वाभ्यां नियन्तुं भेदोपग्रहं चोपगन्तुमिति॥

समेनैकेन द्वाभ्यां हीनाभ्यां वा? इति—

द्वाभ्यां हीनाभ्यां श्रेयः, तौ हि द्विकार्यसाधकौ वश्यौ च भवतः॥

[कार्यसिद्ध्यनन्तरं विजिगीषुकर्तव्याः]

कार्यसिद्धौ तु—

कृतार्थात् ज्यायसो गूढः सापदेशमपस्रवेत्।
अशुचेश्शुचिवृत्तात्तु प्रतीक्षेताविसर्जनात्॥ २२४॥

---

[1] प्रधानपुरुषनिग्रहसाध्यः.

सत्रादपसरेत् यत्तः कलत्रमपनीय वा ।
समादपि हि लब्धार्थात् विश्वस्तस्य भयं भवेत् ॥ २२५ ॥
ज्यायस्त्वे चापि लब्धार्थः समो विपरिकल्पते ।
अभ्युच्चितश्चाविश्वास्यो वृद्धिश्चित्तविकारिणी ॥ २२६ ॥
विशिष्टादल्पमप्यंशं लब्ध्वा तुष्टमुखो व्रजेत् ।
अनंशो वा ततोऽस्याङ्के[1] प्रहृत्य द्विगुणं हरेत् ॥ २२७ ॥

[विजिगीषोः स्वतन्त्रयाने विशेषः]

कृतार्थस्तु स्वयं नेता विसृजेत् सामवायिकान् ।
अपि जीयेत न जयेत् मण्डलेष्टस्तथा भवेत् ॥ २२८ ॥

इति षाड्गुण्ये यातव्यामित्रयोरभिग्रहचिन्ता क्षयलोभविरागहेतवः प्रकृतीनां सामवायिकविपरिमर्शश्च पञ्चमोऽध्यायः. आदितस्त्रिशततमः.

---

# एकादशशततमद्वादशशततमे प्रकरणे संहितप्रयाणिकम्, परिपणितापरिपणितापसृतसन्धयश्च

## षष्ठोऽध्यायः

[कृतसन्धिविजिगीषुसामन्तातिसन्धानप्रकारः]

विजिगीषुर्द्वितीयां प्रकृतिमेवमतिसन्दध्यात् । सामन्तं संहितप्रयाणे योजयेत्—'त्वमितो याहि, अहमितो यास्यामि, समानो लाभः' इति । लाभसाम्ये सन्धिः, वैषम्ये विक्रमः ॥

[अत्र निरूप्यमाणं सन्धिद्वयम्]

सन्धिः परिपणितश्चापरिपणितश्च ॥

---

[1] अङ्के=रध्रे.

[देशकालकार्यभेदानुरोधेन त्रिविधाः परिपणितसन्धयः]

(१) 'त्वमेतं देशं याहि, अहमिमं देशं यास्यामि' इति परिपणितदेशः।

(२) 'त्वमेतावन्तं कालं चेष्टस्व, अहमेतावन्तं कालं चेष्टिष्ये' इति परिपणितकालः।

(३) त्वमेतावत्कार्यं साधय, अहमेतावत् कार्यं साधयिष्यामि' इति परिपणितार्थः॥

[एषां क्रमेण प्रयोगनिमित्तानि]

(१) यदि वा मन्येत—'शैलवननदीदुर्गं अटवीव्यवहितं छिन्नधान्यपुरुषवीवधासारमयवसेन्धनोदकमविज्ञातं प्रकृष्टमन्यभावदेशीयं वा सैन्यव्यायामानामलब्धभौमं वा देशं परो यास्यति, विपरीतमहम्' इति, एतस्मिन् विशेषे परिपणितदेशं सन्धिमुपेयात्॥

(२) यदि वा मन्येत-'प्रवर्षोष्णशीतमतिव्याधिप्रायमुपक्षीणाहारोपभोगं सैन्यव्यायामानां चौपरोधिकं कार्यसाधनानामूनमतिरिक्तं वा कालं परश्चेष्टिष्यते, विपरीतमहम्' इति, एतस्मिन् विशेषे परिपणितकालं सन्धिमुपेयात्॥

(३) यदि वा मन्येत—'प्रत्यादेयं प्रकृतिकोपकं दीर्घकालं महाक्षयव्ययमल्पमनर्थानुबन्धमकल्यमधर्म्यं मध्यमोदासीनविरुद्धं मित्रोपघातकं वा कार्यं परस्साधयिष्यति, विपरीतमहम्' इत्येतस्मिन् विशेषे परिपणितार्थं सन्धिमुपेयात्॥

[परिपणितस्यान्ये चत्वारः प्रकाराः निगमनं च]

एवं देशकालयोः कालकार्ययोः देशकार्ययोः देशकालकार्याणां चावस्थापनात् सप्तविधः परिपणितः। तस्मिन् प्रागेवारभ्य प्रतिष्ठाप्य च स्वकर्माणि, परकर्मसु विक्रमेत॥

[अपरिपणितसन्धिः तदनन्तरकर्तव्यं च]

व्यसनत्वराऽवमानालस्ययुक्तमज्ञं वा शत्रुं अतिसन्धातुकामो देशकालकार्याणामनवस्थापनात् 'संहितौ स्वः' इति सन्धिविश्वासेन परच्छिद्रमासाद्य प्रहरेत्—इत्यपरिपणितः।

# अथ व्यसनाधिकारिकं नाम अष्टममधिकरणम्.

---

## सप्तविंशतिशततमं प्रकरणम्- प्रकृतिव्यसनवर्गः.

### प्रथमोऽध्यायः.

[व्यसनस्वरूपकारणतदाश्रयादि-
परिचिन्तनावश्यकता]

[1] व्यसनयौगपद्ये सौकर्यतो यातव्यं रक्षितव्यं वा-इति[2] व्यसनचिन्ता ॥

[सामान्यतो विशेषतश्च व्यसनविभागः,
व्यसनशब्दार्थश्च]

दैवं मानुषं वा प्रकृतिव्यसनं [3] अनयापनयाभ्यां सम्भवति । गुणप्रातिलोम्यं अभावः प्रदोषः प्रसङ्गः पीडा वा व्यसनम् । व्यस्यत्येनं श्रेयसः इति व्यसनम् ॥

[प्रकृतिसप्तकसम्बन्धिव्यसनेषु आपेक्षिक-
गरीयस्तानिर्णयः]

स्वाम्यमात्यजनपददुर्गकोशदण्डमित्रव्यसनानां पूर्वं पूर्वं गरीय इत्याचार्याः ॥

[तत्र भारद्वाजमतं तन्निरासश्च]

नेति भारद्वाजः —स्वाम्यमात्यव्यसनयोः अमात्यव्यसनं गरीय इति । मन्त्रः मन्त्रफलावाप्तिः कर्मानुष्ठानं आयव्ययकर्म दण्डप्रणयनं अमित्राटवीप्रतिषेधः राज्यरक्षणं व्यसनप्रतीकारः कुमाररक्षणं

[1] शत्रुविजिगीष्वोरुभयोरपीत्यादिः. [2] निर्णयायेति शेषः. [3] अनयः अशुभविधिः, अपनयः प्रासकर्मणामयथाविध्यनुष्ठानम्.

अभिषेकश्च कुमाराणां आयत्तममात्येषु। तेषामभावे तदभावः, छिन्नपक्षस्येव राज्ञश्चेष्टानाशः[1]। व्यसने चासन्नाः परोपजापाः। वैगुण्ये च प्राणबाधः, प्राणान्तिकचरत्वाद्राज्ञः[2] इति॥ नेति कौटल्यः—मन्त्रिपुरोहितादिभृत्यवर्गमध्यक्षप्रचारं पुरुषद्रव्यप्रकृतिव्यसनप्रतीकारं [3]एधनं च राजैव करोति, व्यसनिषु वाऽमात्येषु अन्यानव्यसनिनः करोति, पूज्यपूजने दूष्यावग्रहे च नित्ययुक्तस्तिष्ठति। स्वामी च सम्पन्नः स्वसम्पद्भिः प्रकृतीस्सम्पादयति; स्वयं यच्छीलस्तच्छीलाः प्रकृतयो भवन्ति, उत्थाने प्रमादे च तदायत्तत्वात्; तत्कूटस्थानीयो हि स्वामीति॥

[विशालाक्षमतं तन्निरासश्च]

अमात्यजनपदव्यसनयोर्जनपदव्यसनं गरीयः इति विशालाक्षः। कोशो दण्डः कुप्यं विष्टिर्वाहनं निचयाश्च जनपदादुत्तिष्ठन्ते; तेषामभावो जनपदाभावे। [4]स्वाम्यमात्ययोश्चानन्तर इति। नेति कौटल्यः—अमात्यमूलास्सर्वारम्भाः जनपदस्य—कर्मसिद्धयः स्वतःपरतश्च योगक्षेमसाधनं व्यसनप्रतीकारः शून्यनिवेशोपचयौ दण्डकरानुग्रहश्चेति॥

[पाराशरमतं तन्निरासश्च]

जनपददुर्गव्यसनयोर्दुर्गव्यसनं[5] इति पाराशराः। दुर्गे हि कोशदण्डोत्पत्तिः आपदि स्थानं च जनपदस्य। शक्तिमत्तराश्च पौरा जानपदेभ्यः, नित्याश्च, आपदि सहाया राज्ञः; जानपदास्त्वमित्रसाधारणाः इति। नेति कौटल्यः—जनपदमूलाः दुर्गकोशदण्डसेतुवार्तारम्भाः। शौर्यं स्थैर्यं दाक्ष्यं बाहुल्यं च जानपदेषु। पर्वतान्तर्द्वीपाश्च दुर्गा नाध्युष्यन्ते जनपदाभावात्। कर्षकप्राये तु दुर्गव्यसनम्, आयुधीयप्राये तु जनपदे जनपदव्यसनमिति॥

---

[1] चेष्टा—प्रवृत्तिः, तद्विघातः. [2] राज्ञः इति प्राणेऽन्वेति. अमात्यानामिति शेषः. [3] एधनं अभिवर्धनं, तत्रोक्तानां पुरुषादीनाम्. [4] अतः गरीयस्त्वानिर्णायकवाक्ये जनपदः स्वाम्यमात्ययोर्मध्ये पठनीयः इत्यर्थः. [5] गरीय इति शेषः. एवमग्रेऽपि.

[नारदमतं तन्निरासश्च]

दुर्गकोशव्यसनयोः कोशव्यसनं इति पिशुनः। कोशमूलो हि दुर्गसंस्कारो दुर्गरक्षणं च। दुर्गः कोशादुपजाप्यः परेषाम्। जनपदमित्रामित्रनिग्रहः देशान्तरितानामुत्साहनं दण्डबलव्यवहारः आसारप्रतिग्रहः परचक्राटवीप्रतिषेधश्च[1]। कोशमादाय च व्यसने शक्यमपयातुं, न दुर्गं इति॥ नेति कौटल्यः—[2]दुर्गार्पणः कोशो दण्डस्तूष्णींयुद्धं स्वपक्षनिग्रहो दण्डबलव्यवहारः आसारप्रतिग्रहः परचक्राटवीप्रतिषेधश्च। दुर्गाभावे च कोशः परेषाम्। दृश्यते हि दुर्गवतामनुच्छित्तिः इति॥

[भीष्ममतं तन्निरासश्च]

कोशदण्डव्यसनयोर्दण्डव्यसनं इति कौणपदन्तः। दण्डमूलो हि मित्रामित्रनिग्रहः परदण्डोत्साहनं स्वदण्डप्रतिग्रहश्च। दण्डाभावे च ध्रुवः कोशविनाशः। कोशाभावे च शक्यः कुप्येन भूम्या परभूमिस्वयंग्रहेण वा दण्डः पिण्डयितुम्। दण्डवता च कोशः स्वामिनश्चासन्नवृत्तित्वादमात्यसधर्मा दण्डः इति। नेति कौटल्यः—कोशमूलो हि दण्डः। कोशाभावे दण्डः परं गच्छति, स्वामिनं वा हन्ति। [3]सर्वाभियोगकरश्च कोशो धर्मकामहेतुः। देशकालकार्यवशेन तु कोशदण्डयोरन्यतरः प्रमाणीभवति। लम्भपालनो हि दण्डः कोशस्य। कोशः कोशस्य दण्डस्य च भवति। सर्वद्रव्यप्रयोजनकत्वात् कोशव्यसनं गरीयः इति॥

[उद्धवमतं तन्निरासश्च]

दण्डमित्रव्यसनयोर्मित्रव्यसनं इति वातव्याधिः—मित्रमभृतं व्यवहितं च कर्म करोति; पार्ष्णिग्राहमासारममित्रमाटविकं च प्रतिकरोति; कोशदण्डभूमिभिश्चोपकरोति व्यसनावस्थायोगमिति। नेति कौटल्यः—दण्डवतो मित्रं मित्रभावे तिष्ठत्यमित्रो वा मित्रभावे, दण्डमित्रयोस्तु साधारणे कार्ये सारतः स्वयुद्धदेशकाल-

---

[1] कोशाद्भवतीति शेषः. [2] कोशो .. धश्च दुर्गार्पण इत्यन्वयः. दुर्गाधीन इत्यर्थः. [3] सर्वाभियोगतारकश्च इति—पा.

लाभाद्विशेषः । शीघ्राभियाने त्वमित्राटविकाभ्यन्तरकोपे च न मित्रं विद्यते । व्यसनयौगपद्ये परवृद्धौ च मित्रमर्थयुक्तौ तिष्ठति ।

प्रकृतिव्यसनसंप्रधारणमुक्तमिति ॥

[उक्तगुरुलघुभावस्य क्वचिदप्रयोजकत्वम्]

प्रकृत्यवयवानां तु व्यसनस्य विशेषतः ।
[1]बहुभावोऽनुरागो वा सारो वा कार्यसाधकः ॥ २८६ ॥

[शत्रुविजिगीष्वोर्व्यसनतौल्ये विशेषः]

द्वयोस्तु व्यसने तुल्ये विशेषो गुणतः क्षयात् ।
शेषप्रकृति[2]साद्गुण्यं [3]यदि स्यान्नाभिधेयकम् ॥ २८७ ॥

[गरीयान् कश्चन व्यसनविशेषः]

शेषप्रकृतिनाशस्तु यत्रैकव्यसनाद्भवेत् ।
व्यसनं तद्गरीयः स्यात् प्रधानस्येतरस्य वा ॥ २८८ ॥

इति व्यसनाधिकारिकेऽष्टमेऽधिकरणे प्रकृतिव्यसनवर्गः
प्रथमोऽध्यायः आदितस्सप्तदशशततमः

---

# अष्टाविंशतिशततमं प्रकरणं—राज-राज्ययोर्व्यसनचिन्ता.

## द्वितीयोऽध्यायः

[राज्यकोपनिमित्तयोर्बाह्याभ्यन्तरयोः
राजव्यसनयोर्गुरुलघुभावचिन्ता]

राजा राज्यमिति प्रकृतिसंक्षेपः ॥

राज्ञोऽभ्यन्तरो बाह्यो वा कोप[4] इति । अहिभयादभ्यन्तरः कोपो बाह्यकोपात् पापीयान्, अन्तरमात्यकोपश्चान्तःकोपात् । तस्मात् कोशदण्डशक्तिमात्मसंस्थां कुर्वीत ॥

---

[1] बाहुल्यं स्वामिभक्तिर्वा उत्तमगुणयोगो वा कार्यसाधकः इत्यर्थः.
[2] सद्गुणसमृद्धिः. [3] पूर्वोक्ताविषयं यदि स्यात्. [4] पापीयानिति शेषः.

[अनेकराजकत्वाराजकत्वयोर्गुरुलघुभावचिन्ता]

द्वैराज्यवैराज्ययोः द्वैराज्यमन्योन्यपक्षद्वेषानुरागाभ्यां परस्परसङ्घर्षेण वा विनश्यति। वैराज्यं तु प्रकृतिचित्तग्रहणापेक्षि यथास्थितमन्यैर्भुज्यते इत्याचार्याः॥

नेति कौटल्यः—पितापुत्रयोर्भ्रात्रोर्वा द्वैराज्यं तुल्ययोगक्षेमममात्यावग्रहं वर्तयेतेति। वैराज्ये तु जीवतः परस्याच्छिद्य 'नैतन्मम' इति मन्यमानः कर्शयति, अपवाहयति, पण्यं वा करोति, विरक्तं वा परित्यज्य अपगच्छतीति॥

[अनभ्यस्तशास्त्रोल्लङ्घितशास्त्रयो राज्ञोः
कस्य श्रेयस्त्वमिति चिन्ता]

अन्धश्चलितशास्त्रो[1] वा राजेति—अशास्त्रचक्षुरन्धो यत्किञ्चनकारी दृढाभिनिवेशी परप्रणेयो वा राज्यमन्यायेनोपहन्ति; चलितशास्त्रस्तु यत्र शास्त्राच्चलितमतिर्भवति, शक्यानुनयो भवतीत्याचार्याः। नेति कौटल्यः—अन्धो राजा शक्यते सहायसंपदा यत्र तत्र वा पर्यवस्थापयितुमिति। चलितशास्त्रस्तु शास्त्रादन्यथाभिनिविष्टबुद्धिरन्यायेन राज्यमात्मानं चोपहन्तीति॥

[व्याधितानिराभिषिक्तयोस्तच्चिन्ता]

व्याधितो नवो वा राजेति—व्याधितो राजा राज्योपघातममात्यमूलं, प्राणाबाधं वा राज्यमूलमवाप्नोति। नवस्तु राजा स्वधर्मानुग्रहपरिहारदानमानकर्मभिः प्रकृतिरञ्जनोपकारैश्चरतीत्याचार्याः। नेति कौटल्यः—व्याधितो राजा यथाप्रवृत्तं राजप्रणिधिमनुवर्तयति। नवस्तु राजा बलार्जितं 'ममेदं राज्यम्' इति यथेष्टमनवग्रहश्चरति। सामुत्थायिकैरवगृहीतो वा राज्योपघातं मर्षयति। प्रकृतिष्वरूढः सुखमुच्छेत्तुं भवतीति। व्याधिते विशेषः—पापरोग्यपापरोगी च॥

[1] अधीताननुरुद्धशास्त्र इत्यर्थः.

[ अभिजातानभिजातयोस्तच्चिन्ता ]

नवेऽप्यभिजातोऽनभिजात इति[1]—दुर्बलोऽभिजातो बलवाननभिजातो राजेति–दुर्बलस्याभिजातस्योपजापं दौर्बल्यापेक्षाः प्रकृतयः कृच्छ्रेणोपगच्छन्ति । बलवतश्चानभिजातस्य बलापेक्षास्सुखेन इत्याचार्याः ॥ नेति कौटल्यः—दुर्बलमभिजातं प्रकृतयस्स्वयमुपनमन्ति, जात्यमैश्वर्यप्रकृतिरनुवर्तत इति । बलवतश्चानभिजातस्योपजापं विसंवादयन्ति 'अनुरागे [2]सार्वगुण्यम' इति ॥

[ परचक्रनिमित्ते दैवकृते च व्यसने तच्चिन्ता ]

[3]प्रयासवधात् सस्यवधो मुष्टिवधात् पापीयान् । निराजीवत्वादवृष्टिरतिवृष्टित इति ॥

[ उक्तगुरुलघुभावचिन्तनप्रयोजनम् ]

द्वयोर्द्वयोर्व्यसनयोः प्रकृतीनां बलाबलम् ।
पारम्पर्यक्रमेणोक्तं याने स्थाने च कारणम् ॥ २८९ ॥

इति व्यसनाधिकारिके राजराज्योर्व्यसनचिन्ता
द्वितीयोऽध्यायः आदितोऽष्टादशशततमः

---

# एकोनत्रिंशच्छततमं प्रकरणं–
# पुरुषव्यसनवर्गः
## तृतीयोऽध्यायः

[ व्यसनहेतुकथनेन तज्जन्यदोषाणां परिगणनम् ]

अविद्याविनयः पुरुषव्यसनहेतुः । अविनीतो हि व्यसनदोषान् न पश्यति । तानुपदेक्ष्यामः—

[4]कोपजस्त्रिवर्गः [5]कामजश्चतुर्वर्गः ॥

---

[1] विशेषः इति शेषः. [2] साद्गुण्यम्.–पा. [3] मुष्टिवधास्सस्यवधः पापीयान्, प्रयासवधाद्धेतोरित्यन्वयः. मुष्टिः बीजावापः, तस्याकरणात् निष्पन्नसस्यनाशः पापीयान्. तावच्छ्रमनैष्फल्यकरणादित्यर्थः. [4] वाक्पारुष्यम्, अर्थदूषणम्, दण्डपारुष्यमिति त्रिवर्गः. [5] मृगया, द्यूतम्, स्त्रियः पानमिति चतुर्वर्गः.

[ तद्धेत्वोः कोपकामयोः कोपस्यैव गरीयस्त्वम् ]

तयोः कोपो [1]गरीयान्। सर्वत्र हि कोपश्चरति। प्रायशश्च कोपवशा राजानः प्रकृतिकोपैर्हताः श्रूयन्ते ; कामवशाः क्षयव्यसननिमित्तमरिव्याधिभिः इति ॥

नेति भारद्वाजः—सत्पुरुषाचारः कोपो वैरयातनं अज्ञातवधो भीतमनुष्यता च। नित्यश्च कोपसम्बन्धः पापप्रतिषेधार्थः। कामस्सिद्धिलाभः। सान्त्वं त्यागशीलता सम्प्रियभावश्च। नित्यश्च कामेन सम्बन्धः कृतकर्मणः फलोपभोगार्थं इति ॥

नेति कौटल्यः—द्वेष्यता [2]शत्रुवेदनं [3]दुःखासङ्गश्च कोपः। परिभवो द्रव्यनाशः [4]पाटच्चरद्यूतकारलुब्धकगायकवादकैश्चानर्थ्यैस्संयोगः कामः। तयोः परिभवात् द्वेष्यता गरीयसी ; परिभूतः स्वैः परैश्चावगृह्यते, द्वेष्यस्समुच्छिद्यत इति। द्रव्यनाशाच्छत्रुवेदनं गरीयः ; द्रव्यनाशः कोशाऽऽबाधकः ; शत्रुवेदनं प्राणाऽऽबाधकमिति। अनर्थ्यसंयोगाद्दुःखसंयोगो गरीयान्, अनर्थ्यसंयोगः मुहूर्त (प्रीतिकरो) प्रतीकारो दीर्घक्लेशकरो दुःखानामासङ्ग इति। तस्मात् कोपो गरीयान् ॥

[वाक्पारुष्यापेक्षया अर्थदूषणस्यैव पापीयस्त्वम् ]

वाक्पारुष्यमर्थदूषणं दण्डपारुष्यमिति—वाक्पारुष्यार्थदूषणयोर्वाक्पारुष्यं गरीयः इति विशालाक्षः—परुषमुक्तो हि तेजस्वी तेजसा [5]प्रत्यारोहति। दुरुक्तशल्यं हृदि निखातं तेजस्सन्दीपनमिन्द्रियोपतापि च इति। नेति कौटल्यः— अर्थपूजा वाक्छल्यमपहन्ति ; वृत्तिविलोपस्त्वर्थदूषणम्। दानमदानं विनाशं परित्यागो वा अर्थस्येत्यर्थदूषणम् ॥

[ अर्थदूषणात् दण्डपारुष्यस्यैव पापीयस्त्वम् ]

अर्थदूषणदण्डपारुष्ययोरर्थदूषणं गरीयः इति पाराशराः—अर्थमूलौ धर्मकामौ, अर्थप्रतिबन्धश्च लोको वर्तते, तस्योपघातो

---

[1] पापीयानिति यावत्. [2] शत्रुलाभः. [3] दुःखयोगश्च कोपहेतुरित्यर्थः. अनर्थस्य संयोगः दुःखसङ्गतश्च कोपः इति–पा. [4] पाटच्चराः–चोराः. [5] अधिक्षेप्तारं प्रत्याक्रामति.

गरीयान् इति । नेति कौटल्यः—सुमहताऽप्यर्थेन न कश्चन शरीरविनाशमिच्छेत् । दण्डपारुष्याच्च तमेव दोषमन्येभ्यः प्राप्नोति । इति कोपजास्त्रिवर्गः ॥

[मृगयापेक्षया द्यूतस्यैव पापीयस्त्वम्]

कामजस्तु मृगया द्यूतं स्त्रियः पानमिति चतुर्वर्गः । तस्य मृगयाद्यूतयोः मृगया गरीयसी इति पिशुनः । स्तेनामित्रव्यालदावप्रस्खलनभयदिङ्मोहाः क्षुत्पिपासे च प्राणाबाधस्तस्याम् । द्यूते तु जितमेवाक्षविदुषा ; यथा जयत्सेनदुर्योधनाभ्याम् इति । नेति कौटल्यः—तयोरप्यन्यतरपराजयोऽस्तीति नलयुधिष्ठिराभ्यां व्याख्यातम् । तदेव विजितद्रव्यमामिषं वैरानुबन्धश्च । सतोऽर्थस्य विप्रतिपत्तिरसतश्चार्जनमप्रतिभुक्तनाशो मूत्रपुरीषधारणबुभुक्षादिभिश्च व्याधिलाभ इति द्यूतदोषाः । मृगयायां तु व्यायामः, श्लेष्मपित्तमेदस्स्वेदनाशः, चले [1] स्थिरे च काये लक्षपरिचयः, [2] कोपभयस्थानेहितेषु च मृगाणां चित्तज्ञानं अनित्ययानं चेति ॥

[द्यूतापेक्षया स्त्रीव्यसनस्यैव पापीयस्त्वम्]

द्यूतस्त्रीव्यसनयोः कैतवव्यसनम् इति कौणपदन्तः । सातत्येन हि निशि प्रदीपे, मातरि च मृतायां, दीव्यत्येव कितवः ; कृच्छ्रे च प्रतिपृष्टः कुप्यति । स्त्रीव्यसनेषु तु स्नानप्रतिकर्मभोजनभूमिषु भवत्येव धर्मार्थपरिप्रश्नः । शक्या च स्त्री राजहिते नियोक्तुम् ; उपांशुदण्डेन व्याधिना वा व्यावर्तयितुमवस्रावयितुं वा इति । नेति कौटल्यः-सप्रत्यादेयं द्यूतं, निष्प्रत्यादेयं स्त्रीव्यसनम् । अदर्शनं, कार्यनिर्वेदः, कालातिपातनादनर्थधर्मलोपश्च, तन्त्रदौर्बल्यं, पानानुबन्धश्चेति ॥

[स्त्रीव्यसनात् पानव्यसनस्यैव पापीयस्त्वम्]

स्त्रीपानव्यसनयोः स्त्रीव्यसनम् इति वातव्याधिः—स्त्रीषु हि बालिश्यमनेकविधं निशान्तप्रणिधौ व्याख्यातम् । पाने तु शब्दादीनामिन्द्रियार्थानामुपभोगः प्रीतिदानं परिजनपूजनं कर्मश्रमवधश्च इति । नेति कौटल्यः—स्त्रीव्यसने भवत्य-

---

[1] स्थिते इति–पा. [2] कोपनिमित्तेषु भयनिमित्तेषु च चेष्टितेषु.

पत्योत्पत्तिरात्मरक्षणं चान्तर्दारेषु, विपर्ययो वा बाह्येषु, अगम्येषु तु सर्वोच्छित्तिः। तदुभयं पानव्यसने। पानसम्पत्—संज्ञानाशः अनुन्मत्तस्योन्मत्तत्वं अप्रेतस्य प्रेतत्वं [1]कौपीनदर्शनं श्रुतप्रज्ञाप्राणवित्तमित्रहानिः सद्भिर्वियोगः अनर्थ्यसंयोगः तन्त्रीगीतनैपुण्येषु चार्थघ्नेषु प्रसङ्गः इति ॥

[द्यूतापेक्षयापि पानव्यसनस्यैव पापीयस्त्वम्]

द्यूतमद्ययोः द्यूतमेकेषाम्। पणनिमित्तो जयः पराजयो वा, प्राणिषु निश्चेतनेषु वा पक्षद्वैधेन प्रकृतिकोपं करोति। विशेषतश्च सङ्घानां सङ्घधर्मिणां च राजकुलानां द्यूतनिमित्तो भेदः; तन्निमित्तो विनाश इति। अन्येषां [2]असत्प्रग्रहः पापिष्ठतमो व्यसनानां [3]तन्त्रदौर्बल्यादिति ॥

[उक्तार्थसङ्ग्रहः]

असतां प्रग्रहः कामः कोपश्चावग्रहस्सताम्।<br>
व्यसनं दोषबाहुल्यात् अत्यन्तमुभयं मतम् ॥ २९० ॥<br>
तस्मात् कोपं च कामं च व्यसनारम्भमात्मवान्।<br>
परित्यजेन्मूलहरं वृद्धसेवी जितेन्द्रियः ॥ २९१ ॥

इति व्यसनाधिकारिके पुरुषव्यसनवर्गस्तृतीयोऽध्यायः

आदित एकोनविंशतिशततमः

---

# त्रिंशदेकत्रिंशद्द्वात्रिंशच्छततमानि प्रकरणानि—पीडनवर्गः स्तम्भवर्गः कोशसङ्गवर्गश्च.

## चतुर्थोऽध्यायः.

[चतस्रो दैवपीडाः, तत्र अग्न्यपेक्षया उदकपीडाया गरीयस्त्वम्]

दैवपीडनम्—अग्निरुदकं व्याधिर्दुर्भिक्षं मरकः इति। अग्न्युदकयोः अग्निपीडनमप्रतीकार्यं सर्वदाहि च, शक्योपगमनं

[1] गुह्यानामपि प्रकाशनम्. [2] असत्पूजाहेतुभूता मद्यपानासक्तिः. [3] स्वराज्यचिन्ताया एवापगमादित्यर्थः. मतमिति शेषः. इदं मतद्वयमपि कौटल्यस्यापि संमतम्.

[1]तार्याबाधं उदकपीडनमित्याचार्याः । नेति कौटल्यः—अग्निः ग्राममर्धग्रामं वा दहति ; उदकवेगस्तु ग्रामशतप्रवाहीति ॥

[व्याध्यपेक्षया दुर्भिक्षस्य, ततोऽपि
मरकस्य च गरीयस्त्वम्]

व्याधिदुर्भिक्षयोः-व्याधिः प्रेतव्याधितोपसृष्टपरिचारकव्यायामोपरोधेन कर्माण्युपहन्ति, दुर्भिक्षं पुनः अकर्मोपघाति [2]हिरण्यपशुकरदायि च इत्याचार्याः । नेति कौटल्यः—एकदेशपीडनं व्याधिः शक्यप्रतीकारश्च ; सर्वदेशपीडनं दुर्भिक्षं प्राणिनामजीवनायेति । तेन मरको व्याख्यातः ॥

[क्षुद्रप्रधानक्षययोः प्रधानक्षयस्यैव गरीयस्त्वम्]

क्षुद्रकमुख्यक्षययोः—क्षुद्रकक्षयः कर्मणामयोगक्षेमं करोति, मुख्यक्षयः कर्मानुष्ठानोपरोधधर्मा इत्याचार्याः । नेति कौटल्यः—शक्यः क्षुद्रकक्षयः प्रतिसंधातुं, बाहुल्यात् क्षुद्रकाणां; न मुख्यक्षयः । सहस्रेषु हि मुख्यो भवत्येको न वा, सत्त्वप्रज्ञाधिक्यादाश्रयत्वात् क्षुद्रकाणामिति ॥

[मानुषपीडासु स्वसैन्यपीडनात्परसैन्य-
पीडनस्यैव गरीयस्त्वम्]

स्वचक्रपरचक्रयोः—स्वचक्रमतिमात्राभ्यां [3]दण्डकराभ्यां पीडयति, अशक्यं च वारयितुं; परचक्रं तु शक्यं प्रतियोद्धुमपसारेण सन्धिना वा मोक्षयितुं इत्याचार्याः । नेति कौटल्यः स्वचक्रपीडनं प्रकृतिपुरुषमुख्योपग्रहविघाताभ्यां शक्यते वारयितुम्, एकदेशं वा पीडयति ; सर्वदेशपीडनं तु परचक्रं [4]विलोपघातदाहविध्वंसनापवाहनैः पीडयतीति ॥

[प्रकृतिविवादाद्राजविवादस्यैव गरीयस्त्वम्]

प्रकृतिराजविवादयोः—प्रकृतिविवादः प्रकृतीनां भेदकः पराभियोगानावहति, राजविवादस्तु प्रकृतीनां द्विगुणभक्तवेतनपरि-

---

[1] नौकादिप्रतीकार्याबाधम्. [2] हिरण्यरूपं पशुरूपं च करं ददाति इत्यर्थः.
[3] अपकाराभ्याम्–पा. [4] बिलपदं चौर्यपरम्.

द्वारकरो भवतीत्याचार्याः। नेति कौटल्यः—शक्यः प्रकृतिविवादः प्रकृतिमुख्योपग्रहेण कलहस्थानापनयनेन वा वारयितुं; विवदमानास्तु प्रकृतयः परस्परसङ्घर्षेणोपकुर्वन्ति। राजविवादस्तु पीडनोच्छेदनाय प्रकृतीनां [1]द्विगुणव्यायामसाध्यः इति ॥

[देशीयजनक्रीडापेक्षया राजक्रीडाया एव गरीयस्त्वम्]

देशराजविहारयोः—देशविहारस्त्रैकाल्येन कर्मफलोपघातं करोति; राजविहारस्तु कारुशिल्पिकुशीलववाग्जीवनवैदेहकोपकारं करोति इत्याचार्याः। नेति कौटल्यः—देशविहारः [2]कर्मश्रमवधार्थमल्पं भक्षयति; भक्षयित्वा च भूयः कर्मसु योगं गच्छति। राजविहारस्तु स्वयंवल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः पीडयतीति ॥

[युवराजविहारापेक्षया देवीविहारस्यैव गरीयस्त्वम्]

[3]सुभगाकुमारयोः—कुमारः स्वयं वल्लभैश्च स्वयंग्राहप्रणयपण्यागारकार्योपग्रहैः[4] पीडयति, सुभगा विलासोपभोगेन इत्याचार्याः। नेति कौटल्यः—शक्यः कुमारो मन्त्रिपुरोहिताभ्यां वारयितुं, न सुभगा; बालिश्यादनर्थ्यजनसंयोगाच्चेति ॥

[श्रेणीनिमित्तपीडापेक्षया मुख्यनिमित्तपीडाया एव गरीयस्त्वम्]

श्रेणीमुख्ययोः—[5]श्रेणी बाहुल्यादनवग्रहा स्तेयसाहसाभ्यां पीडयति; मुख्यः कार्यानुग्रहविघाताभ्याम् इत्याचार्याः। नेति कौटल्यः—सुव्यावर्त्या श्रेणी समानशीलव्यसनत्वात्, श्रेणीमुख्यैकदेशोपग्रहेण वा। [6]स्तम्भयुक्तो मुख्यः परप्राणद्रव्योपघाताभ्यां पीडयतीति ॥

---

[1] प्रकृतिविवादप्रशमनापेक्षितप्रयत्नद्विगुणप्रयत्नप्रशमनीयः इत्यर्थः. [2] वधः=निवारणम्. [3] सुभगा-देवी, कुमारः=युवराजः, तद्विहारयोर्मध्ये. [4] जनानिति शेषः. [5] आयुधीयकर्षकाणामन्योन्यसङ्गतानां सङ्घः श्रेणी. [6] स्तम्भः=गर्वः

[ सन्निधातृपीडापेक्षया समाहर्तृपीडाया
एव गरीयस्त्वम् ]

सन्निधातृसमाहर्त्रोः—सन्निधाता कृतविदूषणात्ययाभ्यां पीडयति, समाहर्ता करणाधिष्ठितः प्रदिष्टफलोपभोगी भवति इत्याचार्याः । नेति कौटल्यः—सन्निधाता कृतावस्थमन्यैः कोशप्रवेश्यं प्रतिगृह्णाति । समाहर्ता तु पूर्वमर्थमात्मनः कृत्वा पश्चाद्राजार्थं करोति, प्रणाशयति वा, परस्वादाने च स्वप्रत्ययश्चरतीति ॥

[ अन्तपालवणिक्पीडयोर्वणिक्पीडाया
एव गरीयस्त्वम् ]

अन्तपालवैदेहकयोः—अन्तपालश्चोरप्रसङ्गदेयात्यादानाभ्यां वणिक्पथं पीडयति, वैदेहकस्तु पण्यप्रतिपण्यानुग्रहैः प्रसाधयति इत्याचार्याः । नेति कौटल्यः—अन्तपालः [1] पण्यसम्पातानुग्रहेण वर्तयति । वैदेहकास्तु सम्भूय पण्यानामुत्कर्षापकर्षं कुर्वाणाः [2] 'पणे पणशतं, कुम्भे कुम्भशतम्' इत्याजीवन्ति ।

[ विजिगीषुकुलीनाधिगतभूम्यपेक्षया पशुव्रजोपरुद्धाया एव भूमेर्मोक्षयितव्यता ]

[3] अभिजातोपरुद्धा भूमिः पशुव्रजोपरुद्धा वा [4]—इति । अभिजातोपरुद्धा भूमिः महाफलाऽप्यायुधीयोपकारिणी न क्षमा मोक्षयितुं व्यसनाबाधभयात्, पशुव्रजोपरुद्धा तु कृषियोग्या क्षमा मोक्षयितुं; विवीतं हि क्षेत्रेण बाध्यते इत्याचार्याः । नेति कौटल्यः—अभिजातोपरुद्धा भूमिरत्यन्तमहोपकाराऽपि क्षमा मोक्षयितुं; व्यसनाबाधभयात् । पशुव्रजोपरुद्धा तु कोशवाहनोपकारिणी न क्षमा मोक्षयितुमन्यत्र सस्यवापोपरोधादिति ॥

[1] पण्यानां सम्भूयागमनजन्येन लाभेन. [2] अत्यधिकलाभग्रहणपरिपाटीवर्णनमिदम्. [3] विजिगीषुकुलीनाधिगता. [4] मोक्षयितव्येति शेषः.

[ प्रतिरोधकाटविकपीडयोराटविकपीडाया
एव गरीयस्त्वम् ]

प्रतिरोधकाटविकयोः—प्रतिरोधकाः रात्रिसत्रचराः शरीराक्रमिणो नित्याश्शतसहस्रापहारिणः प्रधानकोपकाश्च, व्यवहिताः प्रत्यन्तारण्यचराश्चाटविकाः प्रकाशा दृश्याश्चरन्त्येकदेशघातकाश्च इत्याचार्याः। नेति कौटल्यः—प्रतिरोधकाः प्रमत्तस्यापहरन्ति; अल्पाः कुण्ठाः सुखाः ज्ञातुं गृहीतुं च; स्वदेशस्थाः प्रभूता विक्रान्ताश्चाटविकाः। प्रकाशयोधिनोऽपहर्तारो हन्तारश्च देशानां राजसधर्माण इति॥

[ मृगवनाद्धस्तिवनस्यैव पीडने गरीयस्त्वम् ]

मृगहस्तिवनयोः—मृगाः प्रभूताः प्रभूतमांसचर्मोपकारिणो मन्दग्रासावक्लेशिनस्सुनियम्याश्च। विपरीता हस्तिनो गृह्यमाणाः दुष्टाश्च देशविनाशायेति॥

[ स्वपरनगरोपकारयोः परनगरोपकारस्यैव
अतिशयितस्वपीडावहत्वम् ]

स्वपरस्थानीयोपकारयोः—स्वस्थानीयोपकारो धान्यपशुहिरण्यकुप्योपकारो जानपदानामापद्यात्मधारणः। विपरीतः परस्थानीयोपकारः॥ इति पीडनानि॥

[ स्तम्भवर्गः ]

[1] आभ्यन्तरो मुख्यस्तम्भः, बाह्यो मित्राटवीस्तम्भः इति स्तम्भवर्गः॥

[ [2] कोशसङ्गवर्गः ]

[3] ताभ्यां पीडनैर्यथोक्तैश्च [4] पीडितः, [5] सक्तो मुख्येषु, परिहारोपहतः, प्रकीर्णः, मिथ्यासंहृतः, सामन्ताटवीहृतः—इति कोशसङ्गाः॥

---

[1] स्तम्भः=राजदेयद्रव्यार्पणप्रतिबन्धः, स च द्विविधः. तत्र राष्ट्रमुख्यकृतः आभ्यन्तरः, मित्राटविककृतः-बाह्य इत्यर्थः. [2] कोशसंयोजनीयस्य करादेः कोशाद्बहिरवस्थापनं कोशसङ्गपदार्थः. [3] उक्तस्तम्भाभ्यां. [4] दैवमानुषरूपैः. [5] राष्ट्रमुख्यैरेव भक्षितः.

[ निगमनम् ]

पीडनानामनुत्पत्तावुत्पन्नानां च वारणे ।
यतेत देशवृद्ध्यर्थं नाशे च स्तम्भसङ्गयोः ॥ २९२ ॥

इति व्यसनाधिकारिके पीडनवर्गः स्तम्भवर्गः कोशसङ्गवर्गश्च
चतुर्थोऽध्यायः आदितो विंशतिशततमः

---

# त्रयस्त्रिंशच्छततमचतुस्त्रिंशच्छततमे प्रकरणे—बलव्यसनवर्गः मित्रव्यसनवर्गश्च.

## पञ्चमोऽध्यायः

[ चतुस्त्रिंशत बलव्यसनानि ]

बलव्यसनानि —[1] अमानितं, विमानितं, अभृतं, व्याधितं, नवागतं, दूरायातं, परिश्रान्तं, परिक्षीणं, प्रतिहतं, हताग्रवेगं, अनृतुप्राप्तं, अभूमिप्राप्तं, आशानिर्वेदि, परिसृप्तं, कलत्रगर्हि, अन्तश्शल्यं, कुपितमूलं, भिन्नगर्भं, अपसृतं, अतिक्षिप्तं, उपनिविष्टं, समाप्तं, उपरुद्धं, [2] उपक्षिप्तं, [3] छिन्नधान्यपुरुषवीवधं, स्वविक्षिप्तं, मित्रविक्षिप्तं, दूष्ययुक्तं, दुष्टपार्ष्णिग्राहं, शून्यमूलं, अस्वामिसंहतं, भिन्नकूटं, अन्धमिति ॥

[ तेषां क्रमेण द्वयोर्द्वयोर्गुरुलघुभावचिन्तनम् ]

तेषाममानितविमानितयोः —अमानितं कृतार्थमानं युध्येत, न विमानितमन्तःकोपम् ॥

[4] अभृतव्याधितयोः अभृतं तदात्वकृतवेतनं युध्येत, न व्याधितमकर्मण्यम् ॥

---

[1] एषां स्वरूपमपि मूल एव स्पष्टम्. [2] परिक्षिप्तम्—पा. [3] छिन्नधान्यं छिन्नपुरुषवीवधं चेति द्वयं विवक्षितम्. [4] अभृतः=अदत्तवेतनः.

नवागतदूरायातयोः—नवागतमन्यत उपलब्धदेशमनवमिश्रं युध्येत, न दूरायातमायतगतपरिक्लेशम् ॥

परिश्रान्तपरिक्षीणयोः—परिश्रान्तं स्नानभोजनस्वप्नलब्धविश्रमं युध्येत, न परिक्षीणमन्यत्राहवे क्षीणयुग्यपुरुषम् ॥

प्रतिहतहताग्रवेगयोः—प्रतिहतमग्रपातभग्नं प्रवीरपुरुषसंहतं युध्येत, न हताग्रवेगमग्रपातहतप्रवीरम् ॥

[1] अनृत्वभूमिप्राप्तयोः—अनृतुप्राप्तं यथर्तुयोग्ययुग्यशस्त्रावरणं युध्येत, नाभूमिप्राप्तमवरुद्धप्रसारव्यायामम् ॥

[2] आशानिर्वेदिपरिसृप्तयोः—आशानिर्वेदि लब्धाभिप्रायं युध्येत, न परिसृप्तमपसृतमुख्यम् ॥

[3] कलत्रगर्ह्यन्तश्शल्ययोः—कलत्रगर्ह्युन्मुच्य कलत्रं युध्येत, नान्तश्शल्यमन्तरमित्रम् ॥

[4] कुपितमूलभिन्नगर्भयोः—कुपितमूलं प्रशमितकोपं सामादिभिर्युध्येत, न भिन्नगर्भमन्योन्यस्माद्भिन्नम् ॥

अपसृतातिक्षिप्तयोः—अपसृतमेकराज्यातिक्रान्तं मन्त्रव्यायामाभ्यां सत्रमित्रापाश्रयं युध्येत, नातिक्षिप्तमनेकराज्यातिक्रान्तं बह्वाबाधत्वात् ॥

उपनिविष्टसमाप्तयोः—उपनिविष्टं [5] पृथग्यानस्थानमतिसन्धातारं युध्येत, न समाप्तमारणैकस्थानयानम् ॥

उपरुद्धपरिक्षिप्तयोः—[6] उपरुद्धमन्यतो निष्क्रम्योपरोद्धारं प्रतियुध्येत, न परिक्षिप्तं सर्वतः प्रतिरुद्धम् ॥

[7] छिन्नधान्यपुरुषवीवधयोः—छिन्नधान्यमन्यतो धान्यमानीय जङ्गमस्थावराहारं वा युध्येत, न छिन्नपुरुषवीवधमनभिसारम् ॥

स्वविक्षिप्तमित्रविक्षिप्तयोः—स्वविक्षिप्तं स्वभूमौ विक्षिप्तं सैन्यमापदि शक्यमवस्रावयितुं, न मित्रविक्षिप्तं विप्रकृष्टदेशकालत्वात् ॥

[1] अनृतुप्राप्तं—युद्धायोग्ये ऋतौ प्राप्तम्. अभूमिः-युद्धानर्हः प्रदेशः. [2] आशानिर्वेदि—अप्राप्तेष्टवस्तुकम्. मुख्यवर्जितं—परिसृप्तम्. [3] अन्तर्द्वेषयुक्तं—अन्तश्शल्यम्. [4] मूलं—प्रधानः. [5] अरिणा सहेत्यादिः. [6] एकतः इत्यादिः. [7] छिन्नधान्यछिन्नपुरुषवीवधयोः इत्यर्थः.

दूष्ययुक्तदुष्टपार्ष्णिग्राहयोः--दूष्ययुक्तमाप्तपुरुषाधिष्ठितमसंहतं युध्येत, न दुष्टपार्ष्णिग्राहं पृष्ठाभिघातत्रस्तम् ॥

शून्यमूलास्वामिसंहतयोः--शून्यमूलं कृतपौरजानपदारक्षं सर्वसंदोहेन युध्येत, नास्वामिसंहतं राजसेनापतिहीनम् ॥

[1] भिन्नकूटान्धयोः--भिन्नकूटमन्याधिष्ठितं युध्येत, नान्धं [2] अदेशिकं इति ॥

[उक्तबलव्यसनपरिहारोपायाः]

दोषशुद्धिर्बलावापः [3]सत्रस्थानातिसंहितम् ।
सन्धिश्चोत्तरपक्षस्य बलव्यसनसाधनम् ॥ २९३ ॥
रक्षेत् स्वदण्डं व्यसने शत्रुभ्यो नित्यमुत्थितः ।
प्रहरेत् दण्डरन्ध्रेषु शत्रूणां नित्यमुत्थितः ॥ २९४ ॥

[दुस्साधमित्रव्यसनवर्गः]

अभियातं स्वयं मित्रं संभूयान्यवशेन वा ।
परित्यक्तमशक्त्या वा लोभेन प्रणयेन वा ॥ २९५ ॥
विक्रीतमभियुञ्जाने सङ्ग्रामे वाऽपवर्तिना [4] ।
द्वैधीभावेन वा मित्रं यास्यता वाऽन्यमन्यतः ॥ २९६ ॥
पृथग्वा सहयाने वा विश्वासेनातिसंहितम् ।
भयावमानालस्यैर्वा व्यसनान्न प्रमोक्षितम् [5] ॥ २९७ ॥
अवरुद्धं स्वभूमिभ्यः समीपाद्वा भयाद्गतम् ।
[6] आच्छेदनाददानाद्वा दत्त्वा वाऽप्यवमानितम् ॥ २९८ ॥
अत्याहारितमर्थं वा स्वयं परमुखेन वा ।
अतिभारे नियुक्तं वा भङ्क्त्वा परमवस्थितम् ॥ २९९ ॥
उपेक्षितमशक्त्या वा प्रार्थयित्वा विरोधितम् ।
कृच्छ्रेण साध्यते मित्रं सिद्धं चाशु विरज्यति ॥ ३०० ॥

---

[1] प्रधानसेनाध्यक्षशून्यं भिन्नकूटम्, अन्धं--अज्ञातशत्रुवृत्तिकम्. [2] उपदेष्टृरहितम्. [3] सत्रस्थानं--अरण्ये वासः. अतिसंहितं--वञ्चनम्. [4] मध्ये निवर्तमानेन. [5] अनिस्तारितम्. [6] बलेन द्रव्यापहरणात्.

[सुसाधमित्रव्यसनवर्गः]

कृतप्रयासं मान्यं वा मोहान्मित्रममानितम् ।
मानितं वा न सदृशं भक्तितो वा निवारितम् ॥ ३०१ ॥
मित्रोपघातत्रस्तं वा शङ्कितं वाऽरिसंहितात् ।
दूष्यैर्वा भेदितं मित्रं साध्यं सिद्धं[1] च तिष्ठति ॥ ३०२ ॥

[व्यसनसामान्योत्पादावकाशादानो-
पदेशेन निगमनम्]

तस्मान्नोत्पादयेदेनान् दोषान् मित्रोपघातकान् ।
उत्पन्नान्वा प्रशमयेत् गुणैर्दोषोपघातिभिः ॥ ३०३ ॥
यतो निमित्तं व्यसनं प्रकृतीनामवाप्नुयात् ।
प्रागेव प्रतिकुर्वीत तन्निमित्तमतन्द्रितः ॥ ३०४ ॥

इति व्यसनाधिकारिके अष्टमाधिकरणे बलव्यसनवर्गः
मित्रव्यसनवर्गश्च पञ्चमोऽध्यायः
आदित एकविंशतिशततमः

---

एतावता कौटलीयस्यार्थशास्त्रस्य व्यसनाधिकारिकं
अष्टमाधिकरणं समाप्तम् .

---

[1] चस्त्वर्थे. तिष्ठति—न विक्रियते.

अथ कौटलीये अर्थशास्त्रे

# अभियास्यत्कर्म नाम

## नवममधिकरणम्

---

### अस्येयं प्रकरणानुक्रमणिका



आहत्य १२ प्रकरणानि, ७ अध्यायाः, ८ कारिकाः.

# एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं सङ्ग्रहः

---

## 135 शक्तिदेशबलाबलज्ञानम् (पु. 359)

विजिगीषोः स्वशक्त्यादिपरिचिन्तनावश्यकता.

उत्साहप्रभावमन्त्रशक्तिषु गरीयस्त्वनिर्णयः.

देशकालयोः तद्बलाबलभावस्य च निरूपणम्.

## 136. यात्राकालाः (पु. 361)

देशबलाद्यनुगुणयात्राकालादिनिरूपणम्.

व्यसनाभियानादिपक्षे मतभेदाश्च.

## 137. बलोपादानकालाः (पु. 362)

बलोपादानकालाः षट्.

क्रमेण स्थानीयभवानां भृतिस्वीकृतानां श्रेणीरूपाणां मित्रशत्र्वाटविकसम्बन्धिनां च बलानां विनियोगकालाः.

शत्र्वाटविकयोर्विशेषः.

## 138. सन्नाहगुणाः (पु. 364, पं. 22)

उक्तबलसन्नाहेषु तारतम्यनिरूपणम्.

बलेषु जातिप्रयुक्तगरीयस्त्वविमर्शः.

## 139. प्रतिबलकर्म (पु. 365, पं. 10)

स्वबलस्य परबलानुरूप्यावश्यकता.

निगमनम्.

## 140. पश्चात्कोपचिन्ता (पु. 366)

पुरस्ताल्लाभापेक्षया पश्चात्कोपस्यैव प्रथमचिन्तनीयत्वं, पापीयस्त्वं च.

पश्चात्कोपसम्भावनायां यानानुष्ठानप्रकारः.

## 141. बाह्याभ्यान्तरकोपप्रतीकारः (पु. 366, पं. 18)

बाह्याभ्यन्तरकोपयोः शङ्कायां यानानुष्ठानप्रकारः.

बाह्याभ्यन्तरकोपनिरूपणं तत्परिहारक्रमश्च.

बाह्यानाममित्रैस्सह सङ्गमननिवारणोपायाः, तद्वैफल्ये कर्तव्या अंशाश्च.

बाह्याभ्यन्तरकोपयोः शत्रुपक्षे उत्पादनविधिः, तदर्थमुपजापादिप्रयोगविषयाश्च.

बाह्याभ्यन्तरयोरुपजपित्रोर्वञ्चकत्वे तयोः सम्भाविताः दुरभिसन्धयः.

तयोरवञ्चकत्वावश्यकता.

### 142. क्षयव्ययलाभविपरिमर्शः (पु. 369)

क्षयव्यययोः स्वरूपं, तदपेक्षया लाभसम्भव एव यानावश्यकता च.
लाभगुणाः द्वादश, तेषां निरूपणं च.
एभिर्लाभसाम्येप्यन्यतमोपादाने निमित्तानि.
लाभविघ्नाः विंशतिः.
तत्र मङ्गलतिथ्यादिनिरीक्षणस्य कार्यातिपातमात्रविषयकत्वम्.
लाभसाधनेषु धनानुकूल्यस्यैव मुख्यत्वम्.

### 143. बाह्याभ्यन्तराश्चापदः (पु. 372)

आपदां हेतुः, आपद्भेदाश्च.
तत्राद्ययोः परिहारे प्रतिजपितृसमाधानस्य हेतुता, तत्प्रकाराश्च.
अन्त्ययोः परिहारे उपजपितृसमाधानस्य हेतुता, तत्प्रकाराश्च.
उक्तास्वापत्सु गुरुलघुभावव्यवस्था.

### 144. दूष्यशत्रुसंयुक्ताः (पु. 374)

द्वे शुद्धापदौ, तयोः प्रतीकारश्च.
द्वे मिश्रापदौ, तयोः प्रतीकारश्च.
तस्य च प्रतीकारस्य फलेग्रहित्वाभावे उपायान्तराश्रयणविधिः.
तत्र सामप्रयोगहेतवः.
दानप्रयोगहेतवः
भेदोपायप्रयोगप्रकाराः.
दण्डोपायप्रयोगप्रकाराः, तद्विषयाश्च.
एषूपायेषु अन्योन्यं विशेषाः, एषां च यातव्याभियोगप्रस्थितमित्रामित्रविषयकत्वं च.
अप्रस्थिततद्विषये विशेषाः, तत्तदुपायानुष्ठानप्रकारश्च.

### 145. अर्थानर्थसंशययुक्ताः (पु. 377)

उत्सेकापनयाभ्यां जन्याः त्रिविधाः आपदः.
अर्थानर्थसंशयरूपाणामापदां निरूपणम्.
अर्थानर्थानुबन्धषड्वर्गः, तदुदाहरणानि च.
समन्ततोऽर्थानर्थतत्संशयापदां प्रतीकारः.
उभयतोऽर्थानर्थापदोः प्रतीकारः.
उभयतस्समन्ततोर्थऽयोः तादृशार्थानर्थयोश्च प्रतीकारः.
उभयतस्समन्ततश्च अनर्थनिश्चयार्थसंशयवत्योश्चापदोः प्रतीकारः.
तादृशसंशये तिष्ठतां मोक्षणप्रकाराः, परिपाट्यश्च.
तादृशाः कालनिमित्ताः आपदः, तत्प्रतीकारश्च.

### 146. तासामुपायविकल्पजाः सिद्धयः (पु. 381, पं. 14)

उक्तानामापदां सामाद्युपायप्रयोगनिबन्धनाः प्रतिक्रियाः.
दैव्यः आपदः, तत्प्रतिक्रियाश्च.

# अथ अभियास्यत्कर्म नाम नवममधिकरणम्

---

## पञ्चत्रिंशत्षट्त्रिंशच्छततमे प्रकरणे— शक्तिदेशकालबलाबलज्ञानं यात्राकालाश्च.

### प्रथमोऽध्यायः

[विजिगीषोः स्वशक्त्यादिपरिचिन्तनोपदेशः]

विजिगीषुरात्मनः परस्य च बलाबलं [1]शक्तिदेशकालयात्राकालबलसमुत्थानकाल[2]पश्चात्कोपक्षयव्ययलाभापदां ज्ञात्वा [3]विशिष्टबलो यायात्ः अन्यथाऽऽसीत ॥

[उत्साहशक्त्यपेक्षया प्रभावशक्तेः प्रशस्ततरत्वम्]

[4]उत्साहप्रभावयोरुत्साहः श्रेयान्। स्वयं हि राजा शूरो बलवानरोगः कृतास्त्रो दण्डद्वितीयोऽपि शक्तः प्रभाववन्तं राजानं जेतुम्। अल्पोऽपि चास्य दण्डः तेजसा कृत्यकरो भवति। निरुत्साहस्तु प्रभाववान् राजा विक्रमाभिपन्नो नश्यति इत्याचार्याः। नेति कौटल्यः—प्रभाववानुत्साहवन्तं राजानं प्रभावेनातिसंधत्ते तद्विशिष्टमन्यं राजानं [5]आवाह्य, हत्वा क्रीत्वा प्रवीरपुरुषान्। प्रभूतप्रभावहयहस्तिरथोपकरणसम्पन्नश्चास्य दण्डः सर्वत्राप्रतिहतश्चरति। उत्साहवतश्च प्रभाववन्तो जित्वा क्रीत्वा च स्त्रियो बालाः पङ्गवोऽन्धाश्च पृथिवीं जिग्युः इति ॥

---

[1] उत्साहप्रभावमन्त्राः शक्तयः. [2] विजिगीषौ याते पश्चात् तद्राष्ट्रवर्तिभिः पार्ष्णिग्राहादिभिः तद्राष्ट्रदहनाद्यारम्भः पश्चात् कोपः. क्षयः- जननाशः. व्ययः— धननाशः. शक्ति ....... पदां बलाबलं ज्ञात्वेत्यन्वयः. [3] शत्रुबलापेक्षयेत्यादिः. [4] शौर्यबलारोग्यादियोगः उत्साहः. कोशदण्डयोगः प्रभावः. [5] स्वसाहाय्यार्थं वरयित्वा.

[ प्रभावशक्त्यपेक्षया मन्त्रशक्तेः गरीयस्त्वम् ]

प्रभावमन्त्रयोः प्रभावः श्रेयान्। मन्त्रशक्तिसंपन्नो हि वन्ध्यबुद्धिरप्रभावो भवति ; मन्त्रकर्म चास्य निश्चितमप्रभावो गर्भधान्यमवृष्टिरिवोपहन्ति इत्याचार्याः। नेति कौटल्यः—मन्त्रशक्तिश्श्रेयसी। प्रज्ञाशास्त्रचक्षुर्हि राजा अल्पेनापि प्रयत्नेन मन्त्रमाधातुं शक्तः ; परान् उत्साहप्रभावतश्च सामादिभिर्योगोपनिषद्भ्यां चातिसंधातुम्। एवमुत्साहप्रभावमन्त्रशक्तीनामुत्तरोत्तराधिकोऽतिसंधत्ते ॥

[ देशनिरूपणम् ]

देशः पृथिवी। तस्यां हिमवत्समुद्रान्तरमुदीचीनं योजनसहस्रपरिमाणं तिर्यक्चक्रवर्तिक्षेत्रम्। तत्र आरण्यो ग्राम्यः पार्वत औदको भौमः समो विषम इति विशेषाः। तेषु यथास्वबलवृद्धिकरं कर्म प्रयुञ्जीत। यत्रात्मनस्सैन्यव्यायामानां भूमिः, अभूमिः परस्य, स उत्तमो देशः ; विपरीतोऽधमः ; साधारणो मध्यमः ॥

[ कालनिरूपणम् ]

कालः शीतोष्णवर्षात्मा। तस्य रात्रिरहः पक्षो मास ऋतुरयनं संवत्सरो युगमिति विशेषाः। तेषु यथास्वबलवृद्धिकरं कर्म प्रयुञ्जीत। यत्रात्मनस्सैन्यव्यायामानामृतुः अनृतुः परस्य, स उत्तमः कालः ; विपरीतोऽधमः ; साधारणो मध्यमः ॥

[ शक्तिदेशकालेषु मिथो बलाबलनिरूपणम् ]

शक्तिदेशकालानां तु शक्तिः श्रेयसी इत्याचार्याः। शक्तिमान् हि निम्नस्थलवतो देशस्य शीतोष्णवर्षवतश्च कालस्य शक्तः प्रतीकारे भवति ॥

देशः श्रेयान् इत्येके—स्थलगतो हि श्वा [1] नक्रं विकर्षति, [2] निम्नगतो नक्रः श्वानमिति ॥

---

[1] ग्राहम्. [2] गभीरजलाशयगतः.

कालश्श्रेयान् इत्येके—दिवा काकः कौशिकं हन्ति, रात्रौ कौशिकः काकम् इति ॥ नेति कौटल्यः—परस्परसाधका हि शक्तिदेशकालाः ॥

[तद्देशबलाद्यनुरोधेन विजययात्रासमुचितकाल-
तदियत्तादीनां निरूपणम्। व्यसनाभि-
यानादिपक्षे मतभेदाश्च]

तैः [1] अभ्युच्चितः, तृतीयं चतुर्थं वा दण्डस्यांशं [2] मूले [3] पार्ष्ण्यां प्रत्यन्ताटवीषु च [4] रक्षां विधाय, कार्यसाधनसहं कोशदण्डं चादाय, क्षीणपुराणभक्तं अगृहीतनवभक्तं असंस्कृतदुर्गं अमित्रं, वार्षिकं चास्य सस्यं, हैमनं च मुष्टिमुपहन्तुं मार्गशीर्षीं यात्रां यायात्। हैमनं चास्य सस्यं वासन्तिकं च मुष्टिमुपहन्तुं चैत्रीं यात्रां यायात्। क्षीणतृणकाष्ठोदकमसंस्कृतदुर्गममित्रं, वासन्तिकं चास्य सस्यं वार्षिकीं वा मुष्टिमुपहन्तुं ज्येष्ठामूलीयां यात्रां यायात् ॥

अत्युष्णमल्पयवसेन्धनोदकं वा देशं हेमन्ते यायात्। तुषारदुर्दिनमगाधनिम्नप्रायं गहनतृणवृक्षं वा देशं ग्रीष्मे यायात्। स्वसैन्यव्यायामयोग्यं परस्यायोग्यं वर्षति यायात् ॥

मार्गशीर्षीं तैषीं चान्तरेण दीर्घकालां यात्रां यायात्; चैत्रीं वैशाखीं चान्तरेण मध्यमकालां, ज्येष्ठामूलीयामाषाढीं चान्तरेण ह्रस्वकालामुपोषिष्यन्; व्यसने चतुर्थीम्। व्यसनाभियानं विगृह्ययाने व्याख्यातम् ॥

प्रायशश्चाचार्याः परव्यसने यातव्यमित्युपदिशन्ति। 'शक्त्युदये यातव्यमनैकान्तिकत्वात् व्यसनानाम्' इति कौटल्यः ॥

यदा वा प्रयातः कर्शयितुमुच्छेत्तुं वा शक्नुयादमित्रं, तदा यायात् ॥

[5] अत्युष्णोपक्षीणे कालेऽहस्तिबलप्रायो यायात्। हस्तिनो हि [6] अन्तस्स्वेदाः कुष्ठिनो भवन्ति, अनवगाहमानास्तोयमपिब-

---

[1] परापेक्षया अतिशयं प्राप्तवान्. [2] स्वराष्ट्रे. [3] पृष्ठभागे. [4] रक्षार्थं स्थापयित्वा. [5] अत्युष्णपर्यवसिते ग्रीष्मादौ. [6] बहिरनिर्गच्छद्भिः अन्तःस्थितैः स्वेदैः दूषितत्वचः.

न्तश्च[1] अन्तरवक्षाराश्चान्धीभवन्ति । तस्मात् प्रभूतोदके देशे, वर्षति च हस्तिबलप्रायो यायात् । विपर्यये खरोष्ट्राश्वबलप्रायः यायात् । देशमल्पवर्षपङ्कं वर्षति मरुप्रायं चतुरङ्गबलो यायात् । समविषमनिम्नस्थलह्रस्वदीर्घवशेन वाऽध्वनो यात्रां विभजेत् ॥

सर्वा वा ह्रस्वकालाः स्युर्यातव्याः कार्यलाघवात् ।
दीर्घाः कार्यगुरुत्वाद्वा[2] वर्षावासः परत्र च ॥ ३०५ ॥

इत्यभियास्यत्कर्मणि नवमेऽधिकरणे शक्तिदेशकाल-
बलाबलज्ञानं यात्राकालाः प्रथमोऽध्यायः
आदितो द्वाविंशतिशततमः

---

# सप्तत्रिंशदष्टत्रिंशदेकोनचत्वारिंशच्छततमानि प्रकरणानि—बलोपादानकालाः, सन्नाहगुणाः प्रतिबलकर्म च

## द्वितीयोऽध्यायः

[बलोपादानकालाः षट्]

मौलभृतकश्रेणीमित्रामित्राटवीबलानां[3] समुद्दानकालाः ।

[तत्र स्थानीयभवानां मौलबलानां
विनियोगे निमित्तानि]

मूलरक्षणादतिरिक्तं मौलबलम्[4], अत्यावापयुक्ता वा मौलाः मूले विकुर्वीरन् इति, बहुलानुरक्तमौलबलः सारबलो

---

[1] उपजातान्तर्दाहाः. अन्तरपक्षाराश्चण्डीभवन्ति. पा. [2] वर्षाकालेषु स्वदेश एव कार्योऽपि वासः कार्यगौरवात् परदेशेऽपि सम्भवेदेवेत्यर्थः. [3] कार्येषु विनियोगकालाः. [4] विद्यते इत्यस्मिन्निमित्ते इत्यर्थः. एवमग्रेऽपि.

वा प्रतियोद्धा व्यायामेन योद्धव्यम् इति, प्रकृष्टेऽध्वनि काले वा क्षयव्ययसहत्वान्मौलानाम् इति, बहुलानुरक्तसम्पाते च यातव्यस्योपजापभयादन्यसैन्यानां भृतादीनामविश्वासे, बलक्षये वा सर्वसैन्यानाम्-इति मौलबलकालः ॥

[भृतिस्वीकृतबलविनियोगे निमित्तानि]

प्रभूतं मे भृतबलं अल्पं च मौलबलम् इति, परस्याल्पं विरक्तं वा मौलबलं, फल्गुप्रायमसारं वा भृतसैन्यम् इति, मन्त्रेण योद्धव्यमल्पव्यायामेन इति, ह्रस्वो देशः कालो वा तनुक्षयव्ययः इति, अल्पसम्पातं शान्तोपजापं विश्वस्तं वा मे सैन्यम् इति, परस्याल्पः प्रसारो हन्तव्यः-इति भृतबलकालः ॥

[जानपदायुधीयगणरूपश्रेणीबलविनियोगे निमित्तानि]

प्रभूतं मे श्रेणीबलं शक्यं मूले यात्रायां चाधातुम् इति, ह्रस्वप्रवासः, श्रेणीबलप्रायः प्रतियोद्धा, मन्त्रव्यायामाभ्यां प्रतियोद्धुकामः, दण्डबलव्यवहारः-इति श्रेणीबलकालः ॥

[मित्रबलविनियोगे निमित्तानि]

प्रभूतं मे मित्रबलं शक्यं मूले यात्रायां चाधातुम्, अल्पः प्रवासो मन्त्रयुद्धाच्च भूयो व्यायामयुद्धम् इति, मित्रबलेन वा पूर्वमटवीनगरीस्थानमासारं वा योधयित्वा पश्चात् स्वबलेन योधयिष्यामि, मित्रसाधारणं वा मे कार्यं, मित्रायत्ता वा मे कार्यसिद्धिः, आसन्नमनुग्राह्यं वा मे मित्रम्, अत्यावापं वाऽस्य [1]साधयिष्यामि-इति मित्रबलकालः ॥

[शत्रुबलविनियोगे निमित्तानि]

प्रभूतं मे शत्रुबलं शत्रुबलेन योधयिष्यामि नगरस्थानमटवीं वा; तत्र मे श्ववराहयोः कलहे चण्डालस्येवान्यतरसिद्धिः भविष्यति, आसाराणामटवीनां वा कण्टकमर्दनमेतत् करिष्यामि,

---

[1] सादयीष्यामि.

अत्युपचितं वा कोपभयान्नित्यमासन्नमरिबलं वासयेदन्यत्रा-भ्यन्तरकोपशङ्कायाः, शत्रुयुद्धावरयुद्धकालश्च-इत्यमित्रबलकालः ॥

[आटविकबलविनियोगकालाः]

तेनाटवीबलकालो व्याख्यातः ॥

मार्गदेशिकं परभूमियोग्यमरियुद्धप्रतिलोममटवीबलप्राय-श्शत्रुर्वा बिल्वं बिल्वेन हन्यतामल्पः प्रसारो हन्तव्य-इत्यटवी-बलकालः ॥

[औत्साहिकाख्यसप्तमबलोपादानस्याव-वश्यकता]

सैन्यमनेकजातीयस्थमुक्तमनुक्तं वा [1]विलोपार्थं यदुत्तिष्ठति, तदौत्साहिकम् । भक्तवेतनविलोपविष्टिप्रतापकरं भेद्यं परेषाम् । अभेद्यं तुल्यदेशजातिशिल्पप्रायं संहतं महत्-इति बलोपादान-कालाः ॥

[तत्र शत्रुबलाटविक बलयोर्विशेषः]

तेषां कुप्यभृतममित्राटवीबलं विलोपभृतं वा कुर्यात् । अमित्रस्य वा बलकाले प्रत्युत्पन्ने शत्रुमवगृह्णीयात्, अन्यत्र वा प्रेषयेत्, अफलं वा कुर्यात्, विक्षिप्तं वा वासयेत्, काले वाऽति-क्रान्ते विसृजेत् । परस्य चैतत् बलसमुद्दानं विघातयेत् आत्मन-स्संपादयेत् ॥

[उक्तबलसन्नाहे तारतम्यनिरूपणम्]

पूर्वंपूर्वं चैषां श्रेयः सन्नाहयितुम् । तद्भावभावित्वान्नित्य-सत्कारानुगमाच्च मौलबलं भृतबलाच्छ्रेयः ॥

नित्यानन्तरं क्षिप्रोत्थायि वश्यं च भृतबलं श्रेणीबलाच्छ्रेयः ॥

जानपदमेकार्थोपगतं तुल्यसङ्घर्षामर्षसिद्धिलाभं च श्रेणीबलं मित्रबलाच्छ्रेयः ॥

अपरिमितदेशकालमेकार्थोपगमाच्च । मित्रबलममित्रबला-च्छ्रेयः ॥

---

[1] परराष्ट्रनाशनार्थम्.

आर्याधिष्ठितममित्रबलमटवीबलाच्छ्रेयः। तदुभयं विलोपार्थम्। अविलोपे व्यसने च ताभ्यामहिभयं स्यात्॥

[ बलेषु जातिप्रयुक्तश्रेयस्त्वविमर्शः ]

ब्राह्मणक्षत्रियवैश्यशूद्रसैन्यानां तेजःप्राधान्यात् पूर्वंपूर्वं श्रेयस्सन्नाहयितुम् इत्याचार्याः। नेति कौटल्यः। प्रणिपातेन ब्राह्मणबलं परोऽभिहारयेत्। प्रहरणविद्याविनीतं तु क्षत्रियबलं श्रेयः; बहुलसारं वा वैश्यशूद्रबलमिति॥

[ स्वबलस्य परबलानुरूप्यावश्यकता,
तत्तन्निरूपणं च ]

तस्मात् 'एवंबलः परः, तस्यैतत्प्रतिबलम्' इति बलसमुद्दानं कुर्यात्॥

हस्तियन्त्रशकटगर्भकुन्तप्रासखर्वटकवेणुशल्यवद्धस्तिबलस्य प्रतिबलम्॥

तदेव पाषाणलगुडावरणाङ्कुशकचग्रहणीप्रायं रथबलस्य प्रतिबलम्॥

तदेवाश्वानां प्रतिबलम्॥

वर्मिणो वा हस्तिनोऽश्वा वा वर्मिणः। कवचिनो रथा आवरणिनः पत्तयश्चतुरङ्गबलस्य प्रतिबलम्॥

[ निगमनम् ]

एवं [1]बलसमुद्दानं परसैन्यनिवारणम्।
विभवेन स्वसैन्यानां कुर्या[2]दङ्गविकल्पशः॥ ३०६॥

इत्यभियास्यत्कर्मणि नवमेऽधिकरणे बलोपदानकालासन्नाहगुणाः
प्रतिबलकर्म च द्वितीयोऽध्यायः.
आदितस्त्रयोविंशतिशततमः.

---

[1] बलानामुपादानम्.   [2] हस्त्यश्वादिरथाङ्गानुरोधेन.

# चत्वारिंशदेकचत्वारिंशच्छततमे प्रकरणे—पश्चात्कोपचिन्ता, बाह्याभ्यन्तर-प्रकृतिकोपप्रतीकारश्च.

## तृतीयोऽध्यायः

[पुरस्ताल्लाभापेक्षया पश्चात्कोपस्यैव प्रथम-
चिन्तनीयत्वं पापीयस्त्वं च]

अल्पः [1]पश्चात्कोपो महान् पुरस्ताल्लाभः इति—अल्पः पश्चात्कोपो गरीयान्। अल्पं पश्चात्कोपं प्रयातस्य दूष्यामित्राटविका हि सर्वतः समेधयन्ति, प्रकृतिकोपो वा। लब्धमपि च महान्तं पुरस्ताल्लाभं एवंभूते भृत्यमित्रक्षयव्ययाः ग्रसन्ते। तस्मात् सहस्रैकीयः पुरस्ताल्लाभस्यायोगः, शतैकीयो वा पश्चात्कोप इति न यायात्। सूचीमुखा ह्यनर्था इति लोकप्रवादः॥

[पश्चात्कोपसम्भावनायां यानानुष्ठानप्रकारः]

पश्चात्कोपे सामदानभेददण्डान् प्रयुञ्जीत। पुरस्ताल्लाभे सेनापतिं कुमारं वा दण्डचारिणं कुर्वीत। बलवान् वा राजा पश्चात्कोपावग्रहसमर्थः पुरस्ताल्लाभमादातुं यायात्॥

[आभ्यन्तरबाह्यकोपयोः शङ्कायां यानानुष्ठानप्रकारः]

आभ्यन्तरकोपशङ्कायां शङ्कितानादाय यायात्। बाह्यकोपशङ्कायां वा पुत्रदारमेषामभ्यन्तरावग्रहं कृत्वा शून्यपालमनेकबलवर्गमनेकमुख्यं च स्थापयित्वा यायात्; न यायाद्वा। 'अभ्यन्तरकोपो बाह्यकोपात् पापीयान्' इत्युक्तं पुरस्तात्॥

[आभ्यन्तरकोपपदार्थः तत्प्रतिविधानं
तत्प्रकारान्तराणि तत्परिहाराश्च]

मन्त्रिपुरोहितसेनापतियुवराजानामन्यतमकोपः अभ्यन्तरकोपः। तमात्मदोषत्यागेन परशक्त्यपराधवशेन वा साधयेत्॥

---

[1] विजिगीषौ जयार्थं प्रस्थिते तद्राज्ये अमित्रैः उत्पाद्यमानः दाहादिरनर्थः पश्चात्कोपः.

महापराधेऽपि पुरोहिते [1] संरोधनं अवस्रावणं वा सिद्धिः; युवराजसंरोधनं निग्रहो वा गुणवत्यन्यस्मिन् सति पुत्रे। ताभ्यां मन्त्रिसेनापती व्याख्यातौ॥

पुत्रं भ्रातरमन्यं वा कुल्यं राज्यग्राहिणमुत्साहेन साधयेत्। उत्साहाभावे गृहीतानुवर्तनसन्धिकर्मभ्यामरिसन्धानभयात्। अन्येभ्यस्तद्विधेभ्यो वा भूमिदानैर्विश्वासयेदेनम्। तद्विशिष्टं स्वयंग्राहं दण्डं वा प्रेषयेत्, सामन्ताटविकान् वा। तैर्विगृहीतमतिसंदध्यात्। अवरुद्धादानं पारग्रामिकं वा योगमातिष्ठेत्। एतेन मन्त्रिसेनापती व्याख्यातौ॥

मन्त्र्यादिवर्जानामन्तरमात्यानामन्यतमकोपोऽन्तरमात्यकोपः। तत्रापि यथार्हमुपायान् प्रयुञ्जीत॥

[बाह्यकोपाः तत्परिहारश्च]

राष्ट्रमुख्यान्तपालाटविकदण्डोपनतानामन्यतमकोपो बाह्यकोपः। तमन्योन्येनावग्राहयेत्। अतिदुर्गप्रतिस्तब्धं वा सामन्ताटविकतत्कुलीनावरुद्धानामन्यतमेनावग्राहयेत्। मित्रेणोपग्राहयेद्वा, यथा नामित्रं गच्छेत्॥

[उक्तानां बाह्यानां अमित्रैस्सहसंगमनवारण-
निवारणयोरुपायाः]

अमित्राद्वा सत्री भेदयेदेनं—'अयं त्वां योगपुरुषं मन्यमानो भर्तर्येव विक्रमयिष्यति, अवाप्तार्थो दण्डचारिणममित्राटविकेषु कृच्छ्रे वा प्रवासे योक्ष्यति, विपुत्रदारमन्ते वा वासयिष्यति, प्रतिहतविक्रमं त्वां भर्तरि पण्यं करिष्यति, त्वया वा सन्धिं कृत्वा भर्तारमेव प्रसादयिष्यति, मित्रमुपकृष्टं वास्य गच्छेत्' इति। प्रतिपन्नमिष्टाभिप्रायैः पूजयेत्। अप्रतिपन्नस्य संश्रयं भेदयेत्—असौ ते योगपुरुषः प्रणिहितः इति॥

---

[1] संरोधनं—बन्धनम्. अवस्रावणम्—देशान्निस्सारणम.

[तादृशोपायप्रयोगवैफल्ये कर्तव्याः अंशाः]

सत्री चैनं [1]अभित्यक्तशासनैर्घातयेत् गूढपुरुषैर्वा। सहप्रस्थायिनो वाऽस्य प्रवीरपुरुषान् यथाभिप्रायकरणेनावाहयेत् । तेन प्रणिहितान् सत्री ब्रूयात्—[2]इति सिद्धिः ॥

[उक्तबाह्याभ्यन्तरकोपयोः शत्रुपक्षे उत्पादनविधिः
तदुत्पादनार्थोपजापादिप्रयोगविषयाश्च]

परस्य चैनान् कोपानुत्थापयेत् । आत्मनश्च शमयेत् ॥

यः कोपं कर्तुं शमयितुं वा शक्तः तत्रोपजापः[3] कार्यः । यस्सत्यसन्धः शक्तः कर्मणि फलावाप्तौ चानुग्रहीतुं विनिपाते च त्रातुं तत्र प्रतिजापः कार्यः ॥

[उपजपितृपरीक्षावश्यकता]

तर्कयितव्यश्च—कल्याणबुद्धिरुताहो शठः इति ॥

[तत्र बाह्यस्य वञ्चकोपजपितुः सम्भाविताः
दुरभिसन्धयः]

शठो हि बाह्योऽभ्यन्तरमेवमुपजपति—'भर्तारं चेद्धत्वा मां प्रतिपादयिष्यति, शत्रुवधो भूमिलाभश्च मे द्विविधो लाभो भविष्यति, अथवा शत्रुरेनमाहनिष्यति हतबन्धुपक्षस्तुल्यदोषदण्डेन वा, उद्विग्नश्च, मे भूयान् कृत्यपक्षो भविष्यति, तद्विधे वाऽन्यस्मिन्नपि शङ्कितो भविष्यति : अन्यमन्यं चास्य मुख्यमभि[3]त्यक्तशासनेन घातयिष्यामि ' इति ॥

[आभ्यन्तरस्य तस्य दुरभिसन्धयः]

अभ्यन्तरो वा शठो बाह्यमेवमुपजपति–' कोशमस्य हरिष्यामि ; दण्डं वाऽस्य हनिष्यामि ; दुष्टं वा भर्तारमनेन घातयिष्यामि; प्रतिपन्नं बाह्यममित्राटविकेषु विक्रमयिष्यामि ; चक्रमस्य सज्यतां ;

---

[1] वध्यतया निश्चिताः पुरुषाः अभित्यक्ताः, तद्वस्त एव दत्वा प्रेषितैः गूढलेखैरित्यर्थः. [2] अनया रीत्या कोपप्रतीकारसिद्धिः इत्यर्थः. [3] कोपोत्पादनार्थो भेदः उपजापः, तदभ्युपगमः प्रतिजापः.

वैरमस्य प्रसज्यताम्; ततस्स्वाधीनो मे भविष्यति; ततो भर्तारमेव प्रसादयिष्यामि; स्वयं वा राज्यं ग्रहीष्यामि; बद्ध्वा वा बाह्यभूमिं भर्तृभूमिं चोभयमवाप्स्यामि; विरुद्धं वाऽऽवाहयित्वा बाह्यं विश्वस्तं घातयिष्यामि; शून्यं वाऽस्य मूलं हरिष्यामि ' इति ॥

[अवञ्चकत्वे परपक्षोपजपितृत्वेन स्वीकारावश्यकता, निगमनं च]

कल्याणबुद्धिस्तु सहजीव्यर्थमुपजपति। कल्याणबुद्धिना संदधीत। शठं 'तथा' इति प्रतिगृह्यातिसंदध्यात् इति॥ एवमुपलभ्य—

परे परेभ्यः स्वे स्वेभ्यः स्वे परेभ्यः स्वतः परे।
रक्ष्याः स्वेभ्यः परेभ्यश्च नित्यमात्मा विपश्चिता ॥ ३०७ ॥

इत्यभियास्यत्कर्मणि पश्चात्कोपचिन्ता, बाह्याभ्यन्तरप्रकृतिकोपप्रतीकारश्च तृतीयोऽध्यायः. आदितश्चतुर्विंशतिशततमः

---

# द्विचत्वारिंशच्छततमं प्रकरणम्—
# क्षयव्ययलाभविपरिमर्शः.
## चतुर्थोऽध्यायः

[क्षयव्ययोः स्वरूपम्, तदपेक्षया लाभसम्भव एव यानावश्यकता च]

युग्यपुरुषापचयः क्षयः। हिरण्यधान्यापचयो व्ययः। ताभ्यां बहुगुणविशिष्टे लाभे यायात् ॥

[लाभगुणाः द्वादश]

आदेयः, प्रत्यादेयः, प्रसादकः, प्रकोपकः, ह्रस्वकालः, तनुक्षयः, अल्पव्ययः, महान्, वृद्ध्युदयः, कल्यः, धर्म्यः, पुरोगश्चेति लाभसम्पत् ॥

[आदेयप्रत्यादेययोः निरूपणम्]

सुप्राप्यानुपाल्यः परेषामप्रत्यादेय इति आदेयः, विपर्यये प्रत्यादेयः तमाददानस्तत्रस्थो वा विनाशं प्राप्नोति ॥

यदि वा पश्येत्—'प्रत्यादेयमादाय कोशदण्डनिचयरक्षा-विधानान्यवस्रावयिष्यामि ; खनिद्रव्यहस्तिवनसेतुबन्धवणिक्प-थानुद्धृतसारान् करिष्यामि ; प्रकृतीरस्य कर्शयिष्यामि ; अप-(आ)वाहयिष्यामि, आयोगेनाराधयिष्यामि वा, ताः परः प्रतियोगेन कोपयिष्यति ; प्रतिपक्षे वाऽस्य पण्यमेनं करिष्यामि ; मित्रमवरुद्धं वाऽस्य प्रतिपादयिष्यामि । मित्रस्य स्वस्य वा देशस्य पीडां अत्रस्थः तस्करेभ्यः परेभ्यश्च प्रतिकरिष्यामि । मित्र-माश्रयं वाऽस्य वैगुण्यं ग्राहयिष्यामि, तदमित्रं विरक्तं तत्कुलीनं प्रतिपत्स्यते सत्कृत्य वाऽस्मै भूमिं दास्यामीति, संहितसमुत्थितं मित्रं मे चिराय भविष्यति' इति प्रत्यादेयमपि लाभमाददीत ॥

इत्यादेयप्रत्यादेयौ व्याख्यातौ ॥

[प्रसादकप्रकोपकयोर्निरूपणम्]

अधार्मिकाद्धार्मिकस्य लाभो लभ्यमानः स्वेषां परेषां च प्रसादको भवति । विपरीतः प्रकोपक[2] इति ॥

मन्त्रिणामुपदेशाल्लाभोऽलभ्यमानः कोपको भवति, 'अय-मस्माभिः क्षयव्ययौ ग्राहितः' इति । दूष्यमन्त्रिणामनादराल्लाभो लभ्यमानः कोपको भवति, 'सिद्धार्थोऽयमस्मान् विनाशयिष्यति' इति । विपरीतः प्रसादकः ॥

इति प्रसादककोपकौ व्याख्यातौ ॥

[ह्रस्वकालत्वादीनां लाभगुणानां व्युत्पादनम्]

गमनमात्रसाध्यत्वात् ह्रस्वकालः । मन्त्रसाध्यत्वात्तनुक्षयः । भक्तमात्रव्ययत्वादल्पव्ययः । तदात्ववैपुल्यान्महान् । अर्थानु-बन्धकत्वात् वृद्ध्युदयः । निराबाधकत्वात् कल्यः । प्रशस्तोपा-दानाद्धर्म्यः । सामवायिकानामनिर्बन्धगामित्वात् पुरोग इति ॥

[एभिर्लाभसाम्येऽप्यन्यतमोपादाने निमित्तानि]

तुल्ये लाभे, देशकालौ शक्त्युपायौ प्रियाप्रियौ जवाजवौ सामीप्यविप्रकर्षौ तदात्वानुबन्धौ सारत्वसातत्ये बाहुल्यबाहुगुण्ये च विमृश्य बहुगुणयुक्तं लाभमाददीत ॥

[विंशतिः लाभविघ्नाः]

लाभविघ्नाः—कामः कोपः साध्वसं कारुण्यं ह्रीः अनार्यभावः मानः सानुक्रोशता परलोकापेक्षा दाम्भिकत्वं [1]अत्यागित्वं दैन्यं असूया हस्तगतावमानः दौरात्मिकं अविश्वासः भयं [2]अनिकारः शीतोष्णवर्षाणामाक्षम्यं मङ्गलतिथिनक्षत्रेष्टित्वमिति[3] ॥

[उक्तेष्वन्तिमायाः कार्यारम्भानुकूलशुभनक्षत्राद्यपेक्षायाः आतिपातिककार्यमात्रविषयत्वम्]

नक्षत्रमतिपृच्छन्तं बालमर्थोऽतिवर्तते ।
अर्थो ह्यर्थस्य नक्षत्रं किं करिष्यन्ति तारकाः ॥ ३०८ ॥

[लाभसाधनेषु धनानुकूल्यस्यैव मुख्यत्वम्]

नाधनाः प्राप्नुवन्त्यर्थान् नरा यत्नशतैरपि ।
अर्थैरर्थाः प्रबध्यन्ते गजाः प्रतिगजैरिव ॥ ३०९ ॥

इत्यभियास्यत्कर्मणि नवमेऽधिकरणे क्षयव्ययलाभविपरिमर्शः चतुर्थोऽध्यायः. आदितः पञ्चविंशतिशततमः.

---

[1] अत्याशित्वम्—पा.. [2] अप्रतिकारः.

[3] "कामोऽक्षमा दक्षिणताऽनुकम्पा ह्रीस्साध्वसं क्रौर्यमनार्यता च ।
दम्भोऽभिमानोऽप्यतिधार्मिकत्वं दैन्यं स्वयूथस्य विमाननं च ॥
द्रोहो भयं शश्वदुपेक्षणं च शीतोष्णवर्षाप्रसहिष्णुता च ।
एतानि काले समुपाहितानि कुर्वन्त्यवश्यं खलु सिद्धिविघ्नम् ॥"
इति कामन्दकः. (स. १५)

# त्रिचत्वारिंशच्छततमं प्रकरणम्—

## बाह्याभ्यन्तराश्चापदः.

### पञ्चमोऽध्यायः

[मुख्य आपद्धेतुः]

सन्ध्यादीनामयथोद्देशावस्थापनमपनयः। तस्मादापदस्संभवन्ति ॥

[चतुर्विधा आपदः]

बाह्योत्पत्तिरभ्यन्तरप्रतिजापा, अभ्यन्तरोत्पत्तिर्बाह्यप्रतिजापा, बाह्योत्पत्तिर्बाह्यप्रतिजापा, अभ्यन्तरोत्पत्तिरभ्यन्तरप्रतिजापा, इत्यापदः ॥

[तत्राद्ययोः परिहारे उपजपितृसमाधानापेक्षया
प्रतिजपितृसमाधानस्यैव मुख्यहेतुता]

यत्र बाह्या अभ्यन्तरानुपजपन्ति, अभ्यन्तरा वा बाह्यान्, तत्रोभययोगे प्रतिजपतः सिद्धिर्विशेषवती। सुव्याजा हि प्रतिजपितारो भवन्ति नोपजपितारः। तेषु प्रशान्तेषु नान्यान् शक्नुयुरुपजपितुमुपजपितारः। कृच्छ्रोपजापा हि बाह्यानामभ्यन्तरास्तेषामितरे वा। महतश्च प्रयत्नस्य वधः परेषां अर्थानुबन्धश्चात्मनोऽन्य इति ॥

[बाह्याभ्यन्तरप्रतिजपितृप्रशमनोपायाः]

अभ्यन्तरेषु प्रतिजपत्सु सामदाने प्रयुञ्जीत। स्थानमानकर्म सान्त्वम्। अनुग्रहपरिहारौ कर्मस्वायोगो वा दानम् ॥

बाह्येषु प्रतिजपत्सु भेददण्डौ प्रयुञ्जीत। सत्रिणो मित्रव्यञ्जना बाह्यानां चारमेषां ब्रूयुः 'अयं वो राजा दूष्यव्यञ्जनैरतिसंधातुकामः, बुध्यध्वम्' इति। दूष्येषु वा दूष्यव्यञ्जनाः प्रणिहिता दूष्यान् बाह्यैर्भेदयेयुः बाह्यान् वा दूष्यैः। दूष्याननुप्रविष्टा वा तीक्ष्णाश्शस्त्ररसाभ्यां हन्युः। आहूय वा बाह्यान् घातयेयुरिति ॥

[अन्त्ययोः परिहारे उपजपितृसमाधानस्य हेतुता]

यत्र बाह्या बाह्यानुपजीवन्ति, अभ्यन्तरान् अभ्यन्तरा वा, तत्रैकान्तयोगे उपजपितुः सिद्धिर्विशेषवती। दोषशुद्धौ हि दूष्या न विद्यन्ते। दूष्यशुद्धौ हि दोषः पुनरन्यान् दूषयति॥

[बाह्याभ्यन्तरोपजपितृप्रशमनोपायाः]

तस्माद्बाह्येषूजपत्सु भेददण्डौ प्रयुञ्जीत। सत्रिणो मित्रव्यञ्जना वा ब्रूयुः 'अयं वो राजा स्वयमादातुकामो [1] विगृहीताः स्थाऽनेन राज्ञा, बुध्यध्वम्' इति। प्रतिजपितुर्वा ततो दूतदण्डाननुप्रविष्टास्तीक्ष्णाः शस्त्ररसादिभिरेषां छिद्रेषु प्रहरेयुः। ततः सत्रिणः प्रतिजपितारमभिशंसेयुः॥

अभ्यन्तरानभ्यन्तरेषूपजपत्सु यथार्हमुपायं प्रयुञ्जीत। तुष्टलिङ्गमतुष्टं विपरीतं वा साम प्रयुञ्जीत॥

शौचसामर्थ्यापदेशेन व्यसनाभ्युदयावेक्षणेन वा प्रतिपूजनमिति दानम्॥

मित्रव्यञ्जनो वा ब्रूयादेतान्—'चित्तज्ञानार्थमुपधास्यति वो राजा; तदस्याख्यातव्यम्' इति। परस्पराद्वा भेदयेदेनान्—'असौ चासौ च वो राजन्येवमुपजपति' इति। इति भेदः॥

दाण्डकर्मिकवच्च दण्डः॥

[उक्तास्वापत्सु गुरुलघुभावव्यवस्था]

एतासां चतसृणामापदामभ्यन्तरामेव पूर्वं साधयेत्। 'अहिभयादभ्यन्तरकोपो बाह्यकोपात् पापीयान्' इत्युक्तं पुरस्तात्॥

पूर्वां पूर्वां विजानीयाल्लघ्वीमापदमापदाम्।
उत्थितां बलवद्भ्यो वा गुर्वीं लघ्वीं विपर्यये॥ ३१०॥

इत्यमित्रास्यत्कर्मणि बाह्याभ्यान्तराश्चापदः

पञ्चमोऽध्यायः. आदितः षड्विंशतिशततमः.

---

[1] निगृहीताः—पा.

# चतुश्चत्वारिंशच्छततमं प्रकरणम्—

## दूष्यशत्रुसंयुक्ताः

### षष्ठोऽध्यायः

[शुद्धमिश्रयोरापदोः शुद्धाया विभागः]

दूष्येभ्यः शत्रुभ्यश्चेति द्विविधाः शुद्धाः ॥

[तत्र दूष्यशुद्धायाः प्रतीकारः]

दूष्यशुद्धायां—पौरेषु जानपदेषु वा दण्डवर्जानुपायान् प्रयुञ्जीत। दण्डो हि महाजने क्षेप्तुमशक्यः ; क्षिप्तो वा तं चार्थं न कुर्यात् , अन्यं चानर्थमुत्पादयेत्। मुख्येषु त्वेषां [1] दाण्डकार्मिकवच्चेष्टेतेति ॥

[शत्रुशुद्धायाः प्रतीकारः]

शत्रुशुद्धायां—[2] यतः शत्रुःप्रधानः कार्यो वा ततस्सामादिभिः सिद्धिं लिप्सेत। स्वामिन्यायत्ता प्रधानसिद्धिः, मन्त्रिष्वायत्ता आयत्तसिद्धिः, उभयायत्ता प्रधानायत्तसिद्धिः ॥

[द्विविधा मिश्रा आपत् , तत्प्रतीकारश्च]

दूष्यादूष्याणामामिश्रतत्वादामिश्रा। आमिश्रायामदूष्यतस्सिद्धिः। आलम्बनाभावे ह्यालम्बिता न विद्यते। मित्रामित्राणामेकीभावात् परमिश्रा। परिमिश्रायां मित्रतस्सिद्धिः। सुकरो हि मित्रेण सन्धिर्नामित्रेणेति ॥

[तदसिद्धौ प्रतीकारोपायान्तराश्रयणविधिः]

मित्रं चेन्न सन्धिमिच्छेत् , अभीक्ष्णमुपजपेत् , ततस्सत्रिभिरमित्रात् भेदयित्वा मित्रं लभेत। मित्रसङ्घस्य वा योऽन्तस्थायी तं लभेत। अन्तस्थायिनि लब्धे मध्यस्थायिनो भिद्यन्ते। मध्यस्थायिनं वा लभेत। मध्यस्थायिनि वा लब्धे नान्तस्थायिनः संहन्यन्ते। यथा चैषामाश्रयभेदः तानुपायान् प्रयुञ्जीत ॥

[1] उपांशुदण्डं प्रयुञ्जीतेत्यर्थः. [2] शत्रुभूतः सामन्तः प्रधानरूपो मन्त्री कार्यरूपोऽमात्यादिश्च यतः—यस्मिन्नधीनाः ततः—तस्मात्पुरुषादित्यर्थः.

[तत्र सामप्रयोगहेतवः]

धार्मिकं जातिकुलश्रुतवृत्तस्तवेन सम्बन्धेन पूर्वेषां त्रैकाल्योपकारानपकाराभ्यां वा सान्त्वयेत् । निवृत्तोत्साहं, विग्रहश्रान्तं प्रतिहतोपायं, क्षयव्ययाभ्यां प्रवासेन चोपतप्तं, शौचेनान्यं लिप्समानं, अन्यस्माद्वा शङ्कमानं, मैत्रीप्रधानं वा कल्याणबुद्धिं साम्ना साधयेत् ॥

[पञ्च दानभेदाः तत्प्रयोगहेतवश्च]

लुब्धं क्षीणं वा तपस्विमुख्यावस्थापनापूर्वं दानेन साधयेत् ॥

[1] तत् पञ्चविधं—[2] देयविसर्गः, [3] गृहीतानुवर्तनं, आत्तप्रतिदानं, स्वद्रव्यदानं अपूर्वं, [4] परस्वेषु स्वयंग्राहदानं चेति—दानकर्म ॥

[षट् भेदोपायप्रयोगप्रकाराः]

(१) परस्परद्वेषवैरभूमिहरणशङ्कितं अतोऽन्यतमेन भेदयेत्, भीरुं वा प्रतिघातेन—'कृतसन्धिरेष त्वयि कर्म करिष्यति, मित्रमस्य निसृष्टं, सन्धौ वा नाभ्यन्तरः' इति ॥

(२) यस्य वा स्वदेशादन्यदेशाद्वा पण्यानि पण्यागारतया गच्छेयुः तान्यस्य 'यातव्याल्लब्धानि' इति सत्रिणं[5] घातयेयुः । बहुलीभूते शासनमभिव्यक्तेन प्रेषयेत्—'एतत्ते पण्यं पण्यागारं वा मया ते प्रेषितं सामवायिकेषु विक्रमस्व, अपगच्छ वा, ततः पणशेषमवाप्स्यसि' इति । ततस्सत्रिणः परेषु ग्राहयेयुः—'एतदरिप्रदत्तम्' इति ॥

(३) शत्रुप्रख्यातं वा पण्यमविज्ञातं विजिगीषुं गच्छेत् । तदस्य वैदेहकव्यञ्जनाः शत्रुमुख्येषु विक्रीणीरन् । ततः सत्रिणः परेषु ग्राहयेयुः—'एतत्पण्यमरिप्रदत्तम्' इति ॥

---

[1] तत्—दानम्, [2] कस्माच्चिदपि क्रीतायां भूमौ ब्रह्मदेयादिभूमेरन्तर्भावे तद्भागस्य स्वयमनुपभोगेन तत्स्वामिने दानम्. [3] केनचित् केनापि प्रकारेण पूर्वं गृहीतभूम्यादेः कदाऽपि भोगप्रतिषेधः. [4] शत्रुदेशाक्रमणे जातेऽपि तदीयस्वयंसम्पादितधनस्य तस्मा एव विसर्जनम्. [5] मृषावृत्तान्तं प्रवर्तयेयुः.

(४) महापराधान् अर्थमानाभ्यामुपगृह्य वा शस्त्ररसाग्निभिरमित्रेण प्रणिदध्यात्। अथैकममात्यं [1] निष्पातयेत्। तस्य पुत्रदारमुपगृह्य रात्रौ हतमिति ख्यापयेत्। अथामात्यः शत्रोस्तानेकशः प्ररूपयेत्। ते चेद्यथोक्तं कुर्युः, न चैनान् ग्राहयेत्। अशक्तिमतो वा ग्राहयेत्। आप्तभावोपगतो मुख्यादस्यादात्मानं रक्षणीयं कथयेत्; अथामित्रशासनममुख्यायोपघाताय प्रेषितमुभयवेतनो ग्राहयेत्॥

(५) उत्साहशक्तिमतो वा प्रेषयेत्–'अमुष्य राज्यं गृहाण' यथास्थितो नः सन्धिः' इति। ततस्सत्रिणः परेषु ग्राहयेयुः। एकस्य स्कन्धावारं विविधमासारं वा घातयेयुः। इतरेषु मैत्रीं ब्रुवाणाः तं सत्रिणः त्वमेतेषां घातयितव्यः' इत्युपजपेयुः॥

(६) यस्य वा प्रवीरपुरुषो हस्ती हयो वा म्रियेत, गूढपुरुषैर्हन्येत ह्रियेत वा, तं सत्रिणः परस्परोपहतं ब्रूयुः। ततः शासनमभिशस्तस्य प्रेषयेत्—'भूयः कुरु, ततः पणशेषमवाप्स्यसि' इति। तदुभयवेतना ग्राहयेयुः। भिन्नेष्वन्यतमं लभेत। तेन सेनापतिकुमारदण्डचारिणो व्याख्याताः। साङ्घिकं च भेदं प्रयुञ्जीत इति भेदकर्म॥

[दण्डोपायप्रयोगप्रकारः तद्विषयाश्च]

[2] तीक्ष्णमुत्साहिनं व्यसनिनं स्थितशत्रुं वा गूढपुरुषाः शस्त्राग्निरसादिभिस्साधयेयुः। सौकर्यतो वा तेषामन्यतमः। तीक्ष्णो ह्येकः शस्त्ररसाग्निभिस्साधयेत्। अयं सर्वसन्दोहकर्म विशिष्टं वा करोतीत्युपायचतुर्वर्गः।

[उपायेषु अन्योन्यं विशेषाः, उक्तानामेषां यातव्याभियोग-प्रस्थितमित्रामित्रविषयकत्वं च]

पूर्वः पूर्वश्चास्य लघिष्ठः। सान्त्वदानपूर्वः, दण्डश्चतुर्गुणः सान्त्वदानभेदपूर्वः इत्यभियुञ्जानेषूक्तम्॥

---

[1] स्वान्तिकान्निष्पात्य शत्रुपार्श्वं प्रेषयेत्. [2] तीक्ष्णं मुक्त्वा हीनं व्यसनिनं–पा.

[अप्रस्थिततद्विषये विशेषाः, तत्तदुपायानुष्ठानप्रकारिश्च]

स्वभूमिष्ठेषु तु त एवोपायाः। विशेषस्तु—स्वभूमिष्ठानामन्यतमस्य पण्यागारैरभिज्ञातान् दूतमुख्यानभीक्ष्णं प्रेषयेत्; त एनं सन्धौ परहिंसायां वा योजयेयुः; अप्रतिपाद्यमानं 'कृतो नस्सन्धिः' इत्यावेदयेयुः। तमितरेषामुभयवेतनास्संक्रामयेयुः—'अयं वो राजा दुष्टः' इति। यस्य वा यस्माद्भयं वैरं द्वेषो वा, तं तस्माद्भेदयेयुः 'अयं ते शत्रुणा सन्धत्ते; पुरा त्वामतिसन्धत्ते, क्षिप्रतरं सन्धीयस्व; निग्रहे चास्य प्रयतस्व' इति। आवाहविवाहाभ्यां वा कृत्वा संयोगमसंयुक्तान् भेदयेत्॥

सामन्ताटविकतत्कुलीनावरुद्धैश्चैषां राज्यं निघातयेत्, सार्थव्रजाटवीर्वा, दण्डं वाऽभिसृतम्। परस्परापाश्रयाश्चैषां जातिसङ्घाश्छिद्रेषु प्रहरेयुः, गूढाश्चाग्निरसशस्त्रेण॥

[1] वितंसगिलवच्चारीन् योगैराचरितैश्शठः।
घातयेत् परमिश्रायां विश्वासेनामिषेण च॥ ३११॥

इत्यभियास्यत्कर्मणि दूष्यशत्रुसंयुक्ताष्षष्ठोऽध्यायः
आदितः सप्तविंशतितमः.

---

# पञ्चचत्वारिंशत्षट्चत्वारिंशच्छततमे प्रकरणे अर्थानर्थसंशययुक्ताः, तासामुपायविकल्पजास्सिद्धयश्च

## सप्तमोऽध्यायः

[उत्सेकापनयाभ्यां जन्याः त्रिविधा आपदः]

कामादिरुत्सेकः स्वाः प्रकृतीः कोपयति, अपनयो बाह्याः। तदुभयमासुरी वृत्तिः। स्वजनविकारः कोपः परवृद्धिहेतुष्वापत् [3] अर्थोऽनर्थस्संशयः इति।

---

[1] वितंसः—पक्षिविश्वासार्थकृतः पक्षिरूपालेख्ययोगी देहाच्छादनपटः. गिलः आमिषम्. [2] नस्सिद्धिः. [3] साचापत् अर्थरूपा अनर्थरूपा तदुभयसंशयरूपा चेति त्रिधेत्यर्थः.

[अर्थरूपाणां आपदां निरूपणम्]

योऽर्थः शत्रुवृद्धिं[1] अप्राप्तः करोति, प्राप्तः प्रत्यादेयः परेषां भवति, प्राप्यमाणो वा क्षयव्ययोदयो भवति, स भवत्यापदर्थः। यथा–सामन्तानामामिषभूतः, सामन्तव्यसनजो लाभः, शत्रुप्रार्थितो वा स्वभावाधिगम्यो वा लाभः, पश्चात्कोपेन पार्ष्णिग्राहेण वा विगृहीतः पुरस्ताल्लाभः, मित्रोच्छेदेन सन्धिव्यतिक्रमेण वा मण्डलविरुद्धो लाभ इत्यापदर्थः।

[अनर्थरूपा आपत्]

स्वतः परतो वा भयोत्पत्तिरित्यनर्थः।

[संशयरूपा आपदः (चतस्रः), तदुदाहरणानि च]

तयोः 'अर्थो न वा इति, 'अनर्थो न वा' इति, 'अर्थोनर्थः' इति 'अनर्थोऽनर्थः' इति (च) संशयः। (तत्र) शत्रुमुत्साहयितुमर्थो न वेति संशयः। शत्रुबलमर्थमानाभ्यामावाहयितुमनर्थो न वेति संशयः। बलवत्सामन्तां भूमिमादातुमर्थोऽनर्थः इति संशयः। ज्यायसा संभूययानमनर्थोऽर्थ इति संशयः। तेषामर्थसंशयमुपगच्छेत्॥

[अर्थानर्थानुबन्धषड्वर्गः, तदुदाहरणानि च]

अर्थोऽर्थानुबन्धः, अर्थो निरनुबन्धः, अर्थोऽनर्थानुबन्धः, अनर्थोऽर्थानुबन्धः, अनर्थो निरनुबन्धः; अनर्थोऽनर्थानुबन्धः इत्यनुबन्धषड्वर्गः। शत्रुमुत्पाट्य पार्ष्णिग्राहादानमर्थोऽर्थानुबन्धः। उदासीनस्य दण्डानुग्रहः फलेन अर्थो निरनुबन्धः। परस्यान्तरुच्छेदनमर्थोऽनर्थानुबन्धः। शत्रुप्रतिवेशस्यानुग्रहः कोशदण्डाभ्यामनर्थोऽर्थानुबन्धः। हीनशक्तिमुत्साह्य निवृत्तिरनर्थो निरनुबन्धः। ज्यायांसमुत्थाप्य निवृत्तिरनर्थोऽनर्थानुबन्धः। तेषां पूर्वःपूर्वः श्रेयान् उपसंप्राप्तुम्। इति कार्यावस्थापनम्॥

---

[1] स्वहस्तमित्यादिः. शत्रुवृद्धिं करोतीत्यन्वयः.

[समन्ततोऽर्थतत्संशयापदोः प्रतीकारः]

समन्ततो युगपदर्थोत्पत्तिस्समन्ततोऽर्थापद्भवति । सैव पार्ष्णिग्राहविगृहीता समन्ततोऽर्थसंशयापद्भवति। तयोर्मित्राक्रन्दोपग्रहात्सिद्धिः ॥

[समन्ततोऽनर्थतत्संशयापदोः प्रतीकारः]

समन्ततः शत्रुभ्यो भयोत्पत्तिस्समन्ततोऽनर्थापद्भवति। सैव मित्रगृहीता समन्ततोऽनर्थसंशयापद्भवति । तयोश्चलामित्राक्रन्दोपग्रहात्सिद्धिः। परिमिश्रप्रतीकारो वा ॥

[उभयतोऽर्थानर्थापदोः प्रतीकारः]

इतो लाभ इतरतो लाभ इत्युभयतोऽर्थापद्भवति । तस्यां समन्ततोऽर्थायां च लाभगुणयुक्तमर्थमादातुं यायात्। तुल्ये लाभगुणे प्रधानमासन्नमनतिपातिनं, ऊनो वा येन भवेत् तं, आदातुं यायात् । इतोऽनर्थ इतरतोऽनर्थ इत्युभयतोऽनर्थापत्। तस्यां समन्ततोऽनर्थायां च मित्रेभ्यस्सिद्धिं लिप्सेत ॥

[उभयतस्समन्ततोनर्थयोः प्रतीकारः]

मित्राभावे प्रकृतीनां लघीयस्यैकतोऽनर्थां साधयेत्, उभयतोनर्थां ज्यायस्या, समन्ततोऽनर्थां मूलेन प्रतिकुर्यात् । अशक्ये सर्वमुत्सृज्यापगच्छेत्। दृष्टा हि [1]जीवता पुनरापत्तिः, यथा [2]सुयात्रोदयनाभ्याम् ॥

[उभयतस्समन्ततोऽर्थानर्थापदोः प्रतीकारः]

इतो लाभः इतरतो राज्याभिमर्शः इत्युभयतोऽर्थानर्थापद्भवति। तस्यामनर्थसाधको योऽर्थः तमादातुं यायं; अन्यथा हि राज्याभिमर्शं वारयेत्। एतया समन्ततोऽर्थानर्थापद्व्याख्याता ॥

---

[1] जीवतः–पा. [2] सुयात्रः नलः. उदयनः–वत्सराजः.

[उभयतस्समन्ततश्चानर्थनिश्चयार्थसंशय-
वत्योरापदोः प्रतीकारः]

इतोऽनर्थः इतरतोऽर्थसंशयः इत्युभयतोऽनर्थार्थसंशया। तस्यां पूर्वमनर्थं साधयेत्; तत्सिद्धावर्थसंशयम्। एतया समन्ततोऽनर्थार्थसंशया व्याख्याता ॥

[उभयतस्समन्ततश्चानर्थसंशयार्थनिश्चय-
वत्योरापदोः प्रतीकारः]

इतोऽर्थः इतरतोऽनर्थसंशयः इत्युभयतोऽनर्थार्थसंशयापत्। भवति एतया समन्ततोऽर्थानर्थसंशया व्याख्याता। तस्यां पूर्वांपूर्वां प्रकृतीनामनर्थसंशयान्मोक्षयितुं यतेत। श्रेयो हि मित्रमनर्थसंशये तिष्ठत्, न दण्डः; दण्डो वा[1] न कोश इति ॥

[तादृशसंशये तिष्ठतां मोक्षणप्रकाराः परिपाट्यश्च]

समग्रमोक्षणाभावे प्रकृतीनामवयवान् मोक्षयितुं यतेत; तत्र पुरुषप्रकृतीनां च बहुलमनुरक्तं वा तीक्ष्णलुब्धवर्जम्, द्रव्यप्रकृतीनां सारं महोपकारं वा, सन्धिनाऽऽसनेन द्वैधीभावेन वा लघूनि, विपर्ययैर्गुरूणि। क्षयस्थानवृद्धीनां चोत्तरोत्तरं लिप्सेत; प्रातिलोम्येन वा क्षयादीनाम्—[2]आयत्यां विशेषं पश्येत। इति [3]देशावस्थापनम् ॥

एतेन यात्रादिमध्यान्तेष्वर्थानर्थसंशयाना[4]मुपसंप्राप्तिर्व्याख्याता ॥

[तादृशाः कारणनिमित्ताः आपदः तत्प्रतीकाराश्च]

निरन्तरयोगित्वाच्चार्थानर्थसंशयानां यात्रादावर्थः श्रेयानुपसंप्राप्तुं पार्ष्णिग्राहासारप्रतिघाते क्षयव्ययप्रवासप्रत्यादेयमूलरक्षणेषु च [5]भवति। तथाऽनर्थःसंशयो वा स्वभूमिष्ठस्य विषह्यो भवति। एतेन यात्रामध्येऽर्थानर्थसंशयानामुपसंप्राप्तिर्व्याख्याता ॥

---

[1] अनर्थसंशये तिष्ठन् इति शेषः. [2] यदीत्यादिः. [3] देशनिमित्तापदां व्यवस्थापनमुक्तमित्यर्थः. [4] उपसम्प्राप्तिः—सम्भवः, उपलक्षणतया तत्प्रतीकारस्यापि सङ्ग्रहः. [5] फलभूतेषु सत्स्विति शेषः.

यात्रान्ते तु कर्शनीयमुच्छेदनीयं वा कर्शयित्वोच्छिद्य वाऽर्थः श्रेयानुपसंप्राप्तुं, नानर्थसंशयो वा, पराबाधभयात् ॥

सामवायिकानामपुरोगस्य तु यात्रामध्यान्तगोऽनर्थस्संशयो वा श्रेयानुपसंप्राप्तुम्[1] अनिबन्धगामित्वात् ॥

अर्थो धर्मः काम इत्यर्थत्रिवर्गः। तस्य पूर्वः पूर्वः श्रेयानुपसंप्राप्तुम् ॥

अनर्थोऽधर्मश्शोक इत्यनर्थत्रिवर्गः। तस्य पूर्वः पूर्वः श्रेयान् प्रतिकर्तुम् ॥

अर्थोऽनर्थ इति, धर्मोऽधर्म इति, कामः शोक इति संशयत्रिवर्गः। तस्योत्तरपक्षसिद्धौ पूर्वपक्षश्श्रेयानुपसंप्राप्तुम् ॥

इति कालावस्थापनम्। इत्यापदः ॥

[उक्तानामापदां सामाद्युपायप्रयोगनिबन्धनाः प्रतिक्रियाः]

तासां सिद्धिः—पुत्रभ्रातृबन्धुषु सामदानाभ्यां सिद्धिरनुरूपा ; पौरजानपददण्डमुख्येषु दानभेदाभ्यां ; सामन्ताटविकेषु भेददण्डाभ्याम्। एषाऽनुलोमा विपर्यये प्रतिलोमा ॥

मित्रामित्रेषु व्यामिश्रा सिद्धिः। परस्परसाधका ह्युपायाः। शत्रोः शङ्कितामात्येषु सान्त्वं प्रयुक्तं शेषप्रयोगं निवर्तयति, दूष्यामात्येषु दानं, सङ्घातेषु भेदः, शक्तिमत्सु दण्ड इति ॥

गुरुलाघवयोगाच्चापदां नियोगविकल्पसमुच्चया भवन्ति। 'अनेनैवोपायेन नान्येन' इति नियोगः। 'अनेन वाऽन्येन वा' इति विकल्पः। 'अनेनान्येन च' इति समुच्चयः। तेषामेकयोगाश्चत्वारस्त्रियोगाश्च, द्वियोगाष्षट्, एकयोगश्चतुर्योग इति पञ्चदशोपायाः। तावन्तः प्रतिलोमाः। तेषामेकेनोपायेन सिद्धिरेकसिद्धिः, द्वाभ्यां द्विसिद्धिः, त्रिभिस्त्रिसिद्धिः, चतुर्भिश्चतुस्सिद्धिरिति ॥

धर्ममूलत्वात् कामफलत्वाच्चार्थस्य धर्मार्थकामानुबन्धा यार्थस्य सिद्धिस्सा सर्वार्थसिद्धिः। इति सिद्धयः ॥

---

[1] प्रतिबन्धरहिततया अन्यत्र गतिसम्भवात्.

[दैव्यः आपदः तत्प्रतिक्रियाश्च]

दैवादग्निरुदकं व्याधिः [1] प्रमारो विद्रवो दुर्भिक्षमासुरी सृष्टिः [2] [3] इत्यापदः। तासां दैवतब्राह्मणप्रणिपाततः सिद्धिः ॥

अवृष्टिरतिवृष्टिर्वा सृष्टिर्वा यासुरी भवेत्।
तस्यामाथर्वणं कर्म सिद्धारम्भाश्च सिद्धयः ॥ ३१२ ॥

इत्यभियास्यत्कर्मणि अर्थानर्थसंशययुक्ताः तासामुपायविकल्पजाः सिद्धयश्च सप्तमोऽध्यायः. आदितोऽष्टाविंशतिशततमः.

---

एतावता कौटलीयस्यार्थशास्त्रस्य अभियास्यत्कर्म नवममधिकरणम्

---

[1] सङ्क्रशो मरणम्. प्रमादो-पा. [2] आसुरीसृष्टिः-मूषिकादीनां प्रभूतोत्पत्तिः. [3] इति दैवात्-जन्मान्तरसञ्चिततत्तददृष्टजन्याः आपदः इत्यन्वयः.

अथ कौटलीये अर्थशास्त्रे

# साङ्ग्रामिकं नाम

## दशममधिकरणम्

---

### अस्य चेयं प्रकरणानुक्रमणिका



आहत्य १३ प्रकरणानि ६ अध्यायाः १२ कारिकाः

---

## एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं संग्रहः

---

### 147 स्कन्धावारनिवेशः
(पु. 386)

सैन्यावासस्थाननिर्माणविधिः.
तद्विभागाः.
शत्रुप्रवेशनिरोधोपायाः.

### 148 स्कन्धावारप्रयाणम्.
(पु. 387)

उक्तसैन्यावासस्थानं प्रति प्रयाणे कल्पनीयान्यानुकूल्यानि.
यातृयानक्रमः.
शनैर्यानशीघ्रयानयोर्निमित्तानि.
सैन्यस्य नद्यादितरणे उपायाः.
उदकशून्येऽध्वनि कर्तव्योंऽशः.

### 149 बलव्यसनावस्कन्दकालरक्षणम्.
(पु. 389)

अमानितविमानितादिबलव्यसनेभ्यः दीर्घकान्तारगमनकालश्रमेभ्यश्च स्वबलरक्षणोपायाः.
परबलेयत्ताज्ञानोपायः.

### 150 कूटयुद्धविकल्पाः.
(पु. 389)

कपटयुद्धहेतूनां देशकालादीनामुपपादनम्.

### 151 स्वसैन्यप्रोत्साहनम्.
(पु. 390)

धार्मिकाः सैन्यप्रोत्साहनप्रकाराः, कर्तव्या अंशाश्च.

### 152 स्वबलान्यबलव्यायोगः.
(पु. 391)

परसैन्यापेक्षया स्वसैन्ये विशिष्टः व्यूहरचनाविधिः.
तदनुगुणभूमिविभागः.
युद्धे शत्रुभङ्गदर्शने विजिगीषुणा कर्तव्योंऽशः.

### 153 युद्धभूमयः.
(पु. 392)

युद्धे तत्तदनुगुणभूम्यादिकल्पनावश्यकता.
रथादिभूमयः.
अश्वादिभूमिषु विशेषः.
पदातिभूम्यादिषु कल्पनीयाः अतिशयाः.

### 154 पत्त्यश्वरथहस्तिकर्माणि.
(पु. 393)

क्रमेण अश्वहस्तिरथपदातीनां कर्माणि.
अनायुधीयकर्मकरकर्माणि.
अश्वगजादीनामपर्याप्तौ कर्तव्योंऽशः.

155 पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः.
(पु. 395)

युद्धभूमिस्कन्धावारयोरन्तरम्.
व्यूहरचनाविधिः.
पदात्यादिव्यूहनप्रकाराः.
धन्व्यादिविषयोऽन्तरालविधिः.
अश्वाग्रयोधिनां सङ्ख्या.
उरस्यभूतेऽनीके स्थापनीयरथसंख्याः.
तदनुगुणाश्वादीयत्तानिर्णयः.
समव्यूहनिगमनम्.
विषमव्यूहनिरूपणम्.
हस्तिव्यूहरचना.
शुद्धाः हस्त्यादिव्यूहाः.
मिश्रव्यूहाः.

156 सारफल्गुविभागः.
(पु. 397 पं. 20)

पदात्यादीनां सारबलत्वापादकाः गुणाः.
उक्तसारबलस्य व्यूहे उपयोगक्रमः.
फल्गुबलस्यैवाग्रतो निवेशने हेतुः, योधनक्रमश्च.
शत्रुसैन्येषु प्रहारस्थानानि.

157 पत्त्यश्वरथहस्तियुद्धानि.
(पु. 398 पं. 13)

अश्वहस्तिरथपत्तीनां योधनकर्माणि.
निगमनम्.
राजावस्थित्यनुकूलः प्रदेशः.

158 दण्डभोगमण्डलासंहतव्यूहव्यूहनम्.
(पु. 399)

व्यूहविभजनविषये मतभेदः.
चत्वारः प्रकृतिव्यूहाः, तल्लक्षणानि च.
स्वमतेन तेषां लक्षणानि, अत्र अष्टादशदण्डव्यूहाः.
पञ्च भोगव्यूहाः.
द्वौ मण्डलव्यूहौ.
षट् असंहतव्यूहाः.
अन्ये च त्रयो व्यूहभेदाः.

159 तस्य प्रतिव्यूहस्थापनम्.
(पु. 400 पं. 22)

उक्तानां व्यूहानां घातकाः प्रतिबलव्यूहाः.
पत्त्यादीनां प्रतिबलानि.
सेनापतिविभागः.
तैश्च सेनापतिभिः सङ्केतविशेषकरणावश्यकता.
स्वजनानुकूलाः परोद्वेगरचनाः.
युद्धात् मन्त्रस्यैव बलवत्तरत्वम्.

———

# अथ साङ्ग्रामिकं नाम दशममधिकरणम्

---

## सप्तचत्वारिंशच्छततमं प्रकरणम्— स्कन्धावारनिवेशः

### प्रथमोऽध्यायः

[सैन्यावासस्थाननिर्माणविधिः, तद्विभागाः, शत्रुप्रवेशनिरोधोपायश्च.]

वास्तुकप्रशस्ते [1] वास्तुनि [2] नायकवर्धकिमौहूर्तिकाः स्कन्धावारं वृत्तं दीर्घं चतुरश्रं वा, भूमिवशेन वा, चतुर्द्वारं षट्पथं [3] नवसंस्थानं मापयेयुः ; खातवप्रसालद्वाराट्टालकसंपन्नं स्थाने च॥

मध्यमस्योत्तरे [4] नवभागे राजवास्तुकं धनुश्शतायाममर्धविस्तारं, पश्चिमार्धे तस्यान्तःपुरम्। अन्तर्वंशिकसैन्यं चान्ते निविशेत। पुरस्तादुपस्थानं, दक्षिणतः कोशशासनकार्यकरणानि, वामतो राजौपवाह्यानां हस्त्यश्वरथानां स्थानम्। अतो धनुश्शतान्तराश्चत्वारः [5] शकटमेथीप्रततिस्तम्भसालपरिक्षेपाः। प्रथमे पुरस्तान्मन्त्रिपुरोहितौ, दक्षिणतः कोष्ठागारं महानसं च, वामतः कुप्यायुधागारम्। द्वितीये मौलभृतानां स्थानं अश्वरथानां सेनापतेश्च। तृतीये हस्तिनः श्रेण्यः प्रशास्ता च। चतुर्थे विष्टिर्नायको मित्रामित्राटवीबलं स्वपुरुषाधिष्ठितम्। वणिजो रूपाजीवाश्चानुमहापथम्। बाह्यतः लुब्धकश्वगणिनः सतूर्याग्नयः गूढाश्चारक्षाः।

---

[1] प्रदेशे. [2] सेनापतिकाष्टतट्ज्यौतिषिकाः. [3] नवसंख्याकसंनिवेशयुक्तम्. [4] नवमे भागे. [5] शकटैः मेथीसमूहैः स्तम्भैः प्राकारैश्च कृताः परिक्षेपाः

शत्रूणामापाते [1] कूपकूटावपातकण्टकिनीश्च [2] स्थापयेत्। अष्टादश-वर्गाणामारक्षविपर्यासं कारयेत्। [3] दिवायामं च कारयेदपसर्प-ज्ञानार्थम्॥

विवाद [4] सौरिकसमाजद्यूतवारणं च कारयेत्, मुद्रारक्षणं च। सेनानिवृत्तमायुधीयमशासनं शून्यपालोऽनुवध्नीयात्॥

पुरस्तादध्वनस्सम्यक्प्रशास्ता रक्षणानि च।
यायाद्वर्धकिविष्टिभ्यामुदकानि च कारयेत्॥ २१२॥

इति साङ्ग्रामिके दशमेऽधिकरणे स्कन्धावारनिवेशः प्रथमोऽध्यायः
आदितः एकोनत्रिंशच्छततमः

---

# अष्टचत्वारिंशदेकोनपंचाशच्छततमे प्रकरणे—स्कन्धावारप्रयाणं, बलव्यसनावस्कन्दकालरक्षणं च.

## द्वितीयोऽध्यायः

[उक्तसैन्यावासस्थानं, प्रतिप्रयाणे कल्पनीया अनुकूलाश्च]

ग्रामारण्यानामध्वनि निवेशान् यवसेन्धनोदकवशेन परि-सङ्ख्याय स्थानासनगमनकालं च, यात्रां यायात्। तत्प्रतीकार-द्विगुणं [5] भक्तोपकरणं वाहयेत्। अशक्तो वा सैन्येष्वायोजयेत्। [6] अन्तरेषु वा निचिनुयात्॥

---

[1] सम्भाविताऽऽपतने मार्गे. [2] तृणच्छन्नकूप गर्त सकण्टकफलका-श्चेत्यर्थः. [3] दिवासंचारनियमं. [4] सौरिकं—मद्यपानम्. [5] तण्डुलवस्त्रादि. [6] (पूर्वमेव) तत्तन्निवेशप्रदेशेषु निचित्य स्थापयेत्.

[यातृयानक्रमः, गन्तव्योऽध्वा च]

पुरस्तान्नायकः, मध्ये कलत्रं स्वामी च, पार्श्वयोरश्वा बाहूत्सारः, चक्रान्तेषु हस्तिनः, प्रसारवृद्धिर्वा सर्वतः। [1] वनाजीवः प्रसारः, स्वदेशा[2]दन्वायतिर्वीवधः, मित्रबलमासारः, कलत्रस्थानमपसारः। पश्चात् सेनापतिः पर्यायान्निविशेत। पुरस्तादभ्याघाते मकरेण यायात्, पश्चाच्छकटेन, पार्श्वयोर्वज्रेण, समन्ततः सर्वतोभद्रेण, एकयाने सूच्या॥

पथि द्वैधीभावे स्वभूमितो यायात्। अभूमिष्ठानां हि स्वभूमिष्ठा युद्धे प्रतिलोमाः भवन्ति। योजनमधमा, अध्यर्धं मध्यमा, द्वियोजनमुत्तमा; सम्भाव्या वा गतिः॥

[एवं प्रस्थितस्य शनैर्यानशीघ्र-
यानयोर्निमित्तानि]

आश्रयकारी संपन्नघाती पार्ष्णिरासारो मध्यम उदासीनो वा प्रतिकर्तव्यः, सङ्कटो मार्गः शोधयितव्यः, कोशो दण्डो मित्रामित्राटवीबलं विष्टिः ऋतुर्वा प्रतीक्ष्याः, कृतदुर्गकर्मनिचयरक्षाक्षयः क्रीतबलनिर्वेदो मित्रबलनिर्वेदश्चागामिष्यति, उपजपितारो वा नातित्वरयन्ति, शत्रुरभिप्रायं वा पूरयिष्यति इति शनैर्यायात्; विपर्यये शीघ्रम्॥

[सैन्यस्य नद्यादितरणे उपायाः]

हस्तिस्तम्भसङ्क्रमसेतुबन्धनौकाष्ठवेणुसङ्घातैः, अलाबुचर्मकरण्डदृतिप्लवगण्डिकावेणिकाभिश्चोदकानि तारयेत्॥
[3] तीर्थाभिग्रहे हस्त्यश्वैः[4]अन्यतो रात्रावुत्तार्य [5] सत्रं गृह्णीयात्॥

[उदकशून्येऽध्वनिकरणीऽयोंशः]

अनुदके चक्रिचतुष्पदं चाध्वप्रमाणेन शक्त्योदकं वाहयेत्॥

---

[1] व्रीहितृणादिद्रव्यम्. [2] अविच्छिन्नः आजीवद्रव्यागमः. [3] अभिग्रहः—परप्रतिरोधः. [4] अन्यतः—अतीर्थे प्रदेशे. [5] धान्वनसङ्कटादिकं कूटयुद्धविकल्पे वक्ष्यमाणम्.

[ अमानितादिबलव्यसनेभ्यः दीर्घकान्तारादिगमनकालेभ्यः स्वबलरक्षणोपायाः ]

दीर्घकान्तारमनुदकं यवसेन्धनोदकहीनं वा कृच्छ्राध्वानमभियोगप्रस्कन्नं क्षुत्पिपासाध्वक्लान्तं पङ्कतोयगम्भीराणां वा नदीदरीशैलानामुद्यानापयाने व्यासक्तं एकायनमार्गे शैलविषमे सङ्कटे वा बहुलीभूतं, निवेशे प्रस्थिते विसन्नाहं भोजनव्यासक्तं आयतगतपरिश्रान्तमवसुप्तं व्याधिमरकदुर्भिक्षपीडितं व्याधितपत्त्यश्वद्विपमभूमिष्ठं वा बलव्यसनेषु वा स्वसैन्यं रक्षेत्। परसैन्यं चाभिहन्यात् ॥

[ परबलेयत्ताज्ञानोपायाः ]

[1]एकायनमार्गप्रयातस्य सेनानिः चारग्रासाहारशय्याप्रस्ताराग्निनिधानध्वजायुधसङ्ख्यानेन परबलज्ञानम्। तदात्मनो गूहयेत् ॥

[ निगमनम् ]

पार्वतं वनदुर्गं वा सापसारप्रतिग्रहम् ॥
स्वभूमौ पृष्ठतः कृत्वा युध्येत निविशेत च ॥ ३१४ ॥

इति साङ्ग्रामिके स्कन्धावारप्रयाणं, बालव्यसनावस्कन्दकालरक्षणं च द्वितीयोऽध्यायः आदितस्त्रिंशच्छततमः.

---

# पञ्चाशदेकपञ्चाशद्विपञ्चाशच्छततमानि प्रकरणानि—कूटयुद्धविकल्पाः, स्वसैन्योत्साहनं, स्वबलान्यबलव्यायोगश्च.

## तृतीयोऽध्यायः

[ कपटयुद्धहेतवः देशकालादयः, सत्रपदार्थश्च ]

बलविशिष्टः कृतोपजापः [2]प्रतिविहितर्तुः स्वभूम्यां प्रकाशयुद्धमुपेयात्, विपर्यये कूटयुद्धम्।

---

[1] एकायनः—एकैकमात्रगम्यः. [2] सम्पादितयुद्धयोग्यकालः.

बलव्यसनावस्कन्दकालेषु परमभिहन्यात्, अभूमिष्ठं वा स्वभूमिष्ठः। [1]प्रकृतिप्रग्रहो वा स्वभूमिष्ठं दूष्यामित्राटवीबलैर्वा भङ्गं दत्त्वा विभूमिप्राप्तं हन्यात्। संहतानीकं हस्तिभिर्भेदयेत्।

पूर्वं भङ्गप्रदानेनानुप्रलीनं भिन्नमभिन्नं प्रतिनिवृत्य हन्यात्। पुरस्तादभिहत्य प्रचलं विमुखं वा पृष्ठतो हस्त्यश्वेनाभिहन्यात्। पृष्ठतोऽभिहत्य प्रचलं विमुखं वा पुरस्तात्सारबलेनाभिहन्यात्।

ताभ्यां पार्श्वाभिघातौ व्याख्यातौ। यतो वा दूष्यफल्गुबलं ततोऽभिहन्यात्।

पुरस्ताद्विषमायां पृष्ठतोऽभिहन्यात। पृष्ठतोविषमायां पुरस्तादभिहन्यात्। पार्श्वतोविषमायां इतरतोऽभिहन्यात्।

दूष्यामित्राटवीबलैर्वा पूर्वं योधयित्वा श्रान्तमश्रान्तः परमभिहन्यात्। दूष्यबलेन वा स्वयं भङ्गं दत्त्वा 'जितम्' इति विश्वस्तमविश्वस्तः सत्रापाश्रयोऽभिहन्यात्। सार्थव्रजस्कन्धावारसंवाहविलोपप्रमत्तमप्रमत्तोऽभिहन्यात्। फल्गुबलावच्छन्नः सारबलो वा परवीराननुप्रविश्य हन्यात्। गोग्रहणेन श्वापदवधेन वा परवीरानाकृष्य सत्रच्छन्नोऽभिहन्यात्।

रात्राववस्कन्देन जागरयित्वाऽनिद्राक्लान्तानवसुप्तान्वा दिवा हन्यात्। सपादचर्मकोशैर्वा हस्तिभिः [2]सौप्तिकं दद्यात्। अहस्सन्नाहपरिश्रान्तानपराह्णेऽभिहन्यात्। शुष्कचर्मवृत्तशर्कराकोशकैर्गोमहिषोष्ट्रयूथैर्वा त्रस्नुभिरकृतहस्त्यश्वं भिन्नमभिन्नः प्रतिनिवृत्तं हन्यात्। प्रतिसूर्यवातं वा सर्वमभिहन्यात्॥

धान्वनवनसङ्कटपङ्कशैलनिम्नविषमनावो गावश्शकटव्यूहो नीहारो रात्रिरिति सत्राणि॥

पूर्वे च प्रहरणकालाः कूटयुद्धहेतवः॥

संग्रामस्तु—निर्दिष्टदेशकालो धर्मिष्ठः।

[धार्मिकाः सैन्यप्रोत्साहनप्रकाराः कर्तव्या अंशाश्च]

संहत्य[3] दण्डं[4] ब्रूयात्—'तुल्यवेतनोऽस्मि; भवद्भिस्सह भोग्यमिदं राज्यं; मयाऽभिहितःपरोऽभिहन्तव्यः, इति। 'वेदेष्वप्यनु-

---

[1] प्रकृतिस्वायत्तीकरणशक्तो वा. [2] सुप्तवधं कारयेत्. [3] स्थितमिति शेषः. [4] स्वसैन्यं प्रतीत्यर्थः.

श्रूयते—समाप्तदक्षिणानां यज्ञानामवभृथेषु 'सा ते गतिर्या शूराणां' इति। अपीह श्लोकौ भवतः—

यान् यज्ञसङ्घैस्तपसा च विप्राः
स्वर्गैषिणः पात्रचयैश्च यान्ति।
क्षणेन तानप्यतियान्ति शूराः
प्राणान् सुयुद्धेषु परित्यजन्तः ॥ ३१५॥

नवं शरावं सलिलस्य पूर्णं
सुसंस्कृतं दर्भकृतोत्तरीयम्।
तत्तस्य माभून्नरकं च गच्छेत्
यो भर्तृपिण्डस्य कृते न युध्येत् ॥ ३१६॥'

इति मन्त्रिपुरोहिताभ्यामुत्साहयेद्योधान् ॥

व्यूहसंपदा कार्तान्तिकादिश्चास्य वर्गः सर्वज्ञदैवसंयोगख्यापनाभ्यां स्वपक्षमुद्धर्षयेत्; परपक्षं चोद्वेजयेत्। 'श्वो युद्धम्' इति कृतोपवासः शस्त्रवाहनं [1] चानुशयीत। अथर्वभिश्च जुहुयात्। विजययुक्ताः स्वर्गीयाश्चाशिषो वाचयेत्। ब्राह्मणेभ्यश्चात्मानमतिसृजेत्।

शौर्यशिल्पाभिजनानुरागयुक्तं अर्थमानाभ्यामविसंवादितं अनीकगर्भं कुर्वीत। पितृपुत्रभ्रातृकाणामायुधीयानामध्वजं मुण्डानीकं राजस्थानम्। हस्ती रथो वा राजवाहनमश्वानुबन्धे। यत्प्रायस्सैन्यो यत्र वा विनीतः स्यात्तदधिरोहयेत्। राजव्यञ्जनो [2] व्यूहाधिष्ठानमायोज्यः।

सूतमागधाः शूराणां स्वर्गमस्वर्गं भीरूणां जातिसङ्घकुलकर्मवृत्तस्तवं च योधानां वर्णयेयुः। पुरोहितपुरुषाः कृत्याभिचारं ब्रूयुः; सत्रिकवर्धकिमौहूर्तिकाः स्वकर्मसिद्धिमसिद्धिं च परेषाम्।

सेनापतिरर्थमानाभ्यामभिसंस्कृतमनीकमाभाषेत—' [3] शतसाहस्रो राजवधः, पञ्चाशत्साहस्रः सेनापतिकुमारवधः, दशसाहस्रः

---

[1] चाधिशयीत—पा. [2] व्यूहानुष्ठान—पा. [3] लक्षसुवर्णलाभदायक इत्यर्थः. एवमग्रेऽपि.

प्रवीरमुख्यवधः, पञ्चसाहस्रो हस्तिरथवधः, साहस्रोऽश्ववधः' शत्यः पत्तिमुख्यवधः, शिरो विंशतिकम्, भोगद्वैगुण्यं स्वयंग्राहश्च' इति। तदेषां दशवर्गाधिपतयो विद्युः॥

चिकित्सकाः [1]शस्त्रयन्त्रागदस्नेहवस्त्रहस्ताः, स्त्रियश्चान्नपानरक्षिण्यः पुरुषाणामुद्धर्षणीयाः पृष्ठतस्तिष्ठेयुः॥

[ परसैन्यापेक्षया स्वसैन्ये विशिष्टः व्यूहरचनाविधिः ]

अदक्षिणामुखं पृष्ठतस्सूर्यमनुलोमवातमनीकं स्वभूमौ व्यूहेत। परभूमिव्यूहे चाश्वांश्चारयेयुः॥

यत्र स्थानं प्रजवश्चा[2]भूमि व्यूहस्य, तत्र स्थितः प्रजवितश्चोभयथा जीयेत। विपर्यये जयति उभयथा स्थाने प्रजवे च।

[ तदनुगुणभूमिविभागः ]

समा विषमा व्यामिश्रा वा भूमिरिति, पुरस्तात्पार्श्वाभ्यां पश्चाच्च ज्ञेया। समायां दण्डमण्डलव्यूहाः, विषमायां भोगसंहतव्यूहाः। व्यामिश्रायां विषमव्यूहाः।

[ युद्धे शत्रुभङ्गदर्शने विजिगीषुणा कर्तव्योंऽशः ]

विशिष्टबलं भङ्क्त्वा सन्धिं याचेत। समबलेन याचितः संदधीत। हीनमनुहन्यात्; न त्वेव स्वभूमिप्राप्तं त्यक्तात्मानं वा॥

पुनरावर्तमानस्य निराशस्य च जीविते।
अधार्यो जायते वेगस्तस्माद्भग्नं न पीडयेत्॥ ३१७॥

इति साङ्ग्रामिके कूटयुद्धविकल्पाः स्वसैन्योत्साहनं स्वबलान्यबलव्यायोगश्च तृतीयोऽध्यायः आदित एकत्रिंशच्छततमः

---

[1] अगदं—औषधम्. स्नेहः घृतादिः. [2] अभूमि—अशक्यम्.

# त्रिपञ्चाशच्चतुःपञ्चाशच्छततमे प्रकरणे- युद्धभूमयः, पत्त्यश्वरथहस्तिकर्माणि च.

## चतुर्थोऽध्यायः

[ युद्धे तत्तदनुगुणभूम्यादि- कल्पनावश्यकता ]

स्वभूमिः पत्त्यश्वरथद्विपानामिष्टा युद्धे निवेशे च ।

धान्वनवननिम्नस्थलयोधिनां खनकाकाशदिवारात्रियोधिनां च पुरुषाणां नादेयपार्वतानूपसारसानां च हस्तिनामश्वानां च यथा स्वमिष्टा युद्धभूमयः कालाश्च ॥

[ रथादिभूमयः ]

समा स्थिराऽभिकाशा निरुत्खातिन्यचक्रखुराऽनक्षग्राहिणी अवृक्षगुल्मप्रततिस्तम्भकेदारश्वभ्रवल्मीकसिकतापङ्कभङ्गुरा दरणहीना च रथभूमिः । [1] हस्त्यश्वयोर्मनुष्याणां च समे विषमे हिता युद्धे निवेशे च ॥

[ अश्वादिभूमिषु विशेषः ]

अण्वश्मवृक्षा ह्रस्वलङ्घनीयश्वभ्रा मन्ददरणदोषा चाश्वभूमिः । स्थूलस्थाण्वश्मवृक्षप्रततिवल्मीकगुल्मा पदातिभूमिः । गम्यशैलनिम्नविषमा मर्दनीयवृक्षा छेदनीयप्रततिः पङ्कभङ्गुरा दरणहीना च हस्तिभूमिः ।

[ पदातिभूम्यादिषु कल्पनीयाः अतिशयाः ]

अकण्टकिन्यबहुविषमा [2] प्रत्यासारवतीति पदातीनामतिशयः । [3] द्विगुणप्रत्यासारा कर्दमोदकखञ्जनहीना निश्शर्करेति वाजिनामतिशयः । पांसुकर्दमोदकनलशराधानवती श्वदंष्ट्राहीना

---

[1] इयमेव रथभूमिरित्यादिः. [2] प्रतिनिवर्तनावकाशवती. [3] पुरःप्रसारावकाशद्विगुणप्रतिनिवर्तनावकाशा.

महावृक्षशाखाघातवियुक्तेति हस्तिनामतिशयः। तोयाशयाश्रयवती निरुत्खातिनी केदारहीना व्यावर्तनसमर्थेति रथानामतिशयः। उक्ता सर्वेषां भूमिः॥

एतया सर्वबलनिवेशाः युद्धानि च व्याख्यातानि भवन्ति॥

[अश्वकर्माणि]

[1] भूमिवासवनविचयः, विषमतोयतीर्थवातरश्मिग्रहणं, वीवधासारयोर्घातो रक्षा वा, विशुद्धिः स्थापना च बलस्य, प्रसारवृद्धिः बाहूत्सारः, पूर्वप्रहारः, व्यावेशनं, व्यावेधनं, आश्वासः, ग्रहणं मोक्षणं, मार्गानुसारविनिमयः, कोशकुमाराभिहरणं, जघनकोट्यभिघातः, हीनानुसारणं, अनुयानं, समाजकर्मेत्यश्वकर्माणि।

[हस्तिकर्माणि]

पुरोयानं, अकृतमार्गवासतीर्थकर्म, बाहूत्सारः, तोयतरणावतरणे, स्थानगमनावतरणं, विषमसंबाधप्रवेशः अग्निदानशमनं, एकाङ्गविजयः, भिन्नसन्धानं, अभिन्नभेदनं, व्यसने त्राणं, अभिघातः, बिभीषिका, त्रासनं, औदार्यं, ग्रहणं, मोक्षणं, सालद्वाराट्टालकभञ्जनं, कोशवाहनापवाहनमिति हस्तिकर्माणि।

[रथकर्माणि]

स्वबलरक्षा, चतुरङ्गबलप्रतिषेधः, संग्रामे ग्रहणं मोक्षणं, भिन्नसन्धानं, अभिन्नभेदनं त्रासनमौदार्यं भीमघोषश्चेति रथकर्माणि।

[पदातिकर्माणि]

सर्वदेशकालशस्त्रवहनं व्यायामश्चेति पदातिकर्माणि।

[अनायुधीयकर्मकरकर्माणि]

शिबिरमार्गसेतुकूपतीर्थशोधनकर्म यन्त्रायुधावरणोपकरणग्रासवहनमायोधनाच्च प्रहरणावरणप्रतिविद्धापनयनमिति विष्टिकर्माणि।

---

[1] भूमेः वासस्य वनस्य च विचयः—उपद्रवपरिहारार्थमाशोधनम्.

[अश्वगजानां अपर्याप्तौ कर्तव्योंऽशः]

कुर्याद्[1] गवाश्वव्यायोगं रथेष्वल्पहयो नृपः ।
[2] खरोष्ट्रशकटानां वा गर्भमल्पगजस्तथा ॥ ३१८ ॥

इति सांग्रामिके युद्धभूमयः, पत्त्यश्वरथहस्तिकर्माणि
चतुर्थोऽध्यायः आदितो द्वात्रिंशतिशततमः.

---

# पञ्चपञ्चाशत्षट्पञ्चाशत्सप्तपञ्चाशच्छततमानि प्रकरणानि [3] पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः, [4] सारफल्गुबलविभागः, पत्त्यश्वरथहस्तियुद्धानि च.

## पञ्चमोऽध्यायः

[युद्धरङ्गस्कन्धावारयोरन्तरं व्यूहरचनाविधिश्च]

पञ्चधनुश्शतावकृष्टदुर्गमवस्थाप्य युद्धमुपेयात्, भूमिवशेन वा । विभक्तमुख्यामचक्षुर्विषये मोक्षयित्वा सेनां सेनापतिनायकौ व्यूहेयाताम् ॥

[पदात्यादिव्यूहनप्रकाराः]

शमान्तरं पत्तिं स्थापयेत् । त्रिशमान्तरमश्वम् । पञ्चशमान्तरं रथम्, हस्तिनं वा । द्विगुणान्तरं त्रिगुणान्तरं वा व्यूहेत । एवं यथासुखमसम्बाधं युध्येत ।

---

[1] अश्वैः सहबलीवर्दानां योजनम्.  [2] सैन्यं खरादिव्यासं कुर्यादित्यर्थः. [3] बलस्य बहिःपुरस्तात्कोटयौ पक्षौ, पश्चादन्तःपार्श्वौ कक्षौ, उरस्यं मध्यम्. एषां सैन्यपरिमाणानुगुण्येन विन्यासविभागः. [4] दण्डसम्पद्विशिष्टानि सैन्यानि साराणि, तदतिरिक्तानि तानि फल्गूनीत्युच्यन्ते.

[धन्व्यादिविषयः अन्तरालविधिः]

पञ्चारत्नि धनुः; तस्मिन् धन्विनं स्थापयेत्। त्रिधनुष्यश्वं, पञ्चधनुषि रथं हस्तिनं वा। पञ्चधनुरनीकसन्धिः पक्षकक्षोरस्थानाम्।

[अश्वाग्रयोधिनां संख्याः]

अश्वस्य त्रयः पुरुषाः प्रतियोद्धारः; पञ्चदश रथस्य, हस्तिनो वा; पञ्च चाश्वाः। तावन्तः पादगोपाः वाजिरथद्विपानां विधेयाः।

[उरस्यभूतेऽनीके स्थापनीयरथसंख्याः]

त्रीणि त्रिकाण्यनीकं रथानामुरस्यं स्थापयेत्। तावत्कक्षं, पक्षं चोभयतः। पञ्चचत्वारिंशत् एवं रथा व्यूहे भवन्ति।

[रथसंख्यानुगुणा अश्वादीयत्ता,
समव्यूहनिगमनं च]

द्वे शते पञ्चविंशतिश्चाश्वाः, षट्शतानि पञ्चसप्ततिश्च पुरुषाः प्रतियोद्धारः। तावन्तः पादगोपा वाजिरथद्विपानाम।

एष समव्यूहः। तस्यापि द्विरथोत्तरा वृद्धिरा एकविंशतिरथादित्येवमोजा दश समव्यूहप्रकृतयो भवन्ति।

[विषमव्यूहनिरूपणम्]

पक्षकक्षोरस्यानामतो विषमसंख्याने विषमव्यूहः। तस्यापि द्विरथोत्तरा वृद्धिरा एकविंशतिरथादित्येवमोजा दश विषमव्यूहप्रकृतयो भवन्ति॥

[आवापप्रत्यावापादिविधिः]

अतस्सैन्यानां व्यूहशेषमावापः कार्यः। रथानां द्वौ त्रिभागावङ्गेष्वावापयेत्। शेषमुरस्यं स्थापयेत्। एवं त्रिभागोनो रथानामावापः कार्यः। तेन हस्तिनामश्वानां आवापो व्याख्यातः।

यावदश्वरथद्विपानां युद्धसंबाधं[1] न कुर्यात्, [2]तावदावापः कार्यः।

---

[1] युद्धसमर्दम्. [2] त्रिभागोन इत्यादिविधयस्तु प्रदर्शनार्था इति भावः.

दण्डबाहुल्यमावापः। पत्तिबाहुल्यं प्रत्यावापः। एकाङ्गबाहुल्यमन्वावापः। दूष्यबाहुल्यमत्यावापः॥

परावापात् प्रत्यावापादाचतुर्गुणादाऽष्टगुणादिति वा विभवतस्सैन्यानामावापः कार्यः॥

[हस्तिव्यूहरचना]

रथव्यूहेन हस्तिव्यूहो व्याख्यातः। व्यामिश्रो वा हस्तिरथाश्वानाम्। चक्रान्तेषु हस्तिनः, पार्श्वयोरश्वाः मुख्याः, रथा उरस्ये, हस्तिनामुरस्यं रथानां कक्षावश्वानां पक्षाविति मध्यभेदी। विपरीतोऽन्तभेदी।

[शुद्धाः हस्त्यादिव्यूहाः]

हस्तिनामेव तु शुद्धः। सान्नाह्यानामुरस्यं, [1] औपवाह्यानां जघनं, व्यालानां कोट्याविति। अश्वव्यूहो वर्मिणामुरस्यं शुद्धानां कक्षपक्षाविति। पत्तिव्यूहः पुरस्तादावरणिनः पृष्ठतो धन्विन इति शुद्धाः।

[मिश्रव्यूहाः]

पत्तयः पक्षयोरश्वाः पार्श्वयोः, हस्तिनः पृष्ठतो रथाः पुरस्तात्, परव्यूहवशेन वा विपर्यासः इति द्व्यङ्गबलविभागः। तेन त्र्यङ्गबलविभागो व्याख्यातः।

[पदात्यादीनां सारबलत्वापादका गुणाः]

दण्डसम्पत् सारबलं पुंसाम्। हस्त्यश्वयोर्विशेषः—कुलं जातिः सत्त्वं वयःस्थता प्राणो वर्ष्म जवस्तेजश्शिल्पं स्थैर्यमुदग्रता विधेयत्वं सुव्यञ्जनाचारतेति।

[उक्तसारबलस्य व्यूहे उपयोगक्रमः]

पत्त्यश्वरथद्विपानां सारत्रिभागमुरस्यं स्थापयेत्। द्वौ त्रिभागौ कक्षं पक्षं चोभयतः। अनुलोममनुसारम् प्रतिलोमं तृतीयसारम् फल्गु प्रतिलोमम् एवं सर्वमुपयोगं गमयेत्॥

---

[1] आवापबाह्यानाम् विन्यासस्थानमिति शेषः.

[फल्गुबलस्यैवाग्रतो निवेशने
हेतुः, योधनक्रमश्च]

फल्गुबलमन्तेष्ववधाय वेगोऽभिहुतो भवति । सारबलमग्रतः कृत्वा कोटीष्वनुसारं कुर्यात् । जघने तृतीयसारं, मध्ये फल्गुबलमेतत् सहिष्णु भवति ।

व्यूहं तु स्थापयित्वा पक्षकक्ष्योरस्यानामेकेन द्वाभ्यां वा प्रहरेत् । शेषैः प्रतिगृह्णीयात् ।

[शत्रुसैन्येषु प्रहारस्थानानि]

यत्तु परस्य दुर्बलं वीतहस्त्यश्वं दूष्यामात्यकं कृतोपजापं वा, तत्प्रभूतसारेणाभिहन्यात् । यद् वा परस्य [1]सारिष्ठं तद्द्विगुणसारेणाभिहन्यात् । यदङ्गमल्पसारमात्मनस्तद्बहुनोपचिनुयात् । यतः परस्यापचयस्ततोऽभ्याशे व्यूहेत, यतो वा भयं स्यात् ।

[अश्वहस्तिरथपत्तीनां योधनकर्माणि]

अभिसृतं परिसृतमतिसृतमपसृतमुन्मथ्यावधानं वलयो गोमूत्रिका मण्डलं प्रकीर्णिका व्यावृत्तपृष्ठमनुवंशमग्रतः पार्श्वाभ्यां पृष्ठतो भग्नरक्षा भग्नानुपातः इत्यश्वयुद्धानि ।

प्रकीर्णिकावर्जान्येतान्येव, चतुर्णामङ्गानां व्यस्तसमस्तानां वा घातः, पक्षकक्षोरस्यानां च प्रभञ्जनमवस्कन्दः [2]सौप्तिकं चेति हस्तियुद्धानि ।

उन्मथ्यावधानवर्जान्येतान्येव स्वभूमावभियानापयानस्थितयुद्धानीति रथयुद्धानि ।

सर्वदेशकालप्रहरणमुपांशुदण्डश्चेति पत्तियुद्धानि ॥

[निगमनम्]

एतेन विधिना व्यूहानोजान् युग्मांश्च कारयेत् ।
विभवो यावदङ्गानां चतुर्णां सदृशो भवेत् ॥ ३१९ ॥

---

[1] सारतमं बलम्. [2] सुप्तानामेव वधः.

[ राजस्थित्यनुकूलः प्रदेशः ]

द्वे शते धनुषां गत्वा राजा तिष्ठेत् प्रतिग्रहे ।
भिन्नसङ्घातनं तस्मान्न युध्येताप्रतिग्रहः ॥ ३२० ॥

इति सांग्रामिके पक्षकक्षोरस्यानां बलाग्रतो व्यूहविभागः,
सारफल्गुविभागः, पत्यश्वरथहस्तियुद्धानि च
पञ्चमोऽध्यायः.
आदितस्त्रयस्त्रिंशच्छततमः.

---

# अष्टपञ्चाशदेकोनषष्टितमे प्रकरणे–
# दण्डभोगमण्डलासंहतव्यूहव्यूहनं,
# तस्य प्रतिव्यूहस्थापनं च.

## षष्ठोऽध्यायः

[ व्यूहविभजनविषये मतभेदः, चत्वारः
प्रकृतिव्यूहाः तल्लक्षणानि च ]

'पक्षावुरस्यं प्रतिग्रहः' इत्यौशनसो व्यूहविभागः । 'पक्षौ कक्षावुरस्यं प्रतिग्रहः' इति बार्हस्पत्यः । प्रपक्षकक्षोरस्या उभयोः । दण्डभोगमण्डलासंहताः प्रकृतिव्यूहाः । तत्र –तिर्यग्वृत्तिर्दण्डः, समस्तानामन्वावृत्तिर्भोगः, सरतां[1] सर्वतोवृत्तिः मण्डलः । स्थितानां पृथगनीकवृत्तिरसंहतः ॥

[ स्वमतेन तेषां लक्षणानि, तत्र
दण्डव्यूहा अष्टादश ]

पक्षकक्षोरस्यैस्समं वर्तमानो दण्डः । [2]स कक्षाभिक्रान्तः प्रदरः । स एव [3] पक्षाभ्यां प्रतिक्रान्तो दृढकः, स एवातिक्रान्तः [4]पक्षाभ्यामसह्यः ; पक्षाववस्थाप्योरस्याभिक्रान्तः श्येनः ; विपर्यये चापं

---

[1] शत्रुसैन्याभिमुखं गच्छताम्. [2] कक्षातिक्रान्तः–पा. [3] पक्षकक्षाभ्यां–पा. [4] एव निष्क्रान्तः–पा.

चापकुक्षिः, प्रतिष्ठः सुप्रतिष्ठश्च। चापपक्षस्सञ्जयः ; स एवोरस्यातिक्रान्तो विजयः, स्थूलकर्णपक्षः [1] स्थूलकर्णः ; द्विगुणपक्ष[2]स्थूलो विशालविजयः, त्र्यभिक्रान्तपक्षश्चमूमुखः ; विपर्यये झषास्यः। ऊर्ध्वराजिर्दण्डः सूची ; द्वौ दण्डौ वलयः ; चत्वारो दुर्जयः इति दण्डव्यूहाः ॥

[ पञ्च भोगव्यूहाः ]

पक्षकक्षोरस्यैः विषमं वर्तमानो भोगः। स सर्पसारी गोमूत्रिका वा। स युग्मोरस्यो दण्डपक्षः शकटः ; विपर्यये मकरः। हस्त्यश्वरथैर्व्यतिकीर्णः शकटः पारिपतन्तकः। इति भोगव्यूहाः ॥

[ द्वौ मण्डलव्यूहौ ]

पक्षकक्षोरस्यानां एकीभावे मण्डलः। स सर्वतोमुखः सर्वतोभद्रः। अष्टानीको दुर्जयः। इति मण्डलव्यूहाः।

[ षट् असंहतव्यूहाः ]

पक्षकक्षोरस्यानां असंहतादसंहतः। स पञ्चानीकानामाकृतिस्थापनाद्वज्रो गोधा वा। चतुर्णामुद्यानकः काकपदी वा। त्रयाणामर्धचन्द्रकः कर्काटकशृङ्गी वा। इत्यसंहतव्यूहाः ॥

[ अन्ये त्रयो व्यूहभेदाः ]

रथोरस्यो हस्तिकक्षोऽश्वपृष्ठोऽरिष्टः। पत्तयोऽश्वा रथा हस्तिनश्चानुपृष्ठमचलः। हस्तिनोऽश्वा रथाः पत्तयश्चानुपृष्ठमप्रतिहतः।

[ उक्तानां व्यूहानां घातुकाः
प्रतिबलव्यूहाः ]

तेषां प्रदरं दृढकेन घातयेत्, दृढकमसह्येन, श्येनं चापेन, प्रतिष्ठं सुप्रतिष्ठेन, सञ्जयं विजयेन, स्थूलकर्णं विशालविजयेन, पारिपतन्तकं सर्वतोभद्रेण, दुर्जयेन सर्वान् प्रतिव्यूहेत ॥

---

[1] स्थूणाकर्णः–पा.

[ पत्त्यादीनां प्रतिबलानि, सेनापतिविभागः,
तैस्सङ्केतकरणावश्यकता ]

पत्त्यश्वरथद्विपानां पूर्वपूर्वमुत्तरेण घातयेत्, हीनाङ्गमधिकाङ्गेन चेति ॥

अङ्गदशकस्यैकः पतिः पदिकः; पदिकदशकस्यैकः सेनापतिः; तद्दशकस्यैको नायक इति । स तूर्यघोषध्वजपताकाभिः व्यूहाङ्गानां संज्ञाः स्थापयेत्[1] अङ्गविभागे सङ्घाते स्थाने गमने व्यावर्तने प्रहरणे च[2] ॥

[ जयानुकूलाः परोद्वेगरचनाः ]

समे व्यूहे देशकाल[3]सारयोगात्सिद्धिः[4] ॥
यन्त्रैरुपनिषद्योगैः तीक्ष्णैर्व्यासक्तघातिभिः ।
मायाभिर्दैवसंयोगैः शकटैर्हस्तिभूषणैः ॥ ३२१ ॥
दूष्यप्रकोपैर्गोयूथैः स्कन्धावारप्रदीपनैः ।
कोटीजघनघातैर्वा दूतव्यञ्जनभेदनैः ॥ ३२२ ॥
दुर्गं दग्धं हृतं वा ते कोपः कुल्यः समुत्थितः ।
शत्रुराटविको वेति परस्योद्वेगमाचरेत् ॥ ३२३ ॥

[ युद्धान्मन्त्रस्यैव बलवत्तरत्वम् ]

एकं हन्यान्न वा हन्यादिषुः[5] क्षिप्तो धनुष्मता ।
प्राज्ञेन तु मतिः क्षिप्ता हन्याद् गर्भगतानपि ॥ ३२४ ॥

इति साङ्ग्रामिके दण्डभोगमण्डलासंहतव्यूहव्यूहनं, तस्य प्रतिव्यूहस्थापनं च षष्ठोऽध्यायः. आदितश्चतुस्त्रिंशच्छततमः.

---

एतावता कौटलीयस्यार्थशास्त्रस्य साङ्ग्रामिकं दशममधिकरणं समाप्तम्.

---

[1] संहतानामङ्गानां विभजने. [2] करणीये इति शेषः. [3] सारः—शौर्यादिः. [4] सिद्धिः—जयः. [5] प्रयुक्त इत्यर्थः.

# अथ कौटलीये अर्थशास्त्रे
# सङ्घवृत्तं नाम
## एकादशमधिकरणम्

---

### अस्य चेयं प्रकरणानुक्रमणिका



---

### अनयोः प्रकरणयोः प्रतिपादितानामर्थानामयं सङ्ग्रहः.

---

160 भेदोपादानानि.
(पु. 403)

सङ्घसहायस्यावश्यकता.

प्रतिकूलसङ्घविश्लेषणोपायाः

राजशब्दोपजीविप्रतिकूलसङ्घविश्लेषणोपायाः.

161 उपांशुदण्डः
(पु. 405)

प्रतिकूलसङ्घमुख्यहननोपायाः.

सङ्घमुख्यस्य सङ्घेषु वर्तनक्रमः.

---

# अथ सङ्घवृत्तं नाम एकादशमाधिकरणम्

---

## षष्ट्येकषष्टिशततमे प्रकरणे– भेदोपादानानि, उपांशुदण्डश्च.

### प्रथमोऽध्यायः

[ सङ्घसहायस्यावश्यकता, प्रतिकूलसङ्घविश्लेषणोपायाः बहुविधाः ]

सङ्घलाभो दण्डमित्रलाभानामुत्तमः। सङ्घाः हि संहतत्वादधृष्याः परेषाम्।ताननुगुणान् [1]भुञ्जीत सामदानाभ्याम्; विगुणान् भेददण्डाभ्याम्॥

[2]काम्बोजसुराष्ट्रक्षत्रियश्रेण्यादयो वार्ताशास्त्रोपजीविनः।

[3]लिच्छिविकव्रजिकमल्लकमद्रककुकुरकुरुपाञ्चालादयो राजशब्दोपजीविनः॥

सर्वेषामासन्नाः सत्रिणः सङ्घानां परस्पर[4]न्यङ्गद्वेषवैरकलहस्थानान्युपलभ्य [5]क्रमाभिनीतं भेदमुपचारयेयुः—'असौ त्वा विजल्पति' इति। एवमुभयतः। बद्धरोषाणां विद्याशिल्पद्यूतवैहारिकेष्वाचार्यव्यञ्जना बालकलहानुत्पादयेयुः। [6]वेशशौण्डिकेषु वा प्रतिलोमप्रशंसाभिः सङ्घमुख्यमनुष्याणां तीक्ष्णाः कलहानुत्पादयेयुः, कृत्यपक्षोपग्रहेण वा॥

कुमारकान् [7]विशिष्टच्छन्दिकया हीनच्छन्दिकानुत्साहयेयुः॥

---

[1] स्वायत्तीकुर्यात्. [2] काम्बोजेषु सुराष्ट्रेषु च वर्तमानाः क्षत्रियश्रेणीवैश्यश्रेणीप्रभृतयः. [3] लिच्छिविकादयः देशविशेषाः सप्त. [4] न्यङ्ग–दोषवचनम्. [5] क्रमेण नीताभिमुख्यं विश्लेषयेयुरित्यर्थः. [6] वेशः–वेश्या. [7] इष्टभोग्यवृत्तिः छन्दिका.

विशिष्टानां चैकपात्रं[1] विवाहं हीनेभ्यो वारयेयुः। हीनान् वा विशिष्टैरेकपात्रे विवाहे वा योजयेयुः; अवहीनान् वा तुल्यभावोपगमने कुलतः पौरुषतः स्थानविपर्यासतो वा। व्यवहारमवस्थितं वा प्रतिलोमस्थापनेन निशामयेयुः। विवादपदेषु वा द्रव्यपशुमनुष्याभिघातेन रात्रौ तीक्ष्णाः कलहानुत्पादयेयुः। सर्वेषु च कलहस्थानेषु हीनपक्षं राजा कोशदण्डाभ्यामुपगृह्य प्रतिपक्षवधे योजयेत्, भिन्नानपवाहयेद्वा। एकदेशे समस्तान् वा निवेश्य भूमौ चैषां पञ्चकुलीं दशकुलीं वा कृष्यां निवेशयेत्। एकस्था हि शस्त्रग्रहणसमर्थास्स्युः। समवाये चैषामत्ययं स्थापयेत्।

[राजशब्दोपजीविप्रतिकूलसङ्घविश्लेषणोपायाः]

(१) [2]राजशब्दिभिरवरुद्धमवक्षिप्तं वा कुल्यमभिजातं राजपुत्रत्वे स्थापयेत्। कार्तान्तिकादिश्चास्य वर्गो राजलक्षण्यतां सङ्घेषु प्रकाशयेत्। सङ्घमुख्यांश्च धर्मिष्ठानुपजपेत्—'स्वधर्मममुष्य राज्ञः पुत्रे भ्रातरि वा प्रतिपद्यध्वम्' इति। प्रतिपन्नेषु कृत्यपक्षोपग्रहार्थमर्थं दण्डं च प्रेषयेत्। विक्रमकाले शौण्डिकव्यञ्जनाः पुत्रदारप्रेतापदेशेन[3] 'नैषेचनिकम्' इति मदनरसयुक्तान् मद्यकुम्भान् शतशः प्रयच्छेयुः।

(२) चैत्यदैवतद्वाररक्षास्थानेषु च सत्त्रिणः समयकर्मनिक्षेपं सहिरण्याभिज्ञानमुद्राणि हिरण्यभाजनानि च [4]प्ररूपयेयुः। दृश्यमानेषु च सङ्घेषु 'राजकीयाः (विक्रीताः)' इत्यावेदयेयुः। [5]अथावस्कन्दं दद्यात्।

(३) सङ्घानां वा वाहनहिरण्ये कालिके गृहीत्वा सङ्घमुख्याय प्रख्यातं द्रव्यं प्रयच्छेत्। तदेषां याचिते 'दत्तममुष्मै मुख्याय' इति ब्रूयात्।

एतेन [6]स्कन्धावाराटवीभेदो व्याख्यातः॥

---

[1] एकपात्रं–एकपङ्क्तिभोजनम्. [2] राजनामधरैर्लैच्छिविकादिभिः. [3] मृतोद्देशेन दीयमानमिदं नैषेचनिकाख्यं मद्यमिति वदन्तः इत्यर्थः. [4] प्रकाशयेयुः. [5] अनुपदमेव बलात् सङ्घाक्रमणं कुर्यादिति भावः. [6] स्कन्धावारप्रविष्टाटविकविश्लेषणोपाय इत्यर्थः.

[तादृशसङ्घमुख्यहननोपायाः]

(१) सङ्घमुख्यपुत्रमात्मसम्भावितं वा सत्री [1] ग्राहयेत्—'अमुष्य राज्ञः पुत्रस्त्वं, शत्रुभयादिह न्यस्तोऽसि' इति। प्रतिपन्नं राजा कोशदण्डाभ्यां उपगृह्य सङ्घेषु विक्रमयेत्। अवाप्तार्थः तमपि [2] प्रवासयेत्।

(२) बन्धकीपोषकाः प्लवकनटनर्तकसौभिका वा प्रणिहिताः स्त्रीभिः परमरूपयौवनाभिस्सङ्घमुख्यानुन्मादयेयुः। जातकामानामन्यतमस्य प्रत्ययं कृत्वाऽन्यत्र गमनेन प्रसभहरणेन वा कलहानुत्पादयेयुः। कलहे तीक्ष्णाः [3] कर्म कुर्युः—'हतोऽयमित्थं कामुकः' इति।

(३) विसंवादितं वा मर्षयमाणमभिसृत्य स्त्री ब्रूयात्—'असौ मां मुख्यस्त्वयि जातकामां बाधते; तस्मिन् जीवति नेह स्थास्यामि' इति, घातमस्य प्रयोजयेत्।

(४) प्रसह्यापहृता वा उपवनान्ते क्रीडागृहे वाऽपहर्तारं रात्रौ तीक्ष्णेन घातयेत्, स्वयं वा रसेन। ततः प्रकाशयेत्—'अमुना मे प्रियो हतः' इति।

(५) जातकामं वा सिद्धव्यञ्जनः [4] सांवननिकीभिरौषधीभिस्संवास्य रसेना[5]तिसन्धायापगच्छेत्। तस्मिन्नपक्रान्ते सत्रिणः परप्रयोगमभिशंसेयुः।

(६) आढ्यविधवा गूढाजीवा योगस्त्रियो वा दायनिक्षेपार्थं विवदमानास्सङ्घमुख्यानुन्मादयेयुः; अदितिकौशिकस्त्रियो नर्तकगायना वा। प्रतिपन्नान् गूढवेश्मसु रात्रिसमागमप्रविष्टास्तीक्ष्णा हन्युः, बद्ध्वा हरेयुर्वा।

(७) सत्री वा स्त्रीलोलुपं सङ्घमुख्यं [6]प्ररूपयेत्—'अमुष्मिन् ग्रामे दरिद्रकुलमपसृतं; तस्य स्त्री राजार्हा, गृहाणैनां' इति। गृहीतायां [7]अर्धमासान्तरं सिद्धव्यञ्जनो दूष्यसङ्घमुख्यमध्ये प्रक्रोशेत्—'असौ मे मुख्यां भार्यां स्नुषां भगिनीं दुहितरं वाऽधिचरति' इति। तं चेत् सङ्घो निगृह्णीयात्, राजैनमुपगृह्य विगुणेषु विक्रमयेत्। [8]अनिगृहीते

---

[1] सयुक्तिकं बोधयेत्. [2] हन्यात्. [3] गूढं सङ्घमुख्यरूपं कर्म. [4] वशीकरणकारकैः. [5] हत्वा. [6] आवेदयेत्. [7] अर्धमासानन्तरम्—पा. [8] अनिशं हि ते—पा.

सिद्धव्यञ्जनं रात्रौ तीक्ष्णाः प्रवासयेयुः। ततस्तद्व्यञ्जनाः प्रक्रोशेयुः —'असौ ब्रह्महा ब्राह्मणीजारश्च' इति।

(८) कार्तान्तिकव्यञ्जनो वा कन्यामन्येन वृतामन्यस्य प्ररूपयेत् 'अमुष्य कन्या राजपत्नी राजप्रसविनी च भविष्यति; सर्वस्वेन प्रसह्य वैनां लभस्व' इति। अलभ्यमानायां परपक्ष[1]मुद्धर्षयेत्। लब्धायां सिद्धः कलहः।

(९) भिक्षुकी वा प्रियभार्यं मुख्यं ब्रूयात् —'असौ ते मुख्यो यौवनोद्रिक्तो भार्यायां मां प्राहिणोत्; तस्याहं भयात् [2]लेख्यमाभरणं गृहीत्वाऽऽगतास्मि; निर्दोषा ते भार्या; गूढमस्मिन् प्रतिकर्तव्यम्। अहमपि तावत् प्रतिपत्स्यामि' इति।

एवमादिषु कलहस्थानेषु स्वयमुत्पन्ने वा कलहे तीक्ष्णैरुत्पादिते वा हीनपक्षं राजा कोशदण्डाभ्यामुपगृह्य विगुणेषु विक्रमयेत् [3]अपवाहयेद्वा।

सङ्घेष्वेवमेकराजो वर्तेत। सङ्घाश्चाप्येवमेकराजाः तेभ्योऽतिसंधानेभ्यो रक्षयेयुः।

[सङ्घमुख्यस्य सङ्घेषु वर्तनक्रमः]

सङ्घमुख्यश्च सङ्घेषु न्यायवृत्तिर्हितः प्रियः।
दान्तो युक्तजनस्तिष्ठेत् सर्वचित्तानुवर्तकः॥ ३२५॥

इति सङ्घवृत्ते भेदोपादानानि, उपांशुदण्डश्च प्रथमोऽध्यायः
आदितः पञ्चत्रिंशच्छततमः.

———

एतावता कौटलीयस्यार्थशास्त्रस्य सङ्घवृत्तं
एकादशमधिकरणं समाप्तम्.

———

[1] उत्साहयेत्. [2] कामलेखम्. [3] स्वदेशान्निर्वासयेद्वा.

# अथ कौटलीये अर्थशास्त्रे
# आबलीयसं नाम
## द्वादशमधिकरणम्

---

### अस्य चेयं प्रकरणानुक्रमणिका



आहत्य ९ प्रकरणानि. ५ अध्यायाः. ५ कारिकाः.

---

## एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं सङ्ग्रहः

# अथ आबलीयसं नाम द्वादशमधिकरणम्

---

## द्विषष्टिशततमं प्रकरणम्—दूतकर्माणि

### प्रथमोऽध्यायः

[प्रबलशत्रुणाभियुक्तेन दुर्बलेन कर्तव्येंऽशे मतभेदाः]

'बलीयसाऽभियुक्तो दुर्बलस्सर्वत्रानुप्रणतो [1]वेतसधर्मा तिष्ठेत्। इन्द्रस्य हि स प्रणमति, यो बलीयसो नमति[2]' इति भारद्वाजः। सर्वसन्दोहेन बलानां युध्येत; पराक्रमो हि व्यसनमपहन्ति; स्वधर्मश्चैष क्षत्रियस्य—युद्धे जयः पराजयो वा' इति विशालाक्षः। 'न' इति कौटल्यः—सर्वत्रानुप्रणतः [3]कुलैडक इव निराशो जीविते वसति। युध्यमानश्चाल्पसैन्यः समुद्रमिवाप्लवोऽवगाहमानस्सीदति। तद्विशिष्टं तु राजानमाश्रितो दुर्गमविषह्यं वा चेष्टेत।

[अभियोक्तृभेदाः तत्प्रतीकारप्रकाराश्च]

त्रयोऽभियोक्तारो धर्मलोभासुरविजयिन इति। तेषामभ्यवपत्त्या धर्मविजयी तुष्यति। तमभ्यवपद्येत परेषामपि भयात्। भूमिद्रव्यहरणेन लोभविजयी तुष्यति; तमर्थेनाभ्यवपद्येत। भूमिद्रव्यपुत्रदारप्राणहरणेन असुरविजयी, तं भूमिद्रव्याभ्यां [4]उपगृह्याग्राह्यः[5] प्रतिकुर्वीत।

तेषामन्यतममुत्तिष्ठमानं सन्धिना मन्त्रयुद्धेन कूटयुद्धेन वा प्रतिव्यूहेत; शत्रुपक्षस्य सामदानाभ्यां; स्वपक्षं भेददण्डाभ्याम्

---

[1] वञ्जुलवन्नम्रीभूयेत्यर्थः. [2] तथा च बलीयांसं प्रति प्रणामः गौरवावह एवेति भावः. [3] कुलमेषः स्वयूथाद्भ्रष्ट इव त्रस्तः इत्यर्थः. [4] उपगृह्य—आवर्ज्य. [5] अग्राह्यः—तद्धस्तग्रहणाविषयस्सन्नेव.

दुर्गं राष्ट्रं स्कन्धावारं वाऽस्य गूढाश्शस्त्ररसाग्निभिस्साधयेयुः। सर्वतः पार्ष्णिमस्य ग्राहयेत्। अटवीभिर्वा राज्यं घातयेत्। तत्कुलीनावरुद्धाभ्यां वा हारयेत्॥

[ सन्धानार्थदूतप्रेषणविधिः तदपेक्षानुगुण्येन सन्धिप्रकाराश्च ]

अपकारान्तेषु चास्य दूतं प्रेषयेत्। अनपकृत्य वा संधानम्[1]। तथाऽप्यभिप्रयान्तं कोशदण्डयोः [2]पादोत्तरमहोरात्रोत्तरं वा सन्धिं याचेत॥

स चेद्दण्डसन्धिं याचेत—[3]कुण्ठमस्मै हस्त्यश्वं दद्यादुत्साहितं वा[4]गरयुक्तम्॥

पुरुषसन्धिं याचेत—दूष्यामित्राटवीबलमस्मै दद्याद् योगपुरुषाधिष्ठितम्। तथा कुर्याद्यथोभयविनाशस्स्यात्। तीक्ष्णबलं वाऽस्मै दद्यात, अवमानितं विकुर्वीत, मौलमनुरक्तं वा यदस्य व्यसनेऽपकुर्यात्॥

कोशसन्धिं याचेत—सारमस्मै दद्यात् यस्य क्रेतारं नाधिगच्छेत्; कुप्यमयुद्धयोग्यं वा॥

भूमिसन्धिं याचेत—प्रत्यादेयां नित्यामित्रामनपाश्रयां महाक्षयव्ययनिवेशां वाऽस्मै भूमिं दद्यात्॥

सर्वस्वेन वा राजधानीवर्जेन सन्धिं याचेत [5]बलीयसः॥

[ सन्धिकरणे औचित्यप्रदर्शनम् ]

यत् प्रसह्य हरेदन्यः तत् प्रयच्छेदुपायतः[6]।
रक्षेत् स्वदेहं न धनं, का ह्यनित्ये धने दया?॥ ३२६॥

इत्याबलीयसे दूतकर्माणि सन्धियाजनं
प्रथमोऽध्यायः, आदितः षट्त्रिंशच्छततमः,

———

[1] याचनीयमिति शेषः. [2] पूर्वपणितादिति शेषः. [3] कर्मकरणाशक्तम्.
[4] किञ्चित्काल एव तन्मारकं विषयुक्तं कृत्वा. [5] बलवतः शत्रोः सकाशात्.
[6] सन्धिव्याजेन.

# त्रिषष्टिशततमं प्रकरणम्–मन्त्रयुद्धम्.

## द्वितीयोऽध्यायः

[ उक्ते प्रबले सन्धिमनभ्युपगच्छति अभ्युपगमाय कर्तव्याः उपदेशाः ]

स चेत् सन्धौ नावतिष्ठेत, ब्रूयादेनं—'इमे [1] षड्वर्गवशगा राजानो विनष्टाः, तेषामनात्मवतां नार्हसि मार्गमनुगन्तुं ; धर्ममर्थं चावेक्षस्व ; मित्रमुखा ह्यमित्रास्ते, ये त्वां साहसमधर्ममर्थातिक्रमं च ग्राहयन्ति ; शूरैस्त्यक्तात्मभिः सह योद्धुं साहसं ; जनक्षयमुभयतः कर्तुमधर्मः ; दृष्टमर्थं मित्रमदुष्टं च त्यक्तुमर्थातिक्रमः, मित्रवांश्च स राजा भूयश्चैतेनार्थेन मित्राण्युद्योजयिष्यति, यानि त्वा सर्वतोऽभियास्यन्ति ; न च मध्यमोदासीनयोर्मण्डलस्य वा परित्यक्तः ; भवांस्तु परित्यक्तो ये त्वां समुद्युक्तमुपप्रेक्षन्ते–भूयः क्षयव्ययाभ्यां युज्यतां ; मित्राच्च भिद्यतां ; अथैनं परित्यक्तमूलं सुखेनोच्छेत्स्यामहे इति, स भवान्नार्हति मित्रमुखानाममित्राणां श्रोतुं ; मित्राण्युद्वेजयितुं, अमित्रांश्च श्रेयसा योक्तुं ; प्राणसंशयमनर्थं चोपगन्तुम्' इति। [2] ततो यच्छेत् ॥

[ उपदेशस्याप्यनादरणे तद्भेदनघातनादिविधिः ]

तथापि प्रतिष्ठमानस्य प्रकृतिकोपमस्य कारयेद्यथा सङ्घवृत्ते व्याख्यातं, योगवामने च । तीक्ष्णरसदप्रयोगं च । यदुक्तमात्मरक्षितके रक्ष्यं, तत्र तीक्ष्णान् रसदांश्च प्रयुञ्जीत ॥

[ सेनामुख्यानां भेदने घातने च उपायाः ]

बन्धकीपोषकाः परमरूपयौवनाभिः स्त्रीभिस्सेनामुख्यानुन्मादयेयुः । बहूनामेकस्यां द्वयोर्वा मुख्ययोः कामे जाते तीक्ष्णाः कलहानुत्पादयेयुः । कलहे पराजितपक्षं परत्रापगमने यात्रासाहाय्यदाने वा भर्तुर्योजयेयुः ॥

---

[1] अरिषड्वर्गेत्यर्थः. [2] गृहीतयथोक्तोपदेशाय सन्ध्यर्थं दद्यादित्यर्थः-गच्छेत्-पा.

कामवशात् वा सिद्धव्यञ्जनाः सांवननिकीभिरोषधीभिरतिसंधानाय मुख्येषु रसं दापयेयुः ॥

[राज्ञो विषदानविधिः]

वैदेहकव्यञ्जनो वा राजमहिष्यास्सुभगायाः प्रेष्यामासन्नां कामनिमित्तं [1]अर्थेनाभिवृष्य परित्यजेत् । तस्यैव परिचारकव्यञ्जनोपदिष्टः सिद्धव्यञ्जनस्सांवननिकीमोषधीं दद्यात्—' वैदेहकशरीरे[2]ऽवधातव्या ' इति । सिद्धे सुभगाया अप्येनं योगमुपदिशेत्—' राजशरीरेऽवधातव्या ' इति । ततो रसेनातिसंदध्यात् ॥

[महामात्रभेदनोपायाः]

कार्तान्तिकव्यञ्जनो वा महामात्रं ' राजलक्षणसम्पन्नं ' क्रमाभिनीतं ब्रूयात् ; भार्यामस्य भिक्षुकी[3]—' राजपत्नी राजप्रसविनी वा भविष्यसि, इति ।

भार्याव्यञ्जना वा महामात्रं ब्रूयात्—' राजा किल मामवरोधयिष्यति ; तवान्तिकाय पत्रलेख्यमाभरणं चेदं परिव्राजिकयाऽऽहृतम् ' इति ।

सूदारालिकव्यञ्जनो वा रसप्रयोगार्थं राजवचनमर्थं चास्य लोभनीयमभिनयेत् ; तदस्य वैदेहकव्यञ्जनः प्रतिसंदध्यात् । कार्यसिद्धिं च ब्रूयात् । एवमेकेन द्वाभ्यां त्रिभिरित्युपायैरेकैकस्य महामात्रं विक्रमायापगमनाय वा योजयेदिति ॥

[शून्यपालात् पौराणां भेदने उपायः]

दुर्गेषु चास्य [4]शून्यपालासन्नास्सत्रिणः पौरजानपदेषु मैत्रीनिमित्तमावेदयेयुः—' शून्यपालेनोक्ता योधाश्च अधिकरणस्थाश्च—कृच्छ्रगतो राजा जीवन्नागमिष्यति न वा, प्रसह्य वित्तमार्जयध्वममित्रांश्च हत ' इति । बहुलीभूते तीक्ष्णाः पौरान्निशास्वाहारयेयुः, मुख्यांश्चाभिहन्युः—' एवं क्रियन्ते, ये शून्यपालस्य न शुश्रूषन्ते '

---

[1] प्रचुरधनवर्षणेन सम्भाव्य. [2] क्षेप्तव्येत्युक्त्वा इत्यर्थः. [3] ब्रूयादिति शेषः.
[4] शत्रुजयार्थप्रयाणेन राजशून्यं नगरं ये तत्कालं पालयन्ति ते शून्यपालाः.

इति । शून्यपालस्थानेषु च सशोणितानि शस्त्रवित्तबन्धनान्युत्सृजेयुः । ततस्सत्रिणः—'शून्यपालो घातयति, विलोपयति च' इत्यावेदयेयुः ॥

[जानपदादिभेदनोपायाः साहसकर्माणि च]

एवं जानपदान् समाहर्तुर्भेदयेयुः ।

समाहर्तृपुरुषांस्तु—ग्राममध्येषु रात्रौ तीक्ष्णा गत्वा ब्रूयुः—'एवं क्रियन्ते ; ये जनपदमधर्मेण बाधन्ते' इति ।

समुत्पन्ने दोषे शून्यपालं समाहर्तारं वा प्रकृतिकोपेन घातयेयुः । तत्कुलीनमवरुद्धं वा प्रतिपादयेयुः ॥

अन्तःपुर[1]पुरद्वारद्रव्यधान्यपरिग्रहान्[2] ।
दहेयुस्तांश्च हन्युर्वा [3]ब्रूयुरस्यार्तवादिनः ॥ ३२७ ॥

इत्याबलीयसे दूतकर्मणि वाक्ययुद्धं मन्त्रयुद्धं द्वितीयोऽध्यायः.

आदितस्सप्तत्रिंशच्छततमः.

---

# चतुष्षष्टिपञ्चषष्टिशततमे प्रकरणे—सेनामुख्यवधः, मण्डलप्रोत्साहनं च.

## तृतीयोऽध्यायः

[महामात्रादीनां राजसकाशाद्भेदनप्रकाराः]

राज्ञो राजवल्लभानां चासन्नास्सत्रिणः [4]पत्त्यश्वरथद्विपमुख्यानां 'राजा क्रुद्धः' इति सुहृद्विश्वासेन मित्रस्थानीयेषु कथ-

---

[1] पुरद्वारं तु गोपुरम्. [2] परिग्रहः-संग्रहागारम्. [3] अस्य ब्रूयुः—पौरजानपदकृतत्वेन उद्घोषयेयुः. [4] पत्त्यादिमुख्यानां मित्रस्थानीयेषु सुहृद्विश्वासेन कथयेयुरित्यन्वयः.

येयुः। बहुलीभूते तीक्ष्णाः कृतरात्रिचारप्रतीकाराः गृहेषु स्वामिवचनेन [1] 'आगम्यताम्' इति ब्रूयुः। तान्निर्गच्छत एवाभिहन्युः। 'स्वामिसन्देशः' इति चाऽऽसन्नान् ब्रूयुः। ये च प्रवासितास्तान् सत्रिणो ब्रूयुः—'एतत्तद् यदस्माभिः कथितं, जीवितुकामेन अपक्रान्तव्यम्' इति॥

येभ्यश्च राजा याचितो न ददाति तान् सत्रिणो ब्रूयुः—"उक्तः शून्यपालो राज्ञा-अयाच्यमर्थमसौ चासौ [2] मा याचते ; मया प्रत्याख्याताः शत्रुसंहिताः, तेषामुद्धरणे प्रयतस्व इति [3]" ततः पूर्ववदाचरेत्॥

येभ्यश्च राजा याचितो ददाति, तान् सत्रिणो ब्रूयुः—"उक्तः शून्यपालो राज्ञा—अयाच्यमर्थमसौ चासौ च मा याचते ; तेभ्यो मया सोऽर्थो विश्वासार्थं दत्तः, ते शत्रुसंहिताः, तेषामुद्धरणे प्रयतस्व इति"। ततः पूर्ववदाचरेत्॥

ये चैनं याच्यमर्थं न याचन्ते, तान् सत्रिणो ब्रूयुः—"उक्तः शून्यपालो राज्ञा—याच्यमर्थमसौ चासौ च मा न याचते ; किमन्यत् स्वदोषशङ्कितत्वात्? तेषामुद्धरणे प्रयतस्व इति"। ततः पूर्ववदाचरेत्॥

एतेन सर्वः [4] कृत्यपक्षो व्याख्यातः॥

प्रत्यासन्नो वा राजानं सत्री ग्राहयेत्—"असौ चासौ च ते महामात्रः शत्रुपुरुषैस्संभाषते" इति। प्रतिपन्ने दूष्यानस्य शासनहरान् दर्शयेत्—'एतत्तत्' इति॥

[महामात्रादिसकाशाद्राज्ञो भेदनप्रकाराः]

सेनामुख्यप्रकृतिपुरुषान् वा भूम्या हिरण्येन वा लोभयित्वा स्वेषु विक्रमयेदपवाहयेद्वा। योऽस्य पुत्रस्समीपे दुर्गे वा प्रतिवसति, तं सत्रिणोपजापयेत्—'आत्मसम्पन्नतरस्त्वं पुत्रः तथाऽप्यन्तर्हितः [5]; तत्किमुपेक्षसे? विक्रम्य गृहाण, [6] पुरा त्वा युवराजो विनाशयति' इति॥

---

[1] स्वाम्यन्तिकमिति शेषः. [2] मामित्यर्थः एवमग्रेऽपि. [3] एदनन्तरं इति शब्दोऽध्याहर्तव्यः. एवमग्रेऽपि. [4] क्रुद्धलुब्धभीतवर्गः. [5] अन्तर्हितः–नियन्त्रितः. [6] पुरा विनायति–विनाशयिष्यति.

तत्कुलीनमवरुद्धं वा हिरण्येन प्रतिलोभ्य ब्रूयात् –'अन्तर्बलं प्रत्यन्तस्कन्धमन्यं वाऽस्य [1] प्रमृद्गीहि' इति ।

आटविकानर्थमानाभ्यामुपगृह्य राज्यमस्य घातयेत् ॥

[मण्डलस्य बलवत्तराभियोक्तारं प्रति
समुद्योजनम्]

पार्ष्णिग्राहं वाऽस्य ब्रूयात्—'एष खलु राजा मामुच्छिद्य त्वामुच्छेत्स्यति, पार्ष्णिमस्य गृहाण; त्वयि निवृत्तस्याहं पार्ष्णिं ग्रहीष्यामि' इति। मित्राणि वाऽस्य ब्रूयात्—'अहं वः [2] सेतुः; मयि विभिन्ने सर्वानेष वो राजाऽऽप्लावयिष्यति' इति । 'सम्भूय वाऽस्य यात्रां विहनाम' इति । तत्संहतानामसंहतानां च प्रेषयेत्—'एष खलु राजा मामुत्पाट्य भवत्सु कर्म करिष्यति; बुध्यध्वं; अहं वः श्रेयानभ्यवपत्तुम्' इति ॥

मध्यमस्य प्रहिणुयादुदासीनस्य वा पुनः ।
यथाऽऽसन्नस्य मोक्षार्थं सर्वस्वेन [3] तदर्पणम् ॥ ३२८ ॥

इत्याबलीयसे सेनामुख्यवधः, मण्डलप्रोत्साहनं च
तृतीयोऽध्यायः आदितोऽष्टत्रिंशच्छततमः.

---

# षट्षष्टिसप्तषष्टिशततमे प्रकरणे–
# शस्त्राग्निरसप्रणिधयः, वीवधासारप्रसारवधश्च.

## चतुर्थोऽध्यायः

[शत्रुषु गूढाः शस्त्रप्रयोगाः]

ये चास्य दुर्गेषु वैदेहकव्यञ्जनाः, ग्रामेषु गृहपतिकव्यञ्जनाः, जनपदसन्धिषु गोरक्षकतापसव्यञ्जनाः, ते सामन्ताटविक-

---

[1] नाशय. [2] सेतुवत् पराभियोगनिरोधकः. [3] तस्मिन् आत्मनोऽर्पणम्. त्वदर्पणम्–पा.

त्कुलीनावरुद्धानां पण्यागारपूर्वं प्रेषयेयुः—'अयं देशो हार्यः' इति । आगतांश्चैषां दुर्गे गूढपुरुषानर्थमानाभ्यां अभिसत्कृत्य प्रकृतिच्छिद्राणि प्रदर्शयेयुः । तेषु तैस्सह प्रहरेयुः ॥

[ विषप्रयोगविधयः ]

स्कन्धावारे वाऽस्य शौण्डिकव्यञ्जनः पुत्रमभित्यक्तं स्थापयित्वा अवस्कन्दकाले रसेन प्रवासयित्वा '[1]नैषेचनिकम्' इति मदनरसयुक्तान् मद्यकुम्भाञ्छतशः प्रयच्छेत् । शुद्धं वा मद्यं पाद्यं वा मद्यं दद्यादेकमहः, उत्तरं रससिद्धं प्रयच्छेत् । शुद्धं वा मद्यं दण्डमुख्येभ्यः प्रदाय मदकाले रससिद्धं प्रयच्छेत् ॥

दण्डमुख्यव्यञ्जनो वा पुत्रमभित्यक्तम् इति समानम् ॥

पक्वमांसिकौदनिकशौण्डिकापूपिकव्यञ्जना वा पण्यविशेषमवघोषयित्वा परस्परसङ्घर्षेण कालिकं समर्घतरमिति वा परानाहूय रसेन स्वपण्यान्यपचारयेयुः । सुराक्षीरदधिसर्पिस्तैलानि वा तद्व्यवहर्तृहस्तेषु गृहीत्वा स्त्रियो बालाश्च रसयुक्तेषु स्वभाजनेषु परिकिरेयुः । 'अनेनार्घेण विशिष्टं वा भूयो दीयताम्' इति तत्रैवावकिरेयुः ॥

एतान्येव वैदेहकव्यञ्जनाः पण्यविक्रयेणाहर्तारो वा हस्त्यश्वानां विधायवसेषु रसमासन्ना दद्युः ॥

कर्मकरव्यञ्जना वा रसाक्तं यवसमुदकं वा विक्रीणीरन् । चिरसंसृष्टा वा गोवाणिजका गवामजावीनां वा यूथान्यवस्कन्दकालेषु परेषां मोहस्थानेषु प्रमुञ्चेयुः । अश्वखरोष्ट्रमहिषादीनां दुष्टांश्च तद्व्यञ्जना वा चुचुन्दरीशोणिताक्ताक्षान्; लुब्धकव्यञ्जना वा व्यालमृगान् पञ्जरेभ्यः प्रमुञ्चेयुः; सर्पग्राहा वा सर्पानुग्रविषान्; हस्तिजीविनो वा हस्तिनः ॥

[अग्निप्रयोगः]

अग्निजीविनो वा अग्निमवसृजेयुः ॥

गूढपुरुषा वा विमुखान् पत्त्यश्वरथद्विपमुख्यानभिहन्युः, आदीपयेयुर्वा मुख्यावासान् । दूष्यामित्राटविकव्यञ्जनाः प्रणिहिताः

पृष्ठाभिघातमवस्कन्दप्रतिग्रहं वा कुर्युः। वनगूढा वा प्रत्यन्तस्कन्धमुपनिष्कृष्याभिहन्युः॥

[धान्यसुहृद्बलतृणकाष्ठादिसौकर्यविघातविधिः
वञ्चनेन घातनप्रकाराश्च]

एकायने वीवधासारप्रसारान् वा। ससङ्केतं वा रात्रियुद्धे भूरितूर्यमाहत्य ब्रूयुः—'अनुप्रविष्टास्स्मो लब्धं राज्यम्' इति। राजावासमनुप्रविष्टा वा सङ्कुलेषु राजानं हन्युः। सर्वतो वा प्रयातमेनं म्लेच्छाटविकदण्डचारिणः सत्रापाश्रयाः स्तम्भवाटापाश्रया वा हन्युः। लुब्धकव्यञ्जना वाऽवस्कन्दसङ्कुलेषु गूढयुद्धहेतुभिरभिहन्युः। एकायने वा शैलस्तम्भवाटखञ्जनान्तरुदके वा स्वभूमिबलेनाभिहन्युः। नदीसरस्तटाकसेतुबन्धभेदवेगेन वा प्लावयेयुः। धान्वनवननिम्नदुर्गस्थं वा योगाग्निधूमाभ्यां नाशयेयुः॥

सङ्कटगतमग्निना, धान्वनगतं धूमेन; निधानगतं रसेन; तोयावगाढं दुष्टग्राहैरुदकचरणैर्वा तीक्ष्णास्साधयेयुः।

आदीप्तावासात् निष्पतन्तं वा —
योगवामनयोगाभ्यां योगेनान्यतमेन वा।
अमित्रमतिसंदध्यात् [1] सक्तमुक्तासु भूमिषु॥ ३२७॥

इत्याबलीयसे शस्त्राग्निरसप्रणिधयः वीवधासारप्रसारवधश्च
चतुर्थोऽध्यायः, आदित एकोनचत्वारिंशच्छततमः.

---

# अष्टषष्ट्येकोनसप्ततिसप्ततिशततमानि प्रकरणानि- योगातिसंधानं, दण्डातिसंधानं, एकविजयश्च

## पञ्चमोऽध्यायः

[वञ्चनेन घातनावसराः, विविधाः घातनप्रयोगाश्च]

दैवतेज्यायां यात्रायाममित्रस्य बहूनि पूज्यागमस्थानानि भक्तितः[2]; तत्रास्य योग[3]मुब्जयेत्॥

---

[1] उक्तासु धान्वनादिभूमिषु सक्तं—स्वरक्षार्थं कृतवासमित्यर्थः. [2] सम्भवन्तीति शेषः. [3] प्रयुञ्जीत.

देवतागृहप्रविष्टस्योपरि यन्त्रमोक्षणेन गूढभित्तिं शिलां वा पातयेत्; शिलाशस्त्रवर्षमुत्तमागारात्। कवाटमवपातितं वा, भित्तिप्रणिहितमेकदेशबन्धं वा परिघं मोक्षयेत्। देवतादेहस्थप्रहरणानि वाऽस्योपरिष्टात् पातयेत्। स्थानासनगमनभूमिषु वाऽस्य गोमयप्रदेहेन गन्धोदकप्रसेकेन वा रसमतिचारयेत् पुष्पचूर्णोपहारेण वा। गन्धप्रतिच्छन्नं वाऽस्य तीक्ष्णं धूममतिनयेत्। शूलकूपमवपातनं वा शयनासनस्याधस्ताद्यन्त्रबद्धतलमेनं कीलमोक्षणेन प्रवेशयेत्। प्रत्यासन्ने वाऽटव्यमित्रे जनपदाज्जनमवरोधक्षममवनयेत्[1]। दुर्गाच्चानवरोधक्षममपनयेत्। प्रत्यादेयमरिविषयं वा प्रेषयेत्। जनपदं चैकस्थं शैलवननदीदुर्गेष्वटवीव्यवहितेषु वा पुत्रभ्रातृपरिगृहीतं स्थापयेत्॥

उपरोधहेतवो दण्डोपनतवृत्ते व्याख्याताः॥

तृणकाष्ठ[2]मायोजनाद्दाहयेत्। उदकानि च दूषयेत्; अवस्रावयेच्च। कूटकूपावपातकण्टकिनीश्च बहिरुब्जयेत्। सुरङ्गाममित्रस्थाने बहुमुखीं कृत्वा विचयमुख्यानभिहारयेत्; अमित्रं वा। परप्रयुक्तायां वा सुरङ्गायां परिखामुदकान्तिकीं खानयेत्, कूपशालामनुसालं वा। अतोयकुम्भान् कांस्यभाण्डानि वा शङ्कास्थानेषु स्थापयेत् खाताभिज्ञानार्थम्। ज्ञाते सुरङ्गापथे प्रतिसुरङ्गां कारयेत्। मध्ये भित्त्वा धूममुदकं वा प्रयच्छेत्॥

प्रतिविहितदुर्गो वा मूले दायादं कृत्वा प्रतिलोमामस्य दिशं गच्छेत्, यतो वा मित्रैर्बन्धुभिराटविकैर्वा संसृज्येत, परस्यामित्रैर्दूष्यैर्वा महद्भिः, यतो वा गतोऽस्य मित्रैर्वियोगं कुर्यात्; पार्ष्णिं वा गृह्णीयात्; राज्यं वाऽस्य हारयेत्, वीवधासारप्रसारान् वा वारयेत्; यतो वा शक्नुयात् आक्षिकवदपक्षेपणास्य प्रहर्तुं, यतो वा स्वं राज्यं त्रायेत, मूलस्योपचयं वा कुर्यात्; यतस्सन्धिमभिप्रेतं लभेत, ततो वा गच्छेत्॥

सहप्रस्थायिनो वास्य प्रेषयेयुः—'अयं ते शत्रुरस्माकं हस्तगतः; पण्यं विप्रकारं वाऽपदिश्य हिरण्यमन्तस्सारबलं प्रेषयस्व, एनमर्पयेम बद्धं[3]प्रवासितं वा' इति। प्रतिपन्ने हिरण्यं सारबलं चाददीत॥

---

[1] अवरोधार्थमतिशयेन नयेत्. [2] योजनमितं प्रदेशमभिव्याप्य. [3] मारितम्.

अन्तपालो वा दुर्गसंप्रदानेन बलैकदेशमतिनीय विश्वस्तं घातयेत् ॥

जनपदमेकस्थं वा घातयितुममित्रानीकमावाहयेत् । तदवरुद्धदेशमतिनीय विश्वस्तं घातयेत् ॥

मित्रव्यञ्जनो वा बाह्यस्य प्रेषयेत् – 'क्षीणमस्मिन् दुर्गे धान्यं स्नेहाः क्षारो लवणं वा ; तदमुष्मिन् देशे काले च प्रवेक्ष्यति ; तदुपगृहाण ' इति । ततो रसविद्धं धान्यं स्नेहं क्षारं लवणं वा दूष्यामित्राटविकाः प्रवेशयेयुः ; अन्ये वा अभित्यक्ताः । तेन सर्वभाण्डवीवधग्रहणं व्याख्यातम् ।

सन्धिं वा कृत्वा हिरण्यैकदेशमस्मै दद्यात्, विलम्बमानश्शेषम् । ततो रक्षाविधानान्यवस्रावयेत् ; अग्निरसशस्त्रैर्वा प्रहरेत् ; हिरण्यप्रतिग्राहिणो वाऽस्य वल्लभाननुगृह्णीयात् ।

परिक्षीणो वाऽस्मै दुर्गं दत्त्वा निर्गच्छेत् सुरङ्गया । कुक्षिप्रदरेण वा प्राकारभेदेन निर्गच्छेत् ।

रात्रौ [1]अवस्कन्दं दत्त्वा सिद्धस्तिष्ठेत् । असिद्धः पार्श्वेनापगच्छेत् पाषण्डच्छद्मना मन्दपरिवारो निर्गच्छेत् । प्रेतव्यञ्जनो वा गूढैर्निर्ह्रियेत । स्त्रीवेषधारी वा प्रेतमनुगच्छेत् ।

दैवतोपहारश्राद्धप्रहवणेषु वा रसविद्धमन्नपानमवसृज्य कृतोपजापो दूष्यव्यञ्जनैर्निष्पत्य गूढसैन्योऽभिहन्यात् ॥

[सहायहीनेनापि राज्ञा शत्र्वभिभवप्रकाराः]

एवं गृहीतदुर्गो वा [2]प्राश्यप्राशं चैत्यमुपस्थाप्य दैवतप्रतिमाच्छिद्रं प्रविश्यासीत ; गूढभित्तिं वा दैवतप्रतिमायुक्तं वा भूमिगृहम् । विस्मृते सुरङ्गया रात्रौ राजावासमनुप्रविश्य सुप्तममित्रं हन्यात् । यन्त्रविश्लेषणं वा विश्लेष्याधस्तादवपातयेत् । रसाग्नियोगेनावलिप्तं गृहं जतुगृहं वाऽधिशयानममित्रमादीपयेत् ।

प्रमदवनविहाराणामन्यतमे वा विहारस्थाने प्रमत्तं भूमिगृहसुरङ्गागूढभित्तिप्रविष्टास्तीक्ष्णा हन्युः । गूढप्रणिहिता वा रसेन ।

---

[1] सौप्तिकापहारमुत्पाद्य. [2] प्राशनीयप्रभूताशनयुक्तम्

स्वपतो वा निरुद्धे देशे गूढाः स्त्रियः सर्वरसाग्निधूमानुपरि मुञ्चेयुः। प्रत्युत्पन्ने वा कारणे यद्यदुपपद्येत तत्तदमित्रेऽन्तःपुरगते गूढसञ्चारः प्रयुञ्जीत। ततो गूढमेवापगच्छेत्। स्वजनसंज्ञां च प्ररूपयेत्।

द्वाःस्थान् वर्षवरांश्चान्यान् निगूढोपहितान् परे।
तूर्यसंज्ञाभिराहूय द्विषच्छेषाणि घातयेत् ॥ ३३० ॥

इत्याबलीयसे योगातिसन्धानं, दण्डातिसन्धानं. एकविजयश्च पञ्चमोऽध्यायः, आदितश्चत्वारिंशच्छततमः.

एतावता कौटिलीयस्यार्थशास्त्रस्य आबलीयसं द्वादशमधिकरणं समाप्तम्.

— ——

# अथ कौटलीये अर्थशास्त्रे
# दुर्गलम्भोपायो नाम
## त्रयोदशाधिकरणम्

---

अस्येयं प्रकरणानुक्रमणिका



आहत्य ६ प्रकरणानि ५ अध्यायाः ११ कारिकाः.

---

## एषु च प्रकरणेषु प्रतिपादितानामर्थानमयं सङ्ग्रहः

---

### 171 उपजापः.
(पु. 423)

शत्रुदेशं प्राप्तुकामेन राज्ञा कर्तव्याः उपजापप्रकाराः.

तत्र राज्ञः सर्वज्ञत्वख्यापनप्रकारः.

दैवतसाक्षात्कारख्यापनप्रकारः.

अनयोरंशयोः प्रकाशनसत्यतापादनप्रकाराः.

अनयैव रीत्यापरस्मात् परस्य भेदनप्रकाराः.

### 172 योगवामनम्.
(पु. 425)

कपटोपायेन परस्य तद्दुर्गान्निष्क्रामणप्रकाराः.

उक्तानामुपायानां शत्रुषु प्रयोगे उचितः समयः.

शत्रोः सहजोत्कटाभिलाषानुगुण्येन तद्धननोपायभेदाः.

अन्ये च केचन हननोपायाः.

### 173 अपसर्पप्रणिधिः.
(पु. 428)

गूढपुरुषाणां शत्रुदेश एव निवासनेन शत्रुघातने उपायाः प्रकाराश्च.

मित्रशत्र्वोः गूढभेद्यत्वे अभेद्यत्वे च अतिसन्धानप्रकाराः.

अन्ये च केचन घातनप्रकाराः.

अपसर्पैः कारयितव्यानि अतिनयनकर्माणि.

आटविकानां प्रणिधेयाः, तेष्वपसर्पकार्याणि च.

### 174 पर्युपासनकर्म.
(पु. 431)

परकर्शनसमये तत्प्रजापीडननिषेध.

कर्शनप्रकाराः.

परदुर्गपरितः सैन्यनिवासनानुकूलः कालः, तत्प्रकाराश्च.

### 175 अवमर्दः.
(पु. 433)

परदुर्गाक्रमणकालः.

परदुर्गावमर्दप्रकाराः.

परदुर्गपरस्कन्धावारयोरवस्कन्दे सिद्ध अनन्तरकर्तव्योंऽशः.

एवं शत्रुभूमिलाभे पृथिवीजयमार्गाः चत्वारः.

दुर्गलम्भहेतुसङ्ग्रहः.

### 176 लब्धप्रशमनम्.
(पु. 435)

विजिगीषुलब्धव्यतया सम्भाविताः अर्थभेदाः.

तत्र नूतनलाभे प्रजासु भयशङ्कापनोदनेन स्वस्मिन् विस्रम्भजननोपायाः.

एवं भूतपूर्वलाभे—

पित्र्यलाभे—

उक्तसारार्थसङ्ग्रहः.

# अथ दुर्गलम्भोपायो नाम त्रयोदशमधिकरणम्

---

## एकसप्ततिशततमं प्रकरणम्- उपजापः

### प्रथमोऽध्यायः

[शत्रुदेशं प्राप्तुकामेन राज्ञा कर्तव्याः उपजापप्रकाराः]

विजिगीषुः परग्राममवाप्तुकामः सर्वज्ञदैवतसंयोगख्यापनाभ्यां स्वपक्षमुद्धर्षयेत् परपक्षं चोद्वेजयेत् ॥

[तत्र राज्ञः सर्वज्ञत्वख्यापनप्रकारः]

सर्वज्ञख्यापनं तु—गृहगुह्यप्रवृत्तिज्ञानेन प्रत्यादेशो मुख्यानां ; कण्टकशोधनापसर्पागमेन प्रकाशनं राजद्विष्टकारिणां ; विज्ञाप्योपायनख्यापनमदृष्टसंसर्गविद्यासंज्ञादिभिः ; विदेशप्रवृत्तिज्ञानं तदहरेव गृहकपोतेन मुद्रासंयुक्तेन ॥

[दैवतसाक्षात्कारख्यापनप्रकारः]

दैवतसंयोगख्यापनं तु—सुरङ्गामुखेनाग्निचैत्यदैवतप्रतिमाच्छिद्रानुप्रविष्टैरग्निचैत्यदैवतव्यञ्जनैस्संभाषणं पूजनं च ; उदकादुत्थितैर्वा नागवरुणव्यञ्जनैस्संभाषा[1] पूजनं च ; रात्रावन्तरुदके [1]समुद्रवालुकाकोशं प्रणिधायाग्निमालादर्शनं ; [2]शिलाशिक्यावगृहीते प्लवके स्थानं, उदकवस्तिना जरायुणा वा शिरोऽवगूढनासः; [3]पृषताऽन्त्रकुलीरनक्रशिशुमारोद्रवसाभिर्वा शतपाक्यं तैलं [4]नस्तःप्रयोगः, तेन रात्रिगणश्चरति इत्युदकचरणानि ; तैर्वरुणनागकन्यावाक्यक्रियाभिस्सम्भाषणं च ; कोपस्थानेषु मुखादग्निधूमोत्सर्गः ॥

---

[1] वालुकानामनिर्गमाय मुद्रितमुखभागं समुद्रम्. [2] शिलाबन्धवता शिक्येनाधस्ताद्धारिते. [3] पृषतमृगस्य अन्त्रैः. उद्रः=जलबिडालः. [4] नासिकायां तथाविधतैलनिषेकवानिति भावः.

[उक्तयोरंशयोः प्रकाशनसत्यतापादनप्रकाराः]

तदस्य स्वविषये कार्तान्तिकनैमित्तिकमौहूर्तिकपौराणिकक्षणिकगूढपुरुषाः साचिव्यकरास्तद्दर्शिनश्च प्रकाशयेयुः । परस्य विषये दैवतदर्शनं दिव्यकोशदण्डोत्पत्तिं चास्य ब्रूयुः । दैवतप्रश्ननिमित्तवायसाऽङ्गविद्यास्वप्नमृगपक्षिव्याहारेषु चास्य विजयं ब्रूयुः ; विपरीतममित्रस्य [1] सदुन्दुभिम् । उल्कां च परस्य नक्षत्रे दर्शयेयुः ॥

परस्य मुख्यान्मित्रत्वेनापदिशन्तो दूतव्यञ्जनाः स्वामिसत्कारं ब्रूयुः । स्वपक्षबलाधानं परपक्षप्रतिघातं च तुल्ययोगक्षेममामात्यानामायुधीयानां च कथयेयुः । [2] तेषु व्यसनाभ्युदयावेक्षणमपत्यपूजनं च प्रयुञ्जीत ॥

[अनयैव रीत्या परस्मात्परस्य भेदनप्रकाराः]

तेन परपक्षमुत्साहयेद्यथोक्तं पुरस्तात् । भूयश्च वक्ष्यामः— [3] साधारणगर्दभेन दक्षान् ; [4] लकुटशाखाहननाभ्यां दण्डचारिणः ; [5] कुलैलकेन चोद्विग्नान् ; अशनिवर्षेण विमानितान् , [6] विदुलेनावकेशिना वाऽऽयसपिण्डेन कैतवजमेघेनेति विहताशान् ; दुर्भगालङ्कारेण द्वेषिणेति पूजाफलकान् ; व्याघ्रचर्मणा मृत्युकूटेन चोपहितान्,[7] पीलुविखादनेन करकयोष्ट्र्या गर्दभीक्षीराभिमन्थनेनेति ध्रुवापकारिणः[8] इति ॥

प्रतिपन्नान् अर्थमानाभ्यां योजयेत् । द्रव्यभक्तच्छिद्रेषु चैनान् द्रव्यभक्तादानैरनुगृह्णीयात् । अप्रतिगृह्णतां स्त्रीकुमारालङ्कारानभिहरेयुः ॥

[1] आघोषणभेरीसहितम्. [2] अमात्येषु आयुधीयेषु च. [3] फलानभिज्ञतया परार्थकर्मकरणे सामान्यगर्दभनिदर्शनेनेत्यर्थः. [4] लकुटः वेत्रयष्टिः, शाखाहननं कुठारादिः, तद्दृष्टान्तेन, एवमग्रेऽपि. [5] यूथभ्रष्टजीवितनिराशमेषेण. [6] वञ्जुलेन अफलेन वेत्यर्थः. [7] परप्रयुक्तोपधाप्रतारितान्. [8] च उत्साहयेदिति शेषः.

दुर्भिक्षस्तेनाटव्युपघातेषु च पौरजानपदानुत्साहयन्तः सत्रिणो ब्रूयुः—" राजानमनुग्रहं याचामहे ; निरनुग्रहाः परत्र गच्छामः " इति ॥

तथेति प्रतिपन्नेषु द्रव्यधान्यपरिग्रहैः ।
साचिव्यं कार्यमित्येतदुपजापाद्भुतं महत् ॥ ३३१ ॥

इति दुर्गलम्भोपाये त्रयोदशेऽधिकरणे उपजापाः प्रथमोऽध्यायः
आदित एकचत्वारिंशच्छततमः.

---

# द्विसप्ततिशततमं प्रकरणम्—योगवामनम्.

## द्वितीयोऽध्यायः

[कपटोपायेन परस्य तद्दुर्गान्निष्क्रामणप्रकाराः]

मुण्डो जटिलो वा पर्वतगुहावासी चतुर्वर्षशतायुर्ब्रुवाणः प्रभूतजटिलान्तेवासी नगराभ्याशे तिष्ठेत् । शिष्याश्चास्य मूलफलोपगमनैरमात्यान् राजानं च भगवद्दर्शनाय योजयेयुः । समागतश्च राज्ञा पूर्वराजदेशाभिज्ञानानि कथयेत्—" शते शते च वर्षाणां पूर्णेऽहमग्निं प्रविश्य पुनर्बालो भवामि ; तदिह भवत्समीपे चतुर्थमग्निं प्रवेक्ष्यामि ; अवश्यं मे भवान् मानयितव्यः ; त्रीन् वरान् वृणीष्व " इति । प्रतिपन्नं ब्रूयात्—" सप्तरात्रमिह सपुत्रदारेण प्रेक्षाप्रहवणपूर्वं वस्तव्यम् " इति । वसन्तमवस्कन्देत[1] ॥

मुण्डो वा जटिलो वा स्थानिकव्यञ्जनः प्रभूतजटिलान्तेवासी [2]बस्तशोणितदिग्धां वेणुशलाकां सुवर्णचूर्णेनावलिप्य वल्मीके निदध्यात्, [3]उपजिह्विकानुसरणार्थं स्वर्णनालिकां वा । ततस्सत्री राज्ञः कथयेत्—" असौ सिद्धः पुष्पितं निधिं जानाति " इति । स राज्ञा पृष्टः " तथा " इति ब्रूयात् । तच्चाभिज्ञानं दर्शयेत् । भूयो

---

[1] हन्यात्. [2] बस्तः–अजा. [3] उपजिह्विका–वम्री.

वा हिरण्यमन्तराधाय ब्रूयाच्चैनं—"नागरक्षितोऽयं निधिः प्रणिपातसाध्यः" इति। प्रतिपन्नं ब्रूयात्—"सप्तरात्रं" इति समानम् ॥

स्थानिकव्यञ्जनं वा रात्रौ तेजनाग्नियुक्तमेकान्ते तिष्ठन्तं सत्रिणः क्रमाभिनीतं राज्ञः कथयेयुः—"असौ सिद्धस्सामेधिकः" इति। तं राजा यमर्थं याचेत, तमस्य करिष्यमाणः, "सप्तरात्रं"—इति समानम् ॥

सिद्धव्यञ्जनो वा राजानं [1]जम्भकविद्याभिः प्रलोभयेत्। "तं राजा" इति समानम् ॥

सिद्धव्यञ्जनो वा देशदेवतामभ्यर्हितामाश्रित्य प्रहवणैरभीक्ष्णं प्रकृतिमुख्यानभिसंवास्य क्रमेण राजानमतिसंदध्यात् ॥

जटिलव्यञ्जनमन्तरुदकवासिनं वा सर्वश्वेतं तटसुरुङ्गाभूमिगृहापसरणं वरुणं नागराजं वा सत्रिणः क्रमाभिनीतं राज्ञः कथयेयुः। "तं राजा" इति समानम् ॥

जनपदान्तेवासी सिद्धव्यञ्जनो वा राजानं शत्रुदर्शनाय योजयेत्। प्रतिपन्नं [2]बिम्बं कृत्वा शत्रुमावाहयित्वा निरुद्धे देशे घातयेत् ॥

अश्वपण्योपयाता वैदेहकव्यञ्जनाः पण्योपायनिमित्तमाहूय राजानं पण्यपरीक्षायामासक्तमश्वव्यतिकीर्णं वा हन्युः, अश्वैश्च प्रहरेयुः ॥

नगराभ्याशे वा चैत्यमारुह्य रात्रौ तीक्ष्णाः कुम्भेषु [3]नालीन् वा [4]विदलानि धमन्तः—"स्वामिनो मुख्यानां वा मांसानि भक्षयिष्यामः, पूजा नो वर्तताम्" इत्यव्यक्तं ब्रूयुः। तदेषां नैमित्तिकमौहूर्तिकव्यञ्जनाः ख्यापयेयुः ॥

मङ्गल्ये वा ह्रदे तटाकमध्ये वा रात्रौ तेजनतैलाभ्यक्ता नागरूपिणः शक्तिमुसलान्ययोमयानि निष्पेषयन्तस्तथैव ब्रूयुः। ऋक्षचर्मकञ्चुकिनो वा अग्निधूमोत्सर्गयुक्ता रक्षोरूपं वहन्तस्त्रिरपसव्यं नगरं कुर्वाणाः शिवाश्वसृगालवाशितान्तरेषु तथैव ब्रूयुः। चैत्यदैवतप्रतिमां वा तेजनतैलेनाभ्रपटलच्छन्नेनाग्निना वा रात्रौ प्रज्वाल्य तथैव ब्रूयुः, तदन्ये ख्यापयेयुः ॥

---

[1] मायाविद्याभिः. [2] आह्वानार्थं सूचनम्. [3] धान्यकाण्डान्. [4] पाटितदारुशकलानि.

दैवतप्रतिमानामभ्यर्हितानां वा शोणितेन प्रस्रावमतिमात्रं कुर्युः। तदन्ये देवरुधिरसंस्रावे सङ्ग्रामे पराजयं ब्रूयुः॥

[1]सन्धिरात्रिषु श्मशानप्रमुखे वा चैत्यमूर्ध्वभक्षितैर्मनुष्यैः प्ररूपयेयुः। ततो रक्षोरूपी मनुष्यकं याचेत। यश्चात्र शूरवादिकोऽन्यतमो वा द्रष्टुमागच्छेत्। तमन्ये लोहमुसलैर्हन्युः, याथयं रक्षोभिर्हत इति ज्ञायेत। तदद्भुतं राज्ञः तद्दर्शिनः सत्रिणश्च कथयेयुः। ततो नैमित्तिकमौहूर्तिकव्यञ्जनाः शान्तिं प्रायश्चित्तं ब्रूयुः "अन्यथा महदकुशलं राज्ञो देशस्य च" इति। प्रतिपन्नं "एतेषु सप्तरात्रमेकमन्त्रबलिहोमं स्वयं राज्ञा कर्तव्यम्" इति ब्रूयुः। ततः समानम्।

[उक्तानामुपायानां हठाच्छत्रुषु प्रयोगनिषेधः क्रमश्च]

एतान् वा योगानात्मनि दर्शयित्वा प्रतिकुर्वीत परेषामुपदेशार्थम्। ततः प्रयोजयेद्योगान्, योगदर्शनप्रतीकारेण वा कोशाभिसंहरणं कुर्यात्॥

[शत्रोस्सहजोत्कटाभिलाषानुगुण्येन तद्धननोपायभेदाः]

हस्तिकामं वा नागवनपालहस्तिना लक्षण्येन प्रलोभयेयुः। प्रतिपन्नं गहनमेकायनं[2] वाऽतिनीय घातयेयुः, बद्ध्वा वाऽपहरेयुः। तेन मृगयाकामो व्याख्यातः॥

द्रव्यस्त्रीलोलुपं आढ्यविधवाभिर्वा परमरूपयौवनाभाभिस्स्त्रीभिर्दायादनिक्षेपार्थमुपनीताभिः सत्रिणः प्रलोभयेयुः। प्रतिपन्नं रात्रौ सत्रिच्छन्नाः समागमे शस्त्ररसाभ्यां घातयेयुः॥

सिद्धप्रव्रजितचैत्यस्तूपदैवतप्रतिमानामभीक्ष्णाभिगमनेषु वा भूमिगृहसुरुङ्गागूढभित्तिप्रविष्टास्तीक्ष्णाः परमभिहन्युः॥

[अन्ये च केचन हननोपायाः]

येषु देशेषु याः प्रेक्षाः प्रेक्षते पार्थिवस्स्वयम्।
यात्राविहारे रमते यत्र क्रीडति वाऽम्भसि॥ ३३२॥

---

[1] पर्वनिशासु. [2] एकायनं-एकमात्रगमनयोग्यं सङ्कटं मार्गम्.

चाट्रक्कथादिषु सर्वेषु यज्ञप्रहवणेषु[1] वा ।
सूतिकाप्रेतरोगेषु प्रीतिशोकभयेषु वा ॥ ३३३ ॥
प्रमादं याति यस्मिन् वा विश्वासात् स्वजनोत्सवे ।
यत्रास्यारक्षिसञ्चारो दुर्दिने संकुलेषु वा ॥ ३३४ ॥
विप्रस्थाने प्रदीप्ते वा प्रविष्टे निर्जनेऽपि वा ।
वस्त्राभरणमाल्यानां फेलाभिः शयनासनैः ॥ ३३५ ॥
मद्यभोजन[2]फेलाभिस्तूर्यैर्वाऽभिहतैस्सह ।
यथैव प्रविशेयुश्च द्विषतस्सत्रहेतुभिः ।
तथैव चापगच्छेयुरित्युक्तं योगवामनम् ॥ ३३६ ॥

इति दुर्गलम्भोपाये योगवामनं द्वितीयोऽध्यायः
आदितो द्विचत्वारिंशच्छततमः

---

# त्रिसप्ततिशततमं प्रकरणं—अपसर्पप्रणिधिः

## तृतीयोऽध्यायः

[ गूढपुरुषाणां शत्रुदेश एव निवासनेन
शत्रुघातने उपायाः प्रकाराश्च ]

श्रेणीमुख्यमाप्तं निष्पातयेत् । स परमाश्रित्य [3]पक्षापदेशेन [4]स्वविषयात् साचिव्यकरणसहायोपादानं कुर्वीत । कृतापसर्पोपचयो वा परमनुमान्य स्वामिनो दूष्यग्रामं वीतहस्त्यश्वं दूष्यामात्यं दण्डमाक्रन्दं वा हत्वा परस्य प्रेषयेत् । जनपदैकदेशं श्रेणीमटवीं वा सहायोपादानार्थं संश्रयेत । विश्वासमुपगतः स्वामिनः प्रेषयेत् । ततस्स्वामी हस्तिबन्धनमटवीघातं वाऽपदिश्य गूढमेव प्रहरेत् । एतेनामात्याटविका व्याख्याताः ॥

शत्रुणा मैत्रीं कृत्वा अमात्यानवक्षिपेत्[5] । ते तच्छत्रोः प्रेषयेयुः—"भर्तारं नः प्रसादय" इति । स यं दूतं प्रेषयेत्, तमुपालभेत—"भर्ता ते माममात्यैर्भेदयति ; न च पुनरिहागन्तव्यम्"

---

[1] प्रहवणं-तुष्टिभोजनम्. [2] फेला-उच्छिष्टम्. प्रीता इति शेषः. [3] परपक्षार्थत्वापदेशेन. [4] स्व(विजिगीषु) देशात्. [5] धिक्कुर्यात्.

इति। अथैकममात्यं निष्पातयेत्; स परमाश्रित्य योगापसर्पापरक्तदूष्यानशक्तिमतः स्तेनाटविकानुभयोपघातकान् वा परस्योपहरेत्। आप्तभावोपगतः प्रवीरपुरुषोपघातमस्योपहरेत्। अन्तपालमाटविकं दण्डचारिणं वा—"दृढमसौ चासौ च ते शत्रुणा संधत्ते" इति। अथ पश्चादभिव्यक्तशासनैरेनान् घातयेत्॥

दण्डबलव्यवहारेण वा शत्रुमुद्योज्य घातयेत्। कृत्यपक्षोपग्रहेण वा परस्यामित्रं राजानमात्मन्यपकारयित्वाभियुञ्जीत। ततः परस्य प्रेषयेत्—"असौ ते वैरी ममापकरोति; तमेहि संभूय हनिष्यावः; भूमौ हिरण्ये वा ते परिग्रहः" इति। प्रतिपन्नमभिसत्कृत्यागतमवस्कन्देन प्रकाशयुद्धेन वा शत्रुणा घातयेत्। अभिविश्वासनार्थं भूमिदानपुत्राभिषेकरक्षाऽपदेशेन वा ग्राहयेत्। अविषह्यमुपांशुदण्डेन वा घातयेत्। स चेद्दण्डं दद्यान्न स्वयमागच्छेत्, तमस्य वैरिणा घातयेत्। दण्डेन वा प्रयातुमिच्छेत् न विजिगीषुणा, तथाऽप्येनमुभयतस्संपीडनेन घातयेत्। अविश्वस्तो वा प्रत्येकशो यातुमिच्छेत, राज्यैकदेशं वा यातव्यस्य आदातुकामः, तथाऽप्येनं वैरिणा सर्वसंदोहेन वा घातयेत्। वैरिणा वा सक्तस्य दण्डोपनयेन मूलमन्यतो हारयेत्॥

[मित्रशत्र्वोः गूढभेद्यत्वेऽभेद्यत्वे च अतिसन्धानप्रकाराः]

शत्रुभूम्या वा मित्रं पणेत, मित्रभूम्या वा शत्रुम्। ततः शत्रुभूमिलिप्सायां मित्रेणात्मन्यपकारयित्वाऽभियुञ्जीत-इतिसमानाः पूर्वेण सर्वे एव योगाः॥

शत्रुं वा मित्रभूमिलिप्सायां प्रतिपन्नं दण्डेनानुगृह्णीयात्। ततो मित्रं तमतिसंदध्यात्। ततः प्रतिविधानेन वा व्यसनमात्मनो दर्शयित्वा मित्रेणामित्रमुत्साहयित्वा आत्मानमभियोजयेत्; ततस्संपीडनेन घातयेत्। जीवग्राहेण वा राज्यविनिमयं कारयेत्।

मित्रेणाहूतश्चेच्छत्रुरग्राह्ये स्थातुमिच्छेत्, सामन्तादिभिः मूलमस्य हारयेत्; दण्डेन वा त्रातुमिच्छेत्, तमस्य घातयेत्॥

तौ चेन्न भिद्येयातां प्रकाशमेवान्योन्यस्य भूम्या पणेत। ततः परस्परं मित्रव्यञ्जनोभयवेतना वा दूतान् प्रेषयेयुः—"अयं ते राजा

भूमिं लिप्सते शत्रुसंहितः " इति । तयोरन्यतरो जाताशङ्कारोषः पूर्ववच्चेष्टेत ॥

[अन्ये च केचन घातनप्रकाराः]

दुर्गराष्ट्रदण्डमुख्यान् वा कृत्यपक्षहेतुभिरभिविख्याप्य प्रव्राजयेत्, ते युद्धावस्कन्दावरोधव्यसनेषु शत्रुमतिसंदध्युः। भेदं वाऽस्य स्ववर्गेभ्यः कुर्युः। अभित्यक्तशासनैः प्रतिसमानयेयुः ॥

लुब्धकव्यञ्जना वा मांसविक्रयेण द्वास्स्था दौवारिकापाश्रयाः चोराभ्यागमं परस्य द्विस्त्रिरिति निवेद्य लब्धप्रत्यया भर्तुरनीकं द्विधा निवेश्य ग्रामवधेऽवस्कन्दे च द्विषतो ब्रूयुः—" आसन्नश्चोरगणः, महांश्चाक्रन्दः ; प्रभूतं सैन्यमागच्छतु " इति । तदर्पयित्वा ग्रामघातदण्डस्य सैन्यमितरदादाय रात्रौ दुर्गद्वारेषु ब्रूयुः—" हतश्चोरगणः ; सिद्धयात्रमिदं सैन्यमागतं ; द्वारमपाव्रियताम् " इति । पूर्वप्रणिहिता वा द्वाराणि दद्युः ; तैस्सह प्रहरेयुः ॥

कारुशिल्पिपाषण्डकुशीलववैदेहकव्यञ्जनानायुधीयान् वा परदुर्गे प्रणिदध्यात् । तेषां गृहपतिकव्यञ्जनाः काष्ठतृणधान्यपण्यशकटैः प्रहरणावरणान्यभिहरेयुः ; देवध्वजप्रतिमाभिर्वा । ततस्तद्व्यञ्जनाः प्रमत्तवधमवस्कन्दप्रतिग्रहमभिप्रहरणं पृष्ठतः शङ्खदुन्दुभिशब्देन वा प्रविष्टमित्यावेदयेयुः । प्राकारद्वाराट्टालकदानमनीकभेदं घातं वा कुर्युः ॥

[ अपसर्पैः कारयितव्यानि अतिनयनकर्माणि ]

सार्थगणवासिभिरातिवाहिकैः कन्यावाहिकैरश्वपण्यव्यवहारिभिरुपकरणहारकैर्धान्यक्रेतृविक्रेतृभिर्वा प्रव्रजितलिङ्गिभिर्दूतैश्च दण्डातिनयनं सन्धिकर्म विश्वासनार्थम् । इति राजापसर्पाः ॥

[ आटविकानां प्रणिधेयाः, तेष्वपसर्पकार्याणि च ]

एत एवाटवीनामपसर्पाः कण्टकशोधनोक्ताश्च । व्रजमटव्यासन्नमपसर्पास्सार्थं वा चोरैर्घातयेयुः । कृतसङ्केतमन्नपानं चात्र मदनरसविद्धं वा कृत्वापगच्छेयुः । गोपालकवैदेहकाश्च ततश्चोरान्

गृहीतलोमभाराः मदनरसविकारकालेऽवस्कन्दयेयुः। सङ्कर्षणदैवतीयो वा मुण्डजटिलव्यञ्जनः प्रहवणकर्मणा मदनरसयोगाभ्यामतिसंदध्यात्। अथावस्कन्दं दद्यात्। शौण्डिकव्यञ्जनो वा दैवतप्रेतकार्योत्सवसमाजेष्वाटविकान् सुराविक्रयोपायननिमित्तं मदनरसयोगाभ्यामतिसंदध्यात्। अथावस्कन्दं दद्यात्॥

ग्रामघातप्रविष्टां वा विक्षिप्य बहुधाऽटवीम्।
घातयेदिति चोराणामपसर्पाः प्रकीर्तिताः॥ ३३७॥

इति दुर्गलम्भोपाये अपसर्पप्रणिधिस्तृतीयोऽध्यायः
आदितस्त्रिचत्वारिंशच्छततमः

---

## चतुःसप्ततिपञ्चसप्ततिशततमे प्रकरणे–
## पर्युपासनकर्म, अवमर्दश्च.

### चतुर्थोऽध्यायः

[ परकर्शनसमये तत्प्रजापीडननिषेधः ]

कर्शनपूर्वं पर्युपासनकर्म। जनपदं यथानिविष्टमभये स्थापयेत्। उत्थितमनुग्रहपरिहाराभ्यां निवेशयेदन्यत्रापसरतः, समग्रमन्यस्यां भूमौ निवेशयेदेकस्यां वा वासयेत्। न ह्यजनो जनपदो राज्यमजनपदं वा भवतीति कौटल्यः॥

[ कर्शनप्रकाराः ]

विषमस्थस्य मुष्टिं सस्यं वा हन्याद्वीवधप्रसारौ च।
प्रसारवीवधच्छेदान्मुष्टिसस्यवधादपि।
वमनात् गूढघाताच्च जायते प्रकृतिक्षयः॥ ३३८॥

[ परदुर्गपरितः सैन्यनिवासनानुकूलः कालः ]

प्रभूतगुणवद्धान्यकुप्ययन्त्रशस्त्रावरणविष्टिरश्मिसमग्रं मे सैन्यं, ऋतुश्च पुरस्तात्; अपर्तुः परस्य व्याधिदुर्भिक्षनिचयरक्षाक्षयः क्रीतबलनिर्वेदो मित्रबलनिर्वेदश्च—इति पर्युपासीत ॥

[ कर्शनप्रकाराः ]

कृत्वा स्कन्धावारस्य रक्षां वीवधासारयोः पथश्च ; परिक्षिप्य दुर्गं खातसालाभ्यां, दूषयित्वोदकमवस्राव्य परिखास्संपूरयित्वा वा सुरुङ्गाबलकुटिकाभ्यां वप्रप्राकारौ हारयेत् ।

द्वारं च गुडेन निम्नं वा पांसुमालयाऽऽच्छादयेत् । बहुलारक्षं यन्त्रैर्घातयेत् । निष्कुरादुपनिष्कृष्याश्वैश्च प्रहरेयुः । विक्रमान्तरेषु च नियोगविकल्पसमुच्चयैश्चोपायानां सिद्धिं लिप्सेत ।

दुर्गवासिनः श्येनकाकनप्तृभासशुकशारिकोलूककपोतान् ग्राहयित्वा पुच्छेष्वग्नियोगयुक्तान् परदुर्गे विसृजेयुः ।

अपकृष्टस्कन्धावारादुच्छ्रितध्वजधन्वारक्षा वा मानुषेणाग्निना परदुर्गमादीपयेयुः ।

गूढपुरुषाश्चान्तदुर्गपालका नकुलवानरबिडालशुनां पुच्छेष्वग्नियोगमाधाय काण्डनिचयरक्षाविधानवेश्मसु विसृजेयुः ॥

शुष्कमत्स्यानामुदरेष्वग्निमाधाय वल्लूरे वा वायसोपहारेण वयोभिर्हारयेयुः ।

सरलदेवदारुपूतितृणगुग्गुलुश्रीवेष्टकसर्जरसलाक्षागुलिकाः खरोष्ट्राजीवानां लण्डं चाग्निधारणम् ।

प्रियालचूर्णमवल्गुजमषीमधूच्छिष्टमश्वखरोष्ट्रगोलण्डमित्येषः क्षेप्योऽग्नियोगः ।

सर्वलोहचूर्णमग्निवर्णं वा कुम्भीसीसत्रपुचूर्णं वा पारिभद्रकपलाशपुष्पकेशमषीतैलमधूच्छिष्टकश्रीवेष्टकयुक्तोऽग्नियोगः, विश्वासघाती वा। तेनावलिप्तः शणत्रपुसवल्कवेष्टितो बाण इत्यग्नियोगः।

न त्वेव विद्यमाने पराक्रमेऽग्निमवसृजेत् । अविश्वास्यो ह्यग्निः दैवपीडनं च, अप्रतिसङ्ख्यातप्राणिधान्यपशुहिरण्यकुप्यद्रव्यक्षयकरः। क्षीणनिचयं चावाप्तमपि राज्यं क्षयायैव भवति । इति पर्युपासनकर्म ॥

[ परदुर्गाक्रमणकालः ]

सर्वारम्भोपकरणविष्टिसम्पन्नोऽस्मि; व्याधितः पर उपधाविरुद्धप्रकृतिरकृतदुर्गकर्मनिचयो वा निरासारस्सासारो वा पुरा मित्रैस्संधत्ते—इत्यवमर्दकालः ॥

[ परदुर्गावमर्दप्रकाराः ]

स्वयमग्नौ जाते समुत्थापिते वा प्रहवणे प्रेक्षानीकदर्शनसङ्गसौरिककलहेषु नित्ययुद्धश्रान्तबले बहुलयुद्धप्रतिविद्धप्रेतपुरुषे जागरणक्लान्तसुप्तजने दुर्दिने नदीवेगे वा नीहारसंप्लवे वाऽवमृद्नीयात्।

स्कन्धावारमुत्सृज्य वा वनगूढः शत्रुं सत्त्रान्निष्क्रान्तं घातयेत्।

मित्रासारमुख्यव्यञ्जनो वा संरुद्धेन मैत्रीं कृत्वा दूतमभित्यक्तं प्रेषयेत्—"इदं ते छिद्रम्; इमे दूष्याः; संरोद्धुर्वा छिद्रमयं ते कृत्यपक्षः" इति। तं प्रतिदूतमादाय निर्गच्छन्तं विजिगीषुर्गृहीत्वा दोषमभिविख्याप्य प्रवास्यापगच्छेत्। ततो मित्रासारव्यञ्जनो वा संरुद्धं ब्रूयात्—"मां त्रातुमुपनिर्गच्छ; मया वा सह संरोद्धारं जहि" इति। प्रतिपन्नमुभयतस्संपीडनेन घातयेत्; जीवग्राहेण वा राज्यविनिमयं कारयेत्; नगरं वाऽस्य प्रमृद्नीयात्। सारबलं वास्य वमयित्वाऽभिहन्यात्। तेन दण्डोपनताटविका व्याख्याताः।

दण्डोपनताटविकयोरन्यतरो वा संरुद्धस्य प्रेषयेत्—"अयं संरोद्धा व्याधितः, पार्ष्णिग्राहेणाभियुक्तः, छिद्रमन्यदुत्थितमन्यस्यां भूमावपयातुकामः" इति। प्रतिपन्ने संरोद्धा स्कन्धावारमादीप्यापयायात्, ततः पूर्ववदाचरेत्।

पण्यसम्पातं वा कृत्वा पण्येनैनं रसविद्धेनातिसंदध्यात्।

आसारव्यञ्जनो वा संरुद्धस्य दूतं प्रेषयेत्—"मया बाह्यमभिहतमुपनिर्गच्छाभिहन्तुम्" इति। प्रतिपन्नं पूर्ववदाचरेत्। मित्रं बन्धुं वाऽपदिश्य योगपुरुषाः शासनमुद्राहस्ताः प्रविश्य दुर्गं ग्राहयेयुः।

आसारव्यञ्जनो वा संरुद्धस्य प्रेषयेत्—"अमुष्मिन् देशे काले च स्कन्धावारमभिहनिष्यामि ; युष्माभिरपि योद्धव्यम्" इति। प्रतिपन्नं यथोक्तमभ्याघातसंकुलं दर्शयित्वा रात्रौ दुर्गान्निष्क्रान्तं घातयेत्।

यद्वा मित्रमावाहयेत् आटविकं वा, तमुत्साहयेत्-"विक्रम्य संरुद्धे भूमिमस्य प्रतिपद्यस्व" इति। विक्रान्तं प्रकृतिभिर्दूष्यमुख्यावग्रहेण वा घातयेत् स्वयं वा रसेन 'मित्रघातकोऽयम्' इत्यवाप्तार्थः।

विक्रमितुकामं वा मित्रव्यञ्जनः परस्याभिशंसेत्। आप्तभावोपगतः प्रवीरपुरुषानस्योपघातयेत्॥

सन्धिं वा कृत्वा जनपदमेनं निवेशयेत्। निविष्टमन्यजनपदमविज्ञातो हन्यात्।

अपकारयित्वा दूष्याटविकेषु वा बलैकदेशमतिनीय दुर्गमवस्कन्देन हारयेत्।

दूष्यामित्राटविकद्वेष्यप्रत्यपसृताश्च कृतार्थमानसंज्ञाचिह्नाः परदुर्गमवस्कन्देयुः॥

[परदुर्गपरस्कन्धावारयोरवस्कन्दे
सिद्धे अनन्तरकर्तव्योंऽशः]

परदुर्गमवस्कन्द्य स्कन्धावारं वा पतितपराङ्मुखाभिपन्नमुक्तकेशशस्त्रभयविरूपेभ्यश्चाभयमयुध्यमानेभ्यश्च दद्युः। परदुर्गमवाप्य विशुद्धशत्रुपक्षः कृतोपांशुदण्डप्रतीकारमन्तर्बहिश्च प्रविशेत्॥

[एवं शत्रुभूमिलाभे पृथिवीजय-
मार्गाः चत्वारः]

एवं विजिगीषुरमित्रभूमिं लब्ध्वा मध्यमं लिप्सेत, तत्सिद्धावुदासीनम्। एष प्रथमो मार्गः पृथिवीं जेतुम्।

मध्यमोदासीनयोरभावे गुणातिशयेनारिप्रकृतीस्साधयेत्, तत उत्तराः प्रकृतीः। एष द्वितीयो मार्गः।

मण्डलस्याभावे शत्रुणा मित्रं मित्रेण वा शत्रुमुभयतः संपीडनेन साधयेत्। एष तृतीयो मार्गः।

शक्यमेकं वा सामन्तं साधयेत् : तेन द्विगुणो द्वितीयं त्रिगुणस्तृतीयम् । एष चतुर्थो मार्गः पृथिवीं जेतुम् ।

जित्वा च पृथिवीं विभक्तवर्णाश्रमां स्वधर्मेण भुञ्जीत ॥

[उक्तदुर्गलम्भहेतुसंग्रहः]

उपजापापसर्पौ च वामनं पर्युपासनम् ।
अपमर्दश्च पञ्चैते दुर्गलम्भस्य हेतवः ॥ ३३९ ॥

इति दुर्गलम्भोपाये पर्युपासनकर्म, अवमर्दश्च चतुर्थोऽध्यायः
आदितश्चतुश्चत्वारिंशच्छततमः

---

# षट्सप्ततिशततमं प्रकरणं—लब्धप्रशमनम्

## पञ्चमोऽध्यायः

[विजिगीषुलब्धव्यतया सम्भाविताः अर्थभेदाः]

द्विविधं विजिगीषोः समुत्थानम्–अटव्यादिकमेकग्रामादिकं च । त्रिविधश्चास्य लम्भः—नवो, भूतपूर्वः, पित्र्य इति ॥

[तत्र नूतनलाभे प्रजासु भयशङ्कापनोदनेन
विस्रम्भजननोपायाः]

नवमवाप्य लम्भं परदोषान् स्वगुणैश्छादयेत् । गुणान् गुणद्वैगुण्येन । स्वधर्मकर्मानुग्रहपरिहारदानमानकर्मभिश्च प्रकृतिप्रियहितान्यनुवर्तेत । यथासंभाषितं च कृत्यपक्षमुपग्राहयेत् , भूयश्च कृतप्रयासम् । अविश्वास्यो हि विसंवादकस्स्वेषां परेषां च भवति ; प्रकृतिविरुद्धाचारश्च । तस्मात्समानशीलवेषभाषाचारतामुपगच्छेत् । देशदैवतसमाजोत्सवविहारेषु च भक्तिमनुवर्तेत ॥

देशग्रामजातिसङ्घमुख्येषु चाभीक्ष्णं सत्रिणः परस्यापचारं दर्शयेयुः; महाभाग्यं भक्तिं च तेषु स्वामिनः स्वामिसत्कारं च विद्यमानम् । उचितैश्चैनान् भोगपरिहाररक्षावेक्षणैः भुञ्जीत । सर्वदेवताश्रमपूजनं च विद्यावाक्यधर्मशूरपुरुषाणां च भूमिद्रव्यदानपरिहारान् कारयेत् ; सर्वबन्धनमोक्षणमनुग्रहं दीनानाथव्याधितानां

च। चातुर्मास्येष्वर्धमासिकमघातं; पौर्णमासीषु च चातूरात्रिकं; योनिबालवधं पुंस्त्वोपघातं च प्रतिषेधयेत्। यच्च कोशदण्डोपघातिकमधर्मिष्ठं वा चरित्रं मन्येत, तदपनीय धर्मव्यवहारं स्थापयेत्। चोरप्रकृतीनां म्लेच्छजातीनां च स्थानविपर्यासमनेकस्थं कारयेत्, दुर्गराष्ट्रदण्डमुख्यानां च। परोपगृहीतानां च मन्त्रिपुरोहितादीनां परस्य प्रत्यन्तेष्वनेकस्थं वासं कारयेत्। अपकारसमर्थाननु क्षियतो वा भर्तुर्विनाशमुपांशुदण्डेन प्रशमयेत्। स्वदेशीयान् वा परेण वाऽवरुद्धानपवाहितस्थानेषु स्थापयेत्॥

यश्च तत्कुलीनः प्रत्यादेयमादातुं शक्तः प्रत्यन्ताटवीस्थो वा प्रबाधितुमभिजातः, तस्मै विगुणां भूमिं प्रयच्छेत्; गुणवत्याश्चतुर्भागं वा कोशदण्डदानमवस्थाप्य, यदुपकुर्वाणः पौरजानपदान् कोपयेत्। औपघातिकं वा देशे निवेशयेदिति॥

[ भूतपूर्वलाभे ]

भूतपूर्वे येन दोषेणापवृत्तः, तं प्रकृतिदोषं छादयेत्। येन च गुणेनोपावृत्तः, तं तीव्रीकुर्यादिति॥

[ पित्र्यलाभे ]

पित्र्ये पितृदोषांश्छादयेत्, गुणांश्च प्रकाशयेदिति॥

[ सारार्थसंग्रहः ]

चरित्रमकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत्।
प्रवर्तयेन्न चाधर्म्यं कृतं चान्यैर्निवर्तयेत्॥ ३४०॥

इति दुर्गलम्भोपाये त्रयोदशेऽधिकरणे लब्धप्रशमनं पञ्चमोऽध्यायः
आदितः पञ्चचत्वारिंशच्छतः।

एतावता दुर्गलम्भोपायस्त्रयोदशमधिकरणं समाप्तम्.

---

इति कौटलीये अर्थशास्त्रे अष्टाधिकरणीरूपः आवापाभिधानः द्वितीयो भागः समाप्तः

---

# अथ कौटलीये अर्थशास्त्रे

## भागद्वयशेषात्मकः तृतीयो भागः

# तत्र औपनिषदिकं नाम

## चतुर्दशमधिकरणम्

---

## अस्येयं प्रकरणानुक्रमणिका



आहत्य ३ प्रकरणानि. ४ अध्यायाः. ३६ श्लोकाः.

---

# एषु च प्रकरणेषु प्रतिपादितानामर्थानामयं सङ्ग्रहः

---

## 177. परघातप्रयोगः
(पु. 440)

वक्ष्यमाणहिंसादिप्रयोगविषयाः फलं च.
मारकाः विषशस्त्राग्निप्रयोगाः.
मारकाः अन्धङ्करणाश्च धूमप्रयोगाः.
उन्मादनेत्रघातकराः प्रयोगाः.
कुष्ठप्रमेहक्षयविषमज्वरमूकत्वबाधिर्यकराः प्रयोगाः.
औषधेषु वीर्यातिशयसम्पादनविधिः.
दीर्यवत्तराः वेधनदंशनादियोगाः.
निष्प्रतीकाराः आग्नेययोगाः.
होमोपयोगिमन्त्रखण्डः.

## 178. प्रलम्भने-अद्भुतोत्पादनम्
(पु. 443)

पक्षोपवासमासोपवासयोगाः.
विरूपकरणप्रकारः.
श्वैत्यकारकयोगाः.
कुष्ठयोगाः तत्प्रतीकारश्च.
गौरत्वकृष्णत्वयोरापादका योगाः.
हिंसानुत्पादनेनैव शरीरादौ अग्निप्रज्वलनानुकूला योगाः.
अङ्गारराशिषु पादचारयोगः.
उल्काप्रदर्शनाग्निशमनपाकनिरोधादियोगाः
अग्निधूमोत्सर्गयोगाः जलादावप्यग्निज्वलनयोगाश्च.
निगळभञ्जनयोगः.
शतयोजनावधि अश्रान्तगमनयोगः.
उक्तयोगानां प्रवर्तने उद्देशः.

## प्रलम्भने--भैषज्यमन्त्रप्रयोगाः
(पु. 447)

तमसि वस्तुदर्शनयोगः.
अन्तर्धानयोगाः.
प्रस्वापनयोगचतुष्टये योगद्वयमन्त्रः.
तत्प्रयोगप्रकारद्वयम्.
तृतीयप्रस्वापनयोगमन्त्रः.
तत्प्रयोगः.
द्वारापावरणमन्त्रतत्प्रयोगाः.
द्वारयन्त्रोद्घाटनप्रस्वापनोभयसाधको - मन्त्रः.
ज्याच्छेदनयोगः.
नासानिरोधमुखस्तम्भनयोर्योगः.
मलविष्टम्भान्धीकरणमारणजीविकाभञ्ज - नादियोगाः.
मारणोत्सादनादियोगाः.
अपुरुषीकरणयोगः.
अन्नपानादिभाजनानां अक्षयत्वापादकाः योगाः.
ग्रामगतसर्वनवनीतागमनयोगः.
वृक्षफलानयनयोगः.
उक्तमन्त्रभैषज्यप्रयोगविषयाः फलं च.

179. **स्वबलोपघातप्रतीकारः** (पु. 453)

राजभोग्यासु स्त्रीषु सेनासु च विषप्रयोगप्रतीकारविधिः.
मदनोन्मादप्रयोगयोः प्रतीकारः.
कुष्ठशिरोरोगयोः प्रतीकारः.
नष्टसंज्ञाप्रत्यापत्तिसाधको योगः.
उक्तौषधानामुपयोक्तव्या मात्राः.
विषप्रतीकारयोगान्तराणि, निगमनं च.

# अथ [1]औपनिषदिकं नाम चतुर्दशमधिकरणम्

## सप्तसप्ततिशततमं प्रकरणम्-परघातप्रयोगः

### प्रथमोऽध्यायः

[ हिंसाप्रयोगविषयाः फलं च ]

[2]चातुर्वर्ण्यरक्षार्थमौपनिषदिकमधर्मिष्ठेषु प्रयुञ्जीत ।

[ मारकाः विषशस्त्राग्निप्रयोगाः ]

कालकूटादिः विषवर्गः श्रद्धेयदेशवेषशिल्पभाजनापदेशैः कुब्जवामनकिरातमूकबधिरजडान्धच्छद्मभिः म्लेच्छजातीयैरभिप्रेतैः स्त्रीभिः पुंभिश्च [3]परशरीरोपभोगे[4]ष्वाधातव्यः ।

राजक्रीडाभाण्डनिधानद्रव्योपभोगेषु गूढाः शस्त्रनिधानं कुर्युः ; सत्राजीविनश्च रात्रिचारिणोऽग्निजीविनश्चाग्निनिधानम् ॥

[मारकाः अन्धङ्करणाश्च धूमप्रयोगाः]

चित्रभेककौण्डिन्यककृकणपञ्चकुष्ठशतपदीचूर्णं उच्चिदिङ्गकम्बलीशतकन्देध्मकृकलासचूर्णं गृहगौलिकान्धाहिककृकणकपूतिकीटगोमारिकाचूर्णं भल्लातकावल्गुकारसयुक्तं सद्यः प्राणाहरम्, एतेषां वा धूमः ॥

कीटो वाऽन्यतमस्तप्तः कृष्णसर्पप्रियङ्गुभिः ।
शोषयेदेष संयोगः सद्यः प्राणहरो मतः ॥ ३४१ ॥

धामार्गवयातुधानमूलं भल्लातकपुष्पचूर्णयुक्तमार्धमासिकः । व्याघातकमूलं भल्लातकपुष्पचूर्णयुक्तं कीटयोगो मासिकः । कला-

---

[1] हिंसाप्रधानमौषधमन्त्ररहस्यमधिकृत्य प्रवृत्तम्. [2] व्यवस्तिधर्मकर्मकं प्रजासामान्यं रक्षितुमिति भावः. [3] शत्रूपयोज्येषु वस्त्रादिषु. [4] ष्ववधातव्यः-पा.

मात्रं पुरुषाणां, द्विगुणं खराश्वानां, चतुर्गुणं हस्त्युष्ट्राणाम्। शतकर्दमोच्चिदिङ्गकरवीरकटुतुम्बीमत्स्यधूमो मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वा प्रवातानुवाते प्रणीतो यावच्चरति तावन्मारयति। पूतिकीटमत्स्यकटुतुम्बीशतकर्दमेध्मेन्द्रगोपचूर्णं पूतिकीटक्षुद्रारालाहमविदारीचूर्णं वा बस्तशृङ्गखुरचूर्णयुक्तमन्धीकरो धूमः॥

पूतिकरञ्जपत्रहरितालमनश्शिलागुञ्जारक्तकार्पासपलालान्या--स्फोटकाचगोशकृद्रसपिष्टमन्धीकरो धूमः॥

सर्पनिर्मोकं गोश्वपुरीषमन्धाहिकशिरश्चान्धीकरो धूमः। पारावतप्लवकक्रव्यादानां हस्तिनरवराहाणां च मूत्रपुरीषं कासीसहिङ्गुयवतुषकणतण्डुलाः कार्पासकुटजकोशातकीनां च बीजानि गोमूत्रिकाभाण्डीमूलं निम्बाशिग्रुफणिज्जकाक्षीबपीलुकभङ्गः सर्पशफरीचर्म हस्तिनखशृङ्गचूर्णमित्येष धूमो मदनकोद्रवपलालेन हस्तिकर्णपलाशपलालेन वा प्रणीतः प्रत्येकशो यावच्चरति तावन्मारयति॥

कालीकुष्ठनडशतावरीमूलं सर्पप्रचलाककृकणपञ्चकुष्ठचूर्णं वा धूमः पूर्वकल्पेनार्द्रे शुष्कपलाले वा प्रणीतः सङ्ग्रामावतरणावस्कन्दनसङ्कुलेषु कृततेजनोदकाक्षिप्रतीकारैः, प्रणीतः सर्वप्राणिनां नेत्रघ्नः॥

शारिकाकपोतबकबलाकालण्डमर्काक्षिपीलुकस्नुहिक्षीरपिष्टमन्धीकरणमञ्जनमुदकदूषणं च॥

[ उन्मादनेत्रघातकराः प्रयोगाः ]

यवकशालिमूलमदनफलजातीपत्रनरमूत्रयोगाः प्लक्षविदारीमूलयुक्तो मुकोदुम्बरमदनकोद्रवकाथयुक्तो हस्तिकर्णपलाशकाथयुक्तो वा मदनयोगः। शृङ्गिगौतमवृक्षकण्टकारमयूरपदीयोगो गुञ्जालाङ्गलीविषमूलिकेङ्गुदीयोगः। करवीराक्षिपीलुकार्कमृगमारणीयोगो मदनकोद्रवकाथयुक्तो हस्तिकर्णपलाशकाथयुक्तो वा मदनयोगः, समस्ता वा यवसेन्धनोदकदूषणाः॥

कृतकण्डलकृकलासगृहगौलिकान्धाहिकधूमो नेत्रवधमुन्मादं च करोति॥

[ कुष्ठप्रमेहक्षयविषमज्वरमूकबधिरकराः प्रयोगाः ]

कृकलासगृहगोलकायोगः कुष्ठकरः ।

स एव चित्रभेकान्त्रमधुयुक्तः प्रमेहमापादयति । मनुष्यलोहितयुक्तः शोषम् ॥.

दूषीविषं मदनकोद्रवचूर्णमुपजिह्विकायोगः मातृवाहकाञ्जलिकारप्रचलाकभेकाक्षिपीलुकयोगो विषूचिकाकरः ॥

पञ्चकुष्ठककौण्डिन्यकराजवृक्षपुष्पमधुयोगो ज्वरकरः ।

भासनकुलजिह्वाग्रन्थिकायोगः खरीक्षीरपिष्टो मूकबधिरकरो मासार्धमासिकः कलामात्रं पुरुषाणामिति---समानं पूर्वेण ॥

[ औषधेषु वीर्यातिशयसम्पादनविधिः ]

भङ्गक्वाथोपनयनमौषधानां, चूर्णं प्राणभृताम् । सर्वेषां वा क्वाथोपनयनम्; एवं वीर्यवत्तरं भवति—इति योगसंपत् ॥

[वीर्यवत्तराः वेधनदंशनादियोगाः ]

शाल्मलीविदारीधान्यसिद्धो मूलवत्सनाभसंयुक्तः चुचुन्दरीशोणितप्रलेपेन दिग्धो बाणो यं विध्यति, स विद्धोऽन्यान् दश पुरुषान् दशति ; ते दष्टा दशान्यान् दशन्ति पुरुषान् ।

भल्लातकयातुधानापामार्गबाणानां पुष्पैः एलकाक्षिगुग्गुलुहालाहलानां च कषायं बस्तनरशोणितयुक्तं दंशयोगः । ततोऽर्धधरणिको योगः सक्तुपिण्याकाभ्यामुदके प्रणीतो धनुश्शतायाममुदकाशयं दूषयति ; मत्स्यपरम्परा ह्येतेन दष्टाऽभिमृष्टा वा विषीभवति ; यश्चैतदुदकं पिबति स्पृशति वा ।

रक्तश्वेतसर्षपैर्गोधा त्रिपक्षमुष्ट्रिकायां भूमौ निखातायां निहिता वध्येनोद्धृता यावत्पश्यति तावन्मारयति ; कृष्णः सर्पो वा ॥

[ निष्प्रतीकाराः आग्नेययोगाः ]

विद्युत्प्रदग्धोऽङ्गारोऽज्वालो वा विद्युत्प्रदग्धैः काष्ठैर्गृहीतश्चानुवासितः कृत्तिकासु भरणीषु वा रौद्रेण कर्मणाऽभिहुतोऽग्निः प्रणीतश्च निष्प्रतीकारो दहति ॥

कर्मारादग्निमाहृत्य क्षौद्रेण जुहुयात् पृथक् ।
सुरया शौण्डिकादग्निं [1]भार्ग्योऽयोऽग्निं घृतेन च ॥ ३४२ ॥
माल्येन चैकपत्न्यग्निं पुंश्चल्यग्निं च सर्षपैः ।
दध्ना च सूतिकास्वग्निमाहिताग्निं च तण्डुलैः ॥ ३४३ ॥
चाण्डालाग्निं च मांसेन चिताग्निं मानुषेण च ।
समस्तान् बस्तवसया मानुषेण ध्रुवेण च ॥ ३४४ ॥
जुहुयादग्निमन्त्रेण राजवृक्षकदारुभिः ।
एष निष्प्रतिकारोऽग्निर्द्विषतां नेत्रमोहनः ॥ ३४५ ॥

[ होममन्त्रखण्डः ]

"अदिते ! नमस्ते । अनुमते ! नमस्ते । सरस्वति ! नमस्ते । देव सवितः ! नमस्ते ॥ अग्नये स्वाहा ; सोमाय स्वाहा ; भूस्स्वाहा ; भुवस्स्वाहा ॥"

इत्यौपनिषदिके परघातप्रयोगः प्रथमोऽध्यायः
आदितः षट्चत्वारिंशदुत्तरशततमः

---

# अष्टसप्ततिशततमं प्रकरणम्–प्रलम्भनम्

## तत्र अद्भुतोत्पादनं द्वितीयोऽध्यायः

[ पक्षोपवासमासोपवासयोगाः ]

शिरीषोदुम्बरशमीचूर्णं सर्पिषा संहृत्यार्धमासिकः क्षुद्योगः । कशेरुकोत्पलकन्देक्षुमूलबिसदूर्वाक्षीरघृतमण्डसिद्धो मासिकः । माषयवकुलुत्थदर्भमूलचूर्णं वा क्षीरघृताभ्यां, वल्लीक्षीरघृतं वा समसिद्धं सालपृश्निपर्णीमूलकल्कं पयसा पीत्वा ; पयो वा तत्सिद्धं मधुघृताभ्यामशित्वा मासमुपवसति ॥

[ विरूपकरणप्रकारः ]

श्वेतबस्तमूत्रे सप्तरात्रोषितैः सिद्धार्थकैः सिद्धं तलं कटुकालाबौ मासार्धमासस्थितं चतुष्पदद्विपदानां विरूपकरणम् ॥

---

[1] भार्ग्या–ब्राह्मणयष्टिकाख्यया औषध्या.

तक्रयवभक्षस्य सप्तरात्रादूर्ध्वं श्वेतगर्दभस्य लण्डयवैस्सिद्धं गौरसर्षपतैलं विरूपकरणम् ॥

[श्वैत्यकारकयोगः]

एतयोरन्यतरस्य मूत्रलण्डरससिद्धं सिद्धार्थकतैलमर्कतूलपतङ्गचूर्णप्रतिवापं श्वेतीकरणम् ।

श्वेतकुक्कुटाजगरलण्डयोगः श्वेतीकरणम् ।

श्वेतबस्तमूत्रे श्वेतसर्षपाः सप्तरात्रोषिताः तक्रमर्कक्षीरमर्कतूलकटुकमत्स्यविलङ्गाश्च । एष पक्षस्थितो योगः श्वेतीकरणम् ।

समुद्रमण्डूकीशङ्खसुधाकदलीक्षारतक्रयोगः श्वेतीकरणम् ।

कदल्यवल्गुजक्षाररसशुक्ताः सुरायुक्ताः तक्रार्कतूलस्नुहिलवणं धान्याम्लं च पक्षस्थितो योगः श्वेतीकरणम् ।

कटुकालाबौ वल्लीगते नगरमर्धमासस्थितं गौरसर्षपपिष्टं रोम्णां श्वेतीकरणम् ।

अर्कतूलोऽर्जुने कीटः श्वेता च गृहगौलिका ।
एतेन पिष्टेनाभ्यक्ताः केशाःस्युः शङ्खपाण्डराः ॥ ३४६ ॥

[कुष्ठयोगाः तत्प्रतीकारश्च]

गोमयेन तिन्दुकारिष्टकल्केन वा मर्दिताङ्गस्य भल्लातकरसानुलिप्तस्य मासिकः कुष्ठयोगः ।

कृष्णसर्पमुखे गृहगौलिकामुखे वा सप्तरात्रोषिता गुञ्जाः कुष्ठयोगः ।

शुकपित्ताण्डरसाभ्यङ्गः कुष्ठयोगः ।

कुष्ठस्य प्रियालकल्ककषायः प्रतीकारः ॥

[गौरत्वकृष्णत्वयोरापादकाः योगाः]

कुक्कुटीकोशातकीशतावरीमूलयुक्तमाहारयमाणो मासेन गौरो भवति । वटकषायस्नातः सहचरकल्कदिग्धः कृष्णो भवति ॥

शकुनकङ्कुतैलयुक्ता हरितालमनश्शिलाः श्यामीकरणम् ॥

[ अबाधनेन शरीरादौ अग्निप्रज्वलनानुकूलाः योगाः ]

खद्योतचूर्णं सर्षपतैलयुक्तं रात्रौ ज्वलति ।

खद्योतगण्डूपदचूर्णं समुद्रजन्तूनां भृङ्गकपालानां खदिरकर्णिकाराणां पुष्पचूर्णं वा शकुनकङ्कुतैलयुक्तं तेजनचूर्णम् ।

पारिभद्रकत्वङ्मषी मण्डूकवसया युक्ता गात्रप्रज्वालनमग्निना ।

पारिभद्रकत्वग्वज्रकदलीतिलकल्कप्रदिग्धं शरीरमग्निना ज्वलति ।

पीलुत्वङ्मषीमयः पिण्डो हस्ते ज्वलति । मण्डूकवसादिग्धोऽग्निना ज्वलति ।

तेन प्रदिग्धमङ्गं कुशाम्रफलतैलसिक्तं समुद्रमण्डूकीफेनकसर्जरसचूर्णयुक्तं वा ज्वलति ।

मण्डूकवसासिद्धेन पयसा कुलीरादीनां वसया समभागं तैलं सिद्धमभ्यङ्गो गात्राणामग्निप्रज्वालनम् । मण्डूकवसादिग्धोऽग्निना ज्वलति ।

वेणुमूलशैवललिप्तमङ्गं मण्डूकवसादिग्धमग्निना ज्वलति ॥

[ अङ्गारेषु पादचारयोगः ]

पारिभद्रकप्रतिबलावञ्जुलवज्रकदलीमूलकल्केन मण्डूकवसादिग्धेन तैलेनाभ्यक्तपादोऽङ्गारेषु गच्छति ॥

उपोदका प्रतिबला वञ्जुलः पारिभद्रकः ।
एतेषां मूलकल्केन मण्डूकवसया सह ॥ ३४७ ॥
साधयेत्तैलमेतेन पादावभ्यज्य निर्मलौ ।
अङ्गारराशौ विचरेद्यथा कुसुमसञ्चये ॥ ३४८ ॥

[ उल्काप्रदर्शनाग्निशमनपाकनिरोधादियोगाः ]

हंसक्रौञ्चमयूराणां, अन्येषां वा महाशकुनीनां उदकप्लवानां पुच्छेषु बद्धा नलदीपिका रात्रावुल्कादर्शनम् । वैद्युतं भस्माग्निशमनम् ।

स्त्रीपुष्पपायिता माषा व्रजकुलीमूलं मण्डूकवसामिश्रं चुल्यां दीप्तायामपाचनम् । चुल्लीशोधनं प्रतीकारः ।

[ अग्निधूमोत्सर्गयोगाः जलादावप्यग्निज्वलनयोगाश्च ]

पीलुमयो मणिरग्निगर्भः सुवर्चलामूलग्रन्थिः सूत्रग्रन्थिर्वा पिचुपरिवेष्टितो मुखादग्निधूमोत्सर्गः ।

कुशाम्रफलतैलसिक्तोऽग्निः वर्षप्रवातेषु ज्वलति ।
समुद्रफेनकस्तैलयुक्तोऽम्भसि प्लवमानो ज्वलति ।

प्लवङ्गमानामस्थिषु कल्माषवेणुना निर्मथितोऽग्निर्नोदकेन शाम्यति, उदकेन च ज्वलति ।

शस्त्रहतस्य शूलप्रोतस्य वा पुरुषस्य वामपार्श्वपर्शुकास्थिषु कल्माषवेणुना निर्मथितोऽग्निः, स्त्रियाः पुरुषस्य वाऽस्थिषु मनुष्यपर्शुकया निर्मथितोऽग्निर्यत्र त्रिरपसव्यं गच्छति, न चात्रान्योऽग्निर्ज्वलति ॥

[ निगडभञ्जनयोगः ]

चुचुन्दरी खञ्जरीटः खारकीटश्च पिष्यते ।
अश्वमूत्रेण संसृष्टा निगलानां तु भञ्जनम् ॥ ३४९ ॥
अयस्कान्तो वा पाषाणः ।

[ आशतयोजनादश्रान्तगमनयोगः ]

कुलीराण्डदर्दुरखारकीटवसाप्रदेहेन द्विगुणो दारकगर्भः कङ्कभासपार्श्वोत्पलोदकपिष्टश्चतुष्पदद्विपदानां पादलेपः, उलूकगृध्रवसाभ्यामुष्ट्रचर्मोपनहावभ्यज्य वटपत्रैः प्रतिच्छाद्य पञ्चाशद्योजनान्यश्रान्तो गच्छति , श्येनकङ्ककाकगृध्रहंसक्रौञ्चवीचिरल्लानां मज्जानो रेतांसि वा योजनशताय । सिंहव्याघ्रद्विपिकाकोलूकानां मज्जानो रेतांसि वा सार्ववर्णिकानि गर्भपतनान्युष्ट्रिकायामभिषूय श्मशाने प्रेतशिशून् वा तत्समुत्थितं मेदो योजनशताय ॥

[उक्तयोगानां प्रवर्तनोद्देशः]

अनिष्टैरद्भुतोत्पातैः परस्योद्वेगमाचरेत् ।
आराज्यायेति निर्वादः समानः कोप उच्यते ॥ ३५० ॥

इत्यौपनिषदिके प्रलम्भने अद्भुतोत्पादनं द्वितीयोऽध्यायः
आदितस्सप्तचत्वारिंशदुत्तरशततमः

---

## प्रलम्भने-भैषज्यमन्त्रप्रयोगः तृतीयोऽध्यायः

[तमसि वस्तुदर्शनयोगः]

मार्जारोष्ट्रवृकवराहश्वाविद्वागुलीनप्तृकाकोलूकानां अन्येषां वा निशाचराणां सत्त्वानामेकस्य द्वयोर्बहूनां वा दक्षिणानि वामानि वाऽक्षीणि गृहीत्वा द्विधा चूर्णं कारयेत् । ततो दक्षिणं वामेन वामं दक्षिणेन समभ्यज्य रात्रौ तमसि च पश्यति ।

एकाम्लकं वराहाक्षि खद्योतः कालशारिवा ।
एतेनाभ्यक्तनयनो रात्रौ रूपाणि पश्यति ॥ ३५१ ॥

[ अन्तर्धानयोगाः ]

त्रिरात्रोपोषितः पुष्ये शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां यवानावास्य अविक्षीरेण सेचयेत् ; ततो यवविरूढमालामाबद्ध्य नष्टच्छायारूपश्चरति ॥

त्रिरात्रोपोषितः पुष्येण श्वमार्जारोलूकवागुलीनां दक्षिणानि वामानि चाक्षीणि द्विधा चूर्णं कारयेत् । ततो यथास्वमभ्यक्ताक्षो नष्टच्छायारूपश्चरति ।

त्रिरात्रोपोषितः पुष्येण पुरुषघातिनः [1]काण्डकस्य शलाकां अञ्जनीं च कारयेत् । ततोऽन्यतमेनाक्षिचूर्णेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति ।

त्रिरात्रोपोषितः पुष्येण कालायसीं आञ्जनीं शलाकां च कारयेत् । ततो निशाचराणां सत्त्वानां अन्यतमस्य शिरः-

[1] काण्वकस्य शलकामञ्जरीं कारयेत् । ततो निशा–पा.

कपालमञ्जनेन पूरयित्वा मृतायास्स्त्रिया योनौ प्रवेश्य दाहयेत्; तदञ्जनं पुष्येणोद्धृत्य तस्यामञ्जन्यां निदध्यात्। तेनाभ्यक्ताक्षो नष्टच्छायारूपश्चरति।

यत्र ब्राह्मणमाहिताग्निं दग्धं दह्यमानं वा पश्येत्; तत्र त्रिरात्रोपोषितः पुष्येण स्वयंमृतस्य वाससा प्रसेवं कृत्वा चिताभस्मना पूरयित्वा तमाबध्य नष्टच्छायारूपश्चरति।

ब्राह्मणस्य प्रेतकार्ये या गौः मार्यते, तस्य अस्थिमज्जाचूर्णपूर्णाहिभस्त्रा पशूनामन्तर्धानम्। सर्पदष्टस्य भस्मना पूर्णा प्रचलाकभस्त्रा मृगाणामन्तर्धानम्। उलूकवागुलीपुच्छपुरीषजान्वस्थिचूर्णपूर्णाहिभस्त्रा पक्षिणामन्तर्धानम्।

इत्यष्टावन्तर्धानयोगाः॥

[प्रस्वापनयोगचतुष्टये आद्ययोः
द्वयोर्योगयोर्मन्त्रः]

"बलिं वैरोचनं वन्दे शतमायं च शम्बरम्।
भण्डीरपाकं नरकं निकुम्भं कुम्भमेव च॥ ३५२॥

देवलं नारदं वन्दे वन्दे सावर्णिगालवम्।
एतेषामनुयोगेन कृतं ते स्वापनं महत्॥ ३५३॥

यथा स्वपन्त्यजगरास्स्वपन्त्यपि चमूखलाः।
तथा स्वपन्तु पुरुषा ये च ग्रामे कुतूहलाः॥ ३५४॥

भण्डकानां सहस्रेण रथनेमिशतेन च।
इमं गृहं प्रवेक्ष्यामि तूष्णीमासन्तु भाण्डकाः॥ ३५५॥

नमस्कृत्वा च मनवे बद्ध्वा शुनकफेलकाः।
ये देवा देवलोकेषु मानुषेषु च ब्राह्मणाः॥ ३५६॥

अध्ययनपारगास्सिद्धाः ये च कैलासतापसाः।
[1]एतेभ्यस्सर्वसिद्धेभ्यः कृतं ते स्वापनं महत्॥ ३५७॥

अतिगच्छति च मय्यपगच्छन्तु संहताः।
अलिते पलिते मनवे स्वाहा॥ ३५८॥

---

[1] बाणस्य.

[उक्तमन्त्रप्रयोगः प्रथमः]

एतस्य प्रयोगः—त्रिरात्रोपोषितः कृष्णचतुर्दश्यां पुष्ययोगिन्यां श्वपाकीहस्ताद्विलेखावलेखनं क्रीणीयात्। तन्माषैः सह कण्डोलिकायां कृत्वा असङ्कीर्ण आदहने निखानयेत्। द्वितीयस्यां चतुर्दश्यामुद्धृत्य कुमार्या पेषयित्वा गुलिकाः कारयेत्। तत एकां गुलिकामभिमन्त्रयित्वा यत्रैतेन मन्त्रेण क्षिपति, तत्सर्वं प्रस्वापयति ॥

[द्वितीयो मन्त्रप्रयोगः]

एतनैव कल्पेन श्वाविधः शल्यकं त्रिकालं त्रिश्वेतमसङ्कीर्ण आदहने निखानयेत्। द्वितीयस्यां चतुर्दश्यां उद्धृत्यादहनभस्मना सह यत्रैतेन मन्त्रेण क्षिपति, तत्सर्वं प्रस्वापयति ॥

[ तृतीयस्य प्रस्वापनयोगस्य मन्त्रः ]

सुवर्णपुष्पीं ब्रह्माणीं ब्रह्माणं च कुशध्वजम् ।
सर्वाश्च देवता वन्दे वन्दे सर्वांश्च तापसान् ॥ ३५९ ॥
वशं मे ब्राह्मणा यान्तु भूमिपालाश्च क्षत्रियाः ।
वशं वैश्याश्च शूद्राश्च वशतां यान्तु मे सदा ॥ ३६० ॥

स्वाहा ॥

अमिले किमिले वसुजारे प्रयोगे फक्के विहाले दन्तकटके स्वाहा ॥

सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः ।
श्वाविधः शल्यकं चैतत् त्रिश्वेतं ब्रह्मनिर्मितम् ॥ ३६१ ॥
प्रसुप्तास्सर्वसिद्धा हि एतत्ते स्वापनं कृतम् ।
यावद्ग्रामस्य सीमान्तः सूर्यस्योद्गमनादिति ॥ ३६२ ॥

स्वाहा ॥

[ तत्प्रयोगः ]

एतस्य प्रयोगः—श्वाविधः शल्यकानि त्रिश्वेतानि। सप्तरात्रोपोषितः कृष्णचतुर्दश्यां खादिराभिस्समिधाभिः अग्निमेतेन मन्त्रेणाष्टशतसंपातं कृत्वा मधुघृताभ्यां अभिजुहुयात्। तत एकमेतेन मन्त्रेण ग्रामद्वारि गृहद्वारि वा यत्र निखन्यते, तत्सर्वं प्रस्वापयति ॥

[ चतुर्थस्य प्रस्वापनयोगस्य मन्त्रः ]

"बलिं वैरोचनं वन्दे शतमायं च शम्बरम् ।
निकुम्भं नरकं कुम्भं तन्तुकच्छं महासुरम् ॥ ३६३ ॥
अर्मालवं प्रमीलं च माण्डोलूकं घटोबलम् ।
कृष्णकंसोपचारं च पौलोमीं च यशस्विनीम् ॥ ३६४ ॥
अभिमन्त्रय्य गृह्णामि सिद्धार्थं शवशारिकाम् ।
जयन्तु जयति च नमः शलकभूतेभ्यः स्वाहा ॥
सुखं स्वपन्तु शुनका ये च ग्रामे कुतूहलाः ॥ ३६५ ॥
सुखं स्वपन्तु सिद्धार्था यमर्थं मार्गयामहे ।
यावदस्तमयादुदयो यावदर्थं फलं मम ॥ ३६६ ॥
इति स्वाहा ॥"

[ तत्प्रयोगः ]

एतस्य प्रयोगः—चतुर्भक्तोपवासी कृष्णचतुर्दश्यामसङ्कीर्णे आदहने बलिं कृत्वा एतेन मन्त्रेण शवशारिकां गृहीत्वा [2]पोत्री-पोट्टलिकां बध्नीयात् । तन्मध्ये श्वाविधः शल्यकेन विद्ध्वा यत्रैतेन मन्त्रेण निखन्यते, तत्सर्वं प्रस्वापयति ॥

[ द्वारापावरणयोगस्य मन्त्रः ]

"उपैमि शरणं चाग्निं दैवतानि दिशो दश ।
अपयान्तु च सर्वाणि वशतां यान्तु मे सदा ॥ ३६७ ॥
स्वाहा ॥"

[ तत्प्रयोगः ]

एतस्य प्रयोगः—त्रिरात्रोपोषितः पुष्येण शर्करा एकविंशति-संपातं कृत्वा मधुघृताभ्यां अभिजुहुयात् । ततो गन्धमाल्येन पूजयित्वा निखानयेत् । द्वितीयेन पुष्येणोद्धृत्यैकां शर्करामभि-मन्त्रयित्वा कवाटमाहन्यात् । अभ्यन्तरं चतसृणां शर्कराणां द्वार-मपाव्रियते ॥

[ तस्यैव प्रयोगान्तरम् ]

चतुर्भक्तोपवासी कृष्णचतुर्दश्यां भग्नस्य पुरुषस्यास्थ्ना ऋषभं कारयेत् ; अभिमन्त्रयेच्चैतेन, द्विगोयुक्तं गोयानमाहृतं भवति ; ततः परमाकाशे विक्रामति ॥

[ द्वारयन्त्रोद्धाटनप्रस्वापनोभयसाधनको मन्त्रः ]

"सदारविरविः सगण्डपरिघाति सर्वं भणाति। चण्डाली-कुम्बीतुम्भकटुकसारीघः सनारीभगोऽसि स्वाहा ॥"

तालोद्धाटनं प्रस्वापनं च ॥

[ज्याच्छेदनयोगः]

त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरः-कपाले मृत्तिकायां [1] तुवरीरावास्योदकेन सेचयेत्। जातानां पुष्ये-णैव गृहीत्वा रज्जुकां वर्तयेत्। ततस्सज्यानां धनुषां यन्त्राणां च पुरस्ताच्छेदनं ज्याच्छेदनं करोति ॥

[नासानिरोधमुखस्तम्भनयोर्योगः]

उदकाहिभस्त्रामुच्छ्वासमृत्तिकया स्त्रियाः पुरुषस्य वा पूरयेत्; नासिकाबन्धनं मुखग्रहश्च ॥

[मलविष्टम्भान्धीकरणमारणजीविका-
अनादियोगाः]

वराहवस्तिभस्त्रामुच्छ्वासमृत्तिकया पूरयित्वा मर्कटस्नायुनाऽव बध्नीयात्; आनाहकारणम्।

कृष्णचतुर्दश्यां शस्त्रहताया गोः कापिलायाः पित्तेन राजवृक्ष-मयीममित्रप्रतिमां अञ्ज्यात्; अन्धीकरणम्।

चतुर्नक्तोपवासी कृष्णचतुर्दश्यां बलिं कृत्वा शूलप्रोतस्य पुरुषस्यास्थ्ना कीलकान् कारयेत्। एतेषामेकः पुरीषे मूत्रे वा निखात आनाहं करोति। पादेऽस्यासने वा निखातः शोषेण मारयति; आपणे क्षेत्रे गृहे वा वृत्तिच्छेदं करोति।

एतेन लेपकल्केन विद्युद्दग्धस्य वृक्षस्य कीलकाः व्याख्याताः।

[मारणोत्सादनादियोगाः]

पुनर्नवमवाचीनं निम्बः काममधुश्च यः।
कपिरोम मनुष्यास्थि बद्ध्वा मृतकवाससा ॥ ३६८ ॥
निखन्यते गृहे यस्य दृष्ट्वा वा यं प्रपातयेत्।
सपुत्रदारस्सधनः त्रीन् पक्षान्नातिवर्तते ॥ ३६९ ॥

पुनर्नवमवाचीनं निम्बः काममधुश्च यः ।
स्वयंगुप्ता मनुष्यास्थि पदे यस्य निखन्यते ॥ ३७० ॥
द्वारे गृहस्य सेनाया ग्रामस्य नगरस्य वा ।
सपुत्रदारस्सधनः त्रीन् पक्षान्नातिवर्तते ॥ ३७१ ॥
अजमर्कटरोमाणि मार्जारनकुलस्य च ।
ब्राह्मणानां श्वपाकानां काकोलूकस्य चाहरेत् ॥ ३७२ ॥
एतेन विष्ठा[1]ऽवक्षुण्णा सद्य उत्सादकारिका ।

[अपुरुषीकरणयोगः]

प्रेतनिर्मालिका किण्वं रोमाणि नकुलस्य च ॥ ३७३ ॥
वृश्चिकाल्यहिकृत्तिश्च पदे यस्य निखन्यते ।
भवत्यपुरुषस्सद्यो यावत्तन्नापनीयते ॥ ३७४ ॥

[अन्नपानभाजनाक्षययोगः]

त्रिरात्रोपोषितः पुष्येण शस्त्रहतस्य शूलप्रोतस्य वा पुंसः शिरःकपाले मृत्तिकायां गुञ्जा आवास्योदकेन च सेचयेत् । जातानाममावास्यायां पौर्णमास्यां वा पुष्ययोगिन्यां गुञ्जावल्लीर्ग्राहयित्वा मण्डलिकानि कारयेत् । तेष्वन्नपानभाजनानि न्यस्तानि न क्षीयन्ते ॥

[ग्रामगतसर्वनवनीताऽऽगमनयोगः]

[1]रात्रिप्रेक्षायां प्रवृत्तायां प्रदीपाग्निषु मृतधेनोस्स्तनानुत्कृत्य दाहयेत् । दग्धान् वृषमूत्रेण पेषयित्वा नवकुम्भमन्तर्लेपयेत् ; यं ग्राममपसव्यं परिणीय यत्तत्र न्यस्तं नवनीतमेषां तत्सर्वमागच्छतीति ॥

[वृक्षफलानयनयोगः]

कृष्णचतुर्दश्यां पुष्ययोगिन्यां शुनो [2]लग्नकस्य योनौ कालायसीं मुद्रिकां प्रेषयेत् ; तां स्वयं पतितां गृह्णीयात् ; तया वृक्षफलान्या[3]कारितान्यागच्छन्ति ॥

---

[1] रात्रिप्रवृत्तनृत्तादौ. [2] मत्तस्य. [3] आकारितानि–आहूतानि.

[मन्त्रभैषज्ययोगविषयाः फलञ्च]

मन्त्रभैषज्यसंयुक्ता योगा मायाकृताश्च ये ।
उपहन्यादमित्रांस्तैः स्वजनं चाभिपालयेत् ॥ ३७॥

इत्यौपनिषदिके प्रलम्भने-भैषज्यमन्त्रप्रयोगः तृतीयोऽध्यायः
आदितोऽष्टचत्वारिंशच्छततमः.

---

# एकोनाशीतिशततमं प्रकरणम्–
# स्वबलोपघातप्रतीकारः
## चतुर्थोऽध्यायः

[राजभोग्यस्त्रीषु सेनासु च प्रयुक्तविषप्रतीकारविधिः]

स्वपक्षे परप्रयुक्तानां दूषिविषगराणां प्रतीकारे[1] श्लेष्मातककपित्थदन्तिदन्तशठ गोजीशिरीषपाटलीबलास्योनाकपुनर्नवाश्वेतावरणक्वाथयुक्तं चन्दनसालावृकीलोहितयुक्तं तेजनोदकं ; राजोपभोग्यानां गुह्यप्रक्षालनं स्त्रीणां सेनायाश्च विषप्रतीकारः ॥

[मदनोन्मादप्रयोगयोः प्रतीकारः]

पृषतनकुलनीलकण्ठगोधापित्तयुक्तं मषीराजिचूर्णं सिन्दुवारितवरणवारुणीतण्डुलीयकशतपर्वाग्रपिण्डीतकयोगो मदनदोषहरः । सृगालविन्नामदनसिन्दुवारितवरणवारणवल्लीमूलकषायाणामन्यतमस्य समस्तानां वा क्षीरयुक्तं पानं मदनदोषहरम् । कैडर्यपूतितिलतैलमुन्मादहरं नस्तःकर्म ।

[कुष्ठशिरोरोगयोः प्रतीकारः]

प्रियङ्गुनक्तमालयोगः कुष्ठहरः । कुष्ठलोध्रयोगः पाकशोषघ्नः । कट्फलद्रवन्तीविलङ्गचूर्णं नस्तःकर्म शिरोरोगहरम् ॥

---

[1] आकाङ्क्ष्यमाणे इति शेषः.

[नष्टसंज्ञाप्रत्यापत्तिसाधको योगः]

प्रियङ्गुमञ्जिष्ठातगरलाक्षारसमधुकहरिद्राक्षौद्रयोगो रज्जूदकविषप्रहारपतननिस्संज्ञानां पुनः प्रत्यानयनाय ।

[उक्तौषधानामुपयोक्तव्या मात्राः]

मनुष्याणामक्षमात्रं ; गवाश्वानां द्विगुणं ; चतुर्गुणं हस्त्युष्ट्राणां ।

[विषप्रतीकारयोगाः]

रुक्मगर्भश्चैषां मणिः सर्वविषहरः ।

जीवन्तीश्वेतामुष्ककपुष्पवन्दाकानामक्षीबे जातस्य अश्वत्थस्य मणिः सर्वविषहरः ॥

तूर्याणां तैः प्रलिप्तानां शब्दो विषविनाशनः ।
लिप्तध्वजं पताकां वा दृष्ट्वा भवति निर्विषः ॥ ३७६ ॥

[निगमनम्]

एतैः कृत्वा प्रतीकारं स्वसैन्यानामथात्मनः ।
अमित्रेषु प्रयुञ्जीत विषधूमाम्बुदूषणान् ॥ ३७७ ॥

इत्यौपनिषदिके स्वबलोपघातप्रतीकारः चतुर्थोऽध्यायः

आदित एकोनपञ्चाशच्छततमः.

एतावता कौटलीयस्यार्थशास्त्रस्य औपनिषदिकं

चतुर्दशमधिकरणं समाप्तम् .

———

## अथ कौटलीये अर्थशास्त्रे

# तन्त्रयुक्तिर्नाम

## पञ्चदशमधिकरणम्

---

### अस्येयं प्रकरणानुक्रमणिका

180. तन्त्रयुक्तयः

प्रकरणसंख्या १. अध्यायसंख्या १. कारिकासंख्या ३.

आहत्य आदितः १५ अधिकरणानि, १८० प्रकरणानि,
१५० अध्यायाः, ३८० कारिकाः.

प्रकरणानुक्रमणिका समाप्ता.

---

# अस्मिंश्च प्रकरणे प्रतिपादितानामर्थानामयं सङ्ग्रहः

---

180 तन्त्रयुक्तयः (पु. 457)

अर्थशास्त्रपदार्थः.

अर्थशास्त्रोक्तार्थनिर्णयोपयोगिन्यः द्वात्रिंशद्युक्तयः. तत्र—

१ अधिकरणम्.
२ विधानम्.
३ योगः.
४ पदार्थः.
५ हेत्वर्थः.
६ उद्देशः.
७ अपदेशः.
८ निर्देशः.
९ उपदेशः.
१० अतिदेशः.
११ प्रदेशः.
१२ उपमानम्.
१३ अर्थापत्तिः.
१४ संशयः.
१५ प्रसङ्गः.
१६ विपर्ययः.
१७ वाक्यशेषः.
१८ अनुमतम्.
१९ व्याख्यानम्.
२० निर्वचनम्.
२१ निदर्शनम्.
२२ अपवर्गः.
२३ स्वसंज्ञा.
२४ पूर्वपक्षः.
२५ उत्तरपक्षः.
२६ एकान्तः.
२७ अनागतावेक्षणम्.
२८ अतिक्रान्तावेक्षणम्.
२९ नियोगः.
३० विकल्पः.
३१ समुच्चयः.
३२ ऊह्यम्.

अर्थशास्त्रस्य ऐहिकामुष्मिकोभयविधयोगक्षेमसाधकता.

कर्तृवैलक्षण्यकथनेन ग्रन्थस्यावश्यादरणीयत्वकथनम्.

आत्मन एव सूत्रभाष्योभयकर्तृत्वे हेतुकथनेन ग्रन्थपरिसमापनम्.

विषयसङ्ग्रहः समाप्तः.

---

# अथ तन्त्रयुक्तिर्नाम पञ्चदशमधिकरणम्

---

## अशीत्यधिकशततमं प्रकरणम्–[1]तन्त्रयुक्तयः

### प्रथमोऽध्यायः

[अर्थशास्त्रपदार्थः]

मनुष्याणां वृत्तिः=अर्थः–[2]मनुष्यवती भूमिरित्यर्थः; तस्याः पृथिव्या लाभपालनोपायः शास्त्रं-अर्थशास्त्रमिति ।

[अर्थशास्त्रोपयुक्तानां द्वात्रिंशद्युक्तीनां निर्देशः]

तद् द्वात्रिंशद्युक्तियुक्तं—अधिकरणं, विधानं, योगः, पदार्थः, हेत्वर्थः, उद्देशः, निर्देशः, उपदेशः, अपदेशः, अतिदेशः, प्रदेशः, उपमानं, अर्थापत्तिः, संशयः, प्रसङ्गः, विपर्ययः, वाक्यशेषः, अनुमतं, व्याख्यानं, निर्वचनं, निदर्शनं, अपवर्गः, स्वसंज्ञा, पूर्वपक्षः, उत्तरपक्षः, एकान्तः, अनागतावेक्षणं, अतिक्रान्तावेक्षणं, नियोगः, विकल्पः, समुच्चयः, ऊह्यम्–इति ।

[ तत्र—१. अधिकरणविवरणम् ]

यमर्थमधिकृत्योच्यते तदधिकरणम्—'पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम्' (पुटसं. 1. पङ्क्तिसं. 4) इति ।

[२. विधानम् ]

शास्त्रस्य [3]प्रकरणानुपूर्वी विधानम्—'विद्यासमुद्देशः, वृद्ध-संयोगः, इन्द्रियजयः, अमात्योत्पत्तिः' (1-8) इत्येवमादिकमिति ॥

---

[1] तन्त्रे–अस्मिन् अर्थशास्त्रे न्यायनिर्णयोपयोगितया आश्रिताः युक्तयः=तन्त्रयुक्तयः. [2] मुख्यार्थभूतमानवस्थितिबोधकमर्थपदं प्रकृते तदाधारभूतपृथिव्युपलक्षकमितिभावः. [3] आनुपूर्वी=क्रमशो निवेशनम्.

[३. योगः]

वाक्ययोजना योगः—'चतुर्वर्णाश्रमो लोकः (9-21) इति।

[४. पदार्थः]

पदावधिकः पदार्थः—'मूलहरः' इति पदम्। 'यः पितृपैतामहमर्थमन्यायेन भक्षयति स मूलहरः' (78-18) इत्यर्थः।

[५. हेत्वर्थः]

हेतुरर्थसाधको हेत्वर्थः—'अर्थमूलौ हि धर्मकामौ' (13-2) इति।

[६. उद्देशः]

[1]समासवाक्यमुद्देशः—'विद्याविनयहेतुरिन्द्रियजयः' (11-10) इति।

[७. निर्देशः]

[2]व्यासवाक्यं निर्देशः—'कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः' (11-11) इति।

[८. उपदेशः]

एवं वर्तितव्यमित्युपदेशः—'धर्मार्थाविरोधेन कामं सेवेत, न निस्सुखस्स्यात्' (12-21) इति।

[९. अपदेशः]

एवमसावाहेत्यपदेशः—'मन्त्रिपरिषदं द्वादशामात्यान् कुर्वीतेति मानवाः; षोडशेति बार्हस्पत्याः; विंशतिमित्यौशनसाः; यथासामर्थ्यमिति कौटल्यः' (31-10) इति।

[१०. अतिदेशः]

उक्तेन साधनमतिदेशः—'दत्तस्याप्रदानमृणादानेन व्याख्यातम्' (198-6) इति।

---

[1] वक्ष्यमाणस्य विस्तृतार्थस्य आदौ संक्षेपेण प्रतिपादकं वाक्यं समासवाक्यम्. [2] संक्षिप्तस्यार्थस्य विवृततया प्रतिपादकं वाक्यं व्यासवाक्यम्.

[११. प्रदेशः]

वक्तव्येन साधनं प्रदेशः-' सामदानभेददण्डैर्वा यथाऽऽपत्सु व्याख्यास्यामः ' (321-25) इति।

[१२. उपमानम्]

दृष्टेनादृष्टस्य साधनमुपमानम्—' निवृत्तपरिहारान् पितेवानुगृह्णीयात् ' (51-8) इति।

[१३. अर्थापत्तिः]

यदनुक्तमर्थादापद्यते साऽर्थापत्तिः—लोकयात्रावित् राजानमात्मप्रकृतिसम्पन्नं प्रियहितद्वारेणाश्रयेत।' (260-24) ' नाप्रियहितद्वारेणाश्रयेत ' इत्यर्थादापन्नं भवति इति।

[१४. संशयः]

उभयतोहेतुमानर्थः संशयः— ' क्षीणलुब्धप्रकृतिमपचरितप्रकृतिं वा ' (294-16) इति॥

[१५. प्रसङ्गः]

प्रकरणान्तरेण समानोऽर्थः प्रसङ्गः—' कृषिकर्मप्रदिष्टायां भूमौ-इति समानं पूर्वेण ' (19-19) इति।

[१६. विपर्ययः]

[1] प्रतिलोमेन साधनं विपर्ययः—' विपरीतमतुष्टस्य ' (33-7) इति।

[१७. वाक्यशेषः]

येन वाक्यं समाप्यते, स [2] वाक्यशेषः—' छिन्नपक्षस्येव राज्ञश्चेष्टानाशश्च ' इति (340-2)। तत्र शकुनेरिति वाक्यशेषः।

[१८. अनुमतम्]

परवाक्यमप्रतिषिद्धमनुमतम्—' पक्षावुरस्यं प्रतिग्रह इत्यौशनसो व्यूहविभागः ' (399-14) इति।

---

[1] उक्तविपरीतेन. [2] वाक्येऽनुपात्तमपि सामर्थ्यतो ज्ञेयम्.

[१९. व्याख्यानम्]

अतिशयवर्णना व्याख्यानम्—'विशेषतश्च सङ्घानां सङ्घधर्मिणां च राजकुलानां द्यूतनिमित्तो भेदः तन्निमित्तो विनाश इति। असत्प्रग्रहः पापिष्ठतमो व्यसनानां तन्त्रदौर्बल्यात्' (347-8) इति।

[२०. निर्वचनम्]

गुणतः शब्दनिष्पत्तिर्निर्वचनम्—'व्यस्यत्येनं श्रेयस इति व्यसनम्' (339-14) इति।

[२१. निदर्शनम्]

दृष्टान्तो दृष्टान्तयुक्तो निदर्शनम्—'विगृहीतो हि ज्यायसा हस्तिना पादयुद्धमिवाभ्युपैति' (288-11) इति।

[२२. अपवर्गः]

[1] अभिप्लुतव्यपकर्षणमपवर्गः—'नित्यमासन्नमरिबलं वासयेदन्यत्राभ्यन्तरकोपशङ्कायाः' (364-1) इति।

[२३. स्वसंज्ञा]

परैः [2] असमितश्शब्दः स्वसंज्ञा—'प्रथमा प्रकृतिस्तस्य भूम्यनन्तरा द्वितीया, भूम्येकान्तरा तृतीया' (274-10) इति।

[२४. पूर्वपक्षः]

प्रतिषेद्धव्यं वाक्यं पूर्वपक्षः—'स्वाम्यमात्यव्यसनयोरमात्यव्यसनं गरीयः' (पु. 339-पं. 20) इति।

[२५. उत्तरपक्षः]

तस्य निर्णयवाक्यमुत्तरपक्षः—'तदायत्तत्वात्; कूटस्थानीयो हि स्वामी' (340-9) इति।

[२६. एकान्तः]

[3] सर्वत्रायत्तमेकान्तः — 'तस्मादुत्थानमात्मनः कुर्वीत' (40-17) इति।

---

[1] उत्सर्गस्य सङ्कोचकरणम्. [2] असङ्केतितः. [3] सर्वथा अवर्ज्यम्.

[२७. अनागतावेक्षणम्]

[1] 'पश्चादेवं विहितमित्यनागतावेक्षणम्--तुलाप्रतिमानं पौतवाध्यक्षे वक्ष्यामः' (97-15) इति ।

[२८. अतिक्रान्तावेक्षणम्]

पुरस्तादेवं विहितमित्यतिक्रान्तावेक्षणम् —'अमात्यसम्पदुक्ता पुरस्तात्' (272-1) इति ।

[२९. नियोगः]

एवं नान्यथेति नियोगः—'तस्माद्धर्ममर्थं चास्योपदिशेन्नाधर्ममनर्थं च' (57-1) इति ।

[३०. विकल्पः]

अनेन वानेन वेति विकल्पः—'दुहितरो वा धर्मिष्ठेषु जाताः' (171-14) इति ।

[३१. समुच्चयः]

अनेन चानेन चेति समुच्चयः—'स्वयञ्जातः पितृबन्धूनां च दायादः' (175-14) इति ।

[३२. ऊह्यम्]

अनुक्तकरणमूह्यम्—'[2] यथा तद्दाता प्रतिग्रहीता च नोपहतौ स्यातां तथाऽनुशयं कुशलाः कल्पयेयुः' (198-9) इति ।

[अर्थशास्त्रस्यास्य ऐहिकामुष्मिकोभयविध-
योगक्षेमसाधकता]

एवं शास्त्रमिदं युक्तमेताभिस्तन्त्रयुक्तिभिः ।
अवाप्तौ पालने चोक्तं लोकस्यास्य परस्य च ॥ ३७८ ॥
धर्ममर्थं च कामं च प्रवर्तयति पाति च ।
[3] अधर्मानर्थविद्वेषान् इदं शास्त्रं निहन्ति च ॥ ३७९ ॥

---

[1] उत्तरग्रन्थे. [2] यथावदित्यस्यापि यथेत्येवार्थः. [3] धर्मार्थकामप्रतिद्वन्द्विन एते अधर्मानर्थविद्वेषाः.

[कर्तृवैलक्षण्यकथनेनोक्तार्थ-
दृढीकरणम्]

येन शास्त्रं च शस्त्रं च [1] नन्दराजगता च भूः ।
अमर्षेणोद्धृतान्याशु तेन शास्त्रमिदं कृतम् ॥ ३८० ॥

इति तन्त्रयुक्तौ पञ्चदशेऽधिकरणे तन्त्रयुक्तयः प्रथमोऽध्यायः
आदितः पञ्चाशदधिकशततमोऽध्यायः, अशीत्यधिकशततमं प्रकरणं च समाप्तम्.

एतावता कौटलीयस्यार्थशास्त्रस्य तन्त्रयुक्तिः
पञ्चदशमधिकरणं समाप्तम्.

इति तन्त्रावापशेषात्मकः तृतीयो भागः समाप्तः॥

---

[सूत्रकर्तुरात्मन एव भाष्यकरणप्रवृत्तौ
हेतुकथनेन ग्रन्थपरिसमापनम्]

दृष्ट्वा विप्रतिपत्तिं बहुधा शास्त्रेषु भाष्यकाराणाम् ।
स्वयमेव विष्णुगुप्तः चकार सूत्रं च भाष्यं च ॥ * ॥

॥ ॐ नमश्शुक्रबृहस्पतिभ्याम् ॥

इति कौटलीयमर्थशास्त्रं समाप्तम् ॥

॥ जय श्रीः ! ॥

---

[1] कथा चेयं भूमिकायां सविमर्शं प्रदर्शिता. [2] अत्र सूत्रं–'विद्यासमुद्देशः, इन्द्रियजयः' इत्यादि राजवृत्तौ प्रथमेऽध्याये प्रदर्शितम्. अस्यैव च सूत्र-संग्राहकग्रन्थभागस्य 'विधानं' इति नामान्तरं अत्रैव 437तमे पत्रे निर्दिष्टम्. भाष्यमपि इदमेवार्थशास्त्रमिति च ज्ञायते इति शम्.

धर्माधारेऽर्थशास्त्रे श्रुतिशिखररहस्योपमे राष्ट्रधर्म-
प्रज्ञप्त्यै सङ्गृहीते विमलशुभहृदा विष्णुगुप्तेन शास्त्रा ।
एवं घट्टार्थक्लृप्तिः कतिपयपदगा टिप्पणी चेत्यमू नः
कल्पेतां मूलभावाधिगमकुतुकिनां संमुदे सज्जनानाम् ॥

॥ ॐ नमो धर्माय महते ॥

जय श्रीरङ्ग !

जयश्रीः !

# कौटलीयानि राजनीतिसूत्राणि

## (चाणक्यनीतिसूत्राणि)

---

### प्रथमोऽध्यायः

#### [सुराज्यसम्पादनस्य सर्वसुखहेतुता]

1. सुखस्य मूलं धर्मः[1] ।
2. धर्मस्य मूलमर्थः[2] ।
3. अर्थस्य मूलं राज्यम् ।
4. राज्यस्य मूलमिन्द्रियजयः[3] ।
5. इन्द्रियजयस्य मूलं [4]विनयः ।
6. विनयस्य मूलं वृद्धोपसेवा[5] ।
7. वृद्धोपसेवाया [6]विज्ञानम् ।
8. विज्ञानेनात्मानं संपादयेत्[7] ।
9. संपादितात्मा जितात्मा भवति ।
10. जितात्मा सर्वार्थैस्संयुज्यते ।
11. अर्थसंपत् [8]प्रकृतिसंपदं करोति ।
12. प्रकृतिसंपदा ह्यनायकमपि राज्यं नीयते ।
13. प्रकृतिकोपस्सर्वकोपेभ्यो गरीयान् ।
14. अविनीतस्वामिलाभात् अस्वामिलाभः श्रेयान् ।

#### [सन्मन्त्रणावश्यकता]

15. संपाद्यात्मानमन्विच्छेत् सहायान् ।
16. नासहायस्य मन्त्रनिश्चयः ।

---

[1] अधर्मपथा सुखेच्छोः प्रतिक्षणमनोविसंवादादिना उद्वेगभूयिष्ठताया अनिवार्यतया न तस्यैकान्तसुखितेति भावः. [2] देवताऽतिथ्यादिप्रीणनरूपस्य धर्मस्य अर्थं विना दुर्लभत्वात्. [3] अजितेन्द्रियस्य रावणादिवल्लब्धराज्यरक्षणमप्यशक्यं हि भवेत्. [4] विद्यादिग्रहणेन आत्मनि नम्रतादिसम्पादनम् विनयः. अर्थशा. पु. 11 पं 10. [5] अर्थशा. पु. 10. पं. 14. [6] प्रयोगजन्यफलसंवाददृढीकृतः आवश्यकतत्तच्छास्त्रार्थनिश्चयः विज्ञानम्. [7] आत्मगुणसम्पादनं परमपरिशुद्धात्मस्वरूपावलोकनं वा अत्र आत्मसम्पादनम्. [8]प्रकृतयः —– अमात्यसुहृत्कोशराष्ट्रदुर्गबलानि, तासां सम्पत्-अपेक्षितयावद्गुणपौष्कल्यम्, समृद्धिश्च ; ताम्.

17. नैकं चक्रं परिभ्रमति[1] ।

18. सहायः समसुखदुःखः ।

19. मानी [2]प्रतिमानिनमात्मनि द्वितीयं मन्त्रमुत्पादयेत् ।

20. अविनीतं स्नेहमात्रेण न मन्त्रे कुर्वीत ।

21. [3]श्रुतवन्तमुपधाशुद्धं मन्त्रिणं कुर्वीत ।

22. मन्त्रमूलास्सर्वारम्भाः[4] ।

23. मन्त्ररक्षणे कार्यसिद्धिर्भवति ।

24. मन्त्रनिःस्रावी[5] सर्वमपि कार्यं नाशयति ।

25. प्रमादात् द्विषतां वशमुपयास्यति ।

26. सर्वद्वारेभ्यो मन्त्रो रक्षितव्यः ।

27. मन्त्रसंपदा राज्यं वर्धते ।

28. श्रेष्ठतमां मन्त्रगुप्तिमाहुः ।

29. कार्यान्धस्य प्रदीपो मन्त्रः ।

30. मन्त्रचक्षुषा परच्छिद्राण्यवलोकयन्ति ।

31. मन्त्रकाले न मत्सरः कर्तव्यः ।

32. कार्याकार्यतत्त्वार्थदर्शिनो मन्त्रिणः ।

33. षट्कर्णाद्भिद्यते मन्त्रः ।

34. त्रयाणामेकवाक्ये एवासम्प्रत्ययः[6] ।

## [मित्रसङ्ग्रहस्य राज्यतन्त्रहेतुता]

35. आपत्सु स्नेहसंयुक्तं मित्रम् ।

36. मित्रसङ्ग्रहेण बलं सम्पद्यते ।

37. बलवानलब्धलाभे प्रयतते ।

38. अलब्धलाभो नालसस्य ।

39. अलसेन लब्धमपि रक्षितुं न शक्यते ।

40. न चालसस्य रक्षितं विवर्धते ।

---

[1] अर्थशा. पु. 13, पं. 7. [2] राजालोचितमन्त्रप्रतिद्वंद्विभूतम्. [3] शास्त्रज्ञं धर्मार्थकामभयोपधाभिर्दृष्टशौचं पुरुषं मन्त्रिपदे नियोजयेदित्यर्थः. अर्थशा. पु. 18, पं 6. [4] अर्थशा. पु. 28, पं. 22. [5] निःस्रावः–प्रकाशनम्. [6] किमुत मन्त्ररक्षणे इति भावः

41. नासौ भृत्यान् पोषयति, न तीर्थं[1] प्रतिपादयति च ।

42. [2] अलब्धलाभादिचतुष्टयं राज्यतन्त्रम् ।

## [नीतिशास्त्रस्थानं राजतच्छत्रुमित्राणि च]

43. तच्च राज्यतन्त्रमायत्तं नीतिशास्त्रेषु ।

44. राज्यतन्त्रेष्वायत्तौ[3] तन्त्रावापौ[4] ।

45. तन्त्रं स्वविषयकृत्येष्वायत्तम् ।

46. आवापो मण्डलनिविष्टः ।

47. सन्धिविग्रहयोनिर्मण्डलः ।

48. [5] नीतिशास्त्रानुगो राजा ।

49. अनन्तरप्रकृतिश्शत्रुः[6] ।

50. एकान्तरितं मित्रमिष्यते[7] ।

51. हेतुतश्शत्रुमित्रे भविष्यतः ।

## [षाड्गुण्यम्]

52. हीयमानस्सन्धिं कुर्वीत[8] ।

53. तेजो हि सन्धानहेतुस्तदर्थानाम्[9] ।

54. नातप्तलोहो लोहेन सन्धीयते ।

55. बलवान् हीनेन विगृह्णीयात्, न ज्यायसा समेन वा[10] ।

56. गजेन पादयुद्धमिव बलवद्विग्रहः, आमपात्रमप्यामेन सह विनश्यति ।

---

[1] मत्यात्रं आचार्यो वा तीर्थशब्दार्थः. [2] लाभ रक्षण-वर्धन-सद्विनियोगाः [3] स्वराष्ट्र-परराष्ट्रयोः विषये स्वस्वगुणसम्पत्तिमहितैः स्वाम्यादिभिः कर्तृभिः करणैश्च यथायथं पुष्कलमविकलञ्च निर्वाह्ययोः तन्त्रावापयोः राज्यतन्त्रात्मकत्वेऽपि साधनस्वरूपफलदशाभ्यां भेदेन आधीन्यं वर्णितम्. [4] स्वराष्ट्रानुष्ठानं तन्त्रम्, परराष्ट्रानुष्ठानं आवापः. [5] राजेति रञ्जननिमित्तकोऽयं शब्दः. तत्र प्रवृत्तिनिमित्तपौष्कल्येन रञ्जनपरिकरगतातिशयनिबन्धनतां रञ्जने दर्शयति—नीतीति. [6] सर्वस्य राज्ञः स्वस्वराष्ट्राव्यवहितः अनिशं मर्मविज्ञानप्रहरणचिन्तनपरतया शत्रुर्भवत्येव. [7] एकराज्यव्यवहितो हि मध्यमं स्वतन्त्रमनिच्छन् स्वायत्तं परायत्तं वा चिकीर्षति; अत एव तदनन्तरे राज्ञि मित्ररूपो भवतीति भावः. [8] अर्थशा. पु. 283, पं. 18. [9] अर्थशा. पु. 288, पं. 19. [10] अर्थशा. पु. 288, पं. 12.

57. अरिप्रयत्नमभिसमीक्षेत ।

58. सन्धायैकतो वा यायात् ।

59. अमित्रविरोधादात्मरक्षामावसेत् ।

60. शक्तिहीनो बलवन्तमाश्रयेत्[1] ।

61. दुर्बलाश्रयो दुःखमावहति ।

62. अग्निवद्राजानमाश्रयेत्[2] ।

63. राज्ञः प्रतिकूलं नाचरेत्[3] ।

64. उद्धतवेषधरो न भवेत् ।

65. न देवचरितं चरेत्[4] ।

66. द्वयोरपीर्ष्यतोः [5]द्वैधीभावं कुर्वीत ।

[दुर्व्यसनादिपरिणामाः]

67. न व्यसनपरस्य कार्यावाप्तिः ।

68. इन्द्रियवशवर्ती चतुरङ्गवानपि विनश्यति[6]

69. नास्ति कार्यं द्यूतप्रवृत्तस्य ।

70. [7]मृगयापरस्य धर्मार्थौ विनश्यतः ।

71. न कामासक्तस्य कार्यानुष्ठानम् ।

72. अर्थेषणा न व्यसनेषु गण्यते[8] ।

73. अर्थतोषिणं हि राजानं श्रीः परित्यजति ।

74. अग्निदाहादपि विशिष्टं वाक्पारुष्यम् ।

75. दण्डपारुष्यात् सर्वजनद्वेष्यो भवति ।

76. अमित्रो दण्डनीत्यामायत्तः ।

77. दण्डनीतिमधितिष्ठन् प्रजास्संरक्षति ।

78. दण्डस्सम्पदा योजयति ।

79. दण्डाभावे त्रिवर्गाभावः ।

[1] अर्थ. पु. 323, पं. 13. [2] अर्थ. पु. 262, पं. 10. [3] अर्थ. पु. 261, पं. 25. [4] रामकृष्णादिभिरेव कृतस्य मया करणे को दोष इत्यालोच्य नाशास्त्रीयं कर्तुमारभेतेत्यर्थः. [5] एकत्र सन्धिं अन्यत्र विग्रहमिति भावः. [6] अर्थशा. पु. 11, पं. 16. [7] मृगहननादि पापकृत्यं मृगया. तत्परस्य हि अनवरतप्रवृत्तवधबन्धनेच्छाजिघांसाभिः तत्तदवसरकर्तव्यजातं विस्मृतं भवेदिति. [8] अयं क्षत्रियमात्रधर्मः. उक्तं हि 'असंतुष्टो द्विजो नष्टः सन्तुष्टश्चापि पार्थिवः' इति.

80. न दण्डादकार्याणि कुर्वन्ति ।
81. दण्डनीत्यामायत्तमात्मरक्षणम् ।
82. आत्मनि रक्षिते सर्वं रक्षितं भवति ।
83. आत्मायत्तौ वृद्धिविनाशौ ।
84. दण्डो हि विज्ञानेन प्रणीयते ।
85. दुर्बलोऽपि राजा नावमन्तव्यः ।
86. नास्त्यग्नेर्दौर्बल्यम् ।
87. दण्डे प्रणीयते वृत्तिः[1] ।
88. वृत्तिमूलमर्थलाभः ।
89. अर्थमूलौ धर्मकामौ ।

इति प्रथमोऽध्यायः

---

## अथ द्वितीयोऽध्यायः

### [इष्टतत्तत्कार्यसाधनप्रकाराः]

1. अर्थमूलं सर्वं कार्यम्, यदल्पप्रयत्नात् कार्यसिद्धिर्भवति ।
2. उपायपूर्वं कार्यं न दुष्करं स्यात् ।
3. अनुपायपूर्वं कार्यं कृतमपि विनश्यति ।
4. कार्यार्थिनामुपाय एव सहायः ।
5. कार्यं [2]पुरुषकारेण लक्ष्यं संपद्यते ।
6. पुरुषकारमनुवर्तते दैवम् ।
7. दैवं विनाऽतिप्रयत्नं यत् करोति तद्विफलम् ।
8. [3]असमाहितस्य कार्यं न विद्यते ।
9. पूर्वं [4]निश्चित्य पश्चात् कार्यमारभेत ।
10. [5]कार्यान्तरे [6]दीर्घसूत्रता न कर्तव्या ।
11. न चलचित्तस्य कार्यावाप्तिः ।

---

[1] जीविका. [2] पूर्णप्रयत्नः सुसहायसम्पत्तिर्वा पुरुषकारः. [3] अशान्तचित्तस्य अनवहितस्य वा. [4] उपायानुष्ठानप्रकारमित्यादिः. [5] कार्यमध्ये. [6] आलस्यम्.

12. हस्तगतावमाननात् कार्यव्यतिक्रमो भवति ।

13. दोषवर्जितानि कार्याणि दुर्लभानि ।

14. [1] दुरनुबन्धं कार्यं नारभेत ।

15. कालवित् कार्यं साधयेत् ।

16. कालातिक्रमात् काल एव फलं पिबति ।

17. क्षणं प्रति कालविक्षेपं न कुर्यात् सर्वकृत्येषु ।

18. देशकालविभागौ ज्ञात्वा कार्यमारभेत ।

19. दैवहीनं कार्यं सुसाधमपि दुस्साधं भवति ।

20. नीतिज्ञो देशकालौ परीक्षेत ।

21. परीक्ष्यकारिणि श्रीश्चिरं तिष्ठति ।

22. सर्वाश्च संपदः सर्वोपायेन परिगृह्णीयात् ।

23. भाग्यवन्तमप्यपरीक्ष्यकारिणं श्रीः परित्यजति ।

24. ज्ञात्वाऽनुमानैश्च परीक्षा कर्तव्या ।

25. यो यस्मिन् कर्मणि कुशलस्तं तस्मिन्नेव योजयेत् ।

26. दुस्साधमपि सुसाधं करोत्युपायज्ञः ।

27. अज्ञानिना कृतमपि न बहुमन्तव्यम्, यादृच्छिकत्वात् ।

28. कृमयोऽपि हि कदाचित् रूपान्तराणि कुर्वन्ति ।

29. सिद्धस्यैव कार्यस्य प्रकाशनं कर्तव्यम् ।

30. ज्ञानवतामपि दैवमानुषदोषात् कार्याणि दुष्यन्ति ।

31. दैवं दोषं शान्तिकर्मणा प्रतिषेधयेत् ।

32. मानुषीं कार्यविपत्तिं कौशलेन विनिवारयेत् ।

33. कार्यविपत्तौ दोषान् वर्णयन्ति बालिशाः[3] ।

34. कार्यार्थिना [4] दाक्षिण्यं न कर्तव्यम् ।

35. क्षीरार्थी वत्सो मातुरूधः[5] प्रतिहन्ति ।

36. अप्रयत्नात् कार्यविपत्तिर्भवेत् ।

37. न दैवमात्रप्रमाणानां कार्यसिद्धिः ।

---

[1] दुःखफलं सम्भावितदुष्परिहरबहुविघ्नं च. [2] घुणादयो हि क्रिमयः यदि यदृच्छया अक्षररेखावदेव काश्चित् रेखाः सृजेयुः तावन्मात्रेण तत् तेषां कौशलं न तत्कर्मणि नियोजनार्हम्. [3] पूर्वमेव परिशील्य कार्यासम्पादनेन कार्यविपत्त्यनन्तरं संवृत्तदोषवर्णनं मूर्खलक्षणं हि. [4] अस्थाने सारल्यम्. [5] ऊधः–गोस्तनम्.

38. [1] कार्यबाह्यो न पोषयत्याश्रितान् ।

39. यः कार्यं न पश्यति सोऽन्धः ।

40. प्रत्यक्षपरोक्षानुमानैः कार्याणि परीक्षेत ।

41. अपरीक्ष्यकारिणं श्रीः परित्यजति ।

42. परीक्ष्य तार्या विपत्तिः ।

43. स्वशक्तिं ज्ञात्वा कार्यमारभेत ।

44. स्वजनं तर्पयित्वा यश्शेषभोजी सोऽमृतभोजी ।

45. सम्यगनुष्ठानादायमुखानि[2] वर्धन्ते ।

46. नास्ति भीरोः कार्यचिन्ता ।

47. स्वामिनः शीलं ज्ञात्वा कार्यार्थी कार्यं साधयेत् ।

48. धेनोश्शीलज्ञो हि क्षीरं भुङ्क्ते ।

49. क्षुद्रे गुह्यप्रकाशनमात्मवान् न कुर्यात् ।

50. आश्रितैरप्यवमन्यते मृदुस्वभावः [3]।

51. तीक्ष्णदण्डस्सर्वेषामुद्वेजनीयो भवति [1] ।

52. यथार्हदण्डकारी स्यात् ।

53. [4] अल्पसारं श्रुतवन्तमपि न बहुमन्यते लोकः ।

54. अतिभारः पुरुषमवसादयति ।

55. यस्संसदि परदोषं शंसति स स्वदोषबहुत्वमेव प्रख्यापयति ।

56. आत्मानमेव नाशयत्यनात्मवतां[5] कोपः ।

57. नास्त्यप्राप्यं सत्यवताम् ।

58. न केवलेन साहसेन कार्यसिद्धिर्भवति ।

59. व्यसनार्तो विस्मरत्यवश्यकर्तव्यान् ।

60. नास्त्यनन्तरायः कालविक्षेपे [6]।

61. असंशयविनाशात् संशयविनाशः श्रेयान् [7]।

---

[1] सर्वकार्यविदूरः. [2] मूलं भागः व्याजी परिघः क्लृप्तं रूपिकं अत्ययश्च आयमुखानि. अर्थ पु. 68 पं. 14. [3] अर्थ. पु. 9 पं. 14. [4] हीनशक्तिम्. [5] अजितेन्द्रियाणां अनात्मज्ञानां च. [6] अग्रे करिष्याम इति कालयापने अवश्यमन्तरायः-- विघ्न एव संजायते इत्यर्थः [7] तूष्णीं स्थित्या निःसंशयविनाशापादनात् वरं यथाशक्ति निवारणप्रयत्नेन संदिग्धविनाशावस्थापादनमिति भावः.

## [सामान्यतो नीतयः]

62. केवलं धनानि निक्षेप्तुः न स्वार्थं न दानं न धर्मः[1] ।
63. नार्या आगतोऽर्थः तद्विपरीतमनर्थभावं भजते ।
64. यो धर्मार्थौ न व्यर्धयति [2] स कामः; [3] तद्विपरीतोऽनर्थसेवी ।
65. [4] ऋजुस्वभावपरो जनो दुर्लभः ।
66. अवमानेनागतमैश्वर्यमवमन्यत एव साधुः ।
67. बहूनपि हि गुणानेकदोषो ग्रसति ।
68. महात्मना परं साहसं न कर्तव्यम् ।
69. कदाचिदपि चारित्रं न लङ्घयेत् ।
70. क्षुधाऽऽर्तो न तृणं चरति सिंहः ।
71. प्राणादपि प्रत्ययो[5] रक्षितव्यः ।
72. पिशुनो नेता [6] पुत्रदारैरपि त्यज्यते ।

इति द्वितीयोऽध्यायः

---

## अथ तृतीयोऽध्यायः.

### [सङ्कीर्णाः सर्वसाधारणाः नीतयः]

1. बालादपि युक्तमर्थं शृणुयात् ।
2. सत्यमप्यश्रद्धेयं [7] न वदेत् ।
3. नाल्पदोषाद्बहुगुणास्त्यज्यन्ते ।
4. विपश्चित्स्वपि सुलभा दोषाः ।
5. नास्ति रत्नमखण्डितम् ।
6. [8] मर्यादातीतं न कदाचिदपि विश्वसेत् ।
7. अप्रिये कृते प्रियमपि द्वेष्यं भवति ।

---

[1] किन्तु केवलं श्रम एव. [2] न नाशयति. [3] धर्मार्थनाशकरकामसेवी. [4] अकपटस्वभावासक्तः. [5] जनविश्वासः. [6] नेता—नायकः—स्वामी. [7] विश्वासानर्हं (यथा भवति तथा वा) [8] अतीततत्तच्छक्तयवधिम्.

8. [1] नमन्त्यपि हि [2]तुलाकोटिः कूपोदकक्षयं करोति ।
9. सतां मतं नातिक्रामेत् ।
10. गुणवदाश्रयान्निर्गुणोऽपि गुणी भवति ।
11. क्षीराश्रितं जलं क्षीरमेव भवति ।
12. मृत्पिण्डेऽपि पाटलिपुष्पं स्वगन्धमुत्पादयति ।
13. रजतं कनकसङ्गात् कनकं भवति ।
14. उपकर्तर्यपकर्तुमिच्छत्यबुधः ।
15. न [3]पापकर्मणामाक्रोशभयम् ।
16. उत्साहवतां शत्रवोऽपि वशीभवन्ति ।
17. विक्रमधना हि राजानः ।
18. नास्त्यलसस्यैहिकमामुष्मिकं वा ।
19. निरुत्साहाद्दैवं पतति ।
20. मत्स्यार्थीव जालमुपयुज्यार्थं गृह्णीयात् ।
21. अविश्वस्तेषु विश्वासो न कर्तव्यः ।
22. विषं विषमेव सार्वकालम् ।
23. [4]अर्थसमादाने वैरिणां सङ्ग एव न कर्तव्यः ।
24. अर्थसिद्धौ वैरिणं न विश्वसेत् ।
25. अर्थाधीन एव नियतसंबन्धः ।
26. शत्रोरपि सुतः सखा[5] रक्षितव्यः ।
27. यावच्छत्रोश्छिद्रं पश्यति तावद्धस्तेन वा स्कन्धेन वा संवाह्यः, छिद्रे तु प्रहरेत् ।
28. आत्मच्छिद्रं न प्रकाशयेत् ।
29. छिद्रप्रहारिणश्शत्रवोऽपि ।
30. हस्तगतमपि शत्रुं न विश्वसेत् ।
31. स्वजनस्य दुर्वृत्तं निवारयेत् ।
32. स्वजनावमानोऽपि मनस्विनां दुःखमावहति ।
33. [6]एकाङ्गदोषः पुरुषमवसादयति ।

---

[1] नम्रीभवन्त्यपि. [2] घटीयन्त्रस्यैको भागः. [3] पापकर्मशीलानां पुरुषाणाम्. [4] अर्थागमप्रसङ्गे. [5] चेदिति शेषः. [6] स्वाम्यमात्यादिप्रकृतिसप्तके अन्यतमवैकल्यमपि पुरुषं नाशयतीत्यर्थः.

34. शत्रुं जयति [1] सुवृत्तता ।
35. [2] निकृतिप्रिया नीचाः ।
36. नीचस्य [3] मतिर्न दातव्या ।
37. नीचेषु विश्वासो न कर्तव्यः ।
38. सुपूजितोऽपि दुर्जनः पीडयत्येव ।
39. चन्दनादीनपि [4] दावोऽग्निर्दहत्येव ।
40. कदाऽपि कमपि पुरुषं नावमन्येत ।
41. क्षन्तव्यमिति पुरुषं न बाधेत [5] ।
42. भर्त्रा[6]ऽधिकं रहस्युक्तं वक्तुमिच्छन्त्यबुद्धयः
43. अनुरागस्तु फलेन (हितेन) सूच्यते ।
44. आज्ञाफलमैश्वर्यम् ।
45. दातव्यमपि बालिशः परिक्लेशेन दास्यति ।
46. महदैश्वर्यं प्राप्यापि [7] अधृतिमान् विनश्यति ।
47. नास्त्य[8]धृतेरैहिकमामुष्मिकं वा ।
48. न दुर्जनैस्सह संसर्गः कर्तव्यः ।
49. [9] शौण्डहस्तगतं पयोऽप्यवमन्यते जनः ।
50. कार्यसङ्कटेष्वर्थव्यवसायिनी बुद्धिः ।
51. मितभोजनं [10]स्वास्थ्यम् ।
52. पथ्यमप्यपथ्याजीर्णे नाश्नीयात् ।
53. [11] जीर्णभोजिनं व्याधिर्नोपसर्पति ।
54. [12] जीर्णशरीरे वर्धमानं व्याधिं नोपेक्षेत ।
55. अजीर्णे भोजनं दुःखम् ।
56. शत्रोरपि [13] विशिष्यते व्याधिः ।
57. दानं [14] निधानमनुगामि ।

---

[1] सच्चारित्रम्. [2] निकृतिः—निकारः—अपकारः. [3] युक्तयालोचनशक्तिः. [4] दावो वनहुताशनः. [5] तदेव निग्रहहेतुरपि भर्त्रेदिति भावः. [6] अतिरहसीति यावत्. [7] अधीरः. तद्रक्षणाभिवर्धनाविनियोगेषु सदुपायमजानानः चिन्ताक्रान्तो हि भवति. [8] अधीरस्य. [9] मद्यपानेन मत्तः शौण्डः. [10] समधातुताहेतुः. [11] भुक्तजीर्णानन्तर-भोजनम्. [12] वृद्धे अशक्ते वा शरीरे. [13] अधिकव्यथादायी. [14] निधानं—कोशः. कोशस्थधनानुगुण्येन दानं कर्तव्यमिति यावत्.

58. पटुतरेऽपि तृष्णापरे सुलभमतिसन्धानम्[1]
59. तृष्णया मतिश्छाद्यते।
60. कार्यबहुत्वे[2] बहुफलमायतिकं कुर्यात्।
61. [3] स्वयमेवावस्कन्नं कार्यं निरीक्षेत।
62. मूर्खेषु साहसं नियतम्।
63. मूर्खेषु विवादो न कर्तव्यः।
64. मूर्खेषु मूर्खवदेव कथयेत्।
65. आयसैरायसं छेद्यम्।
66. नास्त्यधीमतस्सखा।

इति तृतीयोऽध्यायः

---

## अथ चतुर्थोऽध्यायः

1. धर्मेण धार्यते लोकः।
2. प्रेतमपि धर्माधर्मावनुगच्छतः।
3. दया धर्मस्य जन्मभूमिः।
4. धर्ममूले सत्यदाने।
5. धर्मेण जयति लोकान्।
6. मृत्युरपि धर्मिष्ठं रक्षति।
7. [4] धर्माद्विपरीतं पापं यत्र यत्र प्रसज्यते तत्र तत्र धर्मावमतिरेव महती प्रसज्यते।
8. उपस्थितविनाशानां प्रकृतिः आकारेण कार्येण च लक्ष्यते।
9. आत्मविनाशं सूचयत्यधर्मबुद्धिः।
10. पिशुनवादिनो रहस्यं कुतः।
11. पररहस्यं नैव श्रोतव्यम्।
12. [5] वल्लभस्य स्वार्थपरत्वमधर्मयुक्तम्।

---

[1] प्रतारणम्. [2] उत्तरकाले बहुफलदायकमित्यर्थः. [3] अवस्कन्नं—शत्रुदुर्गाक्रमणेन परिलुण्टनादिकं कार्यजातं स्वयमेव निरीक्षेतेत्यर्थः. [4] धर्मं ध्वजीकृत्य तन्निवाहार्थमिति अत्यधिकं पापं यत्र प्रसक्तं भवति तत्रेत्यर्थः. [5] यो यस्य वल्लभः तं परित्यज्य स्वार्थसाधकत्वं अस्य अधार्मिकमित्यर्थः.

13. स्वजनेष्वप्यतिक्रमो न कर्तव्यः ।
14. माताऽपि दुष्टा त्याज्या ।
15. स्वहस्तोऽपि विषदिग्धश्छेद्यः ।
16. परोऽपि च हितो बन्धुः ।
17. [1] कक्षादप्यौषधं गृह्यते ।
18. नास्ति चोरेषु विश्वासः ।
19. अप्रतीकारेष्वनादरो न कर्तव्यः ।
20. व्यसनं मनागपि बाधते ।
21. अमरवदर्थजातमार्जयेत् ।
22. अर्थवान् सर्वलोकस्य बहुमतः ।
23. महेन्द्रमप्यर्थहीनं न बहुमन्यते लोकः ।
24. दारिद्र्यं खलु पुरुषस्य सजीवितं मरणम् ।
25. विरूपोऽप्यर्थवान् सुरूपः ।
26. अदातारमप्यर्थवन्तमर्थिनो न त्यजन्ति ।
27. अकुलीनोऽपि धनवान् कुलीनाद्विशिष्टः ।
28. नास्त्यवमानभयमनार्यस्य ।
29. नोद्योगवतां वृत्तिभयम् ।
30. न जितेन्द्रियाणां विषयभयम् ।
31. न कृतार्थानां मरणभयम् ।
32. [2] कस्यचिदर्थं स्वमिव मन्यते साधुः ।
33. परविभवेष्वादरो न कर्तव्यः ।
34. परविभवेष्वादरोऽपि नाशमूलम् ।
35. [3] पलालमपि परद्रव्यं न हर्तव्यम् ।
36. परद्रव्यापहरणमात्मद्रव्यनाशहेतुः ।
37. न चौर्यात् परं मृत्युपाशः ।
38. यवागूरपि[4] प्राणधारणं करोति काले ।
39. न मृतस्यौषधं प्रयोजनम् ।

---

[1] तृणादिगुल्मादपि. [2] यस्य कस्यापि धनप्राप्तौ स्वेनैव प्राप्तमिव मन्यमानः सन्तुष्टो भवति, न चासूयतीत्यर्थः. [3] सकाण्डो निष्फलो गुच्छः पलालम्, [4] तुषादिकमपीति यावत्. मनुष्यस्येति शेषः.

40. [1] समकाले प्रभुत्वस्य प्रयोजनं भवति ।
41. नीचस्य विद्याः पापकर्मण्येव तं योजयन्ति ।
42. पयःपानमपि विषवर्धनं भुजङ्गस्य, न त्वमृतं स्यात् ।
43. न हि धान्यसमो ह्यर्थः ।
44. न क्षुधासमश्शत्रुः ।
45. [2] अकृतेर्नियता क्षुत् ।
46. नास्त्यभक्ष्यं क्षुधितस्य ।
47. इन्द्रियाणि प्रतिपदं नरान् जरावशान् कुर्वन्ति ।
48. [3] सानुक्रोशं भर्तारमाजीवेत् ।
49. लुब्धसेवी पावकेच्छया खद्योतं धमति ।
50. विशेषज्ञं स्वामिनमाश्रयेत् ।
51. पुरुषस्य मैथुनं जरा ।
52. स्त्रीणाममैथुनं जरा ।
53. न नीचोत्तमयोर्वैवाहः ।
54. अगम्यागमनादायुर्यशःपुण्यानि क्षीयन्ते ।
55. नास्त्यहङ्कारसमश्शत्रुः ।
56. संसदि शत्रुं न परिक्रोशेत्[4] ।
57. शत्रुव्यसनं श्रवणसुखम् ।
58. अधनस्य बुद्धिर्न विद्यते ।
59. हितमप्यधनस्य वाक्यं न गृह्यते ।
60. अधनः स्वभार्ययाऽप्यवमन्यते ।
61. पुष्पहीनं सहकारमपि नोपासते भ्रमराः ।

इति चतुर्थोऽध्यायः

[1] सवकालष्वपात्यथः. [2] कतव्यहानस्य सावकालका क्षुदित्यथः. [3] दयावन्त स्वामिनं आश्रित्य जीवितुमिच्छेत् [4] न परिक्रोशेत्-निन्दां न कुर्यात्.

## अथ पञ्चमोऽध्यायः

1. विद्या धनमधनानाम् ।
2. विद्या चोरैरपि न ग्राह्या ।
3. विद्यया सुलभा ख्यातिः ।
4. [1] यशश्शरीरं न विनश्यति ।
5. यः परार्थमन्यमुपसर्पति स सत्पुरुषः ।
6. इन्द्रियाणां [2]प्रशमं शास्त्रम् ।
7. अकार्यप्रवृत्तेः शास्त्राङ्कुशं निवारयति ।
8. नीचस्य विद्या नोपेतव्या ।
9. म्लेच्छभाषणं न शिक्षेत ।
10. म्लेच्छानामपि सुवृत्तं ग्राह्यम् ।
11. गुणे न मत्सरः कर्तव्यः ।
12. शत्रोरपि सुगुणो ग्राह्यः ।
13. विषादप्यमृतं ग्राह्यम् ।
14. [3] अवस्थया पुरुषस्संमान्यते ।
15. स्थान एव नराः पूज्यन्ते ।
16. आर्यवृत्तमनुतिष्ठेत् ।
17. कदापि [4] मर्यादां नातिक्रामेत् ।
18. नास्त्यर्घः पुरुषरत्नस्य ।
19. न स्त्रीरत्नसमं रत्नम् ।
20. सुदुर्लभं हि रत्नम् ।
21. अयशो भयं भयेषु[5] ।
22. नास्त्यलसस्य शास्त्राधिगमः ।
23. न स्त्रैणस्य स्वर्गाप्तिर्धर्मकृत्यं च ।
24. स्त्रियोऽपि स्त्रैणमवमन्यन्ते ।
25. न पुष्पार्थी सिञ्चति शुष्कतरुम् ।

---

[1] यशोरूपेण वर्तमानं शरीरम्. [2] प्रशमफलमिति यावत्. [3] तत्तदवस्थानुगुण्येन. [4] स्वाङ्गीकृतमवधिम्. [5] सर्वभयेष्वप्यधिकं भयमयश इत्यर्थः.

26. [1] अद्रव्यप्रयत्नो वालुकाक्वाथनादनन्यः ।
27. न महाजनहासः कर्तव्यः ।
28. कार्यसंपदं निमित्तानि सूचयन्ति ।
29. [2] नक्षत्रादपि निमित्तानि विशेषयन्ति ।
30. न त्वरितस्य नक्षत्रपरीक्षा ।
31. परिचये दोषा न छाद्यन्ते ।
32. स्वयमशुद्धः परानाशङ्कते ।
33. स्वभावो दुरतिक्रमः ।
34. अपराधानुरूपो दण्डः ।
35. प्रश्नानुरूपं प्रतिवचनम् ।
36. विभवानुरूपमाभरणम् ।
37. कुलानुरूपं वृत्तम् ।
38 कार्यानुरूपः प्रयत्नः ।
39. पात्रानुरूपं दानम् ।
40. वयोऽनुरूपो वेषः ।
41. स्वाम्यनुकूलो भृत्यः ।
42. भर्तृवशवर्तिनी भार्या ।
43. गुरुवशानुवर्ती शिष्यः ।
44. पितृवशानुवर्ती पुत्रः ।
45. अत्युपचारश्शङ्कितव्यः ।
46. स्वामिनि कुपिते स्वामिनमेवानुवर्तेत ।
47. मातृताडितो वत्सो मातरमेवानुरोदिति ।
48. स्नेहवतस्स्वल्पो हि रोषः ।
49. बालिशः आत्मच्छिद्रं न पश्यति, अपि तु परच्छिद्रमेव पश्यति ।
50. सदोपचारः कितवः ।
51. [3] काम्यैर्विशेषैरुपचारणमुपचारः ।
52. चिरपरिचितानामत्युपचारश्शङ्कितव्यः ।

---

[1] यत्र सद्भिराधीयमाना गुणाः सङ्क्रामन्ति तद्द्रव्यम्. अतथाविधविषये कृतः शिक्षणप्रयत्नः व्यर्थ इत्यर्थः. [2] ज्योतिश्शास्त्रादपि. [3] यां कामपि कामनामुद्दिश्य तत्साफल्यसम्पादनाय क्रियमाणा सेवा उपचार इत्युच्यत इत्यर्थः.

53. श्वसहस्राद् एकाकिनी गौः श्रेयसी।

54. श्वो मयूराद् अद्य कपोतो वरः।

55. अतिसङ्गो दोषमुत्पादयति।

56. सर्वं जयत्यक्रोधः।

57. [1] यद्यपकारिणि कोपः कर्तव्यः, तर्हि स्वकोपे एव कोपः कर्तव्यः।

58. मतिमत्सु मूर्खमित्रगुरुवल्लभेषु विवादो न कर्तव्यः।

59. [2] नास्त्यपिशाचमैश्वर्यम्।

60. नास्ति धनवतां सुकर्मसु श्रमः।

61. नास्ति गतिश्रमो यानवताम्।

62. अलोहमयं निगडं कलत्रम्।

63. यो यस्मिन् कर्मणि कुशलः स तस्मिन् योक्तव्यः।

64. दुष्कलत्रं मनस्विनां शरीरकर्शनम्[3]।

65. अप्रमत्तो दारान् निरीक्षेत।

66. स्त्रीषु किंचिदपि न विश्वसेत्।

67. न [4] समाधिः स्त्रीषु लोकज्ञता च।

68. गुरूणां माता गरीयसी।

69. सर्वावस्थासु माता भर्तव्या।

70. वैरूप्यमलङ्कारेणाच्छाद्यते।

71. स्त्रीणां भूषणं लज्जा।

72. विप्राणां भूषणं वेदः।

73. सर्वेषां भूषणं धर्मः।

74. भूषणानां भूषणं सविनया विद्या।

इति पञ्चमोऽध्यायः

---

[1] स्वापकारिणि क्षमा तन्निग्रहहेतुरिति भावः. [2] प्रायो मनुष्याणां बहुधनसम्पत्तिः मरणानुपदमेव पिशाचत्वापादकमिति भावः. [3] अमनस्विनां स्वात्मनाशकमिति भावः.
[4] समाधिः—समाहितमनस्कता.

## अथ षष्ठोऽध्यायः

1. अनुपद्रवं देशमावसेत् ।
2. साधुजनबहुलो देशः आश्रयणीयः ।
3. राज्ञो भेतव्यं सार्वकालम् ।
4. न राज्ञः परं दैवतम् ।
5. सुदूरमपि दहति राजवह्निः ।
6. रिक्तहस्तो न राजानमभिगच्छेत् गुरुं दैवं च
7. [1] कुटुम्बिनो भेतव्यम् ।
8. गन्तव्यं च सदा राजकुलम् ।
9. राजपुरुषैस्संबन्धं कुर्यात् ।
10. राजदासी न सेवितव्या ।
11. न चक्षुषाऽपि राजानं निरीक्षेत[2] ।
12. पुत्रे गुणवति कुटुम्बिनः स्वर्गः ।
13. पुत्रा विद्यानां पारं गमयितव्याः ।
14. जनपदार्थं ग्रामं त्यजेत् ।
15. ग्रामार्थं कुटुम्बस्त्यज्यते ।
16. अतिलाभः पुत्रलाभः ।
17. दुर्गतेर्यः पितरौ रक्षति स पुत्रः ।
18. यः कुलं प्रख्यापयति स पुत्रः ।
19. नानपत्यस्य स्वर्गः ।
20. या प्रसूते सा भार्या ।
21. [3]तीर्थसमवाये पुत्रवतीमनुगच्छेत् ।
22. न तीर्थाभिगमनाद्ब्रह्मचर्यं नश्यति ।
23. न परक्षेत्रे बीजं विनिक्षिपेत् ।
24. पुत्रार्था हि स्त्रियः ।
25. स्वदासीपरिग्रहो हि स्वस्यैव दासभावापादनम्[4] ।
26. उपस्थितविनाशः पथ्यवाक्यं न शृणोति ।

---

[1] सद्गृहस्थसकाशात्. [2] सेवाकालेषु अनुचितसमयेषु चेति शेषः स्यात. [3] तीर्थं स्त्रीणामार्तवम्. तत्समवाये=बह्वीनां पत्नीनां युगपदृतुप्राप्तौ. अर्थ पु. 165 पं. 20. [4] दास्याः पतिः दासो हि भवतीति.

27. नास्ति देहिनां सुखदुःखाभावः ।
28. मातरमिव वत्साः सुखदुःखानि कर्तारमेवानुगच्छन्ति
29. तिलमात्रमप्युपकारं शैलमात्रं मन्यते साधुः ।
30. उपकारोऽनार्येष्वकर्तव्यः ।
31. [1] प्रत्युपकारभयादनार्यश्शत्रुर्भवति ।
32. स्वल्पोपकारकृतेऽपि प्रत्युपकारं कर्तुमार्यो जागर्त्ति ।
33. न कदाऽपि देवताऽमन्तव्या ।
34. न चक्षुषः समं ज्योतिरस्ति ।
35. चक्षुर्हि शरीरिणां नेता ।
36. अपचक्षुषः किं शरीरेण ?
37. नाप्सु मूत्रं कुर्यात् ।
38. न नग्नो जलं प्रविशेत् ।
39. यथा शरीरं तथा ज्ञानम्[2] ।
40. यथा बुद्धिस्तथा विभवः ।
41. अग्नावग्निं न निक्षिपेत् ।
42. तपस्विनः पूजनीयाः ।
43. परदारान् न गच्छेत् ।
44. अन्नदानं भ्रूणहत्यामपि मार्ष्टि ।
45. न वेदबाह्यो धर्मः ।
46. कथंचिदपि धर्मं निषेवेत ।
47. स्वर्गं नयति सूनृतम्[3] ।
48. नास्ति सत्यात् परं तपः ।
49. सत्यं स्वर्गस्य साधनम् ।
50. सत्येन धार्यते लोकः ।
51. सत्याद्देवो वर्षति ।
52. नानृतात् पातकं परम् ।

---

[1] प्राप्तोपकारस्सन्नपि नीचः ‘ उपकारकर्ता स्वस्मात् प्रत्युपकारमपेक्षेत ’ इतिभिया तस्मै च कमप्युपकारं कर्तुमनिच्छया च उपकर्तुरेव शत्रुस्संवृत्तो भवतीत्यर्थः. [2] अयं केवलोपदेशजन्यानुभवगम्यो विषयः. [3] तथ्यपथ्यार्थयुक्तं शोभनं च वाक्यं सूनृतम्.

53. न मीमांस्या गुरवः[1] ।

54. खलत्वं नोपेयात् ।

55. नास्ति खलस्य मित्रं ।

56. लोकयात्रा दरिद्रं बाधते ।

57. अतिशूरो दानशूरः ।

58. गुरुदेवब्राह्मणेषु भक्तिर्भूषणम् ।

59. सर्वस्य भूषणं विनयः ।

60. अकुलीनोऽपि विनीतः कुलीनाद्विशिष्टः ।

61. [2]आचारादायुर्वर्धते कीर्तिः श्रेयश्च ।

62. प्रियमप्यहितं न वक्तव्यम् ।

63. बहुजनविरुद्धमेकं नानुवर्तेत ।

64. न कृतार्थस्य नीचेषु संबन्धः ।

65. ऋणशत्रुव्याधयो निःशेषाः कर्तव्याः ।

66. भूत्यनुवर्तनं पुरुषस्य रसायनम् ।

67. नार्थिष्ववज्ञा कार्या ।

68. दुष्करं कर्म कारयित्वा कर्तारमवमन्यते नीचः ।

69. नाकृतज्ञस्य नरकान्निवर्तनम् ।

70. जिह्वायत्तौ वृद्धिविनाशौ ।

71. विषामृतयोराकरी जिह्वा ।

72. प्रियवादिनो न शत्रुः ।

73. स्तुता अपि देवतास्तुष्यन्ति ।

74. अनृतमपि दुर्वचनं चिरं तिष्ठति ।

75. राजद्विष्टं न वक्तव्यम् ।

76. श्रुतिसुखात् कोकिलालापादपि तुष्यन्ति जनाः ।

77. स्वधर्महेतुस्सत्पुरुषः ।

78. नास्त्यर्थिनो गौरवम् ।

79. स्त्रीणां भूषणं सौभाग्यम् ।

80. शत्रोरपि न पातनीया वृत्तिः[3] ।

---

[1] वस्तुतो गुरवस्सम्पन्नाः न दुस्तर्कादिभिश्शोधनीयाः इत्यर्थः. आद्यपतनासमवायिकारणलक्षणगुरुत्ववन्तस्तु अवश्यं शोधनेन लघूकरणीया एव. [2] पञ्चेन्द्रियस्य देहस्य बुद्धेश्चमनसस्तथा । द्रव्यदेशक्रियादीनां शुद्धिराचार इष्यते ॥ इति मनुः. [3] जीविकावृत्तेरपहारो न कार्य इत्यर्थः.

81. अप्रयत्नोदकं क्षेत्रम् ।
82. एरण्डमवलम्ब्य [1]कुञ्जरं न कोपयेत् ।
83. अतिप्रवृद्धापि शाल्मली [2]वारणस्तम्भो न भवति ।
84. अतिदीर्घोऽपि [3]कर्णिकारो न मुसली भवति ।
85. अतिदीप्तोऽपि खद्योतो न पावकः ।
86. न प्रवृद्धत्वं गुणहेतुः ।
87. सुजीर्णोऽपि [4]पिचुमन्दो न शङ्कुलायते ।
88. यथा बीजं तथा निष्पत्तिः ।
89. यथा श्रुतं तथा बुद्धिः ।
90. यथा कुलं तथाऽऽचारः ।
91. संस्कृतः पिचुमन्दो न सहकारो भवति ।
92. न चागतं सुखं त्यजेत् ।
93. स्वयमेव दुःखमधिगच्छति ।
94. रात्रिचारणं न कुर्यात् ।
95. न चार्धरात्रं स्वपेत् ।
96. [5]तद्विद्वद्भिः परीक्षेत ।
97. परगृहमकारणतो न प्रविशेत् ।
98. ज्ञात्वाऽपि दोषमेव करोति लोकः ।
99. शास्त्रप्रधाना लोकवृत्तिः ।
100. शास्त्राभावे शिष्टाचारमनुगच्छेत् ।
101. नाचरिताच्छास्त्रं गरीयः ।
102. दूरस्थमपि चारचक्षुः पश्यति राजा ।
103. गतानुगतिको लोकः ।
104. यमनुजीवेत् तं नापवदेत् ।

इति षष्ठोऽध्यायः.

---

[1] गजम्. [2] गजबन्धनः आलानस्तम्भः. [3] द्रुमोत्पलः. [4] निम्बः. [5] अत्र तच्छब्दः ब्रह्मपर इति केचित्.

## अथ सप्तमोऽध्यायः

1. तपस्सार इन्द्रियनिग्रहः ।
2. दुर्लभः स्त्रीबन्धनान्मोक्षः[1] ।
3. स्त्री नाम सर्वाशुभानां क्षेत्रम् ।
4. न च स्त्रीणां पुरुषपरीक्षा[2] ।
5. स्त्रीणां मनः क्षणिकम् ।
6. [3]अशुभद्वेषिणः स्त्रीषु न प्रसक्ता भवेयुः ।
7. यज्ञफलज्ञास्त्रिवेदविदः ।
8. स्वर्गस्थानं न शाश्वतं, अपितु यावत्पुण्यफलम् ।
9. न च स्वर्गपतनात् परं दुःखम् ।
10. देही देहं त्यक्त्वा ऐन्द्रपदं न वाञ्छति ।
11. दुःखानामौषधं निर्वाणम्[4] ।
12. अनार्यसंबन्धाद्वरमार्यशत्रुता ।
13. निहन्ति दुर्वचनं[5] कुलम् ।
14. न पुत्रसंस्पर्शात् परं सुखम् ।
15. विवादे धर्ममनुस्मरेत् ।
16. [6]निशान्ते कार्यं चिन्तयेत् ।
17. प्रदोषे न संयोगः कर्तव्यः ।
18. उपस्थितविनाशः दुर्नयं शुभं मन्यते ।
19. क्षीरार्थिनः किं करिण्या ।
20. न दानसमं वश्यम् ।
21. परायत्तेषूत्कण्ठां न कुर्यात् ।
22. असत्समृद्धिरसद्भिरेव भुज्यते ।
23. निम्बफलं काकैर्हि भुज्यते ।
24. नाम्भोधिस्तृष्णामपोहति ।
25. वालुका अपि स्वगुणमाश्रयन्ते ।
26. सन्तोऽसत्सु न रमन्ते ।

---

[1] स्त्रीबन्धनं—गार्हस्थ्यम्. प्रायश इति शेषः. दृष्टस्वभावानुवादोऽयम् , न तु विधिः. वस्तुतस्तु गार्हस्थ्यं नैव प्रतिबन्धकं, प्रत्युत विवेचनशीलानां मुक्त्यनुकूलमेव. [2] अशक्यत्वात्. [3]शुभाशंसिन इति यावत्. [4]प्रकृतिपाशान्मोचनम्. [5]कर्तृ. [6]उषसि.

27. हंसः प्रेतवने न रमते।
28. अर्थार्थं प्रवर्तते लोकः।
29. आशया बध्यते लोकः।
30. न चाशापरैश्श्रीस्सह तिष्ठति।
31. अशापरे न धैर्यम्।
32. दैन्यान्मरणमुत्तमम्।
33. आशा लज्जां व्यपोहति।
34. न मात्रा सह वासः कर्तव्यः[1]।
35. आत्मा न स्तोतव्यः।
36. न दिवा [2]स्वप्नं कुर्यात्।
37. न चासन्नमपि पश्यत्यैश्वर्यान्धः, नापि शृणोतीष्टं वाक्यम्।
38. स्त्रीणां न भर्तुः परं दैवतम्, तदनुवर्तनं तासामुभयसौख्यम्[3]।
39. अतिथिमभ्यागतं च पूजयेद्यथाविधि।
40. नास्ति हव्यस्य व्याघातः।
41. शत्रुर्मित्रवत् प्रतिभाति।
42. मृगतृष्णा जलवद्भाति हि।

इति सप्तमोऽध्यायः

---

## अथाष्टमोऽध्यायः

1. दुर्मेधसोऽसच्छास्त्रं मोहयति।
2. सत्सङ्गः स्वर्गवासः।
3. आर्याः स्वमिव परं मन्यन्ते।
4. रूपानुवर्ती गुणः।
5. यत्र सुखेन वर्तते तदेव स्थानम्।
6. विश्वासघातिनो न निष्कृतिः।
7. दैवायत्तं न शोचेत्।

---

[1] एकान्ते इति शेषः. मनसो दुर्निग्रहत्वात् कामादिमनोविकारसम्भावनया अयं निषेधः. [2] निद्राम्. दिवास्वापो हि सुप्तव्याधिव्यालानां प्रबोधनम्. [3] ऐहिकामुष्मिकोभयसौख्यजनकमित्यर्थः.

8. आश्रितदुःखमात्मन इव मन्यते साधुः ।
9. हृद्गतमाच्छाद्यान्यद्वदत्यनार्यः ।
10. बुद्धिहीनः पिशाचतुल्यः ।
11. असहायः पथि न गच्छेत् ।
12. पुत्रो न स्तोतव्यः[1] ।
13. स्वामी स्तोतव्योऽनुजीविभिः ।
14. धर्मकृत्यानि सर्वाणि स्वामिन इत्येव घोषयेत् ।
15. राजाज्ञां नातिलङ्घयेत् ।
16. यथाऽऽज्ञप्तं तथा कुर्यात् ।
17. नास्ति बुद्धिमतां शत्रुः ।
18. आत्मच्छिद्रं न प्रकाशयेत् ।
19. क्षमावानेव सर्वं साधयति ।
20. आपदर्थं धनं रक्षेत् ।
21. साहसवतां प्रियं कर्तव्यम् ।
22. श्वः कार्यमद्य कुर्वीत ।
23. आपराह्णिकं पूर्वाह्ण एव कर्तव्यम् ।
24. व्यवहारानुलोमो धर्मः ।
25. सर्वज्ञता लोकज्ञता ।
26. शास्त्रज्ञोऽप्यलोकज्ञो मूर्खतुल्यः ।
27. शास्त्रप्रयोजनं तत्त्वदर्शनम्[2] ।
28. तत्त्वज्ञानं कार्यमेव प्रकाशयति[3] ।
29. व्यवहारे पक्षपातो न कार्यः ।
30. धर्मादपि व्यवहारो गरीयान् ।
31. आत्मा हि व्यवहारस्य साक्षी ।
32. सर्वसाक्षी ह्यात्मा ।
33. न स्यात् कूटसाक्षी[4] ।
34. कूटसाक्षिणो नरके पतन्ति ।
35. प्रच्छन्नपापानां साक्षिणो महाभूतानि ।

---

[1] कृतकृत्यताभावादिना स्वकर्तव्याद्भ्रश्येतेति हेतोः. [2] इहैवेति शेषः. [3] तैस्तैः क्रियमाण कार्यमेव तस्य तस्य तत्त्वज्ञतां प्रकाशयतीत्यर्थः. [4] मिथ्यासाक्षी.

36. आत्मनः पापमात्मैव प्रकाशयति[1]।
37. व्यवहारेऽन्तर्गतमाकारस्सूचयति ।
38. आकारसंवरणं देवानामप्यशक्यम् ।
39. चोरराजपुरुषेभ्यो वित्तं रक्षेत् ।
40. दुर्दर्शना हि राजानः प्रजा नाशयन्ति ।
41. सुदर्शना राजानः प्रजा रक्षन्ति ।
42. न्याययुक्तं राजानं मातरं मन्यन्ते प्रजाः ।
43. तादृशः स राजा इह सुखं ततस्स्वर्गं चाप्नोति ।
44. [2]अहिंसालक्षणो धर्मः ।
45. स्वशरीरमपि [3]परशरीरं मन्यते साधुः।
46. मांसभक्षणमप्ययुक्तं सर्वेषाम् ।
47. न संसारभयं ज्ञानवताम्[4] ।
48. [5] विज्ञानदीपेन संसारभयं निवर्तयति ।
49. [6] सर्वमनित्यं भवति।
50. कृमिशकृन्मूत्रभाजनं शरीरं पुण्यपापजन्महेतुः[7]।
51. जन्ममरणादिषु तु दुःखमेव ।
52. तपसा स्वर्गमाप्नोति ।
53. क्षमायुक्तस्य [8]तपो विवर्धते ।
54. [9] तस्मात् सर्वेषां सर्वकार्यसिद्धिर्भवति ।

इत्यष्टमोऽध्यायः

इति कौटलीयानि नीतिसूत्राणि

---

[1] कालविशेषे इति शेषः. [2] स्वकीयमनोवाक्कायकर्मभिः परकीयमनोवाक्कायकर्मणां दुःखोद्वेगजनिकाया हिंसाया वर्जनं धर्म इत्यर्थः. [3] परार्थोपयोगि शरीरमित्यर्थः. [4] ज्ञानमत्र परतत्त्वसाक्षात्कार एव ; न तु अकाण्डे जनोद्वेजकवाग्वैखरीप्रदर्शनमात्रप्रयोजक-विविधानन्तदोषजालकलुषीकृतेन्द्रियवर्गदुर्दृष्टिपरामृष्टपरस्परासम्बद्धरेखासमुदायसहस्रोपस्थिति जनकं, स्वपरयोरशान्तिमयतापादनेन ऐहिकामुष्मिकसर्वविधश्रेयःप्रतिबन्धकं, उक्तिमात्र-सामीचीन्यसम्पादनरूपानन्तापर्यवसितदुःखमात्रपर्यवसितं, भ्रामकं, निरर्थकं च शास्त्रपाण्डित्यम् . [5] अनुष्ठीयमानसकलकर्मप्रायोगिकतत्त्वार्थज्ञानरूपेण दीपेन. आत्मनः परस्य चेति शेषः. [6] प्रकृतिविकारात्मकं सर्वमित्यर्थः. [7] प्रमाद्यतामिति शेषः. जाग्रतां त्विदं शरीरमेव अनन्तफलहेतुरिति भाव्यम् . [8] श्रेयस्साधनशक्तिविशेषः. [9] तपसः इत्यर्थः.

जयश्रीः !

# सोमदेवीयानि राजनीतिसूत्राणि.

## (नीतिवाक्यामृतम्)

---

### १. धर्मसमुद्देशः

1. धर्मार्थकाममोक्षरूपसर्वपुरुषार्थफलमिदं राज्यम्।
2. यतो[1]ऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।
3. अधर्मः पुनरेतद्विपरीतफलः।
4. आत्मवत् परत्र कुशलवृत्तिचिन्तनं शक्तितस्त्यागतपसी धर्माधिगमोपायाः।
5. सर्वसत्त्वेषु हि समता सर्वाचरणानां परममाचरणम्।
6. न खलु भूतद्रुहां कापि क्रिया प्रसूते श्रेयांसि।
7. परत्राजिघांसुमनसां व्रत[2]रिक्तमपि चित्तं स्वर्गाय जायते।
8. स खलु त्यागो देशत्यागाय, यस्मिन् कृते भवत्यात्मनो दौःस्थित्यम्[3]।
9. सखल्वर्थी [4]परिपन्थी, यः परस्य दौःस्थित्यं जानन्नपि तस्मिन् अभिलषत्यर्थम्।
10. तद्व्रतमाचरितव्यं, यत्र न संशयतुलामारोहतः शरीरमनसी।
11. ऐहिकामुत्रिकफलार्थं अर्थव्ययः त्यागः।
12. भस्मनि हुतमिवापात्रेष्वर्थव्ययः।
13. पात्रं च त्रिविधम्, धर्मपात्रं कार्यपात्रं कामपात्रं चेति।
14. किं तया कीर्त्या? या आश्रितान्न बिभर्ति, न प्रतिरुणद्धि वाऽधर्मम्।
15. भागीरथी[5]श्रीपार्वतीवत् भावानामन्यदेव प्रसिद्धेः कारणं, न पुनस्त्यागः; [6]यतो न खलु गृहीतारो व्यापिनः सनातनाश्च[7]।

---

[1] ऐहिकं श्रेयः (प्रेय.) अभ्युदयः. आमुष्मिकं श्रेयः निःश्रेयसम्. [2] रिक्तं-हीनम्. [3] अतः तादृशः त्यागः **सर्वथा** अनादरणीय इत्यर्थः. [4] शत्रुः. [5] श्रीपर्वतवत्-**पा**. [6] यस्मात् त्यागात्. [7] भवेयुरिति शेषः.

16. स खलु कस्यापि मा भूदर्थः, यत्रासंविभागः शरणागतानाम् ।
17. अर्थिषु संविभागः स्वयमुपभोगश्चार्थस्य हि द्वे फले ।
18. नास्त्यौचित्यमेकान्तलुब्धस्य ।
19. दानप्रियवचनाभ्यां अन्यस्य हि सन्तोषोत्पादनं औचित्यम् ।
20. स खलु [1]लुब्धः, यः सत्सु विनियोगादात्मना सह जन्मान्तरेषु न यत्यर्थम् ।
21. अदातुः प्रियालापः अन्यत्र लाभस्यान्तरायः ।
22. सदैव दुःस्थितानां को नाम बन्धुः ?
23. नित्यमर्थयमानात् को नाम नोद्विजते ?
24. इन्द्रियमनसोर्नियमानुष्ठानं तपः ।
25. विहिताचरणं निषिद्धपरिवर्जनं च नियमः ।
26. विधिनिषेधौ [2]ऐतिह्यायत्तौ ।
27. तत् खलु सद्भिः श्रद्धेयमैतिह्यं, यत्र न प्रमाणबाधा पूर्वापर-विरोधो वा ।
28. हस्तिस्नानमिव विफलं सर्वमनुष्ठानं अनियमितेन्द्रियमनो-वृत्तीनाम् ।
29. दुर्भगाभरणमिव केवलं देहखेदावहमेव ज्ञानं स्वयमनाचरतः ।
30. सुलभः खलु [3]कथक इव परस्य धर्मोपदेशे लोकः ।
31. प्रत्यहं किमपि नियमेन प्रयच्छतस्तपस्यतो वा भवन्त्यवश्यं महीयांसः परे लोकाः ।
32. कालेन सञ्चीयमानः परमाणुरपि हि जायते मेरुः ।
33. धर्मश्रुतधनानां लवोऽपि प्रतिदिनं सङ्गृह्यमाणः भवति समुद्राद-प्यधिकः ।
34. धर्माय नित्यमजाग्रतां आत्मवञ्चनं भवति ।
35. कस्य नामैकदैव सम्पद्यते पुण्यराशिः ?
36. स्वयमनाचरतां मनोरथाः स्वप्नराज्यसमाः ।
37. धर्मफलमनुभवतोऽप्यधर्मानुष्ठानमनात्मज्ञस्य ।
38. कः सुधीः भेषजमिवात्महितं धर्मं परोपरोधादनुतिष्ठति ?

---

[1] अभिनन्दनीय इत्यादिः. [2] ऐतिह्यं वृद्धपरम्परासिद्धः श्रौतः साम्प्रदायिको वा उपदेशः. [3] पौराणिकः.

39. धर्मानुष्ठाने भवत्यप्रार्थितमपि [1]प्रातिलोम्यं लोकस्य ।
40. अधर्मकर्मणि को नाम नोपाध्यायः पुरश्चारी वा ?
41. कण्ठगतैरपि प्राणैर्नाशुभं कर्म समाचरन्ति कुशलमतयः ।
42. स्वव्यसनतर्पणाय धूर्तैः [2]दुरीहितवृत्तयः क्रियन्ते श्रीमन्तः ।
43. खलसंसर्गः किं नाम न करोत्यनिष्टम् ?
44. अग्निरिव स्वाश्रयमेव दहन्ति दुर्जनाः ।
45. वनगज इव तदात्वसुखलुब्धः को नाम न भवत्यास्पदमापदाम् ?
46. धर्मातिक्रमाल्लब्धं परेऽनुभवन्ति, स्वयं तु पापस्य भाजनं सिंह इव [3]सिन्धुरवधात् ।
47. [4]बीजभोजिनः कुटुम्बिन इव नास्त्यधार्मिकस्यायत्यां किमपि शुभम् ।
48. यः कामार्थावुपहत्य धर्ममेवोपास्ते, स पक्कं क्षेत्रं परित्यज्योषरं कृषति ।
49. स खलु सुखी, योऽमुत्र सुखाविरोधेन सुखमनुभवति ।
50. इदमिह परमाश्चर्यं यदन्यायसुखलवादिहामुत्र चानवधि[5]दुःखानुबन्धः ।
51. सुखदुःखादिभिः प्राणिनामुत्कर्षापकर्षौ धर्माधर्मयोर्लिङ्गम् ।
52. किमपि हि नास्ति तद्वस्तु, यत्र नै[6]श्वर्यमदृष्टाधिष्ठात्र्याः ।

इति धर्मसमुद्देशः

---

## २. अर्थसमुद्देशः

1. यतः सर्वप्रयोजनसिद्धिः सोऽर्थः ।
2. सोऽर्थस्य भाजनं योऽर्थानुबन्धेनार्थमनुभवति ।
3. अलब्धलाभः लब्धपरिरक्षणं रक्षितविवर्धनं वृद्धस्य तीर्थेषु प्रतिपादनं चार्थानुबन्धः ।
4. तीर्थमर्थेनासंभावयन् मधुच्छत्रमिव सर्वात्मना विनश्यति ।
5. धर्मसमवायिनः कार्यसमवायिनश्च पुरुषाः तीर्थम् ।
6. तादात्विकमूलहरकदर्येषु नासुलभः प्रत्यवायः ।

---

[1] विघ्नः. [2] पापमार्गरताः. [3] सिन्धुरः—हस्ती. [4] बीजार्थे रक्षितं व्रीह्यादि धान्यमपि यः भक्षयति सः बीजभोजी. [5] दुःखपरिणामः. [6] ऐश्वर्य—प्राभवम् .

7. यः किमप्यसञ्चित्य उत्पन्नमर्थमपव्ययति सः तादात्विकः।
8. यः पितृपैतामहमर्थं अन्यायेन भक्षयति स मूलहरः।
9. यः भृत्यात्मपीडाभ्यामर्थं सञ्चिनोति स कदर्यः।
10. तादात्विकमूलहरयोः आयत्यां नास्ति कल्याणम्।
11. कदर्यस्यार्थसंग्रहः राजदायादतस्कराणामन्यतमस्य निधिः।

इत्यर्थसमुद्देशः

---

## ३. कामसमुद्देशः

1. आभिमानिकरसानुविद्धा यतः सर्वेन्द्रियप्रीतिः स कामः।
2. धर्मार्थाविरोधेन कामं सेवेत, न निःसुखः स्यात्।
3. समं वा त्रिवर्गं सेवेत।
4. एको ह्यत्यासेवितो धर्मार्थकामानां आत्मानमितरौ च पीडयति।
5. परार्थं भारवाहिन इव आत्मसुखं निरुन्धानस्य धनोपार्जनम्।
6. इन्द्रियमनःप्रसादनफला हि विभूतयः।
7. नाजितेन्द्रियस्य कापि कार्यसिद्धिः।
8. इष्टेऽर्थेऽनासक्तिः विरुद्धे चार्थेऽप्रवृत्तिः इन्द्रियजयः, [1]अर्थशास्त्राध्ययनं वा।
9. योऽनङ्गेनापि जीयते स कथं पुष्टाङ्गानरातीन् जयेत्।
10. न कामासक्तस्यास्ति चिकित्सितम्।
11. न तस्य धनं धर्मः शरीरं वा यस्यास्ति स्त्रिष्वत्यासक्तिः।
12. विरुद्धकामवृत्तिः समृद्धोऽपि न चिरं नन्दति।
13. धर्मार्थकामानां [2]युगपत्समवाये पूर्वःपूर्वो गरीयान्।
14. [3]कालसहत्वे पुनरर्थ एव, धर्मकामयोरर्थमूलत्वात्।

इति कामसमुद्देशः

---

## ४. अरिषड्वर्गसमुद्देशः

1. अयुक्तितः प्रणीताः कामक्रोधलोभमदमानहर्षाः क्षितीशानामन्तरङ्गोऽरिषड्वर्गः।

---

[1] कारणे कार्योपचारात्. [2] एककालानुभाव्यतया प्राप्तौ सत्याम्.
[3] कालान्तरेऽपि धर्मकामयोरनुभवस्यावकाशसंभवे तु.

2. परपरिगृहीतासु अनूढासु च स्त्रीषु दुरभिसन्धिः कामः ।
3. अविचार्य परस्यात्मनो वा अपायहेतुः क्रोधः ।
4. दानार्हेषु स्वधनाप्रदानं, अकारणं वा परधनग्रहणं लोभः ।
5. कुलबलैश्वर्यरूपविद्याभिः आत्माहङ्कारकरणं परप्रधर्षनिबन्धनं वा मदः ।
6. दुरभिनिवेशामोक्षः यथोक्ताग्रहणं वा मानः ।
7. निर्निमित्तमन्यस्य दुःखोत्पादनेन स्वस्यार्थसंचयेन वा मनःप्रतिरञ्जनः हर्षः ।

इत्यरिषड्वर्गसमुद्देशः

---

## ५. विद्यावृद्धसमुद्देशः

1. योऽनुकूलप्रतिकूलयोरिन्द्रयमस्थानं[1] स राजा ।
2. राज्ञो हि दुष्टनिग्रहः शिष्टपरिपालनं च धर्मः, न पुनः शिरोमुण्डनं जटाधारणादिकं वा ।
3. राज्ञः पृथिवीपरिपालनोचितं कर्म राज्यम् ।
4. वर्णाश्रमवती धान्यहिरण्यपशुकुप्यवि(ष्टि)शिष्टफलदा च पृथ्वी ।
5. ब्राह्मणाः क्षत्रियाः विशः शूद्राश्च वर्णाः ।
6. ब्रह्मचारी गृहस्थो वानप्रस्थः यतिरित्याश्रमाः ।
7. सः उपकुर्वाणको ब्रह्मचारी, यो वेदमधीत्य स्नायात् ।
8. स्नानं विवाहदीक्षाभिषेकः ।
9. स नैष्ठिको ब्रह्मचारी यस्य प्राणान्तिकमदारकर्म ।
10. य उत्पन्नः पुनीते वंशं स पुत्रः ।
11. अपुत्रः पुमान् पितॄणामृणभाजनम्, अनध्ययनो ब्रह्मणः, अयजनो देवानाम्, [2] अहन्तकरो मनुष्याणाम् ।
12. आत्मा वै पुत्रो नैष्ठिकस्य, अयं ह्यात्मनात्मानमात्मनि सन्दधानः परां पूततां प्रतिपद्यते ।
13. नित्यनैमित्तकानुष्ठानस्थो गृहस्थः ।
14. ब्रह्मदेवपित्रतिथिभूतयज्ञा हि नित्यमनुष्ठानम्, दर्शपौर्णमासादि नैमित्तिकम् ।

---

[1] यथाक्रममन्वयः. [2] यस्मिन् आपद्गते मृतेऽपि वा न कश्चिदपि शोकेन 'हन्त!' इति शब्दं प्रयुङ्क्ते तथाविधः सर्वोपेक्षाद्वेषादिविषयः मानवः अहन्तकरः इति व्याख्या.

15. (वैवाहिकः शालीनः जायावरोऽघोर इति गृहस्थाः ।)
16. यः खलु यथाविधि जानपदमाहारं संसारव्यवहारं च परित्यज्य सकलत्रोऽकलत्रो वा वने प्रतिष्ठते स वानप्रस्थः ।
17. (वालखिल्यः औदुम्बरः वैश्वानरः सद्यःप्रक्षल्यकश्चेति वानप्रस्थाः ।)
18. यः सम्यग्विद्यानौलाभेन तृष्णासरित्तरणाय योगाय यतते स यतिः ।
19. (कुटीरकबहूवोदकहंसपरमहंसाः यतयः ।)
20. राज्यस्य मूलं [1]क्रमो विक्रमश्च ।
21. आचारसम्पत्तिः क्रमसम्पत्तिं करोति ।
22. अनुत्सेकः खलु विक्रमस्यालङ्कारः ।
23. क्रमविक्रमयोरन्यतरमात्रपरिग्रहेण राज्यस्य दुष्करः परिणामः ।
24. क्रमविक्रमयोरधिष्ठानं बुद्धिमान् आहार्यबुद्धिर्वा ।
25. यो विद्याविनीतमतिः स बुद्धिमान् ।
26. सिंहस्येव केवलं पौरुषावलम्बिनः न चिरं कुशलम् ।
27. अशस्त्रशूर इव अशास्त्रः प्रज्ञावानपि भवति विद्विषां वशः ।
28. अलोचनगोचरे ह्यर्थे शास्त्रं तृतीयं लोचनं पुरुषाणाम् ।
29. अनधीतशास्त्रः चक्षुष्मानपि पुमान् अन्ध एव ।
30. न ह्यज्ञानिनोऽन्यः पशुरस्ति ।
31. वरमराजकं भुवनं, न तु मूर्खो राजा ।
32. अकृतसंस्कारं रत्नमिव सुजातमपि राजपुत्रं न नायकपदायानयन्ति साधवः ।
33. न दुर्विनीताद्राज्ञः प्रजाविनाशादपरोऽस्त्युत्पातः ।
34. यः युक्तायुक्तयोरविवेकी विपर्यस्तमतिर्वा स दुर्विनीतः ।
35. यत्र सद्भिराधीयमाना गुणाः सङ्क्रामन्ति तद्द्रव्यम् ।
36. द्रव्यं हि [2]क्रिया विनयति नाद्रव्यम् ।
37. द्रव्याद्रव्यप्रकृतिरपि कश्चित् पुरुषः, सङ्कीर्णगजवत्[3] ।
38. शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशाः बुद्धिगुणाः ।
39. श्रोतुमिच्छा शुश्रूषा ।
40. श्रवणं आकर्णनम् ।

---

[1] पितृपैतामहपरम्परा क्रमः. [2] शिक्षणोपदेशादिरूपा गुरुक्रिया. [3] एतादृशस्तु नैव समुपदेशार्ह इति भावः.

41. ग्रहणं शास्त्रार्थोपादानम् ।
42. धारणं कालान्तरेष्वप्यविस्मरणम् ।
43. मोहसन्देहविपर्यासव्युदासेन ज्ञानं विज्ञानम् ।
44. विज्ञातमर्थमवलम्ब्य अन्येषु व्याप्तया तथविधानां वितर्कणं ऊहः ।
45. उक्तियुक्तिभ्यां विरुद्धादर्थात् प्रत्यवायसम्भावनया व्यावर्तनं अपोहः ।
46. अथवा सामान्यज्ञानं ऊहः, विशेषज्ञानं अपोहः ।
47. विज्ञानोहापोहानुगमविशुद्धमिदमित्थमेवेति निश्चयः तत्त्वाभिनिवेशः ।
48. याः समधिगम्यात्मनो हितमवैति, अहितं चापोहति ताः विद्याः ।
49. आन्वीक्षिकी त्रयी वार्ता दण्डनीतिरिति चतस्रो राजविद्याः ।
50. अधीयानो ह्यान्वीक्षिकीं कार्याकार्याणां बलाबलं हेतुभिर्विचारयति, व्यसनेषु न विषीदति, नाभ्युदयेन विकार्यते, समधिगच्छति च [1]प्रज्ञावाक्यक्रियावैशारद्यम् ।
51. त्रयीं पठन् वर्णाचारेष्वतीव [2] प्रगल्भते, जानाति च समस्तामपि धमाधर्मस्थितिम् ।
52. युक्तितः प्रवर्तयन् वार्तां सर्वमपि जीवलोकमभिनन्दयति, लभते च स्वयं सर्वानपि कामान् ।
53. यम इवापराधिषु दण्डप्रणयने राज्ञि न प्रजाः स्वमर्यादामतिक्रामन्ति, प्रसीदन्ति च त्रिवर्गफलाः विभूतयः ।
54. अन्वीक्षिकी अध्यात्मविषया, त्रयी वेदयज्ञादिषु, वार्ता कृषिकर्मादिषु, दण्डनीतिः साधुपालने दुष्टनिग्रहे च ।
55. विद्यावृद्धसेवायामुत्सहेत ।
56. अजातविद्यावृद्धसंयोगो हि राजा निरङ्कुशो गज इव सद्यो विनश्यति ।
57. अनधीयानोऽप्यान्वीक्षिकीं विशिष्टजनसंसर्गात् परां व्युत्पत्तिमवाप्नोति ।
58. अन्यैव खलु छाया उपजलतरूणाम् ।
59. वंशवृत्तविद्याभिजनविशुद्धा हि राज्ञामुपाध्यायाः ।
60. शिष्टेषु नीचैराचरन्नरपतिः इह लोके स्वर्गे च महीयते ।

---

[1] विचारवचनकर्मसु पाटवम्. [2] समर्थो भवति.

61. राजा हि परमं दैवतम् । नासौ कस्मैचित् प्रणमति अन्यत्र गुरुजनेभ्यः ।
62. वरमज्ञानं, नाशिष्टजनसेवया विद्या ।
63. अलं तेनामृतेन, यत्रास्ति विषसंसर्गः ।
64. गुरुजनशीलमनुसरन्ति प्रायेण शिष्याः ।
65. नवेषु मृद्भाजनेषु लग्नः संस्कारः ब्रह्मणाप्यन्यथा कर्तुं न शक्यते ।
66. अन्ध इव वरं परप्रणेयो राजा, न ज्ञानलवदुर्विदग्धः ।
67. नीलीरक्ते वस्त्रे इव को नाम दुर्विदग्धे राज्ञि रागान्तरमाधत्ते ?
68. यथार्थवादो विदुषां श्रेयस्करः[1] यदि न राजा गुणप्रद्वेषी ।
69. वरमात्मनो मरणं, नाहितोपदेशः स्वामिषु ।

इति विद्यावृद्धसमुद्देशः

---

## ६. आन्वीक्षिकीसमुद्देशः

1. [2] आत्ममनोमरुत्तत्त्वसमसमायोगलक्षणो ह्यध्यात्मयोगः ।
2. अध्यात्मज्ञो हि राजा सहजशारीरमानसागन्तुमिर्दोषैः न बाध्यते ।
3. इन्द्रियाणि मनो विषयाः (ज्ञानं) भोगायतनमित्यात्मारामाः [3] ।
4. यत्राहमित्यनुपचरितः[4] प्रत्ययः स आत्मा ।
5. असत्यात्मनि, प्रेत्यभावे विदुषां निफलं खलु सर्वमनुष्ठानम् ।
6. यतः स्मृतिः [5]प्रत्यवमर्शनं ऊहापोहौ शिक्षालापक्रियाग्रहणं च भवति तन्मनः ।
7. आत्मनः विषयानुभवद्वाराणि इन्द्रियाणि ।
8. शब्दस्पर्शरूपरसगन्धा विषयाः ।
9. [6] समाधीन्द्रियाभ्यां [7] विप्रकृष्टसंनिकृष्टावबोधः ज्ञानम् ।
10. सुखं प्रीतिः ।
11. तत् सुखमपि न सुखं, यत्र नास्ति मनोनिर्वृतिः ।

---

[1] राज्ञि इत्यादिः. [2] आत्मादीनां समसमायोगः–समशक्त्या ऐकमुख्यम्. [3] आत्मनो रमणस्थानानि. [4] उपचरितत्वानुपचरितत्वे तत्तत्स्वनुभवगम्ये. [5] चिन्ता. [6] समाधिः योगशक्तिः. [7] विप्रकृष्टं–परोक्षम्, संनिकृष्टं–प्रत्यक्षम्. यथासंख्यं विवक्षितम्.

12. अभ्यासाभिमानसंप्रत्ययविषयाः सुखस्य कारणानि ।
13. क्रियातिशयः परिपाकहेतुः अभ्यासः ।
14. [1] प्रश्रयसत्कारादिलाभेन आत्मनः उत्कर्षसंभावनं अभिमानः ।
15. अतद्गुणे वस्तुनि तद्गुणत्वेनाभिनिवेशः संप्रत्ययः ।
16. इन्द्रियमनस्संतर्पणो भावो विषयः ।
17. दुःखं अप्रीतिः ।
18. तद्दुःखमपि न दुःखं, यत्र न संक्लिश्यते मनः ।
19. दुःखं चतुर्विधं—सहजं दोषजं आगन्तुकं अन्तरङ्गजं चेति ।
20. सहजं क्षुत्तृषा[2]मनोभूभवम् ।
21. दोषजं वातपित्तकफवैषम्यसम्भूतम् ।
22. आगन्तुकं वर्षातपादिजनितम् ।
23. न्यक्कारावज्ञेच्छाविघातादिसमुत्थं अन्तरङ्गजम् ।
24. न तस्य ऐहिकमामुष्मिकं वा फलमस्ति, यः क्लेशायासाभ्यां भवति विक्लवप्रकृतिः ।
25. स किं पुरुषः? यस्य [3] महाभियोगेषु सुवंशधनुष इवाधिकं न जायते बलम् ।
26. आगामिक्रियाहेतुः अभिलाषो वा इच्छा ।
27. आत्मनः प्रत्यवायेभ्यः प्रत्यावर्तनहेतुः अनभिलाषो वा द्वेषः ।
28. हिताहितप्राप्तिपरिहारहेतुः उत्साहः ।
29. [4] परनिमित्तको भावः प्रयत्नः ।
30. अतिशयाधानं संस्कारः ।
31. अनेककर्माभ्यासवासनावशात् सद्योजातादीनां स्तन्यपिपासादिकं येन क्रियते सोऽपि संस्कारः ।
32. भोगायतनं शरीरम् ।
33. ऐहिकव्यवहारप्रसाधनपरं लोकायतिकं मतम् ।
34. अधीतलोकायतमतो हि राजा राष्ट्रकण्टकानुच्छेत्तुं [5]कल्पते ।
35 न खल्वेकान्ततो यतीनामप्यनवद्याऽस्ति क्रिया ।
36. [6] एकान्तेन कारुण्यपरः करतलगतमप्यर्थं रक्षितुं न क्षमः ।

---

[1] प्रश्रयः—स्वसंनिधौ अन्यैः विनयप्रदर्शनम्. [2] मनोभूः—कामः. [3] विपत्सु रणेषु च.
[4] असाधितांशसाधनाय मनोयोगः [5] शक्तो भवति. [6] केवलम्.

37. प्रशमैकचित्तं को नाम न परिभवति ? ।
38. अपराधिषु प्रशमः यतीनां भूषणम्, न महीपतीनाम् ।
39. धिक् ! तं पुरुषम्, यस्यात्मशक्त्या न स्तः कोपप्रसादौ ।
40. स जीवन्नपि मृत एव, यो न विक्रामति प्रतिकूलेषु ।
41. भस्मनीव निस्तेजसि को नाम निश्शङ्कं पदं न दधाति ?
42. तत् पापमपि न पापं, यत्र महान् धर्मानुबन्धः[1]; अन्यथा पुनः राज्यमपि नरकाय स्यात् ।
43. बन्धनान्तो नियोगः[2] ।
44. विपदन्ता खलमैत्री ।
45. मरणान्तः स्त्रीषु विश्वासः ।

इत्यान्वीक्षिकीसमुद्देशः

## ७. त्रयीसमुद्देशः

1. चत्वारो वेदाः, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति षडङ्गानि,[3] इतिहासपुराणन्यायमीमांसाधर्मशास्त्राणि चेति चतुर्दश विद्यास्थानानि (त्रयी) ।
2. त्रयीतः खलु वर्णाश्रमाचाराणां धर्माधर्मव्यवस्था ।
3. त्रयीत एव स्वस्वपक्षानुरागप्रवृत्ताः सर्वेऽपि[4] समयाः लोकव्यवहारेष्वधिक्रियन्ते ।
4. धर्मशास्त्राणि स्मृतयश्च वेदार्थसङ्ग्रहरूपत्वाद्वेदा एव ।
5. अध्ययनं यजनं दानं च ब्रह्मक्षत्रविशां समानो धर्मः ।
6. ब्रह्मक्षत्रविशः त्रयो वर्णा द्विजातयः ।
7. अध्यापनं याजनं प्रतिग्रहश्च ब्राह्मणानामेव ।
8. भूतसंरक्षणं शस्त्राजीवः सत्पुरुषोपकारः दीनोद्धरणं रणेऽपलायनं च क्षत्रियाणाम् ।

---

[1] धर्मप्राप्तिः. [2] अधिकारः. [3] इतिहासपुराणमित्येकम्. [4] तत्तन्मतीयाः.

9. [1] वार्ताजीवनं [2] आवेशिकपूजनं [3] सत्रप्रपापुण्यारामादिनिर्मापणं च वैश्यानाम् ।
10. त्रिवर्णोपजीवनं [4] कारुकुशीलवकर्म शकटोपवाहनं च शूद्राणाम् ।
11. सकृत्परिणयव्यवहाराः सच्छूद्राः ।
12. आचारानवद्यत्वं शुचिरुपस्कारः [5] शारीरशुद्धिश्च करोति शूद्रानपि देवद्विजतपस्विपरिकर्मसु योग्यान् ।
13. [6] आनृशंस्यं अमृषाभाषित्वं परस्वनिवृत्तिः इच्छानियमः प्रतिलोमाविवाहः निषिद्धासु च स्त्रीषु ब्रह्मचर्यं इति सर्वेषां समानो धर्मः ।
14. आदित्यालोक इव धर्मः खलु सर्वसाधारणः, विशेषानुष्ठाने तु नियमः ।
15. निजागमोक्तमनुष्ठानं समस्तयतीनां स्वो धर्मः ।
16. धर्मव्यतिक्रमे यतीनां निजागमोक्तमेव प्रायश्चित्तम् ।
17. यो यस्मिन् देवे श्रद्धावान् स तं देवं प्रतिष्ठापयेत् ।
18. अभक्तैः कृतः पूजोपचारः सद्यः शापाय ।
19. वर्णाश्रमाणां स्वाचारप्रच्युतौ त्रयीतो विशुद्धिः ।
20. स्वस्वधर्मासङ्करः प्रजाः राजानं च त्रिवर्गेणोपसंधत्ते [7] ।
21. स किं राजा, यो न रक्षति प्रजाः ?
22. स्वधर्ममतिक्रामतां सर्वेषां पार्थिवो गुरुः ।
23. परिपालको हि राजा सर्वेषां धर्मषष्ठांशमवाप्नोति ।
24. उञ्छषड्भागप्रदानेन वनस्था अपि तपस्विनः राजानं सम्भावयन्ति—" तस्यैतत् भूयात् योऽस्मान् गोपायति " इति ।
25. तदमङ्गलमपि नामङ्गलं, यत्रास्त्यात्मनो भक्तिः ।
26. संन्यस्याग्निं अग्निपरिग्रहांश्चास्पृशन्नुपासीत ।
27. स्नात्वा प्राग्देवोपासनात् न कञ्चन स्पृशेत् ।
28. देवागारगतः सर्वान् यतीन् आत्मसम्बन्धिनीः जरतीश्च पश्येत् ।

---

[1] क्रयविक्रयव्यवहारैः कृषिगोरक्षणाभ्यां च जीवनम्. [2] अतिथिसत्कारः. [3] सत्रं–नित्यान्नदानस्थानम्. प्रपा–जलदानस्थानम्. [4] उपजीवनं–शुश्रूषा. कारुकर्म–शिल्पक्रिया. कुशीलवकर्म–स्तोत्रकरणम्. [5] उपस्कारः–गृहपात्रसमुदायः. [6] अक्रूरत्वम्. [7] संयोजयति.

29. देवाकारोपेतः पाषाणोऽपि नावमन्येत, किं पुनर्मनुष्यः ?
30. राजशासनस्य मृत्तिकायामिव लिङ्गिषु को नाम विचारः ।
31. स्वयं मलिनोऽपि [1] खलः प्रवर्धयत्येव सितं क्षीरं धेनूनाम् ।
32. न खलु परेषामाचारः स्वस्य पुण्यमारभते, नापि मनोविशुद्धिम् ।
33. दीना प्रकृतिः प्रायेण ब्राह्मणानाम् ।
34. बलात्कारस्वभावः क्षत्रियाणाम् ।
35. निसर्गतः शाठ्यं किरातानाम् ।
36. ऋजुवक्रशीलता[2] सहजा कृषीवलानाम् ।
37. दानावसानः कोपो ब्राह्मणानाम् ।
38. प्रणामावसानः कोपो गुरूणाम् ।
39. प्राणावसानः कोपः क्षत्रियाणाम् ।
40. प्रियवचनावसानः कोपः वणिग्जनानाम् ।
41. विश्वस्तैः सह व्यवहारः वणिजां निधिः ।
42. [3] उद्धारप्रदानेनापि कोपोपशमो वैश्यानाम् ।
43. दण्डभयोपधिभिः वशीकरणं नीचजात्यानाम् ।

इति त्रयीसमुद्देशः

---

## ८. वार्तासमुद्देशः

1. कृषिः पशुपालनं वणिज्या च वार्ता ।
2. वार्तासमृद्धौ हि सर्वाः समृद्धयो राज्ञाम् ।
3. तस्य खलु संसारे सुखं, यस्य कृषिः धेनवः [4]शाकवाटयः [5]सद्मन्युदपानं च ।
4. राज्ञस्तन्त्रपोषणे[6] नियोगिनामुत्सवः, महांश्च कोशक्षयः ।
5. नित्यं हिरण्यव्ययेन मेरुरपि हि क्षीयते ।

---

[1] पिण्याकम्. [2] समयानुसारेणेति शेषः. [3] प्राप्तदारिद्र्यादिकष्टनिवारणेन समुद्धारकस्य कस्यचित् प्रदर्शनेनापीत्यर्थः. [4] शाकाभिवर्धनाय कल्पिता आरामाः. [5] गृहे कूपः. [6] परिवारपोषणे.

6. तत्र सदैव दुर्भिक्षं, यत्र राजा [1]विसाधयति ।
7. समुद्रस्य पिपासायां कुतो हि जगति जलानि ?
8. प्रजानां स्वयं[2]जीवधनमदर्शयतो राज्ञः महती हानिः, मनस्तापः क्षुत्पिपासाऽप्रतीकारात् पापं च ।
9. वृद्धबालव्याधितक्षीणान् पशून् बान्धवानिव पोषयेत् ।
10. अतीव भारः महान् मार्गश्च पशूनां अकाण्डे मरणकारणम् ।
11. शुल्कवृद्धिः बलात्पण्यग्रहणं च देशान्तरभाण्डानामप्रवेशे हेतुः ।
12. काष्ठपात्र्यामेकदैव पदार्थो रध्यते ।
13. तुलामानयोरव्यवस्था व्यवहारं दूषयति ।
14. वणिक्कृतोऽर्घः स्थितान् आगन्तुकांश्च पीडयति ।
15. देशकालभाण्डापेक्षया वा सर्वार्घो भवेत् ।
16. पण्यतुलामानविशुद्धौ राजा स्वयं जागृयात् ।
17. न वणिग्भ्यः सन्ति परे पश्यतोहराः ।
18. स्पर्धया वृद्धं मूल्यं भाण्डेषु राज्ञः, यथोचितं मूल्यं विक्रेतुः ।
19. अल्पद्रव्येण महाभाण्डं गृह्णतः मूल्याविनाशेन तद्भाण्डं राज्ञः ।
20. अन्यायोपेक्षया सर्वे विनश्यन्ति ।
21. चोर[3]चरटान्वयधमन मन्नपधमन राजवल्लभाटविक तलार किराताक्षशालिक नियोगि ग्रामकण्टक वार्द्धुषिका हि राष्ट्रस्य कण्टकाः ।
22. ते हि प्रतापवति कण्टकशोधनाधिकरणज्ञे राज्ञि न प्रभवन्ति ।
23. अन्यायवृद्धितो वार्द्धुषिकाः तन्त्रं कोशं देशं च नाशयन्ति ।
24. कार्याकार्ययोर्नास्ति दाक्षिण्यं वार्द्धुषिकाणाम् ।
25. अप्रियमप्यौषधं पीयते ।
26. अहिदष्टा स्वाङ्गुलिरपि च्छिद्यते ।

इति वार्तासमुद्देशः

---

[1] धान्यसङ्ग्रहं न करोति, आयादधिकं व्ययं करोति च. [2] जीविकाहेतुभूतं धनम्. [3] चरटः गुप्तो दूतः. राज्यान्निःसारितो राजेति केचित्. अन्वयधमनाः चारणादयः. मन्नपा—मापकाः, धमनाः—भाण्डपतेर्मूल्यनिर्णयकाः. तलारः सामन्तराजतयावस्थितः. नियोगिनः तत्तदधिकारिणः. ग्रामकण्टकः कपटप्रधानो गणकादिः. वार्धुषिकः वणिग्बन्धुः. ये च प्रभूतमन्नसङ्ग्रहं कृत्वा दुर्भिक्षं वाञ्छन्ति तेऽपि वार्धुषिकाः

## ९. दण्डनीतिसमुद्देशः

1. चिकित्साऽऽगम इव दोषविशुद्धिहेतुर्दण्डः ।
2. यथादोषं दण्डप्रणयनं दण्डनीतिः ।
3. प्रजापालनाय राज्ञा दण्डः प्रणीयते, न धनार्थम् ।
4. स किं राजा वैद्यो वा? यः स्वजीवनाय प्रजासु दोषमन्वेषयति ।
5. दण्डद्यूताहवमृत विस्मृत चोर पारदारिक प्रजाविप्लवजानि द्रव्याणि न राजा स्वयमुपयुञ्जीत ।
6. दुष्प्रणीतो हि दण्डः कामक्रोधाभ्यां अज्ञानाद्वा सर्वजनविद्वेषं करोति ।
7. अप्रणीतो हि दण्डः मात्स्यन्यायमुद्भावयति ।
8. बलीयानबलं ग्रसत इति हि मात्स्यन्यायः ।

इति दण्डनीतिसमुद्देशः

---

## १०. मन्त्रिसमुद्देशः

1. मन्त्रिपुरोहितसेनापतीनां यो युक्तमुक्तं करोति स [1]अहार्यबुद्धिः ।
2. असुगन्धमपि सूत्रं कुसुमसंयोगात् किं नारोहति देवशिरांसि ?
3. महद्भिः प्रतिष्ठितोऽश्मापि भवति देवः, किं पुनर्मनुष्यः ?
4. तथा चानुश्रूयते— विष्णुगुप्तानुग्रहात्किल अनधिकृतोऽपि चन्द्रगुप्तः साम्राज्यपदमवापेति ।
5. ब्राह्मणक्षत्रियविशामन्यतमं स्वदेशजं आचाराभिजनविशुद्धं अव्यसनिनं अव्यभिचारिणं अधीताखिलव्यवहारतन्त्रं अस्त्रज्ञं [2]अशेषोपधाविशुद्धं च मन्त्रिणं कुर्वीत ।
6. समस्तपक्षपातेषु स्वदेशपक्षपातो [3] महान् ।
7. विषनिषेक इव दुराचारः सर्वान् गुणान् दूषयति ।
8. दुष्परिजनः मोहेन कुतोऽप्यकृत्यान्न जुगुप्सते ।

---

[1] रिपुभिरभेद्या बुद्धिर्यस्य सः [2] धर्मार्थकामभयोपधाभिर्विशुद्धम्. (अर्थशास्त्र-पु. 16) [3] नियोगार्हेषु हेतुष्विति शेषः.

9. सव्यसनसचिवो राजा आरूढव्यालगज इव सुलभापायः ।
10. किं तेन केनापि? यो विपदि नोपतिष्ठते ।
11. [1]पात्रेसमितो हि सुलभो लोकः !
12. किं तस्य भक्त्या? यो न वेत्ति स्वामिनो हितोपायं अहितप्रतीकारं वा ।
13. किं तेन सहायेनास्त्रज्ञेन? यस्यात्मरक्षणेऽप्यस्त्रं न प्रभवति ।
14. धर्मार्थकामभयेषु व्याजेन परचित्तपरीक्षणं उपधा ।
15. अकुलीनेषु नास्त्यपवादाद्भयम् ।
16. [2]अलर्कविषवत् कालं प्राप्य विकुर्वते विजातयः ।
17. तदमृतस्य विषत्वं, यत् खलु कुलीने दोषसम्भवः ।
18. घटप्रदीपवत् तज्ज्ञानं, यत् न परप्रतिबोधाय ।
19. तेषां शस्त्रमिव शास्त्रमपि निष्फलं, येषां प्रतिपक्षदर्शनात् भयमन्वयन्ति चेतांसि ।
20. तच्छस्त्रं शास्त्रं वा आत्मपरिभवाय, यत् न हन्ति परेषां प्रसरम् ।
21. न हि [3]गलिर्बलीवर्दः भारकर्मणि केनापि युज्यते ।
22. मन्त्रपूर्वो हि सर्वोऽप्यारम्भः क्षितिपतीनाम् ।
23. अनुपलब्धस्य ज्ञानं, उपलब्धस्य निश्चयः, निश्चितस्य बलाधानं अर्थद्वैधस्य संशयच्छेदनं, एकदेशदृष्टस्याशेषोपलब्धिरिति मन्त्रसाध्यमेतत् ।
24. अकृतस्यारम्भं आरब्धस्यानुष्ठानं अनुष्ठितस्य विनियोगविशेषसम्पदं च कर्मसु ये कुर्युः ते मन्त्रिणः ।
25. कर्मणामारम्भोपायः पुरुषद्रव्यसम्पत् देशकालविभागः [4]विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः ।
26. [5]आकाशे प्रतिशब्दवति चाश्रये मन्त्रं न कुर्यात् ।
27. मुखविकारकराभिनयाभ्यां प्रतिध्वानेन वा मनःस्थमप्यर्थमभ्यूहन्ति विचक्षणाः ।
28. आ कार्यसिद्धेः मन्त्रो रक्षितव्यः ।

---

[1] यत्र कुत्रापि स्थितो भोजनकाले सिद्धो दृश्यमानः जनः [2] वाताभिभूतः उन्मत्तश्च श्वा अलर्कः. [3] असंमर्दितककुत् गलिः. [4] विनिपातः—आपत्. [5] आवरणशून्ये प्रदेशे.

29. दिवा नक्तं वाऽपरीक्ष्य मन्त्रयमाणस्य अभिमतः प्रच्छन्नो वा भिनत्ति मन्त्रम् ।

30. श्रूयते किल—रजन्यां वटवृक्षे प्रच्छन्नो वररुचिः 'अप्रशिखे' त्यस्य पिशाचेभ्यो वृत्तान्तमुपलभ्य चतुरक्षरैराद्यैः श्लोकमेकं चकारेति[1] ।

31. न तैः सह मन्त्रं कुर्यात्, येषां पक्षीयेष्वपकुर्यात् ।

32. [2]अनायुक्तो मन्त्रकाले न तिष्ठेत् ।

33. श्रूयते हि—शुकसारिकाभ्यामन्यैश्च तिर्यग्भिः मन्त्रभेदः कृत इति।

34. मन्त्रभेदादुत्पन्नं व्यसनं दुष्प्रतिविधेयं स्यात् ।

35. इङ्गितं आकारः मदः (प्रमोदः) प्रमादः निद्रा च मन्त्रभेद-कारणानि ।

36. इङ्गितं अन्यथावृत्तिः ।

37. कोपप्रसादजनिता शारीरवृत्तिः आकारः ।

38. पानस्त्रीसङ्गादिजनितो हर्षः मदः ।

39. प्रमो(मा)दः गोत्रस्खलनादिहेतुः ।

40. अन्यच्चिकीर्षतोऽन्यथा वृत्तिः (वा) प्रमादः ।

41. जल्पाङ्गविकारहेतुः निद्रा ।

42. [3]उद्धृतमन्त्रो न [4]दीर्घसूत्रः स्यात् ।

43. अननुष्ठाने केवलेन किं मन्त्रेण ?

44. न ह्यौषधिपरिज्ञानादेव व्याधिप्रशमः ।

45. नास्त्यविवेकात् परः प्राणिनां शत्रुः ।

46. आत्मसाध्यमन्येन कारयन् औषधमूल्यादेव व्याधिं चिकित्सति ।

47. यो यत्प्रतिबद्धः स तेन सहोदयव्ययी[5] ।

48. स्वामिनाऽधिष्ठितो मेषोऽपि सिंहायते ।

49. मन्त्रकाले मन्त्रिभिर्वादः स्वैरालापश्च न कर्तव्यः ।

50. लघुनोपायेन महतः कार्यस्य सिद्धिः मन्त्रफलम् ।

51. न खलु तथा हस्तेनोत्थाप्यते ग्रावा, यथा दारुणा ।

---

[1] श्लोकश्चायम्—'अनेन तव पुत्रस्य प्रविष्टस्य वनान्तरे । शिखामाकृष्य पादेन खड्गेन निहतं शिरः' इति. [2] अनुक्तः अनाहूतश्च. [3] निर्णीतमन्त्रः. [4] कार्यविलम्बवान्. [5] उदयः अभिवृद्धिः. व्ययः नाशः.

52 स मन्त्री शत्रुः, यः [1]नृपेच्छया अकार्यमपि कार्यरूपतया अनुशास्ति ।

53. वरं स्वामिनो दुःखं, न पुनरकार्योपदेशेन तद्विनाशः ।

54. क्षीरमपिबतो बालस्य किं न क्रियते कपोलहननम् ?

55. मन्त्रिणो राजहृदयत्वात् ते न केनचित्सह संसर्गं कुर्युः ।

56. राज्ञोऽनुग्रहनिग्रहावेव मन्त्रिणामनुग्रहनिग्रहौ ।

57. स दैवस्यापराधः न मन्त्रिणाम्, यत्सुघटितमपि कार्यं विघटेत ।

58. न खल्वसौ राजा, यो मन्त्रिणोऽतिक्रम्य वर्तते ।

59. सुविवेचितान्मन्त्रात् भवत्येव कार्यसिद्धिः, यदि न स्वामिनो दुराग्रहः स्यात् ।

60. अविक्रामतो नीतिः वणिक्खड्गयष्टिरिव[2] ।

61. [3]दृष्टिरिव नीतिः यथावस्थितमर्थमुपलम्भयति ।

62 हिताहितप्राप्तिपरिहारौ तु पुरुषकारायत्तौ ।

63. अकालसहं कार्यं अद्यश्वीनं न कुर्यात् ।

64. कालातिक्रमात् नखच्छेद्यमपि कार्यं भवति कुठारच्छेद्यमच्छेद्यं वा ।

65. को नाम सचेतनः सुखसाध्यं कार्यं कृच्छ्रसाध्यमसाध्यं वा कुर्यात् ?

66 एको मन्त्री न कर्तव्यः ।

67. एको हि मन्त्री निरवग्रहश्चरति, मुह्यति च कृच्छ्रेषु कार्येषु ।

68. द्वावपि मन्त्रिणौ न कर्तव्यौ ।

69. द्वौ हि मन्त्रिणौ संहतौ सह भक्षयतः, विगृहीतौ तं विनाशयतः ।

70. त्रयः पञ्च सप्त वा मन्त्रिणः कार्याः ।

71. विषमपुरुषसङ्घे हि दुर्लभमैकमत्यम् ।

72. बहवो हि मन्त्रिणः परस्परं स्वमतीरुत्कर्षयन्ति, स्वच्छन्दाश्च न विजृम्भन्ते ।

73. यद्बहुगुणं अनपायबहुलं च भवति तत्कार्यमनुष्ठेयम् ।

74. तदेव भुज्यते यदेव [4]परिणमति ।

---

[1] स्वामिनश्छन्दोऽनुरोधार्थम्. [2] वृथेति शेषः. [3] अदोषदूषितं चक्षुरिव. [4] जीर्यति.

75. यथोक्तगुणसमवायिनि एकस्मिन् युगले वा मन्त्रिणि न कोऽपि दोषः।
76. न हि महानप्यन्धसमुदायः रूपमुपलभते।
77. अवार्यवीर्यौ द्वौ धुर्यौ किं महति भारे न नियुज्येते ?
78. बहुसहाये राज्ञि प्रसीदन्ति सर्वे एव मनोरथाः।
79. एको हि पुरुषः केषु केषु नाम कार्येष्वात्मानं विभजते ?
80. किमेकशाखस्य शाखिनो महती भवति च्छाया ?
81. कार्यकाले दुर्लभः पुरुषसमवायः।
82. दीप्ते गृहे कीदृशं कूपखननम् ?
83. न धनं पुरुषसङ्ग्रहात् बहु मन्तव्यम्।
84. सुक्षेत्रेषूप्तं बीजमिव कार्यपुरुषेषु दत्तं धनं शतशः फलति।
85. बुद्धावर्थे युद्धे च ये सहायाः ते कार्यपुरुषाः।
86. खादनवेलायां कः कस्य न सहायः ?
87. श्राद्ध इवाश्रोत्रियस्य, न मन्त्रे मूर्खस्याधिकारोऽस्ति।
88. किं नामान्धः पश्येत् ?
89. न चान्धेनाऽऽकृष्यमाणोऽन्धः समं पन्थानं प्रतिपद्यते।
90. तदन्धवर्तकीयं काकतालीयं वा, यन्मूर्खमन्त्रात् [1]कार्यसिद्धिः।
91. स घुणाक्षरन्यायः, यन्मूर्खेषु मन्त्रकार्यपरिज्ञानम्।
92. अनालोकं लोचनमिव अशास्त्रं मनः कियत् पश्येत् ?
93. स्वामिप्रसादः सम्पदं जनयति, न पुनराभिजात्यं पाण्डित्यं वा।
94. हरकण्ठलग्नोऽपि कालकूटः काल एव।
95 स्ववधाय [2] कृत्योत्थापनमिव मूर्खेषु राज्यभारारोपणम्।
96. अकार्यवेदिनः किं बहुनापि शास्त्रेण ?
97. [3] गुणहीनं धनुः [4] पिञ्जनादपि निकृष्टम्।
98. चक्षुष्मत इव मन्त्रिणोऽपि यथार्थदर्शनमेवात्मगौरवहेतुः।
99. शस्त्राधिकारिणो न मन्त्राधिकारिणः स्युः।
100. क्षत्रियस्य परिहरतोऽप्यायात्युपरि [5]भण्डनम्।
101. शस्त्रोपजीविनां कलहमन्तरेण भक्तमपि भुक्तं न जीर्यति।

---

[1] कादाचित्केति शेषः. [2] आथर्वण्यः अभिचारकृतयः कृत्याः. [3] गुणः=ज्या. [4] पिञ्जनं=शय्यादितूलस्फोटक.(शोधकः) साधनविशेषः. [5] कलहः. अतः क्षत्रियो न मन्त्री कार्य इत्यर्थः.

102. मन्त्राधिकारः स्वामिप्रसादः शस्त्रोपजीवनं चेत्येकैकमपि पुरुष-मुत्सेकयति, किंपुनस्समुदायः ?

103. न [1] लम्पटोऽधिकारी ।

104. मन्त्रिणोऽर्थग्रहणलालसायां मतौ न राज्ञः कार्यमर्थो वा ।

105. वरणार्थं प्रेषित एव यदि कन्यां परिणयति, तदा वरयितुः तप एव शरणम् !

106. स्थाल्येव चेद्भक्तमश्नाति ततः कुतो भोक्तुर्भुक्तिः ?

107. तावत् सर्वोऽपि शुचिर्निस्पृहो वा, यावत् न परवरस्त्रीदर्शन-मर्थागमो वा ।

108. अतिप्रवृद्धः कामः तन्नास्ति यन्न करोति ।

109. श्रूयते किल–कामपरवशः प्रजापतिरात्मदुहितरि, हरिर्गोप-वधूषु, हरश्शन्तनुकलत्रेषु, सुरपतिः गौतमभार्यायां, चन्द्रः बृहस्पतिपत्न्यां च मनश्चकारेति ।

110. अर्थेषूपभोगरहिताः तरवोऽपि साभिलाषाः, किंपुनर्मनुष्याः ?

111. कस्य नाम धनलाभान्न लोभः प्रवर्तते ?

112. स खलु प्रत्यक्षं दैवं, यस्य परस्वेष्विव परस्त्रीषु निःस्पृहं चेतः ।

113. अदुष्टस्य दूषणं सुप्तव्यालप्रबोधनमिव ।

114. सकृद्विघटितं चेतः स्फटिकवलयमिव कः सन्धातुमीश्वरः ?

115. न महताप्युपकारेण चित्तस्य तथाऽनुरागः, यथा अल्पेनाऽप्यपका-रेण विरागो भवति ।

116. [2] सूचीमुखसर्पा इव नापकृत्य विरमन्त्यपराद्धाः ।

117. समायव्ययः कार्यारम्भो [3] राभसिकानाम् ।

118. बहुक्लेशेनाल्पफलः कार्यारम्भो महामूर्खाणाम् ।

119. दोषभयात् कार्यानारम्भः कापुरुषाणाम् ।

120. मृगास्सन्तीति किं कृषिर्न क्रियते ?

121. अजीर्णभयात् किं भोजनं परित्यज्यते ?

122. स खलु किं कोऽपीहाभूदस्ति भविष्यति वा ? यस्य कार्यारम्भेषु [4] प्रत्यूहा न भवन्ति ।

---

[1] स्त्रीधनादिष्वतीव लुब्धः. [2] सूचीमुखाः–दृष्टिविषाः. [3] क्रोधेनानन्दादिना वा अविचार्यैव कार्यकारिणाम्. [4] विघ्नाः. प्रत्यवाया इति–पा.

123. आत्मसंशयेन कार्यारम्भो बालहृदयानाम् ।
124. दूरभीरुत्वमासन्नशूरत्वं च गुणो महापुरुषाणाम् ।
125. जलवन्मार्दवोपेतः पृथूनपि भूभृतो भिनत्ति ।
126. प्रियंवदः शिखीव सदर्पानपि द्विषत्सर्पानुत्सादयति ।
127. स महान्, यो विपत्सु धैर्यमवलम्बते ।
128 [1]उत्तापकत्वं हि सर्वकार्येषु सिद्धीनां प्रथमोऽन्तरायः ।
129. शरद्घना इव न खलु वृथा घनगर्जितं कुर्वन्ति कुलीनाः ।
130. नाविधाय परेषामर्थमनर्थं वा स्वहृदयं प्रकाशयन्ति महानुभावाः।
131. क्षीरवृक्षवत् फलसम्पादक एव महतामालापः ।
132. दुरारोहपादप इव दण्डाभियोगेन फलप्रदो भवति नीचप्रकृतिः ।
133. न स्वभावेन किमपि वस्तु सुन्दरमसुन्दरं वा, किन्तु यद्यस्य प्रकृतितः प्रियं भाति तदेव तस्य सुन्दरम् ।
134. न तथा कर्पूररेणुना प्रीतिः [2]केतकीनां (कीटकानां वा), यथाऽमेध्येन ।
135 अतिक्रोधनस्य प्रभुत्वं अग्नौ पतितं लवणमिव शतधा विशीर्यते ।
136. सर्वान् गुणान्निहन्त्यनुचितज्ञः ।
137. परस्मै मर्मकथनं आत्मविक्रय एव ।
138. तदजाकृपाणीयं यः परेषु विश्वासः ।
139. क्षणिकचित्तः किमपि न साधयति ।
140. स्वतन्त्रः सहसाकारित्वात् सर्वं विनाशयति ।
141 अलसः सर्वकर्मणामनधिकारी ।
142. प्रमादवान् भवत्यवश्यं विद्विषां वशः ।
143. कमप्यात्मनोऽनुकूलं प्रतिकूलं न कुर्यात् ।
144. प्राणादपि [3]प्रत्ययो रक्षितव्यः ।
145. आत्मशक्तिमजानतो विग्रहः क्षयकाले पिपीलिकानां पक्षोत्थानमिव ।
146. कालमलभमानोऽपकर्तरि साधु वर्तेत ।
147. किं नु खलु लोको न वहति मूर्ध्ना दग्धुमिन्धनम् ?
148. नदीरयो हि तीरतरूणामङ्घ्रीन् क्षालयन्नप्युन्मूलयति ।

---

[1] व्याकुलत्वम्. [2] केतकीनां दोहदतया, कीटकानां तु भोज्यतया. [3] विश्वासः.

149. उत्सेकः हस्तगतमपि कार्यं विनाशयति ।

150. नाल्पं महद्वा कार्यमुपायज्ञस्य ।

151. सरित्पूरः सममेवोन्मूलयति तीरजतृणान्द्रुमांश्च ।

152. युक्तमुक्तं वचो बालादपि गृह्णीयात् ।

153. रवेरविषयं किं न प्रकाशयति दीपः ?

154. अल्पमपि हि वातायनविवरं बहूनप्युपलम्भयति[1] ।

155. पतिंवरा इव परार्थाः खलु वाचः ! ताश्च निरर्थकं प्रकाश्यमानाः शपयन्त्यवश्यं जनयितारम ।

156. तत्र युक्तमप्युक्तं अनुक्तसमं, यो न विशेषज्ञः ।

157. स खलु पिशाचकी पातकी वा, यः परेऽनर्थिनि वाचमुदीरयति ।

158. [2]विध्यायतः प्रदीपस्येव नयहीनस्य बुद्धिः (वृद्धिः) ।

159. जीवोत्सर्गः स्वामिपदमभिलषतामेव ।

160. बहुदोषेषु क्षणदुःखप्रदोऽपायः अनुग्रह एव ।

161. स्वामिदोषस्वदोषाभ्यामपहृतवृत्तयः क्रुद्धभीतलुब्धावमानिनः कृत्याः ।

162. अनुवृत्तिरभयं त्यागः सत्कृतिश्च कृत्यानां वशोपायाः ।

163. क्षयलोभविरागकारणानि प्रकृतीनां न कुर्यात् ।

164. सर्वकोपेभ्यः प्रकृतिकोपो गरीयान् ।

165. अचिकित्स्यदोषदुष्टान् खनिदुर्गसेतुबन्धाकरकर्मान्तेषु क्लेशयेत् ।

166. अपराद्धैरपराधकैश्च सह गोष्ठीं न कुर्यात्; ते हि गृहप्रविष्टसर्पवत् सर्वव्यसनानामागमनद्वारम् ।

167. न कस्यापि क्रुद्धस्य पुरतः तिष्ठेत् ।

168. क्रुद्धो हि सर्प इव यमेवाग्रे पश्यति तत्रैव रोषविषमुत्सृजति ।

169. [3]अप्रतिविधातुरागमनात् वरमनागमनम् ।

इति मन्त्रिसमुद्देशः

---

[1] दर्शयति. [2] आसन्नविनाशस्य. [3] समापन्नविपन्निवारणेन कार्यमसाधयतः

## ११. पुरोहितसमुद्देशः

1. पुरोहितं उदितोदितकुलशीलं, षडङ्गे वेदे दैवे निमित्ते दण्डनीत्यां चाभिविनीतं, आपदां दैवमानुषीणां च प्रतिकर्तारं कुर्वीत ।
2. राज्ञो हि मन्त्रिपुरोहितौ मातापितरौ, अतस्तौ न केषुचिद्वाञ्छितेषु विदूरयेत् दुःखयेद्दुर्विनयेद्वा ।
3. अमानुषोऽग्निः अवर्षं अतिवर्षं मारकः दुर्भिक्षं सस्योपघातः जन्तुसर्गः व्याधिः भूतपिशाचशाकिनीसर्पव्यालमूषकक्षोभाश्चेत्यापदः ।
4. शिक्षालापक्रियाक्षमो राजपुत्रः सर्वासु लिपिषु प्रसंख्याने पदप्रमाणप्रयोगकर्मणि नीत्यागमेषु रत्नपरीक्षायां [1]सम्भोगप्रहरणोपवाह्यविद्यासु च साधु विनेतव्यः ।
5. अस्वातन्त्र्यं उक्तकारित्वं नियमो विनीतता च गुरूपासनकारणानि ।
6. व्रतविद्यावयोऽधिकेषु नीचैराचरणं विनयः ।
7. पुण्यावाप्तिः शास्त्ररहस्यपरिज्ञानं सत्पुरुषाभिगम्यत्वं च विनयफलम् ।
8. अभ्यासः कर्मसु कौशलमुत्पादयत्येव, यद्यस्ति तज्ज्ञेभ्यः सम्प्रदायः ।
9. गुरुवचनमनुल्लङ्घनीयं अन्यत्राऽधर्मानुचिताचारऽऽत्मप्रत्यवायेभ्यः ।
10. युक्तमयुक्तं वा गुरुरेव जानाति, यदि न शिष्यः प्रत्यर्थी वादी वा स्यात् ।
11. गुरुजनरोषे अनुत्तरदानं [2]अभ्युपपत्तिश्चौषधम् ।
12. शत्रूणामभिमुखः पुरुषः श्लाघ्यः, न पुनर्गुरूणाम् ।
13. आराध्यं न प्रकोपयेत्, यद्यसावाश्रितेषु कल्याणाशंसी ।
14. बहुभिरुक्तं नातिक्रमितव्यं, यदि नैहिकामुत्रिकफलविलोपः ।
15. सन्दिहानो गुरुमकोपयन् पृच्छेत् ।
16. गुरूणां पुरतः न यथेष्टमासितव्यम् ।
17. नानभिवाद्योपाध्यायाद्विद्यामाददीत, यद्यस्ति जातिव्रताभ्यामाधिक्यं समानत्वं वा ।

---

[1] कामशास्त्रे शस्त्रविद्यायां हस्त्यश्वादिवाहनविद्यायां चेत्यर्थः. [2] सेवा.

18. अध्ययनकाले [1]व्यासङ्गं [2]पारिप्लवं अन्यमनस्कतां च न भजेत् ।
19. सहाध्यायिषु बुद्ध्यतिशयेन नाभ्यसूयेत् ।
20. प्रज्ञयाऽतिशयानो न गुरुमवज्ञायेत ।
21. स किमभिजातः? मातरि यः परुषः, शूरो वा पितरि ।
22. अननुज्ञातो न क्वचिद्व्रजेत् ।
23. मार्गमचलं जलाशयं च नैकोऽवगाहेत ।
24. पितरमिव गुरुमुपचरेत् ।
25. गुरुपत्नीं जननीमिव मन्येत ।
26. गुरुवद्गुरुपुत्रं पश्येत् ।
27. सब्रह्मचारिणि बान्धव इव स्निह्येत् ।
28. ब्रह्मचर्यमाषोडशाद्वर्षात्, ततो [3]गोदानं दारकर्म च ।
29. समविद्यैः सहाधीतं सर्वदाऽभ्यस्येत् ।
30. गृहदौस्थित्यं आगन्तुकानां पुरतो न प्रकाशयेत् ।
31. परगृहेषु हि सर्वोऽपि विक्रमादित्यायते !
32. स खलु महान्, यः स्वकार्येष्विव परकार्येष्वप्युत्सहते ।
33. परकार्येषु को नाम न शीतलः ?
34. राजासन्नः को नाम न साधुः ?
35. अर्थपरेष्वनुनयः केवलं दैन्याय ।
36. को नाम अर्थार्थी प्रणामेन तुष्यति ?
37. आश्रितेषु कार्यतो विशेषकरणेऽपि, प्रियदर्शनालापाभ्यां सर्वत्र समवर्तनं तन्त्रं वर्धयत्यनुरञ्जयति च प्रजाः ।
38. तनुधनादर्थग्रहणं मृतमारणमिव ।
39. अप्रतिविधातरि कार्यनिर्वेदनं अरण्ये रुदितमिव ।
40. दुराग्रहस्य हितोपदेशः बधिरस्याग्रतो गानमिव ।
41. अकार्यज्ञस्य शिक्षणं अन्धस्य पुरतो नर्तनमिव ।
42. अविचारकस्य युक्तिकथनं तुषकण्डनमिव ।
43. नीचेषूपकृतं उदके विशीर्णलवणमिव ।

---

[1] विद्याविरुद्धविविधकर्मस्वासक्तिम्. [2] चाञ्चल्यम्. [3] गावः—केशाः लोमानि वा दीयन्ते—खण्डयन्तेऽत्रेति गोदानं—केशान्ताख्यः द्विजात्यनुष्ठेयः संस्कारभेदः.

44. अविशेषज्ञे प्रयासः शुष्कनदीतरणमिव।
45. परोक्षे किलोपकृतं सुप्तसंवाहनमिव।
46. अकाले विज्ञप्तं ऊषरे कृष्टमिव।
47. उपकृत्योद्घाटनं वैरकरणमिव।
48. अफलवतः प्रसादः काशकुसुमस्येव।
49. गुणदोषावनिश्चित्य अनुग्रहनिग्रहविधानं ग्रहाभिनिवेश इव।
50. उपकारापकारासमर्थस्य तोषरोषकरणं आत्मविडम्बनमिव[1]।
51. ग्राम्यस्त्रीविद्रावणकारि गलगर्जितं ग्रामशूराणां, न रणशूराणाम्।
52. स विभवो मनुष्याणां, यः परोपभोग्यः।
53. स ननु व्याधिः! यः स्वस्यैवोपभोग्यः।
54. स किं गुरुः पिता सुहृद्वा? यः अभ्यसूयागर्भं बहुषु दोषं प्रकाशयन् शिक्षयति।
55. स किं प्रभुः? यः चिरसेवकेष्वेकमप्यपराधं न सहते।

इति पुरोहितसमुद्देशः

---

## १२. सेनापतिसमुद्देशः

1. अभिजनाचारप्रज्ञानुरागसत्यशौचशौर्यसम्पन्नः, प्रभाववान्, बहुबान्धवपरिवारः, निखिलनयोपायप्रयोगनिपुणः, समभ्यस्तसमस्तवाहनायुधलिपिभाषा[2]ऽऽत्मस्वरूपस्थितिः, सकल[3]तन्त्रसामन्ताभिमतः, [4]साङ्ग्रामिकाभिगामिकाकारशरीरः, भर्तुरादेशाभ्युदयहितवृत्तिषु निर्विकल्पः, स्वामिना आत्मवत् मानार्थप्रतिपत्तिराजचिन्हैः सम्भावितः, सर्वक्लेशायाससहः, स्वैः परैश्चाप्रधृष्यप्रकृतिः—इति सेनापतिगुणाः.
2. स्त्रीजितत्वं औद्धत्यं व्यसनिता क्षयव्ययप्रवासोपहतत्वं तन्त्राप्रतीकारः सर्वैस्सहविरोधः परपरीवादः परुषभाषित्वं अनुचितज्ञता

---

[1] विडम्बनं–उपहासः. [2] आत्मा–मनः. एषां स्वरूपं स्थितिश्च समभ्यस्ते येन सः [3] तन्त्रं–कार्यपुरुषसमूहः. [4] योधानभिगन्तुं समर्थः साङ्ग्रामिकः. सुन्दरः आभिगामिकः.

असंविभागित्वं स्वातन्त्र्यात्मसम्भावनोपहतत्वं स्वामिकार्यव्यसनापेक्षा सहकारिकृतकार्यविनाशः राजहितवृत्तिषु चेर्ष्या लुब्धत्वम् इति सेनापतिदोषाः.

स चिरंजीवी राजपुरुषः, यो नगरनापित इवानुवृत्तिपरः सर्वासु प्रकृतिषु.

इति सेनापतिसमुद्देशः

---

## १३. दूतसमुद्देशः

1. अनासन्नेष्वर्थेषु दूतो मन्त्री ।
2. स्वामिभक्तिः अव्यसनिता दाक्ष्यं शुचित्वं अमूर्खता प्रागल्भ्यं प्रतिभानवत्त्वं क्षान्तिः परमर्मवेदित्वं जातिश्चेति प्रथमा दूतगुणाः.
3. [1]स च त्रिविधः—निसृष्टार्थः परिमितार्थः शासनहरश्चेति ।
4. यत्कृतौ स्वामिसन्धिविग्रहौ प्रमाणं सः निसृष्टार्थः, यथा–कृष्णः पाण्डवानाम् .
5. अविज्ञातो दूतः परस्थानं न प्रविशेन्निर्गच्छेद्वा ।
6. मत्स्वामिनमतिसन्धातुकामः परो मां विलम्बयितुमिच्छतीति[2] अविज्ञातोऽपि दूतः अपसरेत् गूढपुरुषानपसर्पयेद्वा ।
7. परेणाशुसंप्रेषणे दूतः कारणं विमृशेत् ।
8. कृत्योपग्रहः अकृत्योत्थापनं सुतदायादावरुद्धोपजापः स्वमण्डलप्रविष्टगूढपुरुषपरिज्ञानं अन्तभूमिपालाटविकसम्बन्धः कोशदेशतन्त्रमित्रावबोधः कन्यारत्नवाहनविनिःस्रावणं स्वाभीष्टपुरुषप्रयोगात्परप्रकृतिक्षोभकरणं च दूतकर्म ।
9. मन्त्रिपुरोहितसेनापतिप्रतिबद्धासजनोपचारविस्रम्भाभ्यां शत्रोरितिकर्तव्यतां अन्तःसारतां च विद्यात् ।
10. स्वयमशक्तः परेणोक्तमनिष्टं सहेत ।
11. गुरुषु स्वामिषु वा परिवादे नास्ति क्षान्तिः ।

---

[1] सः दूतः. [2] ज्ञातं चेदिति शेषः.

12. स्थित्वापि यास्यतोऽवस्थानं केवलमपक्षयहेतुः ।
13. वीरपुरुषपरिवृतः शूरपुरुषान्तरितान् परदूतान् पश्येत् ।
14. श्रूयते हि किल—चाणक्यः तीक्ष्णदूतप्रयोगेणैकं नन्दं जघानेति ।
15. शत्रुप्रहितं शासनमुपायनं च स्वैः अपरीक्षितं नोपाददीत ।
16. श्रूयते हि स्पर्शविषवासिताद्भुतवस्त्रोपायनेन करहाटपतिः कैटभः वसुनामानं राजानं, आशीविषविषधरोपेतरत्नकरण्डकप्राभृतेन च करवालः करालं च जघानेति ।
17. महत्यपकारेऽपि न दूतमुपहन्यात् ।
18. उद्धृतेष्वपि शस्त्रेषु दूतमुखा वै राजानः, तेषा[1]मन्तावसायिनोऽप्यवध्याः, किमङ्ग पुनर्ब्राह्मणाः !
19. अवध्यभावात् दूतः सर्वमेव जल्पति ।
20. कः सुधीः दूतवचनात् परोत्कर्षं स्वापकर्षं च मन्येत ?
21. तदाशयरहस्यपरिज्ञानार्थं परदूतः स्त्रीभिः उभयवेतनैः तद्गुणाचारशीलानुवर्तिभिर्वा प्रणिधातव्यः ।
22. चत्वारि वेष्टनानि खड्गमुद्रा च प्रतिपक्षलेखानाम् ।

इति दूतसमुद्देशः

## १४. चारसमुद्देशः

1. स्वपरमण्डलकार्याकार्यावलोकने चाराश्चक्षूंषि क्षितिपतीनाम् ।
2. अलौल्यं अमान्द्यं अमृषाभाषित्वं अभ्यूहकत्वं चेति चारगुणाः ।
3. तुष्टिदानमेव चाराणां वेतनम् ।
4. ते हि तल्लोभात् स्वामिकार्येष्वतीव त्वरन्ते ।
5. सन्दिग्धविषये त्रयाणामेकवाक्ये सम्प्रत्ययः ।
6. अनपसर्पो हि राजा स्वैः परैश्चातिसन्धीयेत ।
7. किमस्त्ययामिकस्य निशि कुशलम् ?
8. कापटिकोदास्थित गृहपतिक वैदेहक तापस कितवकिराताक्षशालिक यमपट्टिकाहितुण्डिकशौण्डिकशौभिक पाटच्चर विटविदूषक पीठ-

---

[1] अन्तावसायिनः चण्डालाः.

मर्दक नटनर्तक गायक वादक वाग्जीवकगणक शाकुनिक भिषगैन्द्रजालिक नैमित्तिक सूदारालिक संवाहक तीक्ष्ण क्रूर रसद जड मूक बधिरान्धच्छद्मानः स्थायियायिभेदेनापसर्पवर्गः।

9. परमर्मज्ञः प्रगल्भः छात्रः कापटिकः।

10. यं कञ्चन समयमास्थाय प्रतिपन्नाचार्याभिषेकः प्रभूतान्तेवासी प्रज्ञातिशययुक्तः राजपरिकल्पितवृत्तिः उदास्थितः.

11. गृहपतिकवैदेहकौ ग्रामकूटश्रेष्ठिनौ।

12. बाह्यव्रतविद्याभ्यां लोकविडम्बनहेतुः तापसः।

13. कितवः द्यूतकारः।

14. अल्पाखिलशरीरावयवः किरातः।

15. आक्षशालिकः प्रतिगृहं चित्रपटदर्शी।

16. यमपट्टिकः गलत्रोटिकः।

17. अहितुण्डिकः सर्पक्रीडाप्रसरः।

18. शौण्डिकः कल्पपालः।

19. शौभिकः जपायां काण्डपटावरणेन नानारूपदर्शी।

20. पाटच्चरः चेरो बन्दिकारो वा।

21. व्यसनिनां प्रेषणाजीवः विटः।

22. सर्वेषां प्रहसनपात्रं विदूषकः।

23. कामशास्त्राचार्यः पीठमर्दकः।

24. गीताङ्गप्रावरणेन नृत्यवृत्त्याजीवी नटः।

25. नाटकाभिनयरङ्गनर्तकः नर्तकः।

26. रूपाजीवावृत्त्युपदेष्टा गायकः।

27. गीतप्रबन्धगतिविशेषवादकःचतुर्विधातोद्यप्रचारकुशलः वादकः।

28. वाग्जीवकः वैतालिकः सूतो वा।

29. गणकः सङ्ख्यावित् दैवज्ञो वा।

30. शाकुनिकः शकुनवक्ता।

31. भिषक् आयुर्वेदवित् वैद्यः शस्त्रकर्मविच्च।

32 ऐन्द्रजालिकः तन्त्रयुक्त्या मनोविस्मयकरः मायावी च।

33. नैमित्तिकः लक्ष्यवेधी दैवज्ञो वा।

34. माहानसिकः सूदः।

35. विचित्रभक्ष्यप्रणेता आरालिकः।

36. अङ्गमर्दनकलाकुशलः भारवाहको वा संवाहकः ।

37. द्रव्यहेतोः कृच्छ्रेण कर्मणा यः जीवितविक्रयी सः तीक्ष्णः असहनो वा ।

38. सदा बन्धुषु निःस्नेहः क्रूरः ।

39. रसदः विषप्रयोक्ता ।

40. लोकव्यवहारानभिज्ञः जडः ।

41. जिह्वाश्रवणनयनहीनाः मूकबधिरान्धाः ।

इति चारसमुद्देशः

---

## १५. विचारसमुद्देशः

1. नाविचार्य किमपि कार्यं कुर्यात् ।

2. प्रत्यक्षानुमानागमैः यथावस्थितवस्तुव्यवस्थापनहेतुः विचारः ।

3. स्वयं दृष्टं प्रत्यक्षम् ।

4. न ज्ञानमात्रात् प्रेक्षावतां प्रवृत्तिर्निवृत्तिर्वा ।

5. स्वयं दृष्टेऽपि मतिर्मुह्यति संशेते विपर्यस्यति वा, किं पुनर्न परोपदिष्टे ।

6. स खलु विचारज्ञः, यः प्रत्यक्षेणोपलब्धमपि साधु परीक्ष्यानुतिष्ठति ।

7. अतिरभसात् कृतानि कार्याणि कं नामानर्थं न जनयन्ति ?

8. अविचार्याचरिते कर्मणि पश्चात् प्रतिविधानं गतोदके सेतुबन्धनमिव ।

9. कर्मसु कृतेनाकृतावेक्षणमनुमानम् ।

10. सम्भावितैकदेशः अवशिष्टं विद्यात् ।

11. आकारः शौर्यं प्रज्ञासम्पत्तिः आयतिः विनयश्च राजपुत्राणां भाविनो राज्यस्य लिङ्गानि ।

12. प्रकृतेर्विकृतिदर्शनं हि प्राणिनां भविष्यतः शुभस्याशुभस्य च लिङ्गम् !

13. एकस्मिन् कर्मणि दृष्टबुद्धिः पुरुषकारः कथं नाम न कर्मान्तरे समर्थः ?

14. आप्तपुरुषोपदेशः आगमः ।
15. यथानुभूतानुमितश्रुतार्थाविसंवादिवचनः पुमान् आप्तः ।
16. सावागुक्ताप्यनुक्तसमा, यत्र नास्ति तद्युक्तिः ।
17. वक्तुर्गुणगौरवात् वचनगौरवम् , न स्वतः ।
18. किं मितम्पचेषु धनेन ? चण्डालसरसि वा जलेन ? यत्र सतां नोपभोगः ।
19. लोकस्तु गतानुगतिक , यतोऽसौ सदुपदेशिनीमपि कुट्टिनीं धर्मेषु न तथा प्रमाणयति, यथा गोघ्नमपि ब्राह्मणम् ॥

इति विचारसमुद्देशः

---

## १६. व्यसनसमुद्देशः

1. व्यस्यति प्रत्यावर्तयत्येनं श्रेयसः इति व्यसनम् ।
2. व्यसनं द्विविधं सहजमाहार्यं च ।
3. सहजं व्यसनं धर्मसम्भूताद्भुताभ्युदयहेतुभिः अधर्मजनितमहाप्रत्यवायप्रतिपादनैरुपाख्यानैः योगपुरुषैश्च प्रशममेत् ।
4. परचित्तानुकूल्येन तदभिलषितेषु व्यसनेषु उपायेन विरक्तिजननहेतवः योगपुरुषाः ।
5. शिष्टसंसर्गदुर्जनासंसर्गाभ्यां पुरातनमहापुरुषचरितोत्थिताभिश्च कथाभिः आहार्यं व्यसनं प्रतिबध्नीयात् ।
6. स्त्रियं अतिभजमानः भवत्यवश्यं तृतीयाप्रकृतिः ।
7. सौम्यधातुक्षयः सर्वधातुक्षयं करोति ।
8. पानशौण्डः चित्तभ्रमात् मातरमप्यभिलषति ।
9. मृगयासक्तिः स्तेनव्यालद्विषद्दायादानां आमिषं पुरुषं करोति ।
10. नास्त्यकृत्यं द्यूतासक्तस्य, मातर्यपि हि मृतायां दीव्यत्येव हि कितवः !
11. पिशुनः सर्वेषामविश्वासं जनयति ।
12. दिवास्वापः सुप्तव्याधिव्यालानां उत्थापनदण्डः, सकलकार्यान्तरायश्च ।

13. न परपरिवादात् परं सर्वविद्वेषणभेषजमस्ति ।
14. तौर्यत्रिकासक्तिः कं नाम प्राणार्थमानैर्न वियोजयति ?
15. मृषोद्या नाविधाय कमप्यनर्थं विरमति ।
16. अतीवेर्ष्यालुं पुरुषं स्त्रियः त्यजन्ति घ्नन्ति वा ।
17. परपरिग्रहाभिगमः कन्यादूषणं वा साहसं दशमुखदाण्डक्यादिविनाशहेतुः प्रसिद्धमेव ।
18. यत्र नाहमित्यध्यवसायः तत्साहसम् ।
19. अर्थदूषणः कुबेरोऽपि भवति भिक्षाभाजनम् ।
20. अतिव्ययः अपात्रव्ययश्च अर्थस्य दूषणम् ।
21. हर्षामर्षाभ्यां अकारणं तृणाङ्कुरमपि नोपहन्यात्, किं पुनर्मनुष्यम् ।
22. श्रूयते हि—निष्कारणं भूतावमानिनौ वातापिरिल्वलश्चासुरौ अगस्त्यस्यात्यासादनाद्विनेशतुरिति ।
23. यथादोषं कोटिरपि गृहीता न दुःखायते, अन्यायेन तृणशलाकापि गृहीता प्रजाः खेदयति ।
24. तरुच्छेदेन फलोपभोगः सकृदेव ।
25. प्रजाविभवो हि स्वामिनः द्वितीयं भाण्डागारं, अतो युक्तितः तमुपयुञ्जीत ।
26. राजपरिगृहीतं तृणमपि परेण गृहीतं चेत् काञ्चनीभवति, जायते च पूर्वसंचितस्यार्थस्यापहारः ।
27. वाक्पारुष्यं शस्त्रपातादपि विशिष्यते ।
28. जातिवयोवृत्तविद्याविभवानुचितं हि वचनं वाक्पारुष्यम् ।
29. स्त्रियं अपत्यं भृत्यं वा तथोक्त्या विनयं ग्राहयेत्—यथा हृदयप्रविष्टात् शल्यादिव वचनतो न ते दुर्मनायन्ते ।
30. वधः क्लेशः अर्थहरणं वा व्युत्क्रमेण दण्डपारुष्यम् ।
31. एकेनापि व्यसनेनोपहतः चतुरङ्गवानपि राजा विनश्यति, किं पुनर्नाष्टादशभिः ?

इति व्यसनसमुद्देशः

## १७. स्वामिसमुद्देशः

1. धार्मिकः कुलाचाराभिजनविशुद्धः प्रतापवान् नयानुगतवृत्तिश्च स्वामी।
2. कोपप्रसादयोः स्वतन्त्रता आत्मातिशयवर्धनं वा यस्यास्ति स स्वामी.
3. स्वामिमूलाः सर्वाः प्रकृतयो भवन्त्यभिप्रेतप्रयोजनाः, नास्वामिकाः
4. अस्वामिकाः प्रकृतयः समृद्धा अपि निस्तरितुं न शक्नुवन्ति।
5. अमूलेषु तरुषु किं कुर्यात् पुरुषप्रयत्नः ?
6. असत्यवादिनो विनश्यन्ति सर्वे गुणाः।
7. वञ्चकेषु न परिजनो न धनं नापि चिरमायुः।
8. स प्रियो लोकानां यो ददात्यर्थम्।
9. स दाता महान्, यस्य नास्ति प्रत्याशोपहतं चेतः।
10. इयमुच्चधियामलौकिकी
    महती कापि कठोरचित्तता।
    उपकृत्य भवन्ति निस्पृहाः
    परतः प्रत्युपकारभीरवश्च॥
11. प्रत्युपकर्तुरुपकारः सवृद्धिकोऽर्थन्यास इव।
12. तज्जन्मान्तरेषु न केषामृणं? येषामप्रत्युपकारि परार्थानुभवनम्।
13. किं तया गवा? या न क्षरति क्षीरम्, न गर्भिणी वा।
14. किं तेन स्वामिप्रसादेन? यो न पूरयत्याशाम्।
15. क्षुद्रपरिषत्कः सर्पवानाश्रय इव न कस्यापि सेव्यः।
16. अकृतज्ञस्य व्यसनेषु न सन्ति सहायाः।
17. अविशेषज्ञः शिष्टैर्नाश्रीयते।
18. [1] आत्मम्भरिः कलत्रेणापि त्यज्यते।
19. अनुत्साहः सर्वव्यसनानां आगमनद्वारम्।
20. शौर्यं अमर्षः शीघ्रकारित्वं तत्कर्मप्रवीणत्वमित्युत्साहगुणाः।
21. अन्यायप्रवृत्तेर्न चिरं सम्पदः[2]।
22. [3] यत्किञ्चिनकारी स्वैः परैर्वा हन्यते।

---

[1] केवलं स्वोदरपूरकः. [2] किन्तु क्षणभङ्गुराः. [3] स्वेच्छाप्रवृत्तः.

23. आज्ञाफलमैश्वर्यम्।
24. राजाज्ञा हि सर्वेषामलङ्घ्यः प्राकारः।
25. आज्ञाभङ्गकारिणं सुतमपि न सहेत।
26. कस्तस्य चित्रगतस्य च राज्ञो विशेषः? यस्याज्ञा नास्ति।
27. [1]राजाज्ञावरुद्धस्य पुनस्तदाज्ञाऽप्रतिपादने उत्तमः साहसदण्डः; सम्बन्धाभावे तद्दण्डदातुश्च।
28. परमर्मस्पर्शकरं अश्रद्धेयं असत्यं अतिमात्रं च न भाषेत।
29. वेषमाचारं वाऽनभिजानन् न कमपि भजेत।
30. प्रभौ विकारिणि को नाम न विकुरुते?
31. अधर्मपरे राज्ञि को नाम नाधर्मपरः?
32. राज्ञावज्ञातः सर्वैरवज्ञायते।
33. पूजितं हि पूजयन्ति लोकाः!
34. प्रजाकार्यं स्वयमेव पश्येत्।
35. यथावसरमप्रतीहारसंगं द्वारं कारयेत्।
36. दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते, अतिसन्धीयते च द्विषद्भिः।
37. वैद्येषु श्रीमतां व्याधिवर्धनादिव न नियोगिषु भर्तुर्व्यसनादपरोऽस्ति जीवनोपायः।
38. कार्यार्थिनः पुरुषान् लंचलुंचनिशाचराणां भूतबलिं कुर्यात्।
39. लञ्चो हि सर्वपातकानामागमनद्वारम्।
40. मातुः स्तनमपि लुनन्ति लञ्चोपजीविनः।
41. लञ्चेन कार्यकारिभिः उरभ्रवत् स्वामी विक्रीयते।
42. लञ्चेन राज्ञोऽर्थलाभः प्रासादविध्वंसनेन लोहकीलकलाभ इव।
43. राज्ञो लञ्चेन कार्यकरणं कस्य नाम कल्याणम्?
44. देवतापि यदि चोरेषु मिलति, कुतः प्रजानां कुशलम्?
45. लञ्चेनार्थोपायं दर्शयन् देशं कोशं मित्रं तन्त्रं च भक्षयति।
46. राज्ञोऽन्यायकरणं, समुद्रस्य मर्यादालङ्घनं, आदित्यस्य तिमिरपोषणं, मातुः स्वापत्यभक्षणमिति कलिकालविजृम्भितानि।
47. राजा विशिष्टस्य कालस्य कारणम्।

---

[1] अपराधवशात्कारागृहादौ निक्षिप्तोऽपि पुनस्तदाज्ञोल्लङ्घनं कुर्याच्चेत्.

48. न्यायतः परिपालके राज्ञि प्रजानां कामदुघा भवन्ति सर्वा दिशः, काले च वर्षति मघवान्, सर्वा[1]श्चेतयः प्रशाम्यन्ति, राजानमनुवर्तन्ते सर्वेऽपि लोकपालाः; तेनेमं मध्यममप्युत्तमं लोकपालं राजानमाहुः ।

49. अव्यसनेन क्षीणधनान् कुटुम्बिनः मूलधनप्रदानेन सम्भावयेत् ।

50. राज्ञो हि समुद्रावधिर्मही स्वकुटुम्बं, कलत्राणि तु वंशवर्धनक्षेत्राणि ।

51. अर्थिनां [2]उपायनं अप्रतिकुर्वाणो न गृह्णीयात् ।

52. आगन्तुकैः असहनैश्च सह [3]नर्म न कुर्यात् ।

53. पूज्यैस्सह नाधिरुह्य[4] वदेत् ।

54. भर्तुमशक्यं अप्रयोजनं च जनं नाऽऽशया क्लेशयेत् ।

55. पुरुषो हि न पुरुषस्य दासः, किन्तु वित्तस्य ।

56. को नाम धनहीनो न लघुः ?

57. सर्वधनेषु विद्यैव धनं प्रधानं, अनपहार्यत्वात् सहानुयायित्वाच्च ।

58. सरित् समुद्रमिव नीचमुपगतापि विद्या दुर्दर्शमपि राजानं सङ्गमयति, फलन्तु भाग्यानां व्यापारः ।

59. सा खलु विद्या विदुषां कामधेनुः, यतो भवति समस्तजगतः स्थितिज्ञानम् ।

60. लोकव्यवहारज्ञो हि सर्वज्ञः, अन्यस्तु प्राज्ञोऽप्यवज्ञायत एव ।

61. ते खलु प्रज्ञापारमिताः पुरुषाः, ये कुर्वन्ति परेषां प्रतिबोधनम् ।

62. अनुपयोगिना महताऽपि किं जलधिजलेन ?

इति व्यसनसमुद्देशः

---

## १८. अमात्यसमुद्देशः

1. चतुरङ्गयुतोऽपि नानमात्यो राजास्ति, किं पुनरन्यः ?

2. नैकस्य कार्यसिद्धिरस्ति, नैकं चक्रं परिभ्रमति ।

---

[1] अतिवृष्टिरनावृष्टिः शलभा मूषिकाः खगाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ॥ [2] संतोषनिमित्तं उपहारम् . [3] परिहासान् केलीश्च. [4] आसन्द्यादिकमारुह्य.

3. किमवातः सेन्धनोऽपि वह्निर्ज्वलति ?
4. स्वकर्मोत्कर्षापकर्षाभ्यां दानमानाभ्यां राज्ञा सह सम्पत्तिविपत्ती येषां तेऽमात्याः ।
5. आयो व्ययः स्वामिरक्षा तन्त्रपोषणं चामात्यानामधिकारः ।
6. आयव्ययमुखयोर्मुनिकमण्डलुरेव निदर्शनम्[1] ।
7. आयः द्रव्यस्योत्पत्तिमुखम् ।
8. यथास्वामिशासनं अर्थस्य विनियोगः व्ययः ।
9. आयमनालोच्य व्ययमानः वैश्रवणोऽप्यवश्यं [2]श्रमणायते ।
10. राज्ञः शरीरं वाक्यं धर्मः कलत्रं अपत्यानि च स्वामिशब्दार्थाः[3] ।
11. तन्त्रं चतुरङ्गबलम् ।
12. तीक्ष्णं अशुचिं व्यसनिनं अशुद्धाभिजनं बलवत्पक्षं अशक्यप्रत्यावर्तनं अतिव्ययशीलं अल्पायं अन्यदेशायातं [4]अतिचिक्कणं चामात्यं न कुर्वीत ।
13. तीक्ष्णोऽभियुक्तः स्वयं म्रियते, मारयति वा स्वामिनम् ।
14. बलवत्पक्षः नियोग्यभियुक्तः जलकल्लोल इव मत्तगज इव च समूलं नृपाङ्घ्रिमुन्मूलयति ।
15. अल्पायो महाव्ययः राजार्थं भक्षयति ।
16. अल्पायमुखः महाजनं [5]परिग्रहं च पीडयति ।
17. नागन्तुकेष्वर्थाधिकारः प्राणाधिकारो वास्ति, यतस्ते स्थित्वाऽपि गन्तारोऽपकर्तारो वा ।
18. स्वदेशजेष्वर्थः कूपे पतित इव कालान्तरेऽपि लब्धुं शक्यते ।
19. अतिचिक्कणादर्थलाभः पाषाणाद्वल्कलोत्पाटनमिव ।
20. सोऽधिकारी, यः सति दोषे स्वामिना (नं) सुखेन निगृहीतुं अनुगृहीतुं वा शक्यते ।
21. ब्राह्मणः क्षत्रियः सम्बन्धी वा नाधिकारी कर्तव्यः ।
22. ब्राह्मणः जातिबलात् सिद्धमप्यर्थं कृच्छ्रेण प्रयच्छति, न प्रयच्छति वा ।

---

[1] यथा कमण्डलुः पृथुबुध्नोदरः अल्पग्रीवः विस्तृतमुखश्च जलस्य ग्रहणं त्वरया कुर्वन् विसर्गे नलिकारूपेण शनैश्शनैर्विसृजति एवं आयव्यययोरपि कार्यमिति भावः. [2] दरिद्रभिक्षुसदृशो भवति. [3] एष्वन्यतमविरोधेऽपि स्वामिविरोध एवेति भावः. [4] अतिमृदुस्वभावम्. [5] परिवारम्.

23. क्षत्रियोऽभियुक्तः खड्गं दर्शयति ।

24. ज्ञातिभावेनातिक्रम्य [1] सामवायिकान् सर्वमप्यर्थं ग्रसते बन्धुः सम्बन्धी ।

25. सम्बन्धः त्रिविधः—श्रौतो मौखो (मैत्रः) यौनश्चेति ।

26. सहदीक्षितः सहाध्यायी पितृपैतामहाद्यागतो वा श्रौतः ।

27. मुखेन परिज्ञातो मौखः । (आत्मना प्रतिपन्नो मैत्रः इत्यादिः)

28. सयोनेर्जातो यौनः ।

29. वाचिके सम्बन्धे नास्ति [2] सम्बन्धान्तरानुवृत्तिः ।

30. न तं कमप्यधिकारिणं कुर्यात्, सत्यपराधे यमुपहत्यानुशयीत [3] ।

31. [4] मान्यधिकारी राजाज्ञामवज्ञाय [5] निरवग्रहश्चरति ।

32. चिरसेवको नियोगी नापराधेऽप्याशङ्कते ।

33. उपकर्ताऽधिकारी उपकारमेव ध्वजीकृत्य सर्वमेवार्थमवलुम्पति ।

34. सहपांसुक्रीडितोऽमात्यः अतिपरिचयात् स्वयमेव राजायते ।

35. अन्तर्दुष्टो नियुक्तः सर्वमनर्थमुत्पादयति, शकुनिशकटालौ [6] अत्र दृष्टान्तौ ।

36. सोऽधिकारी चिरं नन्दति, यः स्वामिप्रसादेन नोत्सेकं प्राप्नोति ।

37. सुहृदि नियोगिनि भवत्यवश्यं धनमित्रत्वयोर्नाशः ।

38. मूर्खस्य नियोगे भर्तुर्धर्मार्थयशसां सन्देहः, निश्चितौ चानर्थनरकपातौ ।

39. किं तेन परिच्छदेन ? यत्र आत्मक्लेशेनैव सुखं स्वामिनः ।

40. का नाम [7] निर्वृतिः स्वयं ऊढतृणभोजिनो गजस्य ?

41. अश्वसधर्माणः पुरुषाः कर्मसु नियुक्ताः विकुर्वते, तस्मादहन्यहनि तान् परीक्षेत ।

42. मार्जारेषु दुग्धरक्षणमिव नियोगिषु विश्वासकरणम् ।

43. ' ऋद्धिश्चित्तविकारिणी नियोगिनाम् ' इति सिद्धानामादेशः ।

---

[1] अन्यानधिकारिणः. [2] अपेक्षितेति शेषः. [3] पश्चात्तापादियुक्तो भवेत्. [4] अथान्यानपि कांश्चन, अधिकारे निषिद्धानाह—मानीत्यादिना. मानी=दुरभिमानी. [5] निष्प्रतिबन्धः. [6] दुर्योधनामात्यो हि शकुनिः पाण्डवैस्सहानर्थमुत्पाद्य स्वामिनमात्मना सह घातितवान् इति, नन्दमन्त्री शकटालः राज्ञा गुहायां निरुद्धः पश्चात् स्वपदं प्राप्तः चाणक्येन नन्दं घातितवानिति च कथे. [7] सुखम्.

44. सर्वोऽप्यतिसमृद्धो भवत्यायत्यामसाध्यः कृच्छ्रसाध्यः स्वामिपदाभिलाषी वा ।

45. भक्षणं उपेक्षणं प्रज्ञाहीनत्वं उपरोधः प्राप्तार्थाप्रवेशः द्रव्यविनिमयश्चेत्यमात्यदोषाः ।

46 बहुमुख्यमनित्यं च [1]करणं स्थापयेत् ।

47. स्त्रीष्वर्थेषु च मनागप्यधिकारे नान्यजातिसम्बन्धः कार्यः ।

48. स्वपरदेशजत्वावनपेक्ष्यानित्यश्चाधिकारः[2] ।

49. आदायक[3]निबन्धकप्रतिकण्टकनीवीग्राहकराजाध्यक्षाः करणानि ।

50. आयव्ययविशुद्धं द्रव्यं नीवी ।

51. नीवीनिबन्धपुस्तकग्रहणपूर्वकं आयव्ययौ विशोधयेत् ।

52. आयव्ययविप्रतिपत्तौ कुशलकरणकार्यपुरुषेभ्यः तद्विनिश्चयः ।

53. नित्यपरीक्षणं कर्मविपर्ययः [4]प्रतिपत्तिदानं च नियोगिष्वर्थग्रहणोपायाः ।

54. नापीडिता नियोगिनः दुष्टव्रणा इवान्तस्सारमुद्वमन्ति ।

55. पुनःपुनरभियोगः[5] नियोगिषु महीपतीनां [6]वसुधारा ।

56. सकृन्निष्पीडितं स्नानवस्त्रं किं जहाति सार्द्रताम् ?

57. देशमपीडयन् बुद्धिपुरुषकाराभ्यां पूर्वनिबन्धमधिकं कुर्वन् अर्थमानौ लभेत ।

58. यो यत्र कर्मणि कुशलः तं तत्र नियोजयेत् ।

59. न खलु स्वामिप्रसादः सेवकेषु कार्यनिबन्धने हेतुः, किन्तु बुद्धिपुरुषकारावेव ।

60. शास्त्रविदपि अदृष्टकर्मा कर्मसु विषादं गच्छेत्[7]।

61. अनिवेद्य भर्तुर्न कश्चिदारम्भं कुर्यात्, अन्यत्रापत्प्रतीकारेभ्यः ।

62. सहसोपचितार्थः मूलधनमात्रेणावशेषयितव्यः ।

63. नियोगिषु परस्परकलहः भूभुजां निधिः ।

64. नियोगिषु लक्ष्मीः क्षितीश्वराणां द्वितीयः कोशः ।

65. सर्वसंग्रहेषु धान्यसंग्रहो महान्, यन्निबन्धनं जीवितं सकलः प्रयासश्च ।

---

[1] राज्यतन्त्रम्. [2] अधिकारे हि स्थिरीकृतेऽलसः निरवग्रहो वा चरतीति हेतोः. [3] निबन्धकः पुस्तके लेखकः. [4] तस्यैव शिरसि सर्वभारारोपणम्. [5] शासनभयपूर्वकं आह्वानम्. [6] धनराशिदात्रीत्यर्थः. [7] नायं विधिः, किन्तु सम्भावना.

66. न खलु मुखे निक्षिप्तं महदपि द्रव्यं प्राणत्राणाय, यथा धान्यम् !

67. धान्येषु चिरजीविनः [1]कोद्रवाः।

68. अनवं नवेन वर्धयितव्यं व्ययितव्यं च ।

69. लवणसङ्ग्रहः सर्वरसानामुत्तमः ।

70. सर्वरसमप्यन्नमलवणं गोमयायते ॥

इत्यमात्यसमुद्देशः

---

## १९. जनपदसमुद्देशः

1. पशुधान्यहिरण्यसम्पदा राजते=शोभत इति राष्ट्रम् ।

2. भर्तुर्दण्डकोशवृद्धिं दिशति=ददातीति देशः ।

3. विविधवस्तुप्रदानेन स्वामिनः सद्मनि गजान् वाजिनश्च विषिणोति=बध्नातीति विषयः ।

4. सर्वकामदुघत्वेन नरपतिहृदयं मण्डयति=भूषयतीति मण्डलम् ।

5. जनस्य–वर्णाश्रमलक्षणस्य द्रव्योत्पत्तेर्वा पदं=स्थानमिति जनपदः ।

6. निजपतेरुत्कर्षजनकत्वेन शत्रुहृदयं दारयति=भिनत्तीति दरत् (दारकः)।

7. आत्मसमृद्ध्या स्वामिनं सर्वव्यसनेभ्यो निर्गमयति=निर्गमयतीति निगमः ।

8. अन्योन्यरक्षकः खन्याकरद्रव्य[2]नागवनवान् अनतिवृद्धानतिहीनग्रामः बहुसारविचित्रधान्यपण्योत्पत्तिः अदेवमातृकः पशुमनुष्यहितः श्रेणिशूद्रकर्षकप्रायः—इति जनपदगुणाः ।

9. विषतृणोदकोषरपाषाणकण्टकगिरिगर्तगह्वरप्रायभूमिः भूरिवर्षाजीवनः व्याललुब्धकम्लेच्छबहुलः स्वल्पसस्योत्पत्तिः तरुफलाभाव —इति देशदोषाः ।

10. तत्र सदा दुर्भिक्षमेव, यत्र जलदजलेनैव सस्यनिष्पत्तिः, असुकृष्टभूमिकश्चारम्भः ।

[1] 'हारक' इति भाषायां प्रसिद्धाः. [2] नागवनं–हस्तिनां वनम्.

11. क्षत्रियप्राया हि ग्रामाः स्वल्पास्वपि बाधासु प्रतियुध्यन्ते ।
12. म्रियमाणोऽपि द्विजलोकः न खलु सान्त्वेन प्रयच्छति सिद्धमप्यर्थम् ।
13. [1] स्वभूमिकं भूतपूर्वमभूतपूर्वं वा जनपदं स्वदेशाभिष्यन्दवामनाभ्यां परदेशोपवाहनेन वा वासयेत् ।
14. स्वल्पोऽपि [2]वापेषु प्रजोपद्रवः महान्तमर्थं नाशयति ।
15. [3] कणिशेषु क्षीरिषु सिद्धादायः जनपदमुद्वासयति ।
16. लवनकाले सेनाप्रचारः दुर्भिक्षमावहति ।
17. सर्वा अपि बाधाः प्रजानां कोशं कर्षयन्ति ।
18. दत्तपरिहारान् पितेवानुगृह्णीयात् ।
19. [4] मर्यादाऽतिक्रमेण फलवत्यपि भूमिर्भवत्यरण्यानी ।
20. क्षीणजनसंभावनं, तृणशलाकाया अपि स्वयमग्रहः, कादाचित्कं चोपजीवनं इति परमाः प्रजानां संवर्धनोपायाः ।
21. न्यायेन रक्षिता [5]पण्यपुटभेदिनी [6]पिण्ठा राज्ञां कामधेनुः ।
22. राज्ञश्चतुरङ्गबलाभिवृद्धिहेतवो भवेयुः भूयांसो [7]भक्तग्रामाः ।
23. सुमहच्च गोमण्डलं हिरण्याऽऽययुक्तं शुल्कं च कोशवृद्धिहेतुः ।
24. देवद्विजप्रदेया गोरुतप्रमाणा भूमिः दातुरादातुश्च सुखनिर्वाहा ।
25. क्षेत्रवप्रखण्डगृहधर्मायतनानां [8] उत्तरः पूर्वं बाधेत, न पुनरुत्तरं पूर्वः ।
26. ना[9]मुद्रहस्तोऽशोधितो वा कश्चित् स्वमण्डले निर्विशेन्निर्गच्छेद्वा ।
27. श्रूयते हि किल—हूणाधिपतिः पण्यपुटवाहिभिः सुभटैश्चित्रकूटं जग्राह ; खेटखड्गसहायश्च भद्रः काञ्चीपतिमिति ।
28. न हि भर्तुरभियोगात्परः सर्वजनविशुद्धिहेतुरस्ति ।

इति जनपदसमुद्देशः

---

[1] अर्थशास्त्रे–पु. 49. [2] बीजवापकालेषु. [3] धान्यमञ्जरीषु क्षीरपूर्णासु भवन्तीषु [4] तत्तत्कालानुगुणकर्मातिक्रमेण. [5] विक्रेयवस्तुशोधनी. [6] शुल्कस्थानम्. [7] सस्यशालिनः बहवो ग्रामाः. [8] एकस्मिन्नेव प्रदेशे विभिन्नकालेषु निर्मितानामिति शेषः. [9] प्रवेशानुमतिसूचकमुद्रारहितः.

## २०. दुर्गसमुद्देशः

1. यस्याभियोगात् परे दुःखं गच्छन्ति तद्दुर्गम् ।
2. दुर्जनोद्योगविषयाद्वा स्वस्य विजिगीषोरापदो गमयतीति दुर्गम् ।
3. तद्द्विविधं—स्वाभाविकं आहार्यं चेति ।
4. [1] वैषम्यं पर्याप्तावकाशः [2] यवसेन्धनोदकभूयस्त्वं च स्वस्य, परेषां तदभावः ; बहुधान्यरससंग्रहः, प्रवेशापसारौ वीरपुरुषाश्चेति दुर्गसम्पत् ; अन्यद्दुर्गं बन्दिशालेव ।
5. अदुर्गो देशः कस्य नाम न परिभवास्पदम् ।
6. अदुर्गस्य राज्ञः, पयोधिमध्ये पोतच्युतपक्षिवत् आपदि नास्त्याश्रयः ।
7. उपायतो गमनं [3] उपजापः चिरमनुबन्धः [4] [5] अवस्कन्दः तीक्ष्णपुरुषप्रयोगश्चेति दुर्गलम्भनोपायाः ।

इति दुर्गसमुद्देशः

---

## २१. कोशसमुद्देशः

1. यः विपदि सम्पदि च स्वामिनस्तन्त्राभ्युदयं कोषयति-संश्लेषयति स कोषः ।
2. अतिशयितरत्नहिरण्यरजतप्रायः व्यावहारिकनाणकबहुलः महापदि व्ययसहश्चेति कोशगुणाः ।
3. कोशं संवर्धयन् उत्पन्नमर्थमुपयुञ्जीत ।
4. कुतस्तस्यायत्यां श्रेयांसि ? यः प्रत्यहं काकिण्यापि कोशं न वर्धयति ।
5. कोशो हि महीपतीनां जीवितं, न प्राणाः ।
6. क्षीणकोशो हि राजा पौरजानपदानन्यायेन ग्रसते, ततो राष्ट्रमेव भवेच्छून्यम् ।
7. कोशो हि राजेत्युच्यते, न भूपतीनां शरीरम् ।

---

[1] पर्वतगर्तादिना निम्नोन्नतभूभागबाहुल्यम्. [2] घासकाष्ठादिभूयस्त्वम्. [3] भेदः. [4] दोषोत्पादनम्. [5] हठादाक्रमणम्.

8. यस्य हस्ते द्रव्यं स जयति ।
9. धनहीनः कलत्रेणापि त्यज्यते ; किं पुनर्नान्यैः ?
10. न खलु कुलाचाराभ्यां पुरुषः सेव्यतामेति, किन्तु वित्तेनैव ।
11. स खलु महान् कुलीनश्च, यस्यास्ति धनमन्यूनम् ।
12. किं तया महत्तया कुलीनतया वा ? या न सन्तर्पयति परान् ।
13. किं तस्य सरसो महत्त्वेन ? यत्र न जलानि ।
14. देवद्विजवणिजां धर्माध्वरपरिजनानुपयोगिद्रव्यभागैः, आढ्य विधवा नियोगि [1]ग्रामकूट गणिकासङ्घ पाषण्डि विभवांश प्रत्यादानैः, समृद्धपौरजानपदद्रविणसंविभागप्रार्थनैः, अनुपक्षयश्रीक मन्त्रिपुरोहित श्रोत्रियमित्र सामन्तान्तपालानुनय गृहगमनाभ्यां च क्षीणकोशः कोशमभिवर्धयेत् ॥

इति कोशसमुद्देशः

---

## २२. बलसमुद्देशः

1. द्रविणदानप्रियभाषणाभ्यां अरातिनिवारणेन च स्वामिनं सर्वास्ववस्थासु बलते-संवृणोतीति बलम् ।
2. बलेषु हस्तिनः प्रधानमङ्गम्, ते यथास्वैरवयवैरष्टाप्यायुधानि भवन्ति, न तथान्यद्बलम् ।
3. हस्तिप्रधानो विजयो राज्ञाम्, यदेकोऽपि हस्ती सहस्रं योधयति [2]न सीदति प्रहारसहस्रेणापि ।
4. जातिः कुलं वनं तत्प्रचारश्च न हस्तिनां प्रधानं, किन्तु शरीरं बलं शौर्यं शिक्षा च ।
5. अशिक्षिता हि हस्तिनः केवलं नृपाणामर्थप्राणहराः ।
6. सुखेन यानं आत्मरक्षा परपुरावमर्दनं अरिव्यूहव्याघातः जलेषु सेतुबन्धः वचनादन्यत्र सर्वविनोदहेतवश्चेति हस्तिगुणाः ।
7. अश्वबलं सैन्यस्य जङ्गमः प्राकारः ।

---

[1] ग्रामकूटाः–ग्रामाधिकारिणः. आढ्यपदस्य सर्वत्रान्वयः. [2] न नश्यति.

8. अश्वबलप्रधानस्य हि राज्ञः [1] कदनकन्दुकक्रीडाः प्रसीदन्ति श्रियः, दूरस्था अपि शत्रवः करस्था भवन्ति, आपत्सु च सर्वेऽपि मनोरथाः सिद्ध्यन्ति ।
9. सरणं अपसरणं अवस्कन्दः परानीकभेदनं चेत्येतत् तुरङ्गमैक-साध्यम् ।
10. समा भूमिः, धनुर्वेदविदो रथारूढाः प्रहर्तारश्च यदि, तदा किं नाम भवेदसाध्यं नृपाणाम् ?
11. रथैरवमर्दितं परबलं सुखेन जीयते ।
12. मौल-भृतक-श्रेणी-मित्रामित्राटविकेषु बलेषु पूर्वपूर्वं बलं भर्तुं संनाहयितुं च यतेत ।
13. अथान्यत्सप्तममौत्साहिकं बलम्, यत् विजिगीषोः विजययात्रा-काले परराष्ट्रविलोडनार्थमेव मिलति ।
14. सुहृत्त्वं [2] क्षत्रसारत्वं अस्त्रज्ञत्वं स्वभावशूरत्वं अनुरक्तत्वं चेति बलस्य गुणाः ।
15. मौलबलाविरोधेनान्यद्बलमर्थमानाभ्यामनुगृह्णीयात् ।
16. मौलं ह्यापद्यनुगच्छति, दण्डितमपि न द्रुह्यति, भवति चापरेषा-मभेद्यम् ।
17. न तथाऽर्थः पुरुषान् योधयति, यथा प्रभुसम्मानः ।
18. स्वयमनवेक्षणं देयांशहरणं कालयापनं व्यसनाप्रतीकारः विशेष-विधावसम्भावनं च तन्त्रस्य विरक्तिकारणानि ।
19. स्वावेक्षणीयं परैरवेक्षयन् अर्थतन्त्राभ्यां हीयते ।
20. आश्रितभरणे स्वामिसेवायां धर्मानुष्ठाने पुत्रोत्पादने च न खलु सन्ति [3] प्रतिहस्ताः ।
21. तावद्देयं, यावता आश्रिताः (न) सम्पूर्णतामाप्नुवन्ति ।
22. न हि स्वद्रव्यमव्ययमानो राज्ञो दण्डनीयः ।
23. को नाम सुचेताः स्वगुडं चौर्यात् खादेत् ?
24. किं तेन जलदेन? यः काले न वर्षति ।

---

[1] युद्धमेव कन्दुकक्रीडा यासां ताः सम्पदः. [2] क्षत्रियभूयिष्ठत्वं, बलिष्ठत्वं वा. [3] प्रतिनिधयः.

25. स किं स्वामी? य आश्रितेषु व्यसने [1] न प्रतिविधत्ते ।

26. [2] अविशेषज्ञे राज्ञि को नामार्थप्राणव्ययेनोत्सहेत ?

इति बलसमुद्देशः

## २३. मित्रसमुद्देशः.

1. सम्पदीव विपद्यपि मेद्यति=स्निह्यतीति मित्रम् ।

2. यः कारणमन्तरेण रक्ष्यो रक्षको वा भवति तन्नित्यं मित्रं भवति ।

3. तत्सहजं मित्रं, यत्र पूर्वपुरुषपरम्परया समायातः श्लाघ्यः सम्बन्धः ।

4. यत् वृत्तिजीवितहेतोः आश्रितं तत् कृत्रिमं मित्रम् ।

5. व्यसनेषूपस्थानं, अर्थेष्वविकल्पः, स्त्रीषु परमं शौचं, कोपप्रसाद-विषयेष्वप्रतिपक्षत्वम्—इति मित्रगुणाः ।

6. दानेन प्रणयः, स्वार्थपरत्वं, विपद्युपेक्षणं, अहितसम्प्रयोगः, [3] विप्रलम्भनगर्भः प्रश्रयश्च—इति मित्रदोषाः ।

7. स्त्रीसङ्गतिः, विवादः, अभीक्ष्णयाचनं, अप्रदानं, अर्थसम्बन्धः, परोक्षे दोषग्रहणं, ([4] पुरोभागिता) पैशुन्याकर्णनं च—इति मैत्रीभेदकारणानि ।

8. न हि क्षीरात्परं महदस्ति, यत्सङ्गतिमात्रेण करोति नीरमात्म समम् !

9. न नीरात्परं महदस्ति, यन्मिलितमात्रेण संवर्धयति रक्षति च स्वक्षयेणापि क्षीरम् !

10. येन केनाप्युपकारेण तिर्यञ्चोऽपि प्रत्युपकारिणः [5] अव्यभिचारिणश्च भवन्ति ; न पुनः प्रायेण मनुष्याः ।

---

[1] आपन्निवारणं न करोति. [2] बुद्धिमत्सु मूर्खेषु च यो विशेषं न जानाति तस्मिन् .
[3] सवञ्चना नम्रता. [4] दोषैकदृक्त्वम्. [5] अप्रतिकूलाः.

11. तथा चोपाख्यानकम्—अटव्यां किल अन्धकूपे पतितेषु कपिसर्पसिंहाक्षशालिकसौवर्णिकेषु कृतोपकारः कङ्कायननामा कश्चित् पान्थः विशालायां पुरि तस्मादक्षशालिकाद्व्यापादनमवाप, नाडीजङ्घश्च गौतमात् इति ।

इति मित्रसमुद्देशः

---

## २४. राजरक्षासमुद्देशः

1. राज्ञि रक्षिते सर्वं रक्षितं भवतीति स्वेभ्यः परेभ्यश्च राजा नित्यं रक्षितव्यः ।
2. उक्तं हि नयविद्भिः—"पितृपैतामहं महासम्बन्धानुबन्धं सुशिक्षितं अनुरक्तं कृतकर्माणं च जनं [1]आसन्नं कुर्वीत; न त्वन्यदेशीयमकृतार्थमानं, स्वदेशीयं चापकृत्योपगृहीतम्" इति ।
3. चित्तविकृतेर्नास्त्यविषयः ।
4. किं न भवति मातापि राक्षसी ?
5. अस्वामिकाः प्रकृतयः समृद्धा अपि निस्तरितुं[2] न शक्नुवन्ति ।
6. गतायुषि [3]सकलाङ्गेऽपि देहिनि किं करोति धन्वन्तरिरपि वैद्यः ?
7. राज्ञस्तावत् आसन्नाः स्त्रियः, आसन्नतराः दायादाः, आसन्नतमाश्च पुत्राः ; अतो राज्ञः प्रथमं स्त्रीभ्यो रक्षणम्, ततो दायादेभ्यः, ततः पुत्रेभ्यः ।
8. [4]आवण्ठादाचक्रवर्तिनः सर्वोऽपि स्त्रीसुखाय क्लिश्यति ।
9. निवृत्तस्त्रीसङ्गस्य धनपरिग्रहः मृतमण्डनमिव ।
10. सर्वाः स्त्रियः क्षीरोदवेला इव प्रायेण विषामृतस्थानम् ।
11. मकरदंष्ट्रा इव स्त्रियः स्वभावादेव वक्रशीलाः ।

---

[1] समोपस्थितम्. [2] आपदमिति शेषः. [3] हस्तपादादियावदङ्गपूर्णेऽपि.
[4] वण्ठः=अतिनिकृष्टः जन्तुः. आप्लवङ्गादिति पाठान्तरम्.

12. स्त्रीणां वशोपायः देवानामपि दुर्लभः ।

13. कलत्रं रूपवत् सुभगं अनवद्याचारं अपत्यवत् इति महतः पुण्यस्य फलम् ।

14. कामदेवोत्सङ्गस्थापि स्त्री पुरुषान्तरमभिलषत्येव ।

15. न हि [1] मोहो भयं लज्जा च स्त्रीणां रक्षणं, किन्तु परपुरुषादर्शनं यथेष्टं सम्भोगः [2] साधारणता च ।

16. दानदर्शनालापैः समवृत्तौ हि पुंसि स्त्रियो नापराध्यन्ति, भवन्ति च कामधेनव इव मनीषितरतयः ।

17. परिगृहीतासु स्त्रीषु प्रियत्वमप्रियत्वं वा न मन्येत ।

18. कारणवशान्निम्बोऽप्यनुभूयत एव ।

19. चतुर्थदिवसस्नाता स्त्री तीर्थम् ।

20. तीर्थोपरोधः महानधर्मानुबन्धः ।

21. ऋतावपि स्त्रियमुपेक्षमाणः पितॄणामृणभाजनं स्त्रीदूषकश्च भवति ।

22. [3] अवरुद्धाः स्त्रियः स्वयं नश्यन्ति नाशयन्ति वा पतिम् ।

23. न स्त्रीणामकर्तव्ये मर्यादास्ति ।

24. वरमविवाहः, नोढोपेक्षणम् ।

25. अकृतरक्षस्य किं कलत्रेण ? अकृषतश्च किं क्षेत्रेण ?

26. सपत्नीविधानं पत्युरसमञ्जसत्वं विमाननं अपत्याभावः चिरविरहश्च स्त्रीणां विरक्तिकारणानि ।

27. न स्त्रीणां सहजो गुणो दोषो वास्ति, किन्तु नद्यः समुद्रमिव यादृशं पतिमाप्नुवन्ति तादृश्यो भवन्ति स्त्रियः ।

28. स्त्रीणां दौत्यं स्त्रिय एव कुर्युः ।

29. [4] तैरश्चोऽपि पुंयोगः स्त्रियं दूषयति, किं पुनर्मानुष्यः ?

30. वंशविशुद्ध्यर्थं अनर्थपरिहारार्थं च स्त्रियो रक्ष्यन्ते, न भोगार्थम् ।

31. यथाकामं कामिनीनां वेश्यानां वा सङ्ग्रहः, परं अनीर्ष्यावान् प्रक्रमः कल्याणावहः ।

32. अदौवारिके द्वारि को नाम प्रविशति ?

---

[1] कुटुम्बमोहः. [2] सर्वासु सपत्नीषु स्वस्यां च समानतया वर्तनं पत्युः.
[3] ऋतुकालेष्वभुक्ताः. [4] तिर्यक्सम्बन्धी.

33. भोजनभाजनवत् सर्वसमानाः पण्याङ्गनाः, कस्तासु हर्षामर्षयोरवसरः ?

34. मात्रभिजनविशुद्धाः [1] उद्वसितोपस्थायिन्यः स्त्रियः राज्ञा संभोक्तव्याः ।

35. [2] दर्दुरस्य सर्पबिलप्रवेश इव स्त्रीगृहप्रवेशो महीपतीनाम् ।

36. न स्त्रीगृहादायातमापद्यपि किञ्चित् स्वयमनुभवनीयम् ।

37. नापि स्वयमनुभवनीयेषु स्त्रियो नियोक्तव्याः ।

38. [3] संवननं स्वातन्त्र्यं चानुभवन्त्यः स्त्रियः किं नाम न कुर्युः ?

39. श्रूयते हि किल—आत्मनः स्वच्छन्दवृत्तिमिच्छन्ती विषदूषितमद्यगण्डूषेण मणिकुण्डला महादेवी यवनेषु निजतनुजराज्यार्थं जघान राजानमज(ङ्ग)राजम्, विषालक्तकदिग्धेनाधरेण वसन्तमतिः शूरसेनेषु सुरतविलासम्, विषोपलिप्तेन मेखलामणिना वृकोदरी दशार्णेषु मदनार्णवम्, निशितनेमिना मुकुरेण मदिराक्षी मगधेषु मन्मथविनोदम्, कबरीनिगूढेनासिपत्रेण [4] चण्डरसा पाण्डयेषु पुण्डरीकं चेति ।

40. [5] अमृतसुरावाप्य इव क्रीडासुखोपकरणं स्त्रियः ; कस्तासां कार्याकार्यावलोकनेऽधिकारः ?

41. अपत्यपोषणे गृहकर्मणि शरीरसंस्करणे [6] भर्तुः शयनावसरे च स्त्रीणां स्वातन्त्र्यं, नान्यत्र ।

42. अतिप्रसक्तं हि स्त्रीषु स्वातन्त्र्यं [7] करपत्रमिव पत्युर्नाविदार्य हृदयं विश्राम्यति ।

43. स्त्रीवशः पुरुषः नदीप्रवाहपतितः पादप इव न चिरं नन्दति ।

44. पुरुषमुष्टिस्था हि स्त्री खड्गयष्टिरिव कमुत्सवं न जनयति ?

45. नातीव स्त्रियो व्युत्पादनीयाः, यतः स्वभावसुभगोऽपि शास्त्रोपदेशः स्त्रीषु [8] शस्त्रीषु पयोलव इव विषमतां प्रतिपद्यते ।

46. वेश्यासक्तिः कस्य न प्राणार्थमानहानिं करोति ?

47. धनमनुभवन्ति वेश्याः, न पुरुषम् ।

---

[1] नृत्याद्यर्थं स्वगृह एवागत्य सिद्धा भवन्त्यः. [2] मण्डूकस्य. [3] आभिचारिकं कर्म. [4] खड्गेन. [5] अमृतवाप्य इव काश्चित्, सुरावाप्य इव काश्चिदित्यर्थः. [6] संस्करणं—अलङ्करणम्. [7] असिरिव. [8] तीक्ष्णासु छुरिकासु.

48. धनहीने कामदेवेऽपि न प्रीतिं बध्नन्ति वेश्याः ।

49. स पुमान्न भवत्यायतिसुखी, यस्यानुनुशयं[1] वेश्यासु दानम् ।

50. स पशोरपि पशुः, यः स्वधनेन परेषामर्थवतीं करोति वेश्याम् ।

51. अध्रुवेणाधिकेनाप्यर्थेन वेश्यामनुभवन् पुरुषः न चिरमनुभवति सुखम् ।

52. आचित्तविश्रान्तेर्वेश्यापरिग्रहः श्रेयान् ।

53. विसर्जनाऽऽकारणाभ्यां[2] तदनुभवे महाननर्थः ।

54. यथा सुरक्षिताऽपि वेश्या स्वां प्रकृतिं न मुञ्चति, तथा लोभोपहताऽसती च परपुरुषान् भजते ।

55. या यस्य प्रकृतिः सा तस्य दैवैरप्यपनेतुं न शक्यते ।

56. सुभोजितोऽपि श्वा किमशुचीन्यस्थीनि परिहरति ?

57. क्षीराज्यशर्करया भोजितोऽप्यहिः न कदाचिद्विषं परित्यजति ।

58. न खलु शिक्षाशतेनापि कपिः चापल्यं परिहरति !

59. इक्षुरसेनापि सिक्तो निम्बः कटुरेव ।

60. तारुण्यमवैकृत्यं च [3]संस्काराहारोपयोगादिजन्यं शरीरस्य रमणीयत्वम्, न पुनः स्वभावः ।

61. [4]सम्मानादवसादः [5]कुल्यानामपरिग्रहहेतुः ।

62. तन्त्रकोशवर्धिनी वृत्तिः दायादान् विकारयति ।

63. भक्ति[6]विश्रम्भादेशाव्यभिचारिणं कुल्यं पुत्रं वा संवर्धयेत्, विनियुञ्जीत चोचितेषु कर्मसु ।

64. भर्तुरादेशं न विकल्पयेत्, अन्यत्र प्राणबाधाबहुजनविरोधपातकेभ्यः ।

65. बलवत्पक्षपरिग्रहेषु दायिषु आप्तपुरुषपुरस्सरो विश्वासः वशीकरणं गूढपुरुषनिक्षेपः प्रणिधिर्वा ।

66. दुर्बुद्धौ सुते दायिनि वा सम्यग्युक्तिभिर्दुर्बुद्धिमवतारयेत्[7] ।

67. साधुषूपचर्यमाणेषु विकृतिभजनं स्वहस्तादङ्गाराकर्षणमिव ।

68. क्षेत्रबीजयोर्वैकृत्यमपत्यानि विकारयति ।

---

[1] दुःखसङ्कोचौ विना. [2] आकारणा—आह्वानम्. [3] स्नानादिसंस्कारः. [4] सर्वसंमाननस्वरूपयोग्यताच्युतिः. [5] सजातीयानाम्. [6] विश्रम्भः विश्वासः. आदेशः—आज्ञा. [7] नाशयेत्.

69. कुलविशुद्धिः उभयतःप्रीतिः मनःप्रसादः [1]अनुपहतसमयः श्रीसरस्वत्यावाहनमन्त्रपूतपरमान्नोपयोगश्च गर्भाधाने पुरुषोत्तममवतारयति।

70. [2]गर्भशर्मजन्मकर्म अपत्येषु परिशुद्धदेहलाभात्मलाभयोः[3] परमं कारणम्।

71. स्वजातियोग्यसंस्कारहीनानां राज्ये वा[4]प्रव्रज्यायां वा नास्यधिकारः।

72. असति योग्येऽन्यस्मिन् अङ्गविहीनोऽपि पितृपदमर्हत्यापुत्रोत्पत्तेः।

73. साधुसम्पादितो हि राजपुत्राणां विनयः अन्वयं नयमभ्युदयं च न दूषयति।

74. घुणजग्धं काष्ठमिव अविनीतराजपुत्रं राजकुलं अभियुक्तमात्रं [5]भज्येत।

75. आप्तविद्यावृद्धोपरुद्धाः सुखोपरुद्धाश्च राजपुत्राः पितरं नाभिद्रुह्यन्ति।

76. मातापितरौ राजपुत्राणां परमं दैवम्, यत्प्रसादादात्मलाभो राज्यलाभश्च।

77. मातापितृभ्यां मनसाप्यवमन्यमानेष्वभिमुखा अपि श्रियः विमुखी भवन्ति।

78. किं तेन राज्येन? यत्र दुरपवादोपहतं जन्म।

79. क्वचिदपि कर्मणि पितुराज्ञां न लङ्घयेयुः।

80. किं खलु रामः क्रमेण विक्रमेण वा हीनः? यः पितुराज्ञया वनमाविवेश।

81. यः खलु पुत्रः अभीप्सितकर्मणि परम्पराभिर्लभ्यते सकथमुपहन्तव्यः?

82. कर्तव्यमेवाशुभं कर्म, यदि हन्यमानस्य विपद्विधानमात्मनो न भवेत्।

83. ते खलु राजपुत्राः सुखिनः! येषां पितरि राज्यभारः।

84. अलं तया श्रिया, या न किमपि सुखं जनयन्ती [6]व्यासङ्गपरम्पराभिः शतशो दुःखमेवानुभावयति।

---

[1] कार्यान्तरोद्वेगानवरुद्धः. [2] गर्भशर्म-गर्भसुखावहम्. [3] आत्मलाभः-उत्तमात्मतासिद्धिः-आत्मनि स्वसाक्षात्कारादिभगवद्योगान्तसामर्थ्यं प्रकृतिनिग्रहसामर्थ्यं चेति यावत्. [4] संन्यसने. [5] नश्येत्. [6] व्यासङ्गः–चिन्तामनःक्लेशादिः.

85. निष्फलो ह्यारम्भः कस्य नामोदर्के[1] सुखावहः ?

86. परक्षेत्रे कृषतः कर्षयतो वा वृथा श्रमः ; फलं हि तस्यैव, यस्य तत् क्षेत्रम् ।

87. सुतसोदरसपत्नपितृव्यकुल्यदौहित्रागन्तुकेषु पूर्वपूर्वाभावे भवत्युत्तरोत्तरस्य राज्यपदावाप्तिः ।

88. शुष्कश्यामवक्त्रता वाक्स्तम्भः [2]वाग्भेदः स्वेदः विजृम्भणं अतिमात्रवेपथुः प्रस्खलनं [3]बाह्यविप्रेक्षणं आस्यप्रेक्षणं आवेगः स्वकर्मणि स्वभूमौ चानवस्थानं—इति दुष्कृतं कृतवतः करिष्यतो वा लिङ्गानि ॥

इति राजरक्षासमुद्देशः

---

## २५. दिवसानुष्ठानसमुद्देशः

1. ब्राह्मे मुहूर्ते उत्थाय इतिकर्तव्यतायां [4] समाधिमुपेयात् ।

2. सुखनिद्राप्रसन्ने हि मनसि प्रतिफलन्ति सर्वा बुद्धयो यथार्थाः ।

3. उदयास्तमनसन्धिषु धर्मकार्यातिक्रमः दोषाय । [उदयास्तमनशायिषु भवति धर्मकालातिक्रमः ।]

4. आत्मवक्त्रं आज्ये दर्पणे वा निरीक्षेत ।

5. न [5]वर्षधरं विकलाङ्गं वा प्रातः पश्येत् ।

6. सन्ध्यास्वधौतमुखपादं [6]ज्येष्ठा देवता नानुगृह्णाति ।

7. नित्यमदन्तधावनस्य नास्ति मुखशुद्धिः ।

8. न कार्यव्यासङ्गेन शारीरं कर्मोपहन्यात् ।

9. न खलु युगैरपि तरङ्गविगमात् सागरे स्नानम् ।

10. वेगव्यायामस्वापस्नानभोजनस्वच्छन्दवृत्तिकालान् नोपरुन्ध्यात् ।

11. शुक्रमलमूत्रमरुद्वेगसंरोधः [7]अश्मरीभगन्दरगुल्मार्शसां हेतुः ।

12. गन्धलेपावसानं शौचमाचरेत् ।

---

[1] उत्तरकाले. [2] पूर्वोत्तरवाग्व्याघातः. [3] बहिर्द्वाररथ्याद्यवलोकनम्. [4] चित्तस्वास्थ्यम्. [5] षण्डम्. [6] उत्तमा वन्दनीया कापि देवता. [7] अश्मर्यादयः रोगाः.

13. बहिरागतो नानाचम्य गृहं प्रविशेत् ।
14. [1]गोसर्गे व्यायामः रसायनम्, अन्यत्र क्षीणाजीर्णवृद्धवातकिरूक्षभोजिभ्यः ।
15. शरीरायासजननी क्रिया व्यायामः ।
16. शस्त्रवाहनाभ्यासेन व्यायामं सफलयेत् ।
17. आदेहस्वेदं व्यायामकाल[2]मुशन्त्याचार्याः ।
18. बलातिक्रमेण व्यायामः कां नाम नापदं जनयति ।
19. अव्यायामशीलेषु कुतो[3]ऽग्निदीपनं उत्साहः देहदार्ढ्यं च ।
20. इन्द्रियात्ममनोमरुतां सूक्ष्मावस्था स्वापः ।
21. यथानियमं स्वापाद्भुक्तान्नपाको भवति, प्रसीदन्ति चेन्द्रियाणि ।
22. अघट्टितमपिहितं च भाजनं न खलु साधु साधयत्यन्नानि ।
23. [नित्यं स्नानं द्वितीयकमुत्सादनं तृतीयकमायुष्यं चतुर्थकं प्रत्यायुष्यकमित्यहीनं सेवेत ।]
24. धर्मार्थकामाशुद्ध(द्धि)दुर्जनस्पर्शाः स्नानस्य कारणानि ।
25. श्रमस्वेदालस्यविगमः स्नानस्य फलम् ।
26. जलचरस्येव तत् स्नानं, यत्र न सन्ति देवगुरुधर्मोपासनानि ।
27. प्रादुर्भवत्क्षुत्पिपासः अभ्यङ्गस्नानं न कुर्यात् ।
28. आतपसंतप्तस्य जलावगाहः दृङ्मान्द्यं शिरोव्यथां च करोति ।
29. बुभुक्षाकाल एव भोजनकालः ।
30. अक्षुधितेनामृतमप्युपभुक्तं विषं भवति ।
31. जाठराग्निं [4] वज्राग्निं कुर्वन् आहारस्यादौ सदैव [5] वज्रकं कबलयेत् ।
32. निरन्नस्य सर्वं द्रवद्रव्यं अग्निं नाशयति ।
33. अतिश्रमपिपासोपशान्तौ न पेयायाः परं कारणमस्ति ।
34. [6] घृताधरोत्तरं भुञ्जानः [7] अग्निं दृष्टिं च लभते ।
35. सकृद्भूरिनीरोपयोगः वह्निमवसादयति ।
36. क्षुत्कालातिक्रमात् अन्नद्वेषः [8] देहसादश्च भवति ।
37. विध्मिते वह्नौ किं नामेन्धनं कुर्यात् ?

---

[1] उषसीति स्यात्. [2] अङ्गीकुर्वन्ति. [3] जाठराग्नेः भुक्तपचनसामर्थ्यम्. [4] प्रदीप्तमग्निम्. [5] वज्रमिव कठिनं कृत्वेत्यर्थः. मध्ये तु द्रवाशीस्यादितिभावः. [6] आहारसेवनोपक्रमे अन्ते च घृतं भुञ्जानः. [7] जाठराग्निपाटवम्. [8] देहक्षयः

38. यो मितं भुङ्क्ते स बहु भुङ्क्ते ।

39. अप्रमितं असुखं विरुद्धं अपरीक्षितं असाधुपाकं अतीतरसं अकालं चान्नं नानुभवेत् ।

40. [1]फल्गुभुजं अननुकूलं क्षुधितं अतिक्रूरं च न भुक्तिसमये सन्निधापयेत् ।

41. गृहीतग्रासेषु सहभोजिषु आत्मने परिवेषयेत् ।

42. तथा भुञ्जीत, यथा सायमन्येद्युश्च न विपद्यते वह्निः ।

43. न भुक्तिपरिमाणे सिद्धान्तोऽस्ति ।

44. वह्न्यभिलाषायत्तं हि भोजनम् !

45. अतिमात्रभोजी देहमग्निं च विधुरयति ।

46. दीप्तो वह्निः लघुभोजनात् बलं क्षपयति ।

47. अत्यशितुः दुखेनान्नपरिणामः ।

48. श्रमार्तस्य पानं भोजनं च ज्वराय [2]छर्दये वा ।

49. न [3]जिहत्सुः न [4]प्रस्रोतुमिच्छुः नासमञ्जसमनाः नानपनीय पिपासोद्रेकं चाश्नीयात् ।

50. भुक्त्वा व्यायामव्यवायौ [5]सद्योव्यापत्तिकारणम् ।

51. आजन्म सात्मीकृतं विषमपि पथ्यम् ।

52. असात्म्यमपि पथ्यं सेवेत, न पुनः सात्म्यमप्यपथ्यम् ।

53. सर्वं बलवतः पथ्यमिति मत्वा न कालकूटं सेवेत ।

54. सुशिक्षितोऽपि विषतन्त्रज्ञः म्रियत एव कदाचिद्विषात् ।

55. संविभज्यातिथिष्वाश्रितेषु च स्वयमाहरेत् ।

56. देवान् गुरून् धर्मं चोपचरन् न व्याकुलमतिः स्यात् ।

57. व्याक्षेपभूमनोनिरोधोऽपि मन्दयति सर्वाणीन्द्रियाणि ।

58. स्वच्छन्दवृत्तिः पुरुषाणां परमं रसायनम् ।

59. यथाकामसमीहाः किल काननेषु करिणः न भवन्त्यास्पदं व्याधीनाम् ।

60. सततं सेव्यमाने द्वे एव वस्तुनी सुखाय, सरसः सत्सु संलापः ताम्बूलभक्षणं च ।

---

[1] अल्पमेव भुञ्जानम्. [2] वमनाय. [3] मलं विसर्जितुमिच्छुः. [4] मूत्रितुमिच्छुः.
[5] व्यवायः–मैथुनम्.

61. चिरायोर्ध्वजानुः जड(र)यति रसवाहिनीः स्नसाः ।

62. सततमुपविष्टःजठरमाध्मापयति प्रतिपद्यते च [1]तुन्दिलताम् ।

63. वाचि मनसि शरीरे वा अतिमात्रं खेदः पुरुषमकालेऽपि जरया योजयति ।

64. नादैवौ देवदेहप्रासादौ कुर्यात् [2]।

65. देवगुरुधर्मरहिते पुंसि नास्ति प्रत्ययः ।

66. क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः देवः ।

67. तस्यैवैतानि खलु विशेषनामानि—अर्हन् अजः अनन्तः शम्भुः बुद्धः तमोऽन्तकः ब्रह्मेति ।

68. आत्मसुखानुरोधेन कार्याय नक्तमहश्च विभजेत् ।

69. कालानियमेन कार्यानुष्ठानं हि मरणसमम् ।

70. [3] आत्ययिके कार्ये नास्त्यनवसरः ।

71. अवश्यं कर्तव्ये कालं न यापयेत् ।

72. आत्मरक्षायां कदाचिदपि न प्रमाद्येत ।

73. सवत्सां धेनुं प्रदक्षिणीकृत्य धर्मासनं यायात् ।

74. अनधिकृतः अनभिमतश्च न राजसभां प्रविशेत् ।

75. आराध्यमुत्थायाभिवादयेत् ।

76. देवगुरुधर्मकार्याणि स्वयं पश्येत् ।

77. कुहकाभिचारकर्मकारिभिस्सह न सङ्गच्छेत ।

78. प्राण्युपघातेन कामक्रीडां न प्रवर्तयेत् ।

79. जनन्यापि परस्त्रिया सह रहसि न तिष्ठेत् ।

80. अतिक्रुद्धोऽपि न मान्यमतिक्रामेदवमन्येत वा ।

81. नाप्ताशोधितं [4]परस्थानमुपेयात् ।

82. नाप्तजनैरनारूढं वाहनमध्यासीत ।

83. न स्वैरपरीक्षितं तीर्थं सार्थं तपस्विनं वाऽभिगच्छेत् ।

84. न याष्टिकैरविविक्तं मार्गं भजेत ।

---

[1] बृहत्कुक्षिताम्. [2] किन्तु सदैवमेव कुर्यादितिभावः. अत्र च शिलालोहादिमयविग्रहचित्रपटादिमात्रस्थापनेन वा ग्रसनेन वा मांसचक्षुर्विषयतदाकारस्मरणमात्रेण वा न देवप्रासाददेहप्रासादयोः सदैवतासिद्धिः, किन्तु ज्ञानविज्ञानपूर्णसद्गुरुदिव्यशक्त्यैवेति, सा च आनुभविक्येवेति च ध्येयम्. [3] क्षणविलम्बेऽपि अपायावहे. [4] शत्रुवासभूमिम्.

85. न विषापहारौषधिमणीन् क्षणमप्युपासीत ।

86. न सदैव [1] जाङ्गलिकीं विद्यां कण्ठे धारयेत् ।

87. मन्त्रिभिषङ्नैमित्तिकरहितः कदाचिदपि न प्रतिष्ठेत ।

88. वह्नावन्यचक्षुषि च भोज्यमुपभोग्यं च परीक्षेत ।

89. [2] अमृते मरुति प्रविशति सर्वदा चेष्टेत ।

90. भुक्तिसुरतसमरार्थी दक्षिणे मरुति स्यात् ।

91. परमात्मना समीकुर्वन् न कस्यापि भवति द्वेष्यः ।

92. मनःपरिजनशकुनपवनानुलोम्यं भविष्यतः कार्यस्य सिद्धेर्लिङ्गम् ।

93. नैको नक्तं दिवा वा [3] हिण्डेत ।

94. नियमितमनोवाक्कायः प्रतिष्ठेत ।

95. अहनि सन्ध्यामुपासीता नक्षत्रदर्शनात् ।

96. "चतुःपयोधिपयोधरां धर्मवत्सवतीं उत्साहवालधिं वर्णाश्रमखुरां कामार्थश्रवणां नयप्रतापविषाणां सत्यशौचचक्षुषं न्यायमुखीमिमां गां अहं गोपयामि, तमहं मनसापि न सहे-योऽपराध्येत्तस्यै" इतीमं मन्त्रं समाधिस्थो जपेत् ।

97. कोकवद्दिवाकामः निशि स्निग्धं भुञ्जीत ; चकोरवन्नक्तंकामः दिवा च ।

98. पारावतकामः [4] वृष्यान्नयोगां श्चरेत् ।

99. [5] बष्कयणीनां सुरभीणां पयः सिद्धं माषदलपरमान्नं परो योगः स्मरसंवर्धने ।

100. नावृषस्यन्तीं[6] स्त्रियमभियायात् ।

101. उष्णप्रकर्षवान् प्रदेशः परमं रहस्यमनुरागे [7]प्रथमप्रकृतीनाम्, सशाद्वलमृदुपवनप्रदेशः द्वितीयप्रकृतीनाम्, सर्वत्र तृतीयप्रकृतीनां सुरतोत्सवः ; त एते धर्मार्थस्थाने लिङ्गोत्सवं लभन्ते ।

102. स्त्रीपुंसयोर्न [8]समसमायोगात् परं वशीकरणमस्ति ।

103. प्रकृतिः उपदेशः स्वाभाविकं च प्रयोगवैदग्ध्यमिति समसमायोगकारणानि ।

---

[1] विषविद्याम्. [2] अमृतयोगे. [3] परिभ्रमेत्. [4] वृष्याः—वीर्यवर्धकाः. [5] सकृत्प्रसूतानां गवाम्. [6] पुरुषसङ्गमनिच्छन्तीम्. [7] वृषशशाश्वप्रकृतीनां मध्ये इति शेषः. [8] समसुरतात्.

104. क्षुत्तर्षपुरीषाभिष्यन्दार्तस्य अभिगमः नापत्यमनवद्यं करोति ।

105. न सन्ध्यासु न दिवा नाप्सु न देवायतने मैथुनं कुर्वीत ।

106. पर्वणि पर्वसन्धौ उपहते वाऽह्नि कुलस्त्रियं न गच्छेत् ।

107. न तद्गृहाभिगमनेन कामपि स्त्रियमधिशयीत ।

108. वंशवयोवृत्तविद्याविभवानुरूपः वेषः समाचारो वा न कं विडम्बयति ?

109. अपरीक्षितमशोधितं च राजकुले न किञ्चित्प्रवेशयेन्निष्कासयेद्वा ।

110. श्रूयते हि—स्त्रीवेषधारी कुन्तलनरेन्द्रप्रयुक्तः गूढपुरुषः कर्णनिहितेनासिपत्रेण पल्लवनरेन्द्रं, हयपतिश्च मेषविषाणनिहितेन विषेण कुशस्थलेश्वरं जघानेति ।

111. सर्वत्राविश्वस्ते नास्ति काचित् क्रिया ॥

इति दिवसानुष्ठानसमुद्देशः

---

## २६. सदाचारसमुद्देशः

1. लोभप्रमादविश्वासैः बृहस्पतिरपि पुरुषो वध्यते वञ्च्यते वा ।

2. बलवताऽवष्टब्धस्य विदेशगमनं [1] तदनुप्रवेशो वा श्रेयान्, यद्यन्यथा नास्ति क्षेमोपायः ।

3. विदेशवासोपहतस्य को नाम पुरुषकारः ?

4. यो येनाविज्ञातस्वरूपः पुमान् स तस्य महानपि लघुरेव ।

5. अलब्धप्रतिष्ठस्य निजान्वयेनाहङ्कारः कस्य न लाघवं करोति ?

6. आर्तः सर्वोऽपि भवति धर्मबुद्धिः ।

7. स नीरोगः, यः स्वयं धर्माय समीहते ।

8. व्याधिग्रस्तस्य धैर्यादृते न परमौषधमस्ति ।

9. स महानुभावः, यस्य न दुरपवादोपहतं जन्म ।

10. पराधीनेष्वर्थेषु स्वोत्कर्षसम्भावनं मन्दमतीनाम् ।

11. न भयेषु विषादः प्रतीकारः, किन्तु धैर्यावलम्बनम् ।

---

[1] तस्यैवानुसरणम्.

12. स किं धन्वी तपस्वी वा ? यो रणे मरणे शरसन्धाने मनः समाधाने च मुह्यति ।
13. कृतेः प्रतिकृतिमकुर्वतः नैहिकफलमस्ति नामुत्रिकं च ।
14. शत्रुणाऽपि सूक्तमुक्तं न दूषयितव्यम् ।
15. कलहजननं अप्रीत्युत्पादनं च दुर्जनानां धर्मो न सज्जनानाम् ।
16. न तस्य श्रीरभिमुखी, यो लब्धार्थमात्रेण सन्तुष्टः ।
17. भीतेष्वभयदानात् परं न दानमस्ति ।
18. तस्य कुतो वंशवृद्धिः ? यो न प्रशमयति वैरानुबन्धम् ।
19. स्वस्यासम्पत्तौ न चिन्ता कामितमर्थं दुग्धे, किन्तूत्साहः ।
20. स खलु स्वस्यैवापुण्योदयः अपराधो वा, यत् सर्वेषु कल्पवृक्षवत् फलन्नपि स्वामी भवत्यात्मनि [1] वन्ध्यः ।
21. स सदैव दुःखितः, यो मूलधनमसंवर्धयन्ननुभवति ।
22. मूर्खदुर्जनपतितैः सह सङ्गः कस्य नाम श्रेयस्करः ?
23. किं तेन प्रीतेन, यस्य हरिद्रारागः[2] इव चित्तानुरागः ?
24. आत्मानमविज्ञाय विक्रमः कस्य नाम पराभवं न करोति ?
25. न क्षान्तिः पराभियोगस्योत्तरं, किन्तु युक्त्युपन्यासः ।
26. अस्थाने कुप्यतां कुतः परिजनः ?
27. न मृतेषु रोदितव्यं ; अश्रुपातसमा हि किल पतन्ति तेषां हृदयेष्वङ्गाराः !
28. अतीते वस्तुनि शोकः श्रेयानेव, यदि पुनः तत्समागमः स्यात् !
29. शोकमात्मनि चिरमनुवासयन् त्रिवर्गमनुशोषयति ।
30. स किं पुरुषः ? योऽकिञ्चनस्सन् करोति विषयाभिलाषम् ।
31. अपूर्वेषु प्रियपूर्वं सम्भाषणं स्वर्गच्युतानां लिङ्गम् ।
32. न ते मृताः, येषामिहास्ति शाश्वती कीर्तिः ।
33. स केवलं भूभाराय जातः, यस्य यशोभिर्न धवलितानि भुवनानि ।
34. परोपकारोद्यतानां का नाम शरणागतेषु परीक्षा ?
35. अभिचारेण परोपघातः महापातकिनां, न महासत्त्वानाम् ।
36. तस्य भूपतेः कुतोऽभ्युदयो विजयो वा, यस्य द्विषत्सभासु विद्वत्सभासु च नास्ति गुणग्रहणे प्रागल्भ्यम् ।

---

[1] विफलः, किञ्चदपि सहायमकुर्वन्. [2] क्षणिक इति शेषः.

37. तस्य गृहे कुटुम्बं स्थापनीयं, यत्र न भवति परेषामामिषं[1] विप्लुतं वा।

38. परस्त्रीद्रव्ययोः रक्षणेन नात्मनः किमपि फलं, विप्लवे तु भवेन्महाननर्थसंबन्धः।

39. आत्मानुरक्तं कथमपि न त्यजेत्, यद्यस्ति[2] दत्ते तस्य संतोषः।

40. आत्मसंभावनः परेषामसहनश्च भृत्यः बहुपरिजनमपि स्वमिनमेकाकिनं करोति।

41. अपराधानुरूपो दण्डः पुत्रेऽपि प्रणेतव्यः।

42. देशानुरूपः करो ग्राह्यः।

43. प्रतिपाद्यानुरूपं वचनमुदाहर्तव्यम्।

44. आयानुरूपो व्ययः कार्यः।

45. ऐश्वर्यानुरूपः प्रासादो विधातव्यः।

46. सहायानुरूपं कर्म आरब्धव्यम्।

47. धनश्रद्धानुरूपः त्यागोऽनुसर्तव्यः।

48. स पुमान् सुखी यस्यास्ति संतोषः।

49. रजस्वलाभिगामी चण्डालादप्यधमः।

50. सलज्जं निर्लज्जं न कुर्यात्।

51. स पुमान् सवस्त्रोऽपि नग्न एव, यस्य नास्ति सच्चरित्रमावरणम्।

52. स नग्नोऽप्यनग्न एव, यो भूषितः सच्चरित्रेण।

53. सर्वत्र संशयानेषु नास्ति कार्यसिद्धिः।

54. न क्षीरघृताभ्यामन्यत् परं रसायनमस्ति।

55. परोपघातेन वृत्तिः निर्भाग्याणाम्;

56. वरमुपवासः न पराधीनं भोजनम्।

57. स देशोऽनुसर्तव्यः यत्र नास्ति वर्णसङ्करः।

58. स जात्यन्धो यः परलोकं न पश्यति।

59. व्रतं विद्या सत्यं आनृशंस्यं अलोलता शक्तिविशेषश्च ब्राह्मण्यं, न पुनर्जातिमात्रम्।

60. निःस्पृहाणां का नाम परापेक्षा ?

61. कं नाम पुरुषं आशा न क्लेशयति ?

[1] आमिषः—उपभोगः. विप्लुतम्—नाशः. [2] स्वशक्तिचित्ताद्यनुसारेणेति शेषः.

62. स संयमी गृहाश्रमी वा तत्पदमर्हति, यस्याविद्यातृष्णाभ्यामनुपहतं चेतः ।

63. शीलमलङ्कारः पुरुषाणां, न देहखेदावहो बहिराकल्पः [1] ।

64. कस्य नाम नृपतिर्मित्रम् ?

65. अप्रियकर्तुः न प्रियकरणात्परं मारणकारणमस्ति ।

66. अप्रयच्छन्नर्थिने न परुषं ब्रूयात् ।

67. सा श्रीः [स स्वामी] मरुभूमिः, यत्रार्थिनो न भवन्त्याप्तकामाः ।

68. प्रजापालनं हि राज्ञो यज्ञः, न पुनः भूतानामालम्भः [2] ।

69. नानपराधिसत्त्वव्यावृत्तये नृपाणां बलं धनुर्वा, किन्तु शरणागतरक्षणाय ॥

इति सदाचारसमुद्देशः

———

## २७. व्यवहारसमुद्देशः

1. कलत्रं नाम नराणां अनिगडमपि दृढं बन्धनमाहुः ।

2. त्रीण्यवश्यं भर्तव्यानि–मातापितरौ कलत्रं अप्राप्तव्यवहाराणि चापत्यानि ।

3. दानं तपः [3] प्रायोपवेशनं नियमव्यवस्थापनं वा तीर्थोपासनस्य फलम् ।

4. [4] तीर्थोपवासिषु देवस्वपरिहरणं क्रव्यादेषु कारुण्यमिव, स्वाचारच्युतेषु पापभीरुत्वमिव ।

5. अधार्मिकत्वं अतिनिष्ठुरत्वं वञ्चकत्वं च प्रायेण तीर्थवासिनां प्रकृतिः ।

6. मूषिकगृहे मोदकन्यास इव हि धर्मरहितेषु देवपूजाद्युपयोगाय धनार्पणम् ।

7. स किं प्रभुः? यः कार्यकाल एव न सम्भावयति भृत्यान् ।

---

[1] आकल्पः–भूषणम् . [2] आलम्भः–वधः. [3] आमरणमनशनम्. [4] पुरोहितादिष्विति शेषः.

8. स किं भृत्यः सखा वा? यः कार्यमुद्दिश्यार्थं याचते, करोति चाङ्गाकृष्टिम्[1]।
9. सा किं भार्या? या अर्थेन प्रणयिनी।
10. स किं देशः? यत्र नास्त्यात्मनो निर्वृतिः[2]।
11. स किं बन्धुः? यः व्यसनेषु नोपतिष्ठते।
12. तत् किं मित्रं? यत्र नास्ति विस्रम्भः[3]।
13. स किं गृहस्थः? यस्य नास्ति सत्कलत्रसम्पत्तिः।
14. तत् किं दानं? यत्र नास्ति सत्कारः
15. तत् किं भुक्तं? यत्र नास्त्यतिथिसंविभागः।
16. तत् किं प्रेम? यत्रास्ति कार्यवशात् प्रवृत्तिः।
17. तत् किमाचरणं? यत्रास्ति [4]वाच्यता मायाव्यवहारो वा।
18. तत् किमपत्यं? यत्र नाध्ययनं विनयो वा।
19. तत् किं ज्ञानं? यत्र मदेनान्धता चित्तस्य।
20 तत् किं सौजन्यं? यत्र परोक्षे पिशुनभावः।
21. सा किं श्रीः? यया न सन्तोषः सत्पुरुषाणाम्।
22. तत् किं कृतं? यत्रोक्तिरुपकृतस्य।
23. तयोः को नाम निर्वाहः? यौ द्वावपि प्रभूतमानिनौ पण्डितौ स्पर्धिनौ वाचालौ हैतुकौ लुब्धौ मूर्खौ असहनौ साहङ्कारौ उच्छृङ्खलौ प्रबलौ अतत्त्वदर्शिनौ च।
24. स्ववान्त इव स्वदत्ते नाभिलाषं कुर्यात्।
25. उपकृत्य मूकभावः अभिजातानाम्।
26. परदोषश्रवणे बधिरभावः सत्पुरुषाणाम्।
27. परकलत्रदर्शने अन्धभावो महाभाग्यानाम्।
28. शत्रावपि गृहायाते सम्भ्रमः कर्तव्यः, किं पुनर्न महति?
29. अन्तर्घनसार इव स्वयं स्वस्य धर्मः न प्रकाशयितव्यः।
30. मदप्रमादजे दोषे गुरुषु निवेदनं अनुशयः प्रायश्चित्तं च प्रतीकारः।

---

[1] स्वयं कार्येषु अप्रवृत्तः अङ्गसङ्कोचं करोति. [3] सुखं मनश्शान्तिर्वा. [3] विश्वासयोग्यता. [4] निन्द्यता.

31. श्रीमतः कायक्लेशः न देवगुरुद्विजातिथीन् प्रीणयति, किन्तु [1]विभवसंविभाग एव।

32. चणका इव नीचाः उदरस्थापिता अपि नाविकुर्वाणास्तिष्ठन्ति।

33. स पुमान् वन्द्यचरितः, यः प्रत्युपकारमनवेक्ष्य परोपकारंकरोति।

34. [2]अज्ञानिनो वैराग्यं, भिक्षोर्विटत्वं, अधनस्य विलासः, वेश्यारतस्य शौचं, अविदितवेदितव्यस्य तत्त्वपरिग्रहः (साग्रहस्तत्त्वविचारः) इति पञ्च न कस्य शिरश्शूलानि ?

35. स हि पञ्चमहापातकी, यः अशस्त्रं अशास्त्रं वा पुरुषमभियुञ्जीत।

36. उपश्रुतिं श्रोतुमिव कार्यवशान्नीचमपि लोकं स्वयमुपसर्पेत्।

37. अर्थी कमपि दोषं न पश्यति।

38. गृहदास्यभिगमः गृहं गृहपतिं गृहिणीं च प्रत्यवसादयति।

39. वेश्यापरिग्रहः देवद्विजगुरुगृहिणीबन्धूनां उच्चाटनमन्त्रः।

40. अहो! लोकस्य पापम्, यत् निजस्त्री रतिरता रतिरपि निम्बसमा, परपरिगृहीता शुनक्यपि रम्भासमा।

41. स सुखी, यस्यैक एव दारपरिग्रहः।

42. व्यसनिनो यथाऽभिसारिकासु सुखं, न तथाऽर्थवतीषु।

43. महान् हि धनव्ययः तदिच्छानुवर्तनं दैन्यं चार्थवतीषु।

44. आस्तरणं कम्बलः जीवधनं गदर्भः परिग्रहः घोटी सर्वकर्मीणाः सुभृत्याः-इति कस्य नाम न सुखावहानि स्कन्धावारोपकरणानि ?

45. यति [3]ठक्कुर वेश्या [4]वरण्ड भण्डानां परिस्पन्दो महान्, अर्थतस्तु न किञ्चन।

46. लोभवति भवन्ति विफलाः सर्वेऽपि गुणाः।

47. अर्थयाचना कं नाम न लघयति ?

48. न दारिद्र्यात् परं लाघवकारणमस्ति, यतो महानपि भवत्यन्यदोषेण शङ्कनीयः, यत्सङ्गेन च सर्वे गुणाः निष्फलतां यान्ति।

---

[1] विभवः=धनादिः. [2] ज्ञानहीनस्य. [3] द्विजोपाधिभेदः, अपूरितशक्तिर्देवप्रतिमा वा ठक्करः. [4] वरण्डः—कृपणः.

49. अलब्धार्थोऽपि हि लोको धनवति भण्डो भवति !
50. धनिनो यतयोऽपि चाटुकाराः ।
51. न रत्नहिरण्यपूताज्जलात् परं पावनमस्ति ।
52. स्वयं मेध्या आपो वह्नितप्ता विशेषतः ।
53. स एवोत्सवः, यत्र बन्दीमोक्षः दीनोद्धरणं च ।
54. तान्येव पर्वाणि, येष्वतिथिपरिजनयोः प्रकामं सन्तर्पणम् ।
55. तास्तिथयः, यासु धर्माचरणम् ।
56. सा तीर्थयात्रा, यस्यामकृत्यनिवृत्तिः ।
57. तत् पाण्डित्यं, यत्र जातिवयोविद्योचितमनुष्ठानम् ।
58. तच्चातुर्यं, यत्परप्रीत्या स्वकार्यसाधनम् ।
59. तल्लोकवित्त्वं, यत्सर्वजनादेयत्वम् ।
60. तत्सौजन्यं वाग्मिता च, यत्र नास्ति परोद्वेगः ।
61. तद्धीरत्वं, यदनपवादं यौवनम् ।
62. तत् सौभाग्यं, यददानेन वशीकरणम् ।
63. सा सभाऽरण्यानी, यस्यां न सन्ति विद्वांसः ।
64. किं तेनात्मनः प्रियेण? यस्य स्वयं न भवति प्रियः ।
65. स किं प्रभुः? यो न सहते परिजनसम्बाधम् [1] ।
66. न लेखाद्वचनं प्रमाणम् ।
67. अनभिज्ञाते लेखे नास्ति सम्प्रत्ययः ।
68. त्रीणि पातकानि सद्यः फलन्ति—स्वामिद्रोहः स्त्रीवधः बालवधश्चेति ।
69. अप्लवस्य समुद्रावगाहनमिव अबलस्य बलवता सह विग्रहाय [2] टिरिटिल्लितम् ।
70. बलवन्तमाश्रित्य [3] विकृतिभजनं सद्यो मरणकारणम् ।
71. प्रवासः चक्रवर्तिनमपि सन्तापयति, किं पुनर्नान्यम् ?
72. बहुपाथेयं, मनोऽनुकूलः परिजनः, सुविहितश्चोपस्करः इति प्रवासेषु दुःखोत्तरणतरण्डको वर्गः ।

इति व्यवहारसमुद्देशः

———

[1] कलक्लतया समूहतापत्तिम्. [2] चापल्यम्. [3] तस्यैवापकारकरणम्.

## २७. विवादसमुद्देशः

1. गुणदोषयोस्तुलादण्डसमो राजा ।
2. स्वगुणदोषाभ्यां जन्तुषु गौरवलाघवे, राजा तु परं समवर्ती तत्फलमनुभावयति ।
3. आदित्यवद्यथावस्थितार्थप्रकाशनपराः सभ्याः ।
4. अदृष्टश्रुतव्यवहाराः प्रत्यर्थिनः सामिषाश्च न सभ्याः ।
5. लोभपक्षपाताभ्यामयथार्थवादिनः सभ्याः सभापतेः सद्यो मानार्थहानिं लभेरन् ।
6. तत्रालं विवादेन, यत्र स्वयमेव सभापतिः प्रत्यर्थी ।
7. सभ्यसभापत्योरसामञ्जस्ये न्यायस्य कुतो जयः ?
8. किं बहुभिः [1] छगलः श्वा न क्रियते?
9. विवादमास्थाय सभायां नोपतिष्ठते, समाहूतोऽपसरति, पूर्वोक्तमुत्तरोक्तेन बाधते, निरुत्तरः परोक्तेषु, युक्तमुक्तं न प्रतिपद्यते स्वदोषमनुद्धृत्य परदोषमुपालभते, यथार्थवादेऽपि [2] द्वेष्टि सभाम्—इति [3] पराजितलिङ्गानि ।
10. [4] छलेन अप्रतिभानेन वचनाकौशलेन चार्थहानिः ।
11. [5] भुक्तिसाक्षिशासनेषु पूर्वं पूर्वं प्रमाणम् ।
12. भुक्तिः सापवादा, साक्रोशाः विप्रतिपन्नाश्च साक्षिणः, शासनं च कूटलिखितमिति न विवादं समापयन्ति ।
13. बलात् कृतं अन्यायकृतं [6] राजोपधिकृतं च न प्रमाणम् ।
14. वेश्या [7] कितवयोरुक्तं ग्रहणकानुसारितया प्रमाणयितव्यम् ।
15. असत्यङ्कारे व्यवहारे नास्ति विवादः ।
16. नीवीन्यासेषु विवादः पुरुषप्रामाण्यात् सत्यापयितव्यः, दिव्यक्रियया वा ।
17. यादृशे तादृशे वा साक्षिणि नास्ति दैवी क्रिया, किं पुनरुभयसंमते?
18. श्रूयते हि—वनस्पतिवनमार्जाराभ्यां साक्षिभ्यामर्थसिद्धिः ।

---

[1] अजा. [2] निन्दति. [3] अपराधिलिङ्गानि. [4] कपटेन. [5] द्वादशसंवत्सरभोगःभुक्तिः. [6] राजबलेन कृतम्. [7] द्यूतकारः वञ्चकश्च कितवः.

19. यः परद्रव्यमभियुञ्जीत अभिलुम्पेत वा तस्य शपथः कोशो दिव्यं वा ।

20. अभिचारयोगैर्विशुद्धस्याभियुक्तार्थसम्भावनायां प्राणावशेषोऽर्थापहारः ।

21. लिङ्गिविटनास्तिकस्वाचारच्युतानङ्गपतितानां न दैवी क्रियाऽस्ति, तेषां युक्तितोऽर्थस्य सिद्धिरसिद्धिर्वा ।

22. पत्रस्थं [1] भाषोत्तरे विचार्य परिच्छिन्द्यात् [2] ।

23. परस्परविप्रलापे न युगैरपि विवादसमाप्तिः, आनन्त्याद्विप्रकृतोक्तीनाम् [3] ।

24. सभायां परभूमिं नाभिनिविशेत, न वा मिथस्संजल्पं कुर्वीत ।

25. ग्रामे पुरे वा वृत्तैर्व्यवहारैस्सति विवादे राजानमुपेयात् ।

26. राज्ञा दृष्टे व्यवहारे नास्त्यनुबन्धः [4] ।

27. राजाज्ञां मर्यादां वाऽतिक्रामन् सद्यःफलेन दण्डेनोपहन्तव्यः ।

28. न दुर्वृत्तानां दण्डादन्योऽस्ति विनयनोपायः, यतोऽग्निसंयोग एव वक्रं काष्ठं सरलयति ।

29. ऋजुं सर्वे परिभवन्ति ।

30. न हि तथा वक्रतरुश्छिद्यते यथा सरलः ।

31. या शक्तस्यापराधिषु क्षमा, सा तस्यात्मनस्तिरस्कारः ।

32. अतिक्रम्य वर्तिषु निग्रहकर्तुः राज्ञः सर्पादिव दृष्टप्रत्यवायाः सर्वेऽपि जनाः बिभ्यति ।

33. अनायकां बहुनायकां वा सभां न प्रविशेत् ।

34. गणपुरश्चारिणः सिद्धे कार्ये स्वस्य न किञ्चिदपि, असिद्धे ध्रुवमात्मनः प्रत्यवायः ।

35. न सा गोष्ठी प्रस्तोतव्या, यत्र परेषां प्रतापः ।

36. [5] स्वोपालम्भपरिहारेण परमुपालभेत ।

37. स्वामिनमुत्कर्षयन् गोष्ठीमवतारयेत् ।

38. न भर्तुरभियोगात्परं सत्यमसत्यं वा वदन्तमवगृह्णीयात् ।

39. नानभियुक्तः कमप्यभियुञ्जीत ।

---

[1] मुखत एवोक्ते. [2] निर्णयं कुर्यात्. [3] विरुद्धव्यवहाराणाम्. [4] अनुबन्धः—दोषः, प्रमाणान्तरापेक्षा वा. [5] परकृतस्य स्वोपालम्भस्येत्यर्थः.

40. अर्थसम्बन्धः सहवासश्च नाकलहः सम्भवति ।

41. निधिः आकस्मिको वाऽर्थलाभः सह प्राणैः सञ्चितमप्यर्थमपहारयति ।

42. ब्राह्मणानां हिरण्ययज्ञोपवीतयोः स्पर्शनं शपथः, शस्त्रास्त्ररत्नभूमिवाहन[1]पल्ययनानां तु क्षत्रियाणाम्, [2]वैश्रवणपोतयोः काकिणीहिरण्ययोर्वा वैश्यानाम्, क्षीरबीजयोर्वल्मीकस्य वा शूद्राणाम्, येन कर्मणा जीवति तत्कर्मोपकरणानां तु कारूणाम् ।

43. व्रतिनामन्येषां च इष्टदेवतापादस्पर्शनप्रदक्षिणीकरणदिव्यकोशदण्डतुलारोहणैर्विशुद्धिः ।

44. व्याधानां धनुर्लङ्घनं शपथः, अन्त्यावसायिनामार्द्रचर्मारोहणम् ।

45. वेश्या महिला, भृत्यो भण्डः, श्रेणिर्नियोगः, नियोगी च मित्रं इति चत्वार्यशाश्वतानि[5] ।

46. क्रीतेष्वाहारेष्विव पण्यस्त्रीषु क आस्वादः ?

47. यस्य यावान् परिग्रहः तं तावानेव संतापयति ।

48. गजे गर्दभे च राजरजकयोस्सम एव चिन्ताभारः ।

49. मूर्खस्याऽऽग्रहः नापायमनवाप्य निवर्तते ।

50. कार्पासाग्नेरिव मूर्खस्योपशान्तौ उपेक्षणमेवौषधम् ।

51. मूर्खस्याभ्युपपत्तिकरणं [3]उद्दीपनपिण्डः ।

52. क्रोधाग्निज्वलितेषु तत्क्षणप्रशमाग्रहः घृताग्निष्वाहुतिनिक्षेप इव ।

53 जलसंसिच्यमान(पण)गुणग्रन्थिरिव अनुनयेन कर्कशो मूर्खः ।

54. अनभिज्ञोऽन्धोऽन्धानिव म्रियमाणो मूर्खकरमाकर्षति ।

55. स्वयमगुणं वस्तु न खलु पक्षपाताद्गुणवद्भवति !

56. न खलु गोपालकस्नेहादुक्षा[4] क्षीरं क्षरति !

इति विवादसमुद्देशः

---

[1] घोटकसज्जाभेदः पल्ययनम्. [2] द्रव्यसंचयस्थानं वैश्रवण. पोत; बालः, श्रवणपोतयोरिति पाठान्तरम्. [3] समाधानकरम्. [4] उक्षा-बलीवर्दः.

## २९. षाड्गुण्यसमुद्देशः

1. शमव्यायामौ व्यतिक्रमेण[1] योगक्षेमयोर्योनिः ।
2. कर्मारम्भाणां योगसाधनो व्यायामः ।
3. कर्मफलोपभोगानां क्षेमसाधनः शमः ।
4. दैवं मानुषं च कर्म लोकं यापयति ।
5. दैवं धर्माधर्मौ, मानुषं नयानयौ, तच्चिन्त्यम्; अचिन्त्यं दैवम् ।
6. अतर्कितोपस्थितार्थानर्थसम्बन्धः दैवायत्तः ।
7. बुद्धिपूर्वं हिताहितप्राप्तिपरिहारसम्बन्धः मनुष्यायत्तः ।
8. सत्यपि दैवेऽनुकूले न निष्कर्मणो भद्रमस्ति ।
9. न खलु दैवमेवेहमानस्य कृतमप्यन्नं मुखे प्रविशति ।
10. न खलु दैवमेवावलम्बमानस्य धनुः स्वयमेव शरान् सन्धत्ते ।
11. पौरुषावलम्बिनोऽर्थानर्थयोः सन्देहः, निश्चित एवानर्थो दैवमात्रपरस्य ।
12. आयुरौषधयोरिव दैवपौरुषयोः परस्परानुबन्धो हि समीहितमर्थं साधयति ।
13. तत्तत्फलमनुभावयन्[2] अनुष्ठीयमानो न कश्चिद्धर्मोऽधर्ममनुबध्नाति।
14. योगक्षेमयोर्निष्पत्त्युपायो नयः, विपत्तिहेतुरनयः ।
15. त्रिपुरुषमूर्तित्वान्न भूभुजः परं प्रत्यक्षं दैवमस्ति ।
16. प्रतिपन्नप्रथमाश्रमो हृदयगुहाज्योतिषि भगवति परे ब्रह्मणि निष्णातमतिः, उपासितगुरुकुलः सम्यग्विद्यायामधीती, कौमारं वयोऽलङ्कुर्वन् क्षत्रपुत्रो भवति ब्रह्मा ।
17. सञ्जातराज्यलक्ष्मीदीक्षाभिषेकं, स्वैर्गुणैः प्रजास्वनुरागं जनयन्तं, राजानं नारायणमाहुः, न ह्यविष्णुः पृथिवीपतिरिति ।
18. प्रवृद्धप्रतापतृतीयलोचनानलः परममैश्वर्यमातिष्ठमानः राष्ट्रकण्टकानसुरान् द्विषद्दानवांश्चोच्छेत्तुं यतमानः विजिगीषुर्भूपतिः भवति पिनाकपाणिः ।
19. उदासीनमध्यस्थविजिगीष्वरिमित्रपार्ष्णिग्राहाक्रन्दासारान्तर्धयः यथासम्भवं गुणगणविभवतारतम्यात् मण्डलानामधिष्ठातारः ।

---

[1] शमः क्षेमस्य व्यायामः योगस्येति, [2] कर्मणां सम्यक्प्रयोगेण तदीयानि फलानि प्रत्यक्षीकुर्वन्.

20. अग्रत: पृष्ठत: पार्श्वतः कोणतो वा सन्निकृष्टे विप्रकृष्टे वा मण्डले स्थित:, मध्यमादीनां विगृहीतानां विग्रहे संहतानामनुग्रहे च समर्थोऽपि केनचित्कारणेनान्यस्मिन् भूपतौ विजिगीषमाणे य उदास्ते स उदासीन: ।

21. उदासीनवदनियतमण्डलः, परभूपापेक्षया स्वयं समधिकबलोऽपि कुतश्चित्कारणादन्यस्मिन्नृपतौ विजिगीषमाणे यो मध्यस्थभावमवलम्बते स मध्यस्थः ।

22. राजात्मदैवद्रव्यप्रकृतिसम्पन्नः नयविक्रमयोरधिष्ठानं विजिगीषु: ।

23. य एव स्वस्याहितानुष्ठानेन प्रातिकूल्यं बिभर्ति स एवारि: ।

24. मित्रलक्षणमुक्तं पुरस्तात् ।

25. यो विजिगीषौ प्रस्थिते प्रतिष्ठमाने वा पश्चात्कोपं जनयति स पार्ष्णिग्राहः ।

26. पश्चाद्विजिगीषोर्मित्रमाक्रन्दः ।

27. पार्ष्णिग्राहमित्रं आसारः आक्रन्दमित्रं वा ।

28. अरिविजिगीषोर्मण्डलान्तर्विहितवृत्ति: उभयवेतनः पर्वताटवीकृताश्रयश्चान्तर्धिः ।

29. अराजबीजी लुब्धः क्षुद्रः विरक्तप्रकृतिः अन्यायपरः व्यसनी विप्रतिपन्नमित्रामात्यमन्त्रिसामन्तसेनापतिः शत्रुः अभियोक्तव्यः ।

30. अनपाश्रयो दुर्बलाश्रयो वा शत्रुरुच्छेदनीय:, विपर्ययः पीडनीयः कर्षणीयो वा ।

31. समाभिजनः सहजशत्रुविरुद्धः विरोधयिता वा कृत्रिमः शत्रुः ।

32. 'अनन्तरः शत्रुः, एकान्तरं मित्रम्' इति नैष एकान्ततः; कार्यं हि मित्रत्वामित्रत्वयोः कारणं, न पुनर्विप्रकर्षसन्निकर्षौ ।

33. बुद्धिशक्तिरात्मशक्तेरपि गरीयसी, शशकेन सिंहव्यापादनमत्र दृष्टान्तः ।

34. कोशदण्डबलं प्रभुशक्तिः, शूद्रकशक्तिकुमारौ दृष्टान्तौ ।

35. विक्रमः बलं चोत्साहशक्तिः, अत्र रामो दृष्टान्तः ।

36. शक्तित्रयोपचितः ज्यायान्, शक्तित्रयापचितः हीनः, समानशक्तित्रयः समः ।

37. सन्धिविग्रहयानासनसंश्रयद्वैधीभावाः षाड्गुण्यम्।

38. पणबन्धः सन्धिः ।

39. अपकारो विग्रहः ।

40. अभ्युच्च(द)यो यानम् ।

41. उपेक्षणमासनम् ।

42. परस्यात्मार्पणं संश्रयः ।

43. एकेन सह सन्धाय अन्येन सह विग्रहकरणं, एकत्र वा शत्रौ सन्धानपूर्वो विग्रहः द्वैधीभावः ।

44. प्रथमपक्षे सन्धीयमानो विगृह्यमाणो विजिगीषुरिति त्र्याश्रयः द्वैधीभावः, द्वितीये तु द्व्याश्रयः ।

45. हीयमानः पणबन्धेन सन्धिमुपेयात्, यदि नास्ति परेषां परिपणितेऽर्थे मर्यादोल्लङ्घनम् ।

46. अभ्युच्चीयमानः परं विगृह्णीयात्, यदि नास्त्यात्मबलेषु क्षोभः ।

47. गुणातिशययुक्तो यायात्, यदि न सन्ति राष्ट्रकण्टकाः, न भवति वा पश्चात्कोपः ।

48. स्वमण्डलमपरिपालयतः परमण्डलाभियोगः विवसनस्य शिरोवेष्टनमिव (अन्धस्य रज्जुवलनमिव)।

49. न मां परो हन्तुं नाहं परं हन्तुं च शक्तः इत्यासीत, यद्यायत्यामस्ति कुशलम् ।

50. शक्तिहीनः संश्रयं कुर्यात्, यदि न भवति परेषामामिषम् ।

51. बलवद्भयादबलवदाश्रयणं हस्तिभयादेरण्डाश्रयणमिव।

52. स्वयमस्थिरेणास्थिराश्रयणं नद्यां वहमानेन वहमानस्याश्रयणमिव ।

53. वरं मानिनो मरणं, न परेच्छानुवर्तनादात्मविक्रयः।

54. आयतिकल्याणे सति कस्मिंश्चित्सम्बन्धे परसंश्रयः श्रेयान् ।

55. न राजकार्येषु कालनियमोऽस्ति, मेघवदुत्थानं हि राजकार्याणाम् ।

56. अन्यत्र शत्रौ च सन्धिविग्रहाभ्यां द्वैधीभावं गच्छेत्, यद्यन्योऽवश्यमात्मना सहोत्सहते ।

57. बलवदुभयमध्यस्थः शत्रुः उभयसिंहमध्यगतः करीव भवति सुखसाध्यः ।

58. भूम्यर्थिनां भूफलप्रदानेन सन्दध्यात्, यतो न भुवां फलदान मस्ति नित्यमिति; न तु भुवा, परेषु हि गता भूमिर्गतैव।

59. अवज्ञयापि भूमावारोपितस्तरुः भवति बद्धमूलः, किं पुनर्न भूपतिः?

60. उपायोपपन्नविक्रमः अनुरक्तप्रकृतिः अल्पदेशोऽपि भूपतिः सार्वभौमो भवति।

61. न हि कुलागता कस्यापि भूमिः, किन्तु वीरभोज्या वसुन्धरा!

62. सामोपप्रदानभेददण्डाः उपायाः।

63. तत्र पञ्चविधं साम —गुणसङ्कीर्तनं सम्बन्धोपाख्यानं परस्परोपकार-सन्दर्शनं आयतिप्रदर्शनं आत्मोपनिधानमिति।

64. यन्मम द्रव्यं तत् भवता स्वकृत्येषु प्रयुज्यतामित्यात्मोपनिधानम्।

65. बह्वर्थसंरक्षणायाल्पार्थदानेन परप्रसादनं उपप्रदानम्।

66. योगतीक्ष्णगूढपुरुषोभयवेतनैः परबलस्य परस्परशङ्काजननं निर्भ-र्त्सनं वा भेदः।

67. वधः परिक्लेशः अर्थहरणं वा दण्डः।

68. शत्रोरागतं साधु परीक्ष्य कल्याणबुद्धिमनुगृह्णीयात्।

69. किमरण्यजमौषधं न भवति क्षेमाय?

70. गृहप्रविष्टः कपोत इव अल्पोऽपि शत्रुसम्बन्धी लोकः तन्त्रमुद्वास-यति।

71. मित्रहिरण्यभूमिलाभानां उत्तरोत्तरो लाभः श्रेयान्, हिरण्यं भूमि-लाभाद्भवति, मित्रं च हिरण्यलाभादिति।

72. स्वयमसहायश्चेत् भूमिः हिरण्यलाभाय न प्रभवति, तदा मित्रं गरीयः।

73. सहायानुयायि मित्रं स्वयं चास्थास्नुर्भूमिरिति ताभ्यां हिरण्यं गरीयः।

74. शत्रोर्मित्रभावे कारणं विमृश्य तथाऽऽचरेत्, यथा न वञ्च्यते।

75. गूढोपायेन सिद्धकार्यस्यासंवृतिकरणं सर्वशङ्कां दुरपवादं च करोति।

76. अभयप्रदानमान्योपदेशाभ्यां दुर्जनं शमयेत्।

77. गृहीतपुत्रदारान् उभयवेतनान् कुर्यात्।

78. शत्रुमपकृत्य तद्दायादान् भूमिदानेनात्मनः सफलयेत् क्लेशयेद्वा ।
79. अन्यस्य भूः अन्यस्य महता प्रयत्नेन परिणमति न परिणमति वा ।
80. परविश्वासजनने सत्यं शपथः प्रतिभूः प्रधानपुरुषप्रतिग्रहो वा हेतुः ।
81. सहस्रैकीयः पुरस्ताल्लाभः, शतैकीयः पश्चात्कोप इति न यायात् ।
82. सूचीमुखा ह्यनर्था भवन्ति, अल्पेनापि सूचीमुखेन महत्सूत्रजालं प्रविशति ।
83. योग्यपुरुषापचयः क्षयः ।
84. हिरण्यधान्यापचयः व्ययः ।
85. तमात्मनो लाभमिच्छेत्, येन सामिषः क्रव्याद इव न परैरवरुद्ध्येत ।
86. गृहागतमर्थं केनापि कारणेन नावधीरयेत् ।
87. यदार्थागमः तदैव सर्वतिथिनक्षत्रग्रहबलम् ।
88. गजेन गजबन्धनमिव अर्थेनार्थोपार्जनम्, न केवलाभ्यां बुद्धिपौरुषाभ्याम् ।
89. महतो जनस्य सम्भूयोत्थाने सङ्घातविघातेन दण्डं प्रणयेत्, शतमवध्यं सहस्रमदण्ड्यमिति न प्रणयेत् ।
90. सा राजन्वती भूमिः, यस्यां नासुरवृत्तिः परप्रणेयश्च राजा ।
91. अपरीक्षितार्थमानप्राणो हि राजा असुरवृत्तिः ।
92. परकोपप्रसादानुवृत्तिः परप्रणेयः ।
93. तत्स्वामिनश्छन्दानुवर्तनं श्रेयः, यन्न भवत्यायत्यामहिताय ।
94. निरनुबन्धं अनर्थानुबन्धं चार्थं न गृह्णीयात् ।
95. नासावर्थः, यत्रायत्यां महाननर्थानुबन्धः ।
96. लाभस्त्रिविधः—नवः भूतपूर्वः पित्र्यश्चेति ।

इति षाड्गुण्यसमुद्देशः

---

## ३०. युद्धसमुद्देशः

1. स किं मन्त्री मित्रं वा ? यः प्रथममेव युद्धोद्योगं भूमित्यागं चोपदिशति ।
2 स किं सहायः ? योऽसौ व्याहरति महान्तमनर्थं संशयं वा स्वामिनः सङ्ग्रामे ।

3. को नामात्मवान् आदावेव स्वामिनं प्राणसन्देहतुलामारोहयति ?
4. भूम्यर्थं नृपाणां नयः विक्रमश्च, न तु भूमित्यागाय ।
5. बुद्धियुद्धेन परान् जेतुमशक्तः शस्त्रयुद्धमारभेत ।
6. न तथेषवः प्रभवन्ति, यथा प्रज्ञावतां प्रज्ञाः ।
7. दृष्टेऽप्यर्थे भवन्त्यपराद्धेषवो धनुष्मन्तः, अदृष्टमप्यर्थं साधु साधयति प्रज्ञावान् ।
8. श्रूयते किल—दूरस्थोऽपि माधवपिता कामन्दकीयप्रयोगेण माधवाय मालतीं साधयामासेति ।
9. प्रज्ञा ह्यमोघं शस्त्रं कुशलबुद्धीनाम् ।
10. प्रज्ञाहताः कुलिशहता इव न पुनः प्रादुर्भवन्ति भूभृतः ।
11. परैः स्वस्याभियोगमपश्यतो भयं, नदीमपश्यत उपानत्परित्यजनमिव ।
12. अतितीक्ष्णो बलवानपि शरभ इव न चिरं नन्दति ।
13 प्रहरतोऽपसरतो वा समे विनाशे वरं प्रहारः, यत्र नैकान्तिको विनाशः ।
14. कुटिला हि गतिर्दैवस्य—यत् मुमूर्षुमपि जीवयति, जिजीविषुमपि मारयति ।
15. दीपशिखायां पतङ्गवत् ऐकान्तिके विनाशे तु अविचारमपसरेत् ।
16. जीवतो हि संभवेद्दैवोदयात् कालबलम् !
17. वरमल्पमपि सारं बलम्, न तु भूयसी मुण्डमण्डली ।
18. असारबलभङ्गः सारबलभङ्गं करोति ।
19. नाप्रतिग्रहो युद्धमुपेयात् ।
20. राजव्यञ्जनं पुरस्कृत्य पश्चात् स्वाम्यधिष्ठितस्य सारबलस्य निवेशनं प्रतिग्रहः ।
21. सप्रतिग्रहं बलं साधु युद्धायोत्सहते ।
22. पृष्ठतः सदुर्गजला भूमिः बलस्य महानाश्रयः ।
23. नद्या नीयमानस्य तटस्थपुरुषदर्शनमपि जीवितहेतुः ।
24. निरन्नमपि सप्राणमेव बलं, यदि जलं लभेत ।
25. बलवता विगृहीतस्य तद्दायादपरिग्रहः श्वमण्डले शिखिमण्डकप्रवेश इव ।

26. आत्मशक्तिमविज्ञायोत्साहः शिरसा पर्वतभेदनमिव ।
27. सामसाध्यं युद्धसाध्यं न कुर्यात् ।
28. गुडादभिप्रेतसिद्धौ को नाम विषं भुञ्जीत ?
29. अल्पव्ययभयात् सर्वनाशं करोति मूर्खः ।
30. को नाम कृतधीः शुल्कभयात् भाण्डं परित्यजति ?
31. स किं व्ययः,? यो महान्तमर्थं रक्षति ।
32. पूर्णसरःसलिलस्य हि न परीवाहादपरोऽस्ति रक्षणोपायः ।
33. अप्रयच्छतो बलवान् प्राणैस्सहार्थं गृह्णाति ।
34. बलवति सीमाधिपेऽर्थं प्रयच्छन् विवाहोत्सवगृहागमनादिमिषेण प्रयच्छेत् ।
35. अमिषमर्थं प्रयच्छतः निरवधिः स्यान्निबन्धः शासनेन ।
36. स्वयमल्पबलकोशदेशदुर्गभूमिः, अप्रतिविधेयश्च शत्रुः स्वदेशं न परित्यजेच्च, तदा कृतसंघातविघातोऽरिभिः साधयेत् ।
37. विशीर्णयूथो वनगज इव कस्य वा न भवति साध्यः ?
38. विनिःस्रावितजले सरसि विषमोऽपि ग्राहः जलव्यालो वा छगल इव !
39. वनविनिर्गतः सिंहोऽपि सृगालायते !
40. विच्छिन्नोपान्तप्रताने वंशे किमस्त्याकर्षकस्य क्लेशः ?
41. नास्ति सङ्घातस्य निःसारता ।
42 किं न स्खलयति मत्तमपि वारणं तृणसङ्घात: ?
43. संहतैर्बिसतन्तुभिः दिग्गजोऽपि नियम्यते ।
44. दण्डसाध्ये शत्रौ उपायान्तरं अग्नावाहुतिप्रदानमिव ।
45. यन्त्रशस्त्राग्निक्षारप्रतीकारे व्याधौ किं नामान्यदौषधं कुर्यात् ?
46. अविज्ञातकरणवृत्तः सर्वोऽपि भवति शूरः ।
47. अदृष्टान्यसामर्थ्यः को नाम न भवति सदर्पः ?
48. अतिप्रवृद्धा श्रीः कं न दर्पयति ?
49. कृतार्थापहारः विघटिततन्त्रश्च परः रुष्यन्नपि किं कुर्यात् ?
50. उत्पाटितदंष्ट्रः सर्पोऽपि रज्जुरेव ।
51. प्रतिहतप्रतापोऽङ्गारः संपतितोऽपि किं कुर्यात् ?
52. विद्विष्टानां चाटुकारं न बहुमन्येत ।

53. जिह्वया लिहन् खड्गो मारयत्येव ।
54. तन्त्रावापौ नीतिशास्त्रम् ।
55. स्वमण्डलपालनाभियोगः तन्त्रम् ।
56. परमण्डलावाप्त्यभियोगः आवापः ।
57. बहूनेको न विगृह्णीयात् ।
58. सदर्पोऽपि सर्पः व्यापाद्यत एव पिपीलिकाभिः ।
59. नाशोधितायां परभूमौ प्रविशेन्निष्क्रमेद्वा ।
60. विग्रहकाले परस्मादागतं कमपि न गृह्णीयात् ।
61. गृह्णन् वा सह न वसेत् , अन्यत्र दायादेभ्यः ।
62. श्रूयते हि---निजस्वामिना सह कूटकलहं विधाय आप्तविश्वासः कृकलासो नामानीकपतिः आत्मविपक्षं विरूपाक्षं जघानेति ।
63. बलमपीडयन् परानभिषेणयेत् ।
64. दीर्घप्रयाणोपहतं बलं अनायासेन भवति परेषां साध्यम् ।
65. न दायादादपरः परबलस्याकर्षणमन्त्रोऽस्ति ।
66. यमभिगच्छेत्तस्यावश्यं दायादानुत्थापयेत् ।
67. कण्टकेन कण्टकमिव परेणैव परमुद्धरेत् ।
68. बिल्वेन बिल्वं हन्यमानं उभयथाप्यात्मनो लाभाय ।
69. यावत्परेणापकृतं तावतोऽधिकमपकृत्य सन्धिं कुर्यात् ।
70. नातप्तं लोहं लोहेन संधत्ते ।
71. तेजो हि सन्धानकारणं, नापराधस्य क्षान्तिरुपेक्षा वा ।
72. उपचीयमानः घटेनेवाश्मा हीनेन सहापि विग्रहं कुर्यात् ।
73. दैवानुलोम्यं पुण्यपुरुषोपचयः अप्रतिपक्षता च विजिगीषोरुदयः ।
74. पराक्रमकर्कशः प्रवीरानीकश्चेत् हीनः सन्धाय साधूपचरितव्यः ।
75. दुःखामर्षजं तेजो विक्रमयति ।
76. स्वजीविते हि निराशस्य अवार्यो भवति वीर्यवेगः ।
77. लघुरपि सिंहशावः हन्त्येव दन्तिनम् ।
78. न चातिभग्नं पीडयेत् ।
79. शौर्यैकधनस्योपचारः मनसि तच्छगलस्य पूजेव ।
80. समस्य समेन सह विग्रहे निश्चितं मरणं, जये च सन्देहः ।
81. आमं हि पात्रं आमेनाभिहतं उभयतः क्षयं करोति ।

82. ज्यायसा सह विग्रहः हस्तिना पदातियुद्धमिव ।

83. स धर्मविजयी राजा, यो विधेयतामात्रेणैव सन्तुष्टः प्राणार्थमानेषु नापकरोति ।

84. स लोभविजयी राजा, यो द्रव्येण कृतप्रीतिः प्राणार्थमानेषु नापराध्यति ।

85. सोऽसुरविजयी राजा, यः प्राणार्थमानोपघातेन महीमभिलषति ।

86. असुरविजयिनः संश्रयः सूनागारे मृगप्रवेश इव ।

87. यादृशस्तादृशो वा यायिनः स्थायी बलवान्, यदि साधुचारसञ्चारः सन्नद्धश्च ।

88. रणेषु चरणपतितं भीतं अशस्त्रं च हिंसन् ब्रह्महा भवति ।

89. सङ्ग्रामवृत्तेषु यायिषु सत्कृत्य विसर्गः, स्थायिषु संसर्गश्च सेनापत्यायत्तः श्रेयान् ।

90. मतिनदीयं नाम सर्वेषां प्राणिनामुभयतो वहति पापाय धर्माय च, तत्राद्यं स्रोतोऽतीव सुलभं, दुर्लभं तद्द्वितीयम् ।

91. सत्येनापि शप्तव्यं, महतामभयप्रदायिवचनमेव शपथः ।

92. सतामसतां च वचनायत्ताः खलु सर्वे व्यवहाराः ।

93. स एव सर्वलोकमहनीयः, यस्य वचनमन्यमनस्कतयाप्यायातं भवति शासनम् ।

94. नास्याप्रेरिता वाक् देवतया वदति, सत्या ह्येषा सरस्वती ।

95 व्यभिचारिवचनेषु नैहिकी पारलौकिकी वा क्रिया समस्ति ।

96. न विश्वस्तघातात्परं पातकमस्ति ।

97. विश्वासघातकः सर्वेषामविश्वासं करोति ।

98. असत्यसन्धेषु विश्वासः कृतान्यकृतानि च हन्ति ।

99. असत्यवादिनो मृतस्यापि दुर्यशो न विनश्यति ।

100. सकृदुत्थिता अपप्रसिद्धिः देवैरपि न निवारयितुं शक्यते ।

101. तथा हि धर्मपुत्रः असत्यमभाषत, अपाच्च मद्यमित्यद्याप्यस्ति दुष्प्रसिद्धिः ।

102. यशोवधः प्राणवधाद्गरीयान् ।

103. बलं बुद्धिः भूमिः ग्रहानुलोम्यं परोद्योगस्य प्रत्येकं बहुविकल्पदण्डमण्डलाभोगाश्च संहतव्यूहरचनायाः हेतवः ।

104. साधु रचितोऽपि व्यूहः तावत्तिष्ठति, यावन्न परबलदर्शनम् ।
105. न हि शस्त्रशिक्षाक्रमेण योद्धव्यं, किन्तु परप्रहाराभिप्रायेण ।
106. व्यसनेषु प्रमादेषु वा परेष्वभिषेणनमवस्कन्दः ।
107. अन्याभिमुखं प्रयाणमुपक्रम्य अन्योपघातकरणं कूटयुद्धम् ।
108. विषविषमपुरुषौपनिषदिकयोगोपजापैः परोपघातानुष्ठानं तूष्णीं दण्डः ।
109. एकं बलस्याधिकृतं न कुर्यात्, भेदापराधशङ्कायामेकः समर्थो जनयति महान्तमनर्थम् ।
110. राजा राजकार्येषु मृतानां सन्ततिमपोषयन् ऋणभागी स्यात्, साधु च नोपचर्येत तन्त्रेण सर्वेभ्यो धार्मिकेभ्यश्च ।
111. धार्मिकेभ्योऽपि परा गतिर्हि शूराणाम्!
112. युधि पृष्ठगं ब्रह्महणमाहुः ।
113. युद्धे स्वामिनः पुरस्सरणं अश्वमेधसममाहुः ।
114. युधि स्वामिनं परित्यजतो नास्तीहामुत्र च कुशलम् ।
115. विग्रहायोच्चलितस्य अर्धं बलं सर्वदा सन्नद्धमासीत ।
116. प्रयाणमावासनं च कुर्वतः चतुर्दिशमनीकानि अनतिदूरेण संचरेयुस्तिष्ठेयुश्च ।
117. धूमाग्निरजोविषाणध्वनिव्याजेन आटविकाः प्रणिधयः परबलान्यागच्छन्ति निवेदयेयुः ।
118. पुरुषप्रमाणोत्सेधं अबहुजननिवेशं चरणापसरणयुक्तं अग्रतो महामण्डपावकाशं च तदङ्गमध्यस्य सर्वदा स्थानं दद्यात् ।
119. सर्वसाधारणभूमिकं तिष्ठतः नास्ति शरीररक्षा ।
120. भूचरो दोलाचरः तुरङ्गचरो वा न कदाचित्परभूमौ प्रविशेत् ।
121. करिणं यन्त्रयानं वाध्यासीने न प्रभवन्ति क्षुद्रोपद्रवाः ॥

इति युद्धसमुद्देशः

---

## ३१. विवाहसमुद्देशः

1. द्वादशवर्षा स्त्री, षोडशवर्षः पुमांश्च प्राप्तव्यवहारौ भवतः ।
2. विवाहपूर्वो व्यवहारः चातुर्वर्ण्यं कुलीनतां नयति ।
3. युक्तितो वरणविधानं, अग्निदेवद्विजसाक्षिकं च पाणिग्रहणं विवाहः ।

4. स ब्राह्मो विवाहः, यत्र वरायालङ्कृत्य कन्या प्रदीयते।
5. स दैवो विवाहः, यत्र यज्ञार्थमृत्विजे कन्याप्रदानमेव दक्षिणा।
6. गोमिथुनपुरस्सरं कन्यादानादार्षः।
7. 'त्वं भवास्य महाभागस्य प्रेयसी सहधर्मचारिणी' इति विनियोगेन कन्याप्रदानात् प्राजापत्यः।
8. एते चत्वारो धर्म्या विवाहाः।
9. मातुः पितुर्बन्धूनां चाप्रामाण्यात् परस्परानुरागेण मिथस्समवायाद्गान्धर्वः।
10. पणबन्धेन कन्याप्रदानादासुरः।
11. कन्यायाः प्रसह्यादानात् (प्रसह्य हरणात्) राक्षसः।
12. सुप्तप्रमत्तकन्याहरणात् पैशाचः।
13. एते चत्वारः अधमा अपि नाधर्म्याः, यद्यस्ति वधूवरयोरनपवादं परस्परसंभाव्यत्वम्।
14. उन्नतत्वं कनीनयोः, लोमशत्वं जङ्घयोः, अमांसलत्वमूर्वोः, अचारुत्वं कटिनाभिजठरकुचयुगलेषु, सिरालुत्वं अशुभसंस्थानत्वं च बाह्वोः, कृष्णत्वं तालुजिह्वाऽधरेषु, विरलविषमभावो दशनेषु, सकूपत्वं कपोलयोः, पिङ्गलत्वमक्ष्णोः, स्थपुटत्वं ललाटे, दुःसन्निवेशत्वं श्रवणयोः, स्थूलकपिलपरुषातिदीर्घभावः केशेषु, अतिदीर्घातिलघुन्यूनाधिकता, विकटकुब्जवामनकिराताङ्गत्वं, जन्मदेहाभ्यां स्वेन समानताऽधिकत्वं चेति कन्यादोषाः।
15. सहसा तद्गृहे गतस्य स्वयमाहूतगतस्य वा अग्रे अभ्यक्ता (व्यक्ता) (भुक्ता)–व्याधिमती, रुदती–पतिघ्नी, सुप्ता–स्तोकायुष्का, बहिर्गता–कुलटा, अप्रसन्ना–दुःखिता, कलहोद्यता–परिजनोद्वासिनी, अप्रियदर्शना–दुर्भगा च भवेदिति नैतां वृणीत कन्याम्।
16. शिथिले पाणिग्रहणे वरः कन्यया परिभूयते।
17. मुखमपश्यतो वरस्य सन्निधौ अनिमीलितदर्शना कन्या भवति प्रचण्डा।
18. सह शयने तूष्णीं भवन् पशुवन्मन्येत, बलवदाक्रमणं कुर्वन् जन्मविद्वेष्यो भवति।

19. धैर्यचातुर्यायत्तं हि कन्याविस्रम्भणम् ।

20. समविभवाभिजनयोः असगोत्रयोश्च विवाहसम्बन्धः ।

21. कन्या हि महतः पितुरैश्वर्यात् अल्पं पतिमवगणयति ।

22. अल्पस्य कन्या पितुर्दौर्बल्यान्महताऽवज्ञायते ।

23. अल्पस्य महता सह संव्यवहारे महान् व्ययः अल्पश्चायः ।

24. वरं वेश्यासङ्ग्रहोऽपि, न त्वविशुद्धकन्यापरिग्रहः ।

25. वरं जन्मनाशोऽपि, न तु कन्यायाः अकुलीनेष्ववक्षेपः ।

26. सम्यग्वृत्तापि कन्या तावत् सन्देहास्पदं, यावन्न पाणिग्रहणम् ।

27. विकृतप्रत्यूढाऽपि पुनर्विवाहमर्हतीति स्मृतिकाराः ।

28. आनुलोम्येन चतुस्त्रिद्विवर्णाः कन्याभाजनाः ब्राह्मणक्षत्रियविशः ।

29. देशापेक्षो मातुलसम्बन्धः ।

30. धर्मसन्ततिः, अनुपहता रतिः, गृहवार्तासु विहितत्वं, आभिजात्याचारविशुद्धिः, देवद्विजातिथिबान्धवसत्कारानवद्यत्वं, निःश्रेयसमार्गेष्वसङ्कुचितः सञ्चारः साधकानां हस्तावलम्बनविधानं च दारकर्मणः फलम् ।

31. गृहिणी गृहमुच्यते, न पुनः कुड्यकटसङ्घातः ।

32. गृहकर्मविनियोगः परिमितार्थत्वं अस्वातन्त्र्यं सदाचारः मातृव्यञ्जनस्त्रीजनावरोधः स्वरसतः स्वान्तस्य सद्विषयोन्मुखतापादनं चेति कुलवधूनां रक्षणोपायः ।

33. रजकशिलाकुक्कुरखर्परसमा हि वेश्याः ! कस्तास्वभिजातोऽनुरज्येत ?

34. दानैरपि दौर्भाग्यं, संस्कृत्य संस्कृत्य परोपभोग्यत्वं, उपभोक्तुरशक्तौ परिभवो मारणं वा, महोपकारेऽप्यनात्मीयत्वं, बहुकालसम्बन्धमपि त्यक्त्वा तदैव पुरुषान्तरगामित्वं—इति वेश्यानां कुलागता धर्माः ।

35. वेश्या वेश्येति न जातिरन्वेष्टव्या, पतिहृदयात् स्वहृदयं व्यभिचारयन्ती सर्वापि वेश्यैव ।

36. विटो जार इति न जातिरन्वेष्टव्यः, सतीहृदयात् स्वहृदयं व्यभिचारयन् सर्वोऽपि विट एव, जार एव ॥

इति विवाहसमुद्देशः

———

## ३२. प्रकीर्णकसमुद्देशः

1. अथ प्रकीर्णकमुच्यते—समुद्र इव विप्रकीर्णसूक्तिरत्नविन्यासनिबन्धनं प्रकीर्णकम् ।
2. वर्णपदवाक्यप्रमाणयोगविज्ञाननिष्णातमतिः सुमुखः सुव्यक्तगम्भीरमधुरध्वनिः प्रगल्भः प्रतिभानवान् सम्यागूहावधारणागमकशक्तिसंपन्नः सम्प्रज्ञातसमस्तलिपिभाषावर्णाश्रमसमयस्वपरव्यवहारस्थितिः आशुलेखनवाचनसमर्थश्च—इति सान्धिविग्रहिका गुणाः ।
3. कथाविच्छेदः व्याकुलत्वं मुखे वैरस्यं अनवेक्षणं स्थानत्यागः साध्वाचरितेऽपि दोषोद्भावनं विज्ञप्ते च मौनं अक्षमा कालयापनं अदर्शनं मृषाऽभ्युपगमश्च—इति विरक्तलिङ्गानि ।
4. दूरादेवेक्षणं, मुखप्रसादः, संप्रश्नेष्वादरः, प्रियवस्तुस्मरणं, परोक्षे गुणग्रहणं, तत्परिवारस्य तदनुनयवृत्तिः—इति अनुरक्तलिङ्गानि ।
5. श्रुतिसुखत्वं अपूर्वाविरुद्धार्थातिशययुक्तत्वं उभयालङ्कारसंपन्नत्वं अन्यूनाधिकवचनत्वं अभिव्यक्तान्वयत्वमिति काव्यस्य गुणाः ।
6. अतिपरुषवचनविन्यासत्वं अनन्वितगतार्थत्वं दुर्बोधानुपपन्नपदोपन्यासत्वं अयथार्थयतिविन्यासत्वं अभिधानाभिधेयातिशयशून्यत्वं—इति काव्यस्य दोषाः ।
7. वचनकविः अर्थकविः उभयकविः चित्रकविः वर्णकविः दुष्करकविः अरोचकी सतुषाभ्यवहारी च—इत्यष्टौ कवयः ।
8. मनःप्रसादः, कलासु कौशलं, सुखेन चतुर्वर्गविषया व्युत्पत्तिः, आसंसारं च यशः, निगूढसत्संस्कारोद्बोधश्च—इति कविसंग्रहस्य फलम् ।
9. आलापशुद्धिः माधुर्यातिशयः प्रयोगसौन्दर्यवैदग्ध्ये अतीव मसृणता स्थानकम्पितकुह(का)रितादिभावः रागान्तरसङ्क्रान्तिः परिगृहीतरागनिर्वाहः सहृदयहृदयग्राहिता स्वास्थ्यजननं चेति गीतस्य गुणाः।
10. समत्वं तालानुयायित्वं गेयाभिनयानुगतत्वं श्लक्ष्णत्वं प्रव्यक्तयतिप्रयोगत्वं श्रुतिसुखावहत्वं च—इति वाद्यस्य गुणाः ।

11. दृष्टिहस्तपादक्रियासु समसमायोगः सङ्गीतकानुगतत्वं सुश्लिष्ट-ललिताभिनयाङ्गहारप्रयोगभावः रसभाववृत्तिलावण्यभावः –इति नृत्यगुणाः ।

12. स खलु महान्, यः खल्वार्तोऽपि न दुर्वचनं ब्रूते !

13. स किं गृहाश्रमी ? यत्राऽऽगत्य अर्थिनो न भवन्ति कृतार्थाः ।

14. ऋणग्रहणेन धर्मः सुखं सेवा वणिज्या च आयतिहीनवृत्तीनां तादात्विकानाम् ।

15. द्रव्यं विद्यमानमर्थिभ्यो देयं, नाविद्यमानम् ।

16. ऋणदातुरासन्नं फलं–परोपास्तिः कलहः परिभवः प्रस्तावेऽर्था-लाभश्च ।

17. अदातुस्तावत् स्नेहः सौजन्यं प्रियभाषणं साधुता च यावन्नार्था-वाप्तिः ।

18. तदसत्यमपि नासत्यं, यत्र न सम्भाव्याऽर्थहानिः ।

19. प्राणवधे संप्राप्ते नास्ति कश्चिदसत्यवादः । (प्राणावधिर्नास्ति-कस्यासत्यवादः ।)

20. अर्थाय मातरमपि लोको हिनस्ति ! किं पुनरसत्यं न भाषते ?

21. सत्कलासत्योपासनं हि विवाहकर्म, दैवायत्तस्तु वधूवरयोः निर्वाहः ।

22. रतिकाले तन्नास्ति, यन्न कामार्तो ब्रूते पुमान् ; न चैतत्प्रमाणम् ।

23. तावत् स्त्रीपुरुषयोः परस्परं प्रीतिः, यावन्न प्रातिलोम्यं कलहो रतिकैतवं च ।

24. तादात्विकबलस्य कुतो रणे जयः, प्राणार्थस्त्रीषु कल्याणं वा ?

25. तावत्सर्वः सर्वस्यानुनयवृत्तिपरः, यावन्न भवति कृतार्थः ।

26. सहसम्भवो देहोऽपि नामुत्र सहानुयायी, किं पुनरन्यः ?

27. अशुभस्य कालहरणमेव प्रतीकारः ।

28. पक्वान्नादिव स्त्रीजनात् देहतापोपशान्तिरेव प्रयोजनं; किं तत्रानु-रागविरागाभ्याम् ?

29. तृणेनापि प्रयोजनमस्ति, किं पुनर्न पाणिपादवता मनुष्येण ?

30. न कस्यापि लेखमवमन्येत; लेखप्रधाना हि राजानः ! तन्मूलत्वात् सन्धिविग्रहयोः सकलस्य राज्यव्यापारस्य च ।

31. पुष्पयुद्धमपि नीतिविदो नेच्छन्ति, किं पुनश्शस्त्रयुद्धम्?
32. स प्रभुः, यः बहून् बिभर्ति।
33. किमर्जुनतरोः फलसम्पदा? या न भवति परेषामुपभोग्या।
34. स त्यागी, यः मार्गपादप इव सर्वेषां सहते सम्बाधम्।
35. पर्वता इव राजानः केचन दूरतः सुन्दराः।
36. लोकवार्तामात्ररमणीयाः प्रायशः सर्वेऽपि देशाः।
37. अधनस्य अबान्धवस्य च जनस्य मनुजपूरितापि भूमिर्महाटवी।
38. श्रीमतो ह्यरण्यान्यपि राजधानी!
39. सर्वस्याप्यासन्नविनाशस्य भवति मतिः प्रायेण विपर्यस्ता।
40. पुण्यवतः पुरुषस्य न क्वचिदप्यस्ति दौःस्थ्यम्।
41. दैवमनुकूलं चेत् का वा सम्पदो न करोति, न विघटयति वा विपदः?
42. असूयकः पिशुनः कृतघ्नः दीर्घरोषणः–इति कर्मचण्डालाः।
43. औरसः क्षेत्रजः दत्तः कृत्रिमः गूढोत्पन्नः अपविद्धः–इति षट् पुत्राः दायादाः पिण्डदाश्च।
44. कानीनः सहोढः क्रीतः पौनर्भवः स्वयंदत्तः शौद्रश्च–इति षट्पुत्राः न दायादाः नापि पिण्डदाश्च।
45. देशकालकुलापत्यस्त्रीसमयापेक्षः दायादविभागः अन्यत्र यतिराजकुलाभ्याम्, तत्र ह्येक एव भवति तत्पदार्हः।
46. अतिपरिचयः कस्यावज्ञां न जनयति?
47. भृत्यापराधे स्वामिनो दण्डः, यदि तं भृत्यं न मुञ्चति।
48. अलं तस्य महत्तया समुद्रस्येव, यः लघुं शिरसा वहति, अधस्तान्न नयति गुरुम्।
49. रतिमन्त्रहोमाहारकालेषु न कमप्युपसेवेत।
50. सुष्ठु परिचितेष्वपि तिर्यक्षु विश्वासं न गच्छेत्।
51. मत्तवारणारोहिणः जीवितव्ये सन्देहः, निश्चितश्चापायः।
52. अत्यर्थं हयविनोदः अङ्गभङ्गमनापाद्य न तिष्ठति।
53. ऋणमददानो दासकर्मणा निर्हरेत्, अन्यत्र ब्राह्मणयति-(क्षत्रिये)भ्यः।
54. तस्यात्मदेह एव वैरी! यो यस्य यथालाभमशनं शयनं च न सहते।
55. तस्य किमसाध्यं नाम? यो महामुनिरिव सर्वान्नीनः सर्वक्लेशसहः सर्वत्र सुखशायी च।

56. स्त्रीप्रीतिरिव कस्य नामेयं स्थिरा लक्ष्मीः ?

57. परपैशुन्योपायेनैव प्रायेण राज्ञो वल्लभो भवति लोकः ।

58. परापवादेनात्मोत्कर्षं मन्यते नीचः ।

59. न खल्वन्यपरमाणूनामल्पत्वेन मेरुर्महान् भवति, किन्तु स्वगुणेन ।

60. न खलु निर्निमित्तं महान्तो भवन्ति कलुषितमनीषाः !

61. स खलु वह्नेः प्रभावः, यत् प्रकृत्या शीतलमपि जलं भवत्युष्णम् !

62. सुचिरस्थायिनं कार्यार्थी वा साधूपचरेत् ।

63. स्थितैः सहार्थोपचारेण व्यवहारं न कुर्यात् ।

64. सत्पुरुषपुरश्चारितया शुभमशुभं वा कुर्वतः नास्त्यपवादः प्राणव्यापादो वा, समयेषु परं संभवी नीतिवादः ।

65. सम्पत् सम्पदमनुबध्नाति, विपच्च विपदम् ।

66. को नाम दुग्धार्थीव, कार्यार्थी, गोरिव परस्याचारं विचारयति ?

67. शास्त्रविदः स्त्रियश्चानुभूतगुणाः परमात्मानं रञ्जयन्ति ।

68. चित्रगतमपि राजानं नावमन्येत, क्षात्रं हि तेजो महत् सत्पुरुषदेवतास्वरूपेण तिष्ठति !

69. कार्यमारभ्य पर्यालोचनं शिरोमुण्डनमनु नक्षत्रप्रश्न इव ।

70. ऋणशेषाद्रिपुशेषादिव अवश्यं भवत्यायत्यां भयम् ।

71. नवः सेवकः को नाम न भवति विनीतः भीतो वा ? यथाप्रतिज्ञं निर्वाहस्तु दुर्लभः ।

72. अप्राप्तेऽर्थे भवति सर्वोऽपि त्यागी, प्राप्ते तु स एवान्यः परिणमति ।

73. अर्थी न परेषु नीचैराचरणादुद्विजेत्, किं नाधो व्रजति कूपे जलार्थी ?

74. स्वामिनोपहतस्य तदाराधनमेव निर्वृतिहेतुः ।

75. दैवेनोपहतस्य दैवाराधनमेव निर्वृतिहेतुः ।

76. जनन्या कृतविप्रियस्यापि बालस्य जनन्येव हि भवति जीवितव्यकारणम् !

77. सारतः सर्वोऽपि सर्वास्वप्यवस्थासु नीतिपथमात्मपथं च न विस्मरेत, तदध्वनीनश्च भवेत् ।

78. जयन्त्वेवं धर्मसम्पत्समृद्धाः राजानः प्रजाश्च भारतीयाः !

इति प्रकीर्णकसमुद्देशः

इति सोमदेवीयानि राजनीतिसूत्राणि

---

॥ जयश्रीः ! ॥

# कौटलीये अर्थशास्त्रे प्रसङ्गेषूपन्यस्तानां सुभाषितानां सङ्ग्रहः.

---

## १. आत्मवत्तासम्पादनावश्यकता, तदुपायाः, अनात्मवतां सम्भविनो दुष्परिणामाश्च.

1. श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया योगः, योगादात्मवत्ता । (*11-2)
2. रक्षेदात्मानमात्मवान् । (48-18)
3. रक्ष्यः स्वेभ्यः परेभ्यश्च नित्यमात्मा विपश्चिता । (369-11)
4. आत्मरक्षा हि सततं पूर्वं कार्या विजानता । अग्नाविव हि संप्रोक्ता वृत्ती राजोपजीविनाम् । (262-9)
5. सम्पादयत्यसम्पन्नाः प्रकृतीरात्मवान् नृपः । विवृद्धाश्चानुरक्ताश्च प्रकृतीर्हन्त्यनात्मवान् । (273-10)
6. नृपो हि दुष्टप्रकृतिः चातुरन्तोऽप्यनात्मवान् । हन्यते वा प्रकृतिभिः याति वा द्विषतां वशम् । (273-12)
7. आत्मवांस्स्वल्पदेशोऽपि युक्तः प्रकृतिसम्पदा । नयज्ञः पृथिवीं भुङ्क्ते जयत्येव न हीयते । (273-14)
8. लोकयात्रावित् राजानमात्मद्रव्यप्रकृतिसम्पन्नं प्रियहितद्वारेणाश्रयेत । (260-24)
9. द्रव्यप्रकृतिहीनमप्याश्रयेत, न त्वेवानात्मसम्पन्नम् । अनात्मवान् हि नीतिशास्त्रविद्वेषादनर्थ्यसंयोगाद्वा प्राप्यापि महदैश्वर्यं न भवति । (261-1)
10. पक्वं पक्वमिवारामात् फलं राज्यादवाप्नुयात्, आत्मच्छेदभयादामं वर्जयेत् कोपकारकम् । (257-26)
11. शक्तिं सिद्धिं च घटेतात्मन्यावेशयितुम् । (275-22)
12. नार्हत्यात्मक्षयेण मित्रमुखानमित्रान् वर्धयितुम् । (321-1)

---

* सूचना—अनयोराद्यः पुटाङ्कः, द्वितीयः पङ्क्त्यङ्कः इति ज्ञेयम्. एवमग्रेऽपि.

## २. उपदेशस्य शिष्यार्हतानुगुण्यावश्यकता.

1. क्रिया द्रव्यं हि विनयति, नाद्रव्यम्। (10–6)
2. शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम्। (10–7)
3. नवं हि द्रव्यं येन येनार्थजातेनोपदिह्यते तत्तदाचूषति, एवमयं नवबुद्धिः यद्यदुच्येत तत्तच्छास्त्रोपदेशमिवाभिजानाति। (36–20)

---

## ३. विद्यास्वरूपहेतुफलानि, अविद्यावतां सम्भविनोऽनर्थाश्च.

1. ताभिर्धर्मार्थौ यद्विद्यात् तद्विद्यानां विद्यात्वम्। (6–16)
2. विद्याबुद्धिपौरुषाभिजनकर्मातिशयतश्च पुरुषाः पूज्याः। (208–11)
3. मन्त्रशक्तिहीनः प्राज्ञपुरुषोपचयं विद्यावृद्धिसंयोगं वा कुर्वीत। तथा हि सद्यः श्रेयः प्राप्नोति। (322-7).
4. विक्रमाधिकोऽपि हस्तिनमिव लुब्धकः प्राज्ञः शूरमतिसन्धत्ते। (329-13)
5. एकं हन्यान्न वा हन्यादिषुः क्षिप्तो धनुष्मता। प्राज्ञेन तु मतिः क्षिप्ता हन्यात् गर्भगतानपि। (401-18)
6. नित्यश्चास्य विद्यावृद्धसंयोगः विनयवृद्ध्यर्थम्, तन्मूलत्वाद्विनयस्य। (10–14)
7. विद्यानां तु यथास्वमाचार्यप्रामाण्याद्विनयो नियमश्च। (10–8)
8. विद्याविनीतो राजा हि प्रजानां विनये रतः। अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः। (11–4)
9. संवरणमात्रं हि त्रयी लोकयात्राविदः इति बार्हस्पत्याः। (6–12)
10. व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः। त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति। (8–17)

11. धर्माधर्मौ त्रय्यां, अर्थानर्थौ वार्तायां, नयापनयौ दण्डनीत्यां, एतासां बलाबले हेतुभिरन्वीक्षमाणा आन्वीक्षिकी लोकस्योपकरोति, व्यसने अभ्युदये च बुद्धिमवस्थापयति, प्रज्ञावाक्यक्रियावैशारद्यं च करोति। (7-4)
12. प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्। आश्रयस्सर्वधर्माणां शश्वदान्वीक्षिकी मता। (7-7)
13. यथा मदान्धो हस्ती मत्तेनाधिष्ठितः यद्यदासादयति तत्सर्वं प्रमृद्नाति, एवमयमशास्त्रचक्षुरन्धो राजा अन्धेन मन्त्रिणाधिष्ठितः। (27-14)
14. काष्ठमिव हि घुणजग्धं राजकुलं अविनीतमभियुक्तमात्रं भज्यते। (36-8)
15. महादोषमबुद्धबोधनम्। (36-20)
16. यथा ह्यश्रोत्रियः श्राद्धं न सतां भोक्तुमर्हति। एवमश्रुतशास्त्रार्थः न मन्त्रं श्रोतुमर्हति। (32-4)
17. अशास्त्रचक्षुरन्धः यत्किञ्चनकारी दृढाभिनिवेशी परप्रणेयो वा भवति। (343-11)
18. अविद्याविनयः पुरुषव्यसनहेतुः। अविनीतो हि व्यसनदोषान् न पश्यति। (344-20)
19. कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः। (11-12)
20. शास्त्राविददृष्टकर्मा कर्मसु विषादं गच्छेत्। (14-15) कार्यसामर्थ्याद्धि पुरुषसामर्थ्यं कल्प्यते। (14-21)
21. ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम्। जयत्यजितमत्यन्तं शास्त्रानुगमशस्त्रितम्। (16-7)
22. श्रुताद्धि प्रज्ञोपजायते, प्रज्ञया योगः, योगादात्मवत्ता--इति विद्यासामर्थ्यम् (11-2)
23. एवं शास्त्रमिदं युक्तं एताभिः तन्त्रयुक्तिभिः। अवाप्तौ पालने चोक्तं लोकस्यास्य परस्य च। (461-27)
24. धर्ममर्थं च कामं च प्रवर्तयति पाति च। अधर्मानर्थविद्वेषानिदं शास्त्रं निहन्ति च। (461-29)

———

## ४. अरिषड्वर्गस्वरूपहेतुदुष्फलानि, तत्परिहारावश्यकता च.

1. कृत्स्नं हि शास्त्रमिदमिन्द्रियजयः । तद्विरुद्धवृत्तिः अवश्येन्द्रियः चातुरन्तोऽपि राजा सद्यो विनश्यति । (11-16)
2. प्रायश्च कोपवशाः राजानः प्रकृतिकोपैर्हताः श्रूयन्ते, कामवशाः क्षयव्यसननिमित्तमरिव्याधिभिः । (345-2)
3. सुमहताप्यर्थेन न कश्चन शरीरविनाशमिच्छेत् । (346-1)
4. सातत्येन हि निशि प्रदीपे मातरि च मृतायां दीव्यत्येव कितवः, कृच्छ्रे च प्रतिपृष्टः कुप्यति । (346-17)
5. तस्मात् कोपं च कामं च व्यसनारम्भमात्मवान् । परित्यजेन्मूल-हरं वृद्धसेवी जितेन्द्रियः । (347-13)
6. यतो निमित्तं व्यसनं प्रकृतीनामवाप्नुयात् । प्रागेव प्रतिकुर्वीत तन्निमित्तमतन्द्रितः । (355-10)
7. पराक्रमो हि व्यसनमपहन्ति । (409-9)
8. षड्वर्गवशगा बहवो राजानो विनष्टाः । तेषामनात्मवतां नार्हति मार्गमनुगन्तुम् । धर्ममर्थं चावेक्षस्व । (411-5)
9. सर्वेषामपि हि स्त्रीदायाद्यदोषः कर्मस्पर्धा प्रतिपक्षद्वेषः पण्य-संस्था समवायो वा विवादपदानामन्यतमं वा रोषस्थानं, रोषनिमित्तो घातः । (229-3)
10. राज्यकारणाद्धि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति, किमङ्ग ! पुनरमात्यप्रकृतिः ? (266-14)
11. लघ्वपि हि व्यसनं अभियुक्तस्य कृच्छ्रं भवति । (294-4)
12. आरण्योऽग्निरिव हि दुःखामर्षजं तेजो विक्रमयति । (288-21)
13. बलं हि चित्तं विकरोति । (321-4)
14. श्ववराहयोः कलहे अन्यतरसिद्धिश्चण्डालस्य । (363-25)
15. यत् प्रसह्य हरेदन्यः तत् प्रयच्छेदुपायतः । रक्षेत् स्वदेहं न धनं का ह्यनित्ये धने दया ? (410-21)
16. मर्यादां स्थापयेदाचार्यान् अमात्यांश्च, य एनमपायस्थानेभ्यो वारयेयुः । (13-5)
17. नार्हत्यात्मक्षयेण मित्रमुखानमित्रान् वर्धयितुम् । (32-1)

## ५. धर्मादिकृत्स्नपुरुषार्थसम्पादनरक्षणाद्यावश्यकता, तेषु प्राबल्यदौर्बल्यादिविमर्शश्च.

1. स्वधर्मः स्वर्गायानन्त्याय च, तस्यातिक्रमे लोकः सङ्करादुच्छिद्येत। (8–12)
2. एष त्रयीधर्मः चतुर्णां वर्णानां आश्रमाणां च स्वधर्मस्थापनादौपकारिकः। (7–15)
3. स्वधर्मं संदधानो हि प्रेत्य चेह च नन्दति। (8–16)
4. राज्ञः स्वधर्मः स्वर्गाय प्रजा धर्मेण रक्षितुः। अरक्षितुर्वा क्षेप्तुर्वा मिथ्यादण्डमतोऽन्यथा। (162–14)
5. चतुर्वर्णाश्रमस्यायं लोकस्याचाररक्षणात्। नश्यतां सर्वधर्माणां राजा धर्मप्रवर्तकः। (162–5)
6. अनुशासद्धि धर्मेण व्यवहारेण संस्थया। न्यायेन च चतुर्थेन चतुरन्तां महीं जयेत्। (162–20)
7. धर्मो ह्यधर्मोपहतः शास्तारं हन्त्युपेक्षितः। (200–10)
8. जित्वा च पृथिवीं विभक्तवर्णाश्रमां स्वधर्मेण भुञ्जीत। (435–3)
9. चरित्रमकृतं धर्म्यं कृतं चान्यैः प्रवर्तयेत्। प्रवर्तयेन्न चाधर्म्यं कृतं चान्यैर्निवर्तयेत्। (436–19)
10. उचितानां चरित्राणां धर्मिष्ठानां निवर्तनैः। अधर्मस्य प्रसङ्गेन धर्मस्यावग्रहेण च। प्रकृतीनां क्षयो लोभः वैराग्यं वोपजायते। (295–3)
11. धर्मश्च व्यवहारश्च चरित्रं राजशासनम्। विवादार्थश्चतुष्पादः पश्चिमः पूर्वबाधकः। (162–9)
12. अत्र सत्ये स्थितो धर्मः व्यवहारस्तु साक्षिषु। चरित्रं संग्रहे पुंसां राज्ञामाज्ञा तु शासनम्। (162–11)
13. संस्थया धर्मशास्त्रेण शास्त्रं वा व्यावहारिकम्। यस्मिन्नर्थे विरुद्ध्येत धर्मेणार्थं विनिश्चयेत्। (163–3)
14. शास्त्रं विप्रतिपद्येत धर्मन्यायेन केनचित्। न्यायस्तत्र प्रमाणं स्यात् तत्र पाठो हि नश्यति। (163–5)
15. धर्ममर्थं चोपदिशेत्, धर्मं अनर्थं च। (37–1)
16. न धर्मार्थौ पीडयेत्। (258–7)

17. मतिकर्मसु पृष्टो हि तदात्वे आयत्यां च धर्मार्थसंयुक्तं समर्थं प्रवीणवत् अपरिषद्भीरुः कथयेत् । (261–7)
18. मित्रमुखा ह्यमित्रास्ते, ये साहसमधर्ममर्थातिक्रमं च ग्राहयन्ति । (411–7)
19. अमोक्षो हि धर्मविवाहानाम् । (167–12)
20. तीर्थोपरोधो हि धर्मवधः । (170–10)
21. आपदर्थं हि स्त्रीधनम् । (165–5)
22. अर्थो धर्मः कामः इति पूर्वः पूर्वः श्रेयानुपसंप्राप्तुम् । अनर्थोऽधर्मः शोक इति पूर्वः पूर्वः श्रेयान् प्रतिकर्तुम् । (381-5)
23. कोशपूर्वाः सर्वारम्भाः । (74–23)
24. धर्ममूलत्वात् कामफलत्वाच्चार्थस्य धर्मार्थकामानुबन्धा या अर्थस्य सिद्धिः सा सर्वार्थसिद्धिः । (381-27)
25. अल्पकोशो हि राजा पौरजानपदानेव ग्रसते । (51–7)
26. नाधनाः प्राप्नुवन्त्यर्थान् नरा यत्नशतैरपि । अर्थैरर्थाः प्रबध्यन्ते गजाः प्रतिगजैरिव । (371-16)
27. क्षीणनिचयं चावाप्तमपि राज्यं क्षयायैव भवति । (432-26)
28. अर्थ एव प्रधान इति कौटल्यः ; अर्थमूलौ हि ! धर्मकामाविति । (13–1)
29. जित्वाऽपि हि क्षीणदण्डकोशः पराजितो भवति । (319-10)
30. अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च । प्राप्यते फलमुत्थानाल्लभते चार्थसम्पदम् । (42–17)
31. धर्मार्थाविरोधेन कामं सेवेत, न निःसुखः स्यात्, समं वा त्रिवर्गमन्योन्यानुबन्धम् । एको ह्यत्यासेवितो धर्मार्थकामानामात्मानमितरौ च पीडयति । (12–22)
32. न च अकामः पुरुषोऽस्ति । (165–25)
33. नक्षत्रमतिपृच्छन्तं बालमर्थोऽतिवर्तते । अर्थो ह्यर्थस्य नक्षत्रं किं करिष्यन्ति तारकाः ? (371-13)
34. आकरप्रभवः कोशः कोशाद्दण्डः प्रजायते । पृथिवी कोशदण्डाभ्यं प्राप्यते कोशभूषणा । (95–12)

———

## ६. राज्ञां तत्प्रकृतीनां च परस्परं मीत्या वर्तनक्रमः.

1. प्रत्यक्षपरोक्षानुमेया हि राजवृत्तिः। (15–18)
2. दुर्दर्शो हि राजा कार्याकार्यविपर्यासमासन्नैः कार्यते ! (41–20)
3. सर्वमात्ययिकं कार्यं शृणुयान्नातिपातयेत्। कृच्छ्रसाध्यमतिक्रान्तमसाध्यं वा विजायते। (42–5)
4. प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्। नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्। (42–15)
5. न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम्। बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः। (29–24)
6. न दूषणमदुष्टस्य विषेणेवाम्भसश्चरेत्। कदाचिद्धि प्रदुष्टस्य नाधिगम्येत भेषजम्। (18–16)
7. कृता च कलुषा बुद्धिः नागत्वान्तं निवर्तेत स्थिता सत्ववतां धृतौ। (18–18)
8. यत् प्रसह्य हरेदन्यः तत प्रयच्छेदुपायतः। (410–21)
9. स्वयमुपस्थितं नावमन्येत, स्वयमारूढा हि स्त्री त्यज्यमानाभिशपतीति लोकप्रवादः। (266–16)
10. पुनरावर्तमानस्य निराशस्य च जीविते। अधार्यो जायते वेगः तस्माद्भग्नं न पीडयेत्। (392-20)
11. शासनप्रधाना हि राजानः। (80–9)
12. यावद्भ्यो गुह्यमाचष्टे नरेभ्यः पुरुषाधिपः। अवशः कर्मणा तेन वश्यो भवति तावताम्। (14–1)
13. नास्य गुह्यं परे विद्युः छिद्रं विद्यात् परस्य च। गूहेत् कूर्म इवाङ्गानि यत् स्याद्विवृतमात्मनः। (32–2)
14. यथा लीनस्सर्पः यस्माद्भयं पश्यति तत्र विषमुत्सृजति, एवमयं राजापि जातदोषाशङ्कः क्रोधविषमुत्सृजति। (27–19)
15. यथा श्वगणिनां धेनुः श्वभ्यो दुग्धे न ब्राह्मणेभ्यः, एवमयं राजाऽपि सत्त्वप्रज्ञावाक्यशक्तिहीनेभ्यो दुग्धे नात्मगुणसम्पन्नेभ्यः। (28–1)

16. यथा चण्डालोदपानः चण्डालानामेवोपभोग्यः नान्येषां, एवमयं राजा नीचानामेवोपभोग्यः नार्याणाम्। (28-6)
17. दूतमुखा वै राजानः, तस्मादुद्धृतेष्वपि शस्त्रेषु यथोक्तं वक्तारः। तेषामन्तावसायिनोऽप्यवध्याः, किमङ्ग! पुनर्ब्राह्मणाः? (33-8)
18. अपराधं सहेताल्पं तृष्येदल्पेऽपि चोदये। (74-15)
19. एकदेशं दहेदग्निः शरीरं वा परं गतः। सपुत्रदारं राजा तु घातयेद्वर्धयेत वा। (262-11)
20. वितंसगिलवत् विश्वासेनामिषेण चारीन् हन्यात्। (377-13)
21. सर्वत्रानुप्रणतो हि कुलैडक इव निराशो जीविते वसति। युद्धयमानश्चाल्पसैन्यः समुद्रमिवाप्लवोऽवगाहमानः सीदति। (409-11)
22. तादृशाः तादृशैरेव बोद्धव्याः। (23-17)
23. बालिशजातीयो ह्येष जेतुकामः पराजयं न क्षमते। (206-17)
24. विद्याबुद्धिपौरुषाभिजनकर्मातिशयतश्च पुरुषाःपूज्याः। (208-11)
25. जायते प्लक्षबीजाशात् कपोतादिव शाल्मलेः। उद्वेगजननो नित्यं पश्चादपि भयावहः। (300-24)
26. स्वयं यच्छीलः तच्छीलाः प्रकृतयो भवन्ति। (340-7)
27. इन्द्रयमस्थानमेतत् राजानः प्रत्यक्षहेडप्रसादाः, तानवमन्यमानं दैवोऽपि दण्डः स्पृशति। (25-1)
28. यतोनिमित्तं व्यसनं प्रकृतीनामवाप्नुयात्। प्रागेव प्रतिकुर्वीत तन्निमित्तमतन्द्रितः (355-10)
29. विशिष्टादल्पमप्यंशं लब्ध्वा तुष्टमुखो व्रजेत्। (297-5)
30. कृतप्रणाशः शक्तिहानिः विद्यापण्यत्वं आशुनिर्वेदः देशलौल्यं अविश्वासः बलवद्विग्रहो वा परित्यागस्थानम्। (300-7)
31 यतः श्रेयस्ततो व्रजेत्। (303-27)
32. गुरुव्यसनं न्यायवृत्तिमभियुक्तं प्रकृतयोऽनुगृह्णन्ति। (294-11)
33. क्षीणलुब्धा हि प्रकृतयः सुखेनोपजापं पीडां वोपगच्छन्ति। (294-17)
34. क्षीणलुब्धा हि प्रकृतयः भर्तरि स्निग्धाः भर्तृहिते तिष्ठन्ति, उपजापं वा विसंवादयन्ति। (294-19)

35. अवक्षेपेण हि सतां असतां प्रग्रहेण च। अभूतानां च हिंसानामधर्माणां प्रवर्तनैः। उचितानां चरित्राणां धर्मिष्ठानां निवर्तनैः। अधर्मस्य प्रसङ्गेन धर्मस्यावग्रहेण च। अकार्याणां च करणैः कार्याणां च प्रणाशनैः। अप्रदानैश्च देयानां अदेयानां च साधनैः। अदण्डनैश्च दण्ड्यानां दण्ड्यानां चण्डदण्डनैः। अग्राह्याणामुपग्राहैः ग्राह्याणां चानभिग्रहैः। अनर्थ्यानां च करणैः अर्थ्यानां च विघातनैः। अरक्षणैश्च चोरेभ्यः स्वयं च परिपोषणैः। पातैः पुरुषकाराणां कर्मणां गुणदूषणैः। उपघातैः प्रधानानां मान्यानां चावमाननैः। विरोधनैश्च वृद्धानां वैषम्येणानृतेन च। कृतस्याप्रतिकारेण स्थितस्याकरणेन च। राज्ञः प्रमादालस्याभ्यां योगक्षेमवधेन च। प्रकृतीनां क्षयो लोभः वैराग्यं चोपजायते। क्षीणाः प्रकृतयो लोभं लुब्धा यान्ति विरागताम्। विरक्ता यान्त्यमित्रं वा भर्तारं घ्नन्ति वा स्वयम्। (295-3)

36. न ह्यजनो जनपदः, अजनपदं वा राज्यं भवति। (431-16)

37. शक्यारम्भी विषह्यं कर्मारभेत, कल्यारम्भी निर्दोषं, भव्यारम्भी कल्याणोदयम्। स्थिरकर्मा नासमाप्य कर्मोपरमते, अनुरक्तप्रकृतिः ससहायत्वात् अल्पेनाप्यनुग्रहेण कार्यं साधयति। त एते कृतार्थाः सुखेन प्रभूतं चोपकुर्वन्ति। (305-3)

38. पुरुषवद्धि राज्यम्, अपुरुषा गौर्वन्ध्येव किं दुहीत ? (313-21)

39. समज्यायोभ्यां सन्धीयेत, हीनेन विगृह्णीयात्। विगृहीतो हि ज्यायसा हस्तिना पादयुद्धमिवाभ्युपैति। समेन च आमं पात्रमामेनाहतमिव उभयतः क्षयं करोति। कुम्भेनेवाश्मा हीनेनैकान्तसिद्धिमवाप्नोति। (288-12)

40. तेजो हि सन्धानकारणम्! नातप्तं लोहं लोहेन सन्धीयते। (288-19)

41. अवश्यमपि हि शक्यं सामादिभिर्वश्यं कर्तुम्। (307-22)

42. इन्द्रस्य हि स प्रणमति, यो बलीयसो नमति। (409-8)

---

## ७. मन्त्रिणः, मन्त्रालोचनप्रकाराश्च.

1. इन्द्रस्य हि मन्त्रिपरिषदृषीणां सहस्रं, स तच्चक्षुः, तस्मादिमं द्व्यक्षं सहस्राक्षमाहुः । (31-20)
2. सहायसाध्यं राजत्वं चक्रमेकं न वर्तते । (13-7)
3. ब्राह्मणेनैधितं क्षत्रं मन्त्रिमन्त्राभिमन्त्रितम् । जयत्यजितमत्यन्तम् । (16-7)
4. यथामदान्धो हस्ती मत्तेनाधिष्ठितः यद्यदासादयति तत्सर्वं प्रमृद्नाति, एवमयमशास्त्रचक्षुरन्धो राजा अन्धेन मन्त्रिणाधिष्ठितः । (27-14)
5. राज्यकारणाद्धि पिता पुत्रान् पुत्राश्च पितरमभिद्रुह्यन्ति, किमङ्ग ! पुनरमात्यप्रकृतिः ? (266-14)
6. न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम् । बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः । (29-24)
7. प्रमादमदसुप्तप्रलापकामादिरुत्सेकः प्रच्छन्नोऽवमतो वा मन्त्रं भिनत्ति । (29-9)
8. मन्त्रभेदो ह्ययोगक्षेमकरः राज्ञः तदायत्तपुरुषाणां च । (29-14)
9. कामद्वेषहर्षदैन्यव्यवसायभयद्वन्द्वविपर्यासं इङ्गिताकाराभ्यां हि मन्त्रसंवरणार्थमाचरन्ति प्राज्ञाः । (263 3)
10. असंवृतस्य कार्याणि प्राप्तान्यपि विशेषतः । निस्संशयं विपद्यन्ते भिन्नप्लव इवोदधौ । (320-13)

---

## ८. दण्डमहिमा.

1. न ह्येवं विधं वशोपनयनमस्ति भूतानां यथा दण्डः ! (9-12)
2. तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः, मृदुदण्डः परिभूयते, यथार्हदण्डः पूज्यः । (9-15)
3. सुविज्ञातप्रणीतो हि दण्डः प्रजाः धर्मार्थकामैर्योजयति, दुष्प्रणीतस्तु कामक्रोधाभ्यामज्ञानाद्वानप्रस्थपरिव्राजकानपि कोपयति, किमङ्ग! पुनः गृहस्थान् ? (9-16)
4. अप्रणीतो हि दण्डः मात्स्यन्यायमुद्भावयति । बलीयानबलं हि ग्रसते दण्डधराभावे ! (9-19)

5. चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः । स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु (वेश्मसु) । (16–I 16)
6. विनयमूलो दण्डः प्राणभृतां योगक्षेमावहः । (19–J 4)
7. नवास्तु यमस्थाने दण्डधरं मन्यमानाः नापराध्यन्ति । (16–N 15)
8. +दण्डकरा हि राजानः प्रजानां किल्बिषं हरन्ति, योगक्षेमवहाश्च भवन्ति । (24–17)
9. दण्डो हि केवलं लोकं परं चेमं च रक्षति । राज्ञा पुत्रे च शत्रौ च यथादोषं समं धृतः । (162–16)
10. शास्ता हि वरुणो राजा मिथ्यां व्याचरतां नृषु । (246–16)
11. तमेव हि प्रत्यावृत्तो ग्रसते । (292–5)
12. दोषशुद्धौ हि दूष्या न विद्यन्ते । दूष्यशुद्धौ हि दोषः पुनरन्यान् दूषयति ! (373-3).

---

## ९. विश्वास्याः अविश्वास्याश्च.

1. समाः सर्वेषु भावेषु विश्वास्याः लोकसंप्रियाः । (208–12)
2. प्रियो यस्य भवेद्यो वाऽप्रियोऽस्य कतरस्तयोः ? (288–1)
3. अभ्युच्छ्रितश्चाविश्वास्यः ; 'ऋद्धिर्हि चित्तविकारिणी' ! (297-4)
4. आपद्धि सौहृदस्थैर्यमुत्पादयति ! (307-2)
5. उपकारलक्षणं मित्रम् । (307-8)
6. अविश्वास्यो हि विसंवादकः स्वेषां परेषां च भवति, प्रकृतिविरुद्धाचारश्च । तस्मात् समानशीलवेषभाषाचारतामुपगच्छेत् । (436–19)
7. +सहाध्यायिनः विश्वास्या अपि सह क्रीडितत्वात् परिभवन्ति । (16–M 19)
8. +गुह्यसधर्माणो हि समानशीलव्यसनत्वान्मर्मज्ञभयान्नापराध्यन्ति । (16–M 20)

